| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ५६ नित्याषोडशिकार्णवः—भास्कररायोन्नीतटीकासहितः । | २ | ८ |
| ५७ आचारभूषणम्—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ आचारेन्दु.—माटेइत्युपाह्वत्र्यम्बकविरचितः । | ४ | ० |
| ५९ श्राद्धमञ्जरी—बेळकरोपाह्वबापूभट्टविरचिता । | २ | ० |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । | १ | १२ |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः—सटीकाः । | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । | १ | ४ |
| ६६ काव्यप्रकाशः—उद्योतयुतप्रदीपसहितः । | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता । | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचिता । | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । | १ | १२ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता । | २ | ० |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । | ९ | १ |
| ८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | १ | ० |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०२

श्रीमद्द्वैपायनमुनिप्रणीतं

# ब्रह्मवैवर्तपुराणम् ।

तस्य द्वितीयो भागः ।

एतत्पुस्तकं

वे० शा० सं० वासुदेवशास्त्री मराठे इत्येतैः

वे० शा० सं० पुरुषोत्तमशास्त्री रानडे इत्येतैश्च संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-

महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५७ ।

खिस्ताब्दाः १९३५ ।



मूल्यं चतुर्दशाणकयुतरूपकचतुष्टयम् ( ४८१४ ) ।

श्रीशिवः शरणम् ।

## प्रास्ताविकं किंचित्

अयि महाशया आनन्दाश्रमसंस्कृतग्रन्थावलीप्रकाशितग्रन्थरत्नसंग्रहहृदय-द्वादरा विद्वांसः समुपजोपमद्य संस्थेयं श्रीब्रह्मवैवर्ताख्यस्य पुराणरत्नस्य द्वितीयो भागः श्रीमतां करयुगुले सादरं समर्पयति । श्रीमद्द्वैपायनमुनिवरप्रणीताष्टादशमहापुराणेषु दशममिदं पुराणं ब्रह्मवैवर्तं नाम । किमत्र प्रतिपाद्यं तदस्य नाम्नैव खलु सम्यगवगन्तुं सुगमम् । ब्रह्मणो वैवर्तं विशेषेण विवृतिर्यत्रेति ब्रह्मवैवर्तम् । विवृतिरेव वैवर्तम् । प्रज्ञादित्वात्स्वार्थेऽण् । उद्बोधितोऽयमर्थोऽस्मिन्नेव ग्रन्थे ब्रह्मखण्डे प्रथमाध्याये—

' विवृतं ब्रह्म कात्स्न्र्यं च (कार्त्स्न्येन) कृष्णेन परमात्मना ।
ब्रह्मवैवर्तकं तेन प्रवदन्ति पुराविदः ' इति ॥

अनेन हि निर्वचनेन नित्यशुद्धबुद्धस्वप्रकाशनिर्गुणनिरवयवपरमात्मना श्रीकृष्णस्वरूपेण सगुणीभूय निजभक्तोद्धारार्थं परमपावन्यो विविधा लीला अकारिषत । यांभिश्च खलु लीलाभिर्ब्रह्मभावं विन्दति मानवो ब्रह्मवैवर्तस्यास्य पुराणवरस्य पठनपाठनात्मकेन सत्कर्मणा । पुराणस्यैतस्य चत्वारि खण्डानि ब्रह्मप्रकृतिगणेशश्रीकृष्णाख्यानि वर्तन्ते । एतच्च नैमिषारण्ये शौनकादिमुनिसत्तमान् सौतिः प्रकथयामास । राधाश्रीकृष्णयोर्लीलाविशेष एतस्मिन्समुपवर्णितः सविशेषं पुष्णाति खल्वेतस्य परां किल काष्ठां प्रकृष्टतायाः । मन्ये नैतादृशः किल यशोदानन्दकन्दस्य श्रीराधाजानेर्लीलाविलासः कस्मिन्नपीतरपुराणग्रन्थे लोचनपथमवतरति आद्ये ब्रह्मखण्डे सृष्टिनिरूपणप्रसङ्गे जगदीशितुः श्रीकृष्णस्य शरीरान्नारायणादिदेवानामाविर्भावः, रासमण्डले राधिकोत्पत्तिः, राधाकृष्णशरीराद्गोगोपगोपिकानां प्रादुर्भावः, ततश्च विश्वोत्पत्तिरेवंप्रकारका विषयाः प्रामुख्येनोपवर्णिताः । द्वितीये पुनः प्रकृतिखण्डे सृष्टिकार्यप्रसङ्गतो दुर्गाराधालक्ष्मीसरस्वतीसावित्रीणां प्रकृतिभूतपञ्चदेवतानां माहात्म्यं नितान्तरमणीयतया प्रावोचि । तथा च सावित्री सत्यवान् सुरभिः स्वाहा स्वधा एतासां देवतानामुपाख्यानानि, देवीमाहात्म्यं, सुरथवंशवर्णनं, गङ्गाया उपाख्यानं रामायणीया कथा, दुर्वाससः पाकशासनं प्रति शापः, लक्ष्मीपूजाविधिश्चेत्यादयो विषयाः प्राधान्येन व्याहृताः । तार्तीयीके गणेशखण्डे तु गणेशमाहात्म्यकथनपूर्वकं जमदग्निकार्तवीर्यपरशुरामादीनां कथा हृदयंगमया रीत्या कथिताः । चरमे तुरीये श्रीकृष्णजन्मखण्डे पुनः गोपीजनवल्लभस्य नन्दनन्दनस्य विविधाः क्रीडा हृदयाह्लादकेन संविधानकेन

स्तितश्च पुराणस्य । यथा—तैत्तिरीयारण्यके ‘ सहवै ’ इति प्रपाठके नीतिहासान्पुराणानि कल्पान् ’ ( तै० आ० २। ९। १ ) ‘ ऋ- तिहासः पुराणं विद्या ’ ( बृ०दा० ४।१।२ ) ‘ ऋग्वेदो...अथर्वा- तिहासः पुराणं विद्या ’ ( बृ० दा० २।४।१० ) ‘ अरे अस्य.... पुराणं पञ्चमम् ’ (छा०७।१।१) ‘ चत्वारो वेदाः....वाकोवाक्यं इति- राणं वैद्यकम् ’ (पा०म०पस्पशा०) एवमादीनि परःशतानि वचांसि प्राथम्यावबोधकानि संदृश्यन्ते । यदि पुराणस्यैव प्राथम्यमभविष्यत्तर्हि दस्यैव प्राङ्निर्देश आगमिष्यत् । एतावता मा भूदष्टादशपुराणानां, पि पुराणस्य प्राग्भावो न स्थिरी भवति । तर्हि वायवीयवचनस्य का ते चेत्, कथ्यते—तत्र खलु वेदान्तःपात्येव कश्चिद्भागः पुराणपद- । ‘ आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत् इत्यादीनि दिप्रतिपादकानि पुराणानि ’ इति विद्यारण्यस्वामिचरणा उपरिनिर्दिष्टा- कस्थपुराणपदस्यार्थं भाष्ये प्रतिपादयांबभूवुः । बृहदारण्यकस्थपुराणपदस्यापि णमसद्वा इदमग्र एवासीदित्यादि’ एवंप्रकारिकयैव रीत्या श्रीमच्छंकरपूज्यपादा बृहदारण्यकोपनिषद्भाष्ये लिलिखुः । एवमन्यत्रापि । एतेन च स्वल्पे- न्तत एव प्रतीयते यत्, पुराणप्राथम्यवादिना वायवीयवचनस्थपुराणपदस्य भावितोऽर्थो न किल क्षोदक्षम इति विदांकुर्वन्तु चतुरचेतसः सुधियः । न एव

स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणान्यखिलान्यपि ’ (म०स्मृ०३।२३२)

इति मनुना ‘ पूर्वं वेदान् अनन्तरं च पुराणानि श्रावयेत् ’ एवं प्रति- पादितः क्रमः संगच्छते । क्षणमात्रं वायवीयवचोऽनुरोधेन यदि पुराणस्य प्राग्भूत- तं तर्ह्यपि न निस्तारः, तैत्तिरीयारण्यके प्राङ्निर्दिष्टस्य ‘ पुराणानि ’ इति बहुवचनघटितपदस्य संगत्यनुपपत्तेः । अनेनापि महता विरोधेन नतरां पुराणस्य वेदतः पूर्वकालिकत्वमित्यत्र युक्तायुक्तविवेकपटीयसां स्थिरधियां धीरेव प्रमाणम् ।

किञ्च यदवोचि ‘ वेदेभ्यः प्रागेकमेव पुराणमासीत् । वेदविभागोत्तरं व्यास- महर्षिणा तस्यादशपुराणानि संदब्धानीत्यादि । तदपि न विचारसहम् । क नु नाम तत्प्राथमिकं पुराणं संप्रति, गद्यात्मकं पद्यमयं वा, अपि च किं किं तत्र प्रत्यपादि, ऐश्वर्ययुतं वा ऐश्वर्यविहीनं तत्, पुराणलक्षणानि तत्रावर्तन्त न वा । कति वा पद्यानि तत्राऽऽसन् । संप्रतितनपुराणेषु कुतः पुनस्तत्रत्योऽशस्तदाऽऽ-

सीत् । एवमादयो बहवोऽनुयोगाः कस्यापि विमर्शशीलस्य पुरतः प्रादुःषन्ति । तेषामेकतमस्यापि प्रश्नस्य सोपपत्तिकः समाधिस्तु संप्रति कर्तुं दुर्घट एव । तस्मात्किं तेन केवलवाङ्मात्रनिर्दिष्टेन प्राथमिकपुराणेनार्थः ।

यदप्युच्यते कैश्चिदर्वाग्दृष्टिभिर्विद्वद्भिः " पुराणानि परस्परं विसंवादीनि । सूर्यचन्द्रवंशयोर्महीयान्खलु विरोधो दरीदृश्यते । वैवस्वतमनोः रामचन्द्रस्य युगं ब्रह्मपुराणेऽष्टपञ्चाशत्तमं तर्हि विष्णुपुराणे चतुःषष्टितमम् । अग्निपुराण एकपञ्चाशत्तमं तच्छिवपुराणे पञ्चाशत्तमम् । एवमेव चन्द्रवंशे युधिष्ठिरस्य युगतो विष्णुपुराणे सप्तचत्वारिंशं तद्ब्रह्मपुराणे पञ्चत्रिंशम्, इत्यादिकम् । तथैव च स्कन्दोत्पत्तिविषयेऽपि बलीयान् विरोधो दृष्टिपथमारोहति । एवमादयो भूयांसः किल विरोधास्तत्र तत्र समीक्ष्यन्त इति " तदपि न समञ्जसम् ।

' क्वचित्क्वचित्पुराणेषु विरोधो यदि लभ्यते ।
कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते ॥ '

इति न्यायेन तत्तद्विरोधपरिहारात् । प्रतिमन्वन्तरं प्रतिद्वापरं च प्रादुर्भवत्येकैको व्यास इति विदितचरमेव भूयसां विदुषाम् । मन्वन्तरे पुनर्वैवस्वताख्येऽद्यावदष्टाविंशतिसंख्याका व्यासमुनिवराः समभूवन् । द्वापराणां तावत्संख्याकत्वात् । तेष्वन्यतमोऽष्टाविंशो व्यासः कृष्णद्वैपायनापरनामकः पाराशर्यः ।

तदुक्तम्—ततः शक्तिर्जातुकर्ण्यः कृष्णद्वैपायनस्ततः ।
अष्टाविंशतिसंख्येयं कथिता या मया श्रुता ॥

( दे० भा० १ । ३ । ३३ ) इति वचनेन व्यासस्य प्रतिद्वापरं पार्थक्येन न काऽपि विप्रतिपत्तिः स्थिरी भवति । एतेन—

अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमतुलं चक्रे तदुपबृंहितम् ॥

इति देवीभागवतस्थवचनेनाष्टादशपुराणानां व्यास एव कर्तेति निःसंदेहम् । तत्र तत्र परिदृश्यमानो विरोधस्तु व्यासैकत्वेऽपि कल्पभेदादुन्नेय इति सर्वमनवद्यम् ।

विद्वांसः ' गच्छतः स्खलनं क्वापि ' इति न्यायेन भारताविकेऽस्मिन्समीक्ष्यमाणं दोषकदम्बमपहाय गुणलेशमेव संगृह्णन्तु श्रीमन्त इति प्रार्थनापुरःसराऽभ्यर्थनेति शम् ।

मार्ग० शु० ९ । १८९७
पुण्यपत्तनम् ।

विद्वज्जनवशंवदः—
रानडेइत्युपाभिधगोविन्दतनुजन्मा
पुरुषोत्तमशर्मा ।

## अथ श्रीमद्ब्रह्मवैवर्तपुराणविषयानुक्रमणिका ।

### श्रीकृष्णजन्मखण्डे पूर्वार्धः । ( ४३३–६७५ )

॥ इति कृष्णजन्मखण्डपूर्वार्धः ॥



## अथ श्रीब्रह्मवैवर्तपुराणविषयानुक्रमणिका ।

### श्रीकृष्णजन्मखण्ड उत्तरार्धः । ( ६७७-९११ )

| अध्यायाङ्काः | विषयः | पृष्ठाङ्काः । |
|---|---|---|


॥ इति श्रीकृष्णजन्मखण्डोत्तरार्धम् ॥

## आदर्शपुस्तकोल्लेखपत्रिका ।

अस्य श्रीमद्ब्रह्मवैवर्तपुराणस्य संस्करणार्थं यैः परहितैकतया पुस्तकानि प्रदत्तानि तेषां नामादीनि संज्ञाश्च प्रदर्श्यन्ते—

( क. ) इति संज्ञितम्— आनन्दाश्रमग्रन्थसंग्रहालयस्थम् ।

( ख. ) इति संज्ञितम्— व्यङ्कटेश्वरमुद्रितं बी. ए. इत्युपपदधारिणां रा. रा. सीतारामपन्त भट्गुरु इत्येतेषाम् ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमद्द्वैपायनमुनिप्रणीतं—

# ब्रह्मवैवर्तपुराणम् ।

## तत्र चतुर्थं श्रीकृष्णजन्मखण्डम् ।

### अथ प्रथमोऽध्यायः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

नारद उवाच—

श्रुतं प्रथमतो ब्रह्मन्ब्रह्मखण्डं मनोहरम् । ब्रह्मणो वदनाम्भोजात्परमाद्भुतमेव च ॥ २ ॥
ततस्तद्वचनात्तूर्णं समागत्य तवान्तिकम् । श्रुतं प्रकृतिखण्डं च सुधाखण्डात्परं वरम् ॥
ततो गणपतेः खण्डमखण्डभवखण्डनम् । न मे तृप्तं मनो लोलं विशिष्टं श्रोतुमिच्छति
श्रीकृष्णजन्मखण्डं च जन्मादेः खण्डनं नृणाम् । प्रदीपं सर्वतत्त्वानां कर्मघ्नं हरिभक्तिदम्
सद्यो वैराग्यजननं भवरोगनिकृन्तनम् । कारणं मुक्तिबीजानां भवाब्धेस्तारणं परम् ॥
कर्मोपभोगरोगाणां खण्डने च रसायनम् । श्रीकृष्णचरणाम्भोजप्राप्तिसोपानकारणम् ॥
जीवनं वैष्णवानां च जगतां पावनं परम् । वद विस्तार्य मामकं शिष्यं च शरणागतम् ॥
केन वा प्रार्थितः कृष्ण आजगाम महीतलम् । सर्वांशैरेक एवेशः परिपूर्णतमः स्वयम्
युगे कुत्र कुतो हेतोः कुत्र वाऽऽविर्बभूव ह । वसुदेवोऽस्य जनकः को वा का वा च देवकी ॥
वद कस्य कुले जन्म मायया सुविडम्बनम् । किं चकार समागत्य केन रूपेण वा हरिः
जगाम गोकुलं कंसभयेन सूतिकागृहात् । कथं कंसात्कीटतुल्याज्जगदीशस्य भयं मुने ॥
हरिर्वा गोपवेषेण गोकुले किं चकार ह । कुतो गोपाङ्गनासार्धं विजहार जगत्पतिः ॥
का वा गोपाङ्गना के वा गोपाला बालरूपिणः । का वा यशोदा को नन्दः किं वा पुण्यं
चकार ह ॥ १४ ॥
कथं राधा पुण्यवती देवी गोलोकवासिनी । व्रजे वा व्रजकन्या सा बभूव प्रेयसी हरेः ॥
कथं गोप्यो दुराराध्यं संप्रापुरीश्वरं परम् । कथं ताश्च परित्यज्य जगाम मथुरां पुनः ॥

---

१ क. कुत्र गो° ।

भारावतरणं कृत्वा किं विधाय जगाम सः । कथयस्व महाभाग पुण्यश्रवणकीर्तन ॥
सुदुर्लभा हरिकथा तरणिर्भवसागरे । निषेकभोगनिगडक्लेशच्छेदनकर्तनीम् ॥ १८ ॥
पापेन्धनानां दहने ज्वलदग्निशिखामिव । पुंसां श्रुतवतां कोटिजन्मकिल्बिषनाशिनीम् ॥
मुक्तिं कर्णसुधारम्यां शोकसागरनाशिनीम् । मह्यं भक्ताय शिष्याय ज्ञानं देहि कृपानिधे ॥
तपोजपमहादानात्पृथिव्यां तीर्थदर्शनात् । श्रुतिपाठादनशनाद्व्रताद्देवार्चनादपि ॥२१॥
दीक्षायां सर्वयज्ञेषु यत्फलं लभते नरः । षोडशीं ज्ञानदानस्य कलां नार्हति तत्फलम् ॥
पित्राऽहं प्रेषितो ज्ञानदानाय तव संनिधिम् । सुधासमुद्रं संप्राप्य को वाऽन्यत्पातुमिच्छति ॥

नारायण उवाच—

मया ज्ञातोऽसि धन्यस्त्वं पुण्यराशिः सुमूर्तिमान् । कृतोऽपि भ्रमणं लोकान्पावितुं कुलपावन ॥
जनानां हृदयं सद्यः सुव्यक्तं वचनेन वै । शिष्ये कलत्रे कन्यायां दौहित्रे बान्धवेऽपि च ॥
पुत्रे पौत्रे च वचसि प्रतापे चाऽऽपदि स्त्रियाम् । वृद्धौ वैरिणि विद्यायां ज्ञायते हृदयं नृणाम् ॥
जीवन्मुक्तोऽसि पूतस्त्वं शुद्धभक्तो गदाभृतः । पुनासि पादरजसा सर्वाधारां वसुंधराम् ॥
पुनासि लोकान्सर्वांश्च स्वीयविग्रहदर्शनात् । सुमङ्गलां हरिकथां तेन त्वं श्रोतुमिच्छसि ॥
यत्र कृष्णकथाः सन्ति तत्रैव सर्वदेवताः । ऋषयो मुनयश्चैव तीर्थानि निखिलानि च ॥
कथां श्रुत्वा कथान्ते ते यान्ति सन्तो निरापदम् । भवन्ति तानि तीर्थानि येषु कृष्णकथाः
शुभाः ॥ २० ॥
सद्यः कृष्णकथावक्ता स्वस्य पुंसां शतं शतम् । समुद्धृत्य श्रुतवतां पुनाति निखिलं कुलम् ॥
प्रष्टा तु प्रश्नमात्रेण पुनाति कुलमात्मनः । श्रोता श्रवणमात्रेण स्वकुलं स्वस्त्रबान्धवान् ॥
शतजन्मतपःपूतो जन्मेदं भारते लभेत् । करोति सफलं जन्म श्रुत्वा हरिकथामृतम् ॥
अर्चनं वन्दनं मन्त्रजपः सेवनमेव च । स्मरणं कीर्तनं शश्वद्गुणश्रवणमीप्सितम् ॥२४॥
निवेदनं तस्य दास्यं नवधाभक्तिलक्षणम् । करोति जन्म सफलं कृत्वैतानि च नारद ॥
न च विघ्नो भवेत्तस्य परमायुर्न नश्यति । न याति तत्पुरः कालो वैनतेयमिवोरगः ॥
न गृह्णाति समीपं च क्षणं तस्य हरिः स्वयम् । उपतिष्ठन्ति तूर्णं तमणिमादिकसिद्धयः ॥
सुदर्शनं भ्रमत्येव तस्य पार्श्वे दिवानिशम् । कृष्णाज्ञया च रक्षार्थं को वा किं कर्तुमीश्वरः ॥
न यान्ति तत्समीपं च स्वप्नेऽपि यमकिंकराः । ज्वलदग्निं यथा दृष्ट्वा शलभा न व्रजन्ति तम् ॥
व्याधयो विपदः शोका विघ्नाश्च न प्रयान्ति तम् । न याति तत्समीपं च मृत्युर्मृत्युभयान्मुने ॥
ऋषयो मुनयः सिद्धाः संतुष्टाः सर्वदेवताः । स च सर्वत्र निःशङ्कः सुखी कृष्णप्रसादतः ॥

१ क °वतारणे । २ क. वदसि ।

तेष कृष्णकथायां च रतिरात्यन्तिकी सदा । जनकस्य स्वभावो हि जन्ये तिष्ठति निश्चितम्
विप्रेन्द्र का प्रशंसेयं जन्म ते ब्रह्मवक्षसे । यस्य यत्र कुले जन्म तन्मतिस्तादृशी भवेत् ॥
पिता विधाता जगतां कृष्णपादाब्जसेवया नित्यं करोति यः शश्वन्नवधाभक्तिलक्षणम् ॥
रतिः कृष्णकथायां च यस्याश्रुपुलकोद्गमः मनो निमग्नं तत्रैव स भक्तः कथितो बुधैः ॥
पुत्रदारादिकं सर्वं जानाति श्रीहरेरिति । आत्मना मनसा वाचा स भक्तः कथितो बुधैः ॥
निर्जने तीर्थसंपर्के निःसङ्गा ये सुखाऽन्विताः । ध्यायन्ते चरणाम्भोजं श्रीहरेस्ते च वैष्णवाः
दयाऽस्ति सर्वजीवेषु सर्वं कृष्णमयं जगत् । यो जानाति महाज्ञानी स भक्तो वैष्णवो मतः
शश्वद्ये नाम गायन्ति गुणं मन्त्रं जपन्ति च । कुर्वन्ति श्रवणं गाथा वदन्ति तेऽतिवैष्णवाः
स्वंधानीष्टानि वस्तूनि प्रदातुं हरये मुदा । तूर्णं यस्य मनो हृष्टं स भक्तो ज्ञानिनां वरः ॥
यन्मनो हरिपादाब्जे स्वप्ने ज्ञाने दिवानिशम् । पूर्वकर्मोपभोगं च बहिर्भुङ्क्ते स वैष्णवः ॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशत्ययम् । तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥
पूर्वान्सप्त परान्सप्त सप्त मातामहादिकान् । सोदरानुद्धरेद्भक्तः स्वप्रसूं च प्रसूप्रसूम् ॥१२
कलत्रं कन्यकां बन्धुं शिष्यं दौहित्रमात्मनः । किंकरान्किंकरीश्चैवमुद्धरेद्वैष्णवः सदा ॥
सदा वाञ्छन्ति तीर्थानि वैष्णवस्पर्शदर्शने । पापिदत्तानि पापानि तेषां नश्यन्ति सङ्गतः
गोदोहनक्षणं यावद्यत्र तिष्ठन्ति वैष्णवाः । तत्र सर्वाणि तीर्थानि सन्ति तावन्महीतले ॥
ध्रुवं तत्र मृतः पापी मुक्तो याति हरेः पदम् । तथैव ज्ञानगङ्गायामन्ते कृष्णस्मृतौ यथा ॥
तुलसीकानने गोष्ठे श्रीकृष्णमन्दिरे पदे । वृन्दारण्ये हरिद्वारे तीर्थेष्वन्येषु वा यथा ॥१८॥
पापानि पापिनां यान्ति तीर्थस्नानावगाहनात् । तेषां पापानि नश्यन्ति वैष्णवस्पर्शवायुना
न हि स्थातुं शक्नुवन्ति पापान्येव कृतानि च । ज्वलदग्नौ यथा क्षिप्रं शुष्काणि हि तृणानि च
भक्तं वर्त्मनि गच्छन्तं ये ये पश्यन्ति मानवाः । सप्तजन्मार्जिताघानि तेषां नश्यन्ति निश्चितम्
ये निन्दन्ति हृषीकेशं तद्भक्तं पुण्यरूपिणम् । शतजन्मार्जितं पुण्यं तेषां नश्यति निश्चितम्
ते पचन्ते महाघोरे कुम्भीपाके भयानके । भक्षिताः कीटसंघेन यावच्चन्द्रदिवाकरौ ॥६३॥
तस्य दर्शनमात्रेण पुण्यं नश्यति निश्चितम् । गङ्गां स्नात्वा रविं दृष्ट्वा तदा विद्वान्विशुध्यति
वैष्णवस्पर्शमात्रेण मुक्तो भवति पातकी । तस्य पापानि हन्त्येव स्वान्तःस्थो मधुसूदनः ॥
इत्येवं कथितो विप्र विष्णुवैष्णवयोर्गुणः अधुना श्रीहरेर्जन्म निबोध कथयामि ते ॥६६॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० विष्णुवैष्णवयोर्गुण-
प्रशंसाप्रस्ताववर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥

अथ द्वितीयोऽध्यायः ।

नारायण उवाच—

येन वा प्रार्थितः कृष्ण आजगाम महीतलम् । यं यं विधाय भूमौ स जगाम स्वालयं विभुः
भारावतरणोपायं दुष्टानां च वधोद्यमम् । सर्वं ते कथयिष्यामि सुविचार्य विधानतः ॥२॥
अधुना गोपवेषं च गोकुलागमनं हरेः । राधा गोपालिका येन निबोध कथयामि ते ।.३॥
शङ्खचूडवध पूर्वं सक्षेपात्कथितं श्रुतम् । अधुना तत्सुविस्तार्य निबोध कथयामि ते ॥४॥
श्रीदाम्नः कलहश्चैव बभूव राधया सह । श्रीदामा शङ्खचूडश्च शापात्तस्या बभूव ह ।.५॥
राधां शशाप श्रीदामा याहि योनिं च मानवीम् । व्रजे व्रजाङ्गना भूत्वा विचरस्व महीतले
भीता श्रीदामशापात्सा श्रीकृष्णं समुवाच ह । गोपीरूपा भविष्यामि श्रीदामा मां शशाप ह
कमुपायं करिष्यामि वद मां भयभञ्जन । त्वया विना कथमहं धरिष्यामि स्वजीवनम् ॥
क्षणेन मे युगशतं कालं नाथ त्वया विना । चक्षुर्निमेषविरहाद्भवेद्दग्धं मनो मम ॥ ९ ॥
शरत्पार्वणचन्द्राभं सुधापूर्णाननं तव । नाथ चक्षुश्चकोराभ्यां पिबाम्यहमहर्निशम् ॥१०॥
त्वमात्मा मे मनः प्राणो देहमात्रं वहाम्यहम् । दृष्टिशक्तिश्च चक्षुस्त्वं जीवनं परम धनम् ॥
स्वप्ने ज्ञाने त्वयि मनः स्मरामि त्वत्पदाम्बुजम् । तव दास्यं विना नाथ न जीवामि क्षणं विभो
कृष्णस्तद्वचनं श्रुत्वा बोधयामास सुन्दरीम् । वक्षसि प्रेयसीं कृत्वा चकार निर्भयां च ताम्
महीतलं गमिष्यामि वाराहे च वरानने । त्वया सार्धं भूगमनं जन्म तेऽपि निरूपितम् ॥
व्रजं गत्वा व्रजे देवि विहरिष्यामि कानने । मम प्राणाधिका त्वं च भयं किं ते मयि स्थिते
तामित्युक्त्वा हरिस्तत्र विरराम जगत्पतिः । अतो हेतोर्जगन्नाथो जगाम नन्दगोकुलम् ॥
किं वा तस्य भयं कंसाद्भयान्तकारकस्य च । मायाभयच्छलेनैव जगाम राधिकान्तकम् ॥
विजहार तया सार्धं गोपवेषं विधाय सः । सह गोपाङ्गनाभिश्च प्रतिज्ञापालनाय च ॥१८॥
ब्रह्मणा प्रार्थितः कृष्णः समागत्य महीतलम् । भारावतरणं कृत्वा जगाम स्वालयं विभु ॥

नारद उवाच—

श्रीदाम्नः कलहश्चैव कथं वा राधया सह । संक्षेपात्कथितं पूर्वं संव्यस्य कथयाधुना ॥

नारायण उवाच—

एकदा राधया सार्धं गोलोके श्रीहरिः स्वयम् । विजहार महारण्ये निर्जने रासमण्डले ॥
राधिका सुखसंभोगाद्बुबुधे न स्वकं परम् । कृत्वा विहारं श्रीकृष्णस्तामगृह्य विहाय च

१ क. रम्ये ।

गोपिकां विरजामन्यां शृङ्गारार्थं जगाम ह । वृन्दारण्ये च विरजा सुभगा राधिकासमा॥
तस्या वयस्याः सुन्दर्यो गोपीनां शतकोटयः । कृष्णप्राणाधिका गोपी धन्या मान्या च योषिताम् ॥ २४ ॥
रत्नसिंहासनस्था सा ददर्श हरिमन्तिके । ददर्श श्रीहरिस्तां च शरच्चन्द्रनिभाननाम् ॥
मनोहरां सस्मितां च पश्यन्तीं वक्रचक्षुषा । सदा षोडशवर्षीयां प्रोद्भिन्नवयौवनाम् ॥
रत्नालंकारशोभाढ्यां भूषितां शुक्लवाससा । पुलकाङ्कितसर्वाङ्गीं कामबाणप्रपीडिताम् ॥
दृष्ट्वा तां श्रीहरिस्तूर्णं विजहार तया सह । पुष्पतल्पे महारण्ये निर्जने रत्नमण्डपे ॥
मूर्छामवाप विरजा कृष्णशृङ्गारकौतुकात् । कृत्वा वक्षसि प्राणेशं कोटिकन्दर्पसंनिभम् ॥
तया सक्तं श्रीहरिं च रत्नमण्डपसंस्थितम् । दृष्ट्वा च राधिकालयश्च चक्रुस्ता च निवेदनम्
तासां च वचनं श्रुत्वा सुप्राप च चुकोप ह । भृशं रुरोद सा देवी रक्तपङ्कजलोचना ॥
ता उवाच महादेवी मा तं दर्शयितुं क्षमाः । यदि सत्यं ब्रूत यूयं मया सार्धं प्रगच्छत॥
करिष्यामि फलं गोप्याः कृष्णस्य च यथोचितम् । को रक्षिताऽद्य तस्याश्च मयि शास्तिं प्रकुर्वन्ति ॥ ३३ ॥
शोभमानयताश्चश्च तया सार्धं हरिं प्रियम् । अन्तर्वक्रं सस्मितं च विषकुम्भं सुधामुखम्
मदाश्रयं समागन्तुं यूयं दासं न दास्यथ । तमेव मण्डपं रम्यं यात संरक्षतेश्वरम्॥३६॥
राधिकावचनं श्रुत्वा काश्चिद्गोप्यो भयान्विताः। ता. सर्वाः संपुटाञ्जल्यो भक्तिनम्रात्मकंधराः
तामूचुः पुरतः स्थित्वा सर्वा एव प्रियां सतीम् ॥

आल्य ऊचुः—

*वयं तं दर्शयिष्यामो विरजासहितं विभुम् ।*

तासां च वचनं श्रुत्वा रथमारुह्य सुन्दरी । जगाम सार्धं गोपीभिस्त्रिषष्टिशतकोटिभिः ॥
रत्नेन्द्रसाररचितं कोटिसूर्यसमप्रभम् । मणीन्द्रसाररचितं कलशानां त्रिकोटिभिः ॥३९॥
राजितं चित्रराजीभिर्वैजयन्तीविराजितम् । लक्षचक्रसमायुक्तं मनोयायि मनोहरम् ॥
मणिसारविकारैश्च कोटिस्तम्भैः सुशोभितम् । नानाचित्रविचित्रैश्च सहितैः सुमनोहरैः ॥
सिन्दूराकारमणिभिर्मध्यदेशे विभूषितैः । रत्नकृत्रिमसिंहैश्च रथचक्रोर्ध्वसंस्थितैः ॥४२॥
चतुर्लक्षगृहमितैश्चित्रघण्टासमन्वितैः । चित्रपुत्तलिशोभाढ्यैर्विचित्रैश्च विराजितम्॥४३॥
शतमन्दिरलक्षैश्च रत्नसारविनिर्मितैः । मणिसारकपाटैश्च शोभितैश्चित्र जिभिः ॥४४॥
मणीन्द्रसारकलशैः शेखरोज्ज्वलितैर्युतम् । भोगद्रव्यसमायुक्तं वेषद्रव्यसमन्वितम्॥४५॥

---

१ क. प्रियाः ।

शोभितं रत्नरथ्याभी रत्नप्राङ्गणटान्वितम् । हरिन्मणीनां वेदीनां समूहेन समन्वितम् ॥
कुङ्कुमवर्णानां च सोपानकोटिभिर्युतम् । स्यमन्तकैः कौस्तुभैश्च रत्नैः प्रवरैस्तथा ॥
पद्मरागनिर्मकोटीनां शतकैश्च सुशोभितम् । चित्रकाननवापीभिर्विविधाभिर्विराजितम् ॥
रत्नेन्द्रसाररचितकलशोज्ज्वलशेखरम् । शतयोजनमूर्ध्वं च दशयोजनविस्तृतम् ॥ ४९ ॥
पारिजातप्रसूनानां माल्यकोटिविराजितम् । कुन्दानां करवीराणां यूथिकानां तथैव च ॥
सुचारुचम्पकानां च नागेशानां मनोहरैः । मल्लिकानां मालतीनां माधवीनां सुगन्धिनाम् ॥
कदम्बानां च माल्यानां कदम्बैश्च विराजितम् । सहस्रदलपद्मानां माल्याभिश्च विराजितम् ॥
चित्रपुष्पोद्यानसरःकाननैश्च विभूषितम् । सर्वेषां स्यन्दनानां च श्रेष्ठं वायुवहं परम् ॥
तत्सूक्ष्मवस्त्ररागाणां धरैराच्छादितं परम् । रत्नदर्पणलक्षाणां शतकैश्च समन्वितम् ॥
श्वेतचामरकोटीभिर्वज्रमुष्टिभिरन्वितम् । चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितैः ॥ ५१ ॥
पारिजातप्रसूनानां कोटितल्पविराजितम् । कोटिघण्टासमायुक्तं पताकाकोटिभिर्युतम् ॥
रत्नशय्याकोटिभिश्च चित्रवस्त्रपरिच्छदैः । चन्दनाक्तैश्चम्पकानां कुङ्कुमैश्च विचित्रितैः
पुष्पोपधानसंयुक्तैः शृङ्गाराहैरन्वितम् । अदृश्यैरश्रुतैर्द्रव्यैः सुन्दरैश्च विभूषितम् ॥
एवंभूताद्रथात्तूर्णमवरुह्य हरिप्रिया । जगाम सहसा देवी तं रत्नमण्डपं मुने ॥ ५९ ॥
द्वारे नियुक्तं ददर्श द्वारपालं मनोहरम् । लक्षगोपैः परिवृतं स्मेराननसरोरुहम् ॥ ६० ॥
गोपं श्रीदामनामानं श्रीकृष्णप्रियकिंकरम् । तमुवाच रुषा देवी रक्तपङ्कजलोचना ॥
गच्छ दूरं गच्छ दूरं रतिलम्पटकिंकर । कीदृशी मत्परा कान्ता द्रक्ष्यामि त्वत्प्रभोरहम्
राधिकावचनं श्रुत्वा निःशङ्कः पुरतः स्थितः । तामेव न ददौ गन्तुं वेत्रपाणिर्महाबलः ॥
तूर्णं च राधिकालक्षश्रीदामानं सकिंकरम् । बलेन प्रेरयामासुः कोपेन स्फुरिताधराः ॥
श्रुत्वा कोलाहलशब्दं गोपिकानां हरिः स्वयम् । ज्ञात्वा च कोपितां राधामन्तर्धानं चकार ह
विरजा राधिकाशब्दादन्तर्धानं हरेरपि । दृष्ट्वा राधां भयार्ता सा जहौ प्राणांश्च योगतः
सद्यस्तत्र सरिद्रूपं तच्छरीरं बभूव ह । व्याप्तं च वर्तुलाकारं तथा गोलोकमेव च ॥
कोटियोजनविस्तीर्णं प्रस्थेऽतिनिम्नमेव च । दैर्घ्यं दशगुणं चारु नानारत्नाकरं परम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्म० नारदना० विरजानन्दप्रस्तावव-
र्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

=====

अथ तृतीयोऽध्यायः ।

नारायण उवाच—
राधा रतिगृहं गत्वा न ददर्श हरिं मुने । विरजां च नदीरूपां दृष्ट्वा गेहं जगाम सा
श्रीकृष्णो विरजां दृष्ट्वा सरिद्रूपां प्रियां सतीम् । उच्चै रुरोद विरजातीरे नीरमनोहरे ॥
ममान्तिकं समागच्छ प्रेयसीनां परे वरे त्वया विनाऽहं सुभगे कथं जीवामि सुन्दरि ॥
नद्यधिष्ठात्रि देवि त्वं भव मूर्तिमती सती । ममाऽऽशिषा रूपवती सुन्दरी योषितां वरा ।
पूर्वरूपाच्च सौभाग्यादिदानीं सुभगा भव । पुरातनं शरीरं ते सरिद्रूपमभूत्पुनि ॥ ९ ॥
जलादुत्थाय चाऽऽगच्छ विधाय तनुमुत्तमाम् । अष्टौ सिद्धीर्मया दत्ताः सुरसुन्दरि सत्वरम्
कृष्णाज्ञया च विरजा विधाय तनुमुत्तमाम् । आजगाम हरेरग्रे साक्षाद्धेव सुन्दरी ॥
पीनश्रोणीवामा स्मेराननसरोरुहा । पश्यन्तं प्राणनाथं च पश्यन्ती वक्रचक्षुषा ॥
नितम्बश्रोणिभाराती पीनोन्नतपयोधरा । मानिनी मानिनीनां च गजेन्द्रमन्दगामिनी ॥
सुन्दरी सुन्दरीणां च धन्या मान्या च योषिताम् । चारुचम्पकवर्णाभा पक्वबिम्बाधरा वरा ॥
पक्वदाडिमबीजाभदन्तपङ्क्तिमनोहरा । शरत्पार्वणचन्द्रास्या फुल्लेन्दीवरलोचना ॥ ११ ॥
कस्तूरीबिन्दुना सार्धं सिन्दूरबिन्दुभूषिता । चारुचम्पकशोभाढ्या सुचारुकबरीयुता ॥ १२ ॥
रत्नकुण्डलयुग्मेन भूषिता रत्नमालया । गजमौक्तिकनासाग्रा मुक्ताहारविराजिता ॥
रत्नकङ्कणकेयूरचारुशङ्खकरोज्ज्वला । किङ्किणीजालशब्दाढ्या रत्नमञ्जीररञ्जिता ॥
तां च रूपवतीं दृष्ट्वा प्रेमोद्रेकाज्जगत्पतिः । चकाराऽऽलिङ्गनं तूर्णं चुचुम्ब च मुहुर्मुहुः ।
नानाप्रकारशृङ्गारं विपरीतादिकं विभुः । रहसि प्रेयसीं प्राप्य चकार च पुनः पुनः ॥
विरजा सा रजोयुक्ता धृत्वा वीर्यममोघकम् । सद्यो बभूव तत्रैव धन्या गर्भवती सती ॥
दधार गर्भमीशस्य दिव्यं वर्षशतं च सा । ततः सुषाव तत्रैव पुत्रान्सप्त मनोहरान् ॥
माता सा सप्तपुत्राणां श्रीकृष्णस्य प्रिया सती । तस्थौ तत्र सुखासीना सार्धं पुत्रैश्च सप्तभिः
एकदा हरिणा सार्धं वृन्दारण्ये च निर्जने । विजहार पुनः साध्वी शृङ्गारासक्तमानसा ॥
एतस्मिन्नन्तरे तत्र मातुः क्रोडं जगाम ह । कनिष्ठपुत्रस्त्वन्यैश्च भ्रातृभिः पीडितो भिया
भीतं स्वतनयं दृष्ट्वा तत्याज तं कृपानिधिः । क्रोडे चकार बालं सा कृष्णो राधागृहं ययौ
प्रबोध्य बालं सा साध्वी न ददर्शान्तिके प्रियम् । विललाप भृशं तत्र शृङ्गारातृप्तमानसा ॥
शशाप स्वसुतं कोपाल्लवणोदो भविष्यसि । कदाऽपि ते जलं केचिन्न खादिष्यन्ति जीविनः
शशाप बालांस्तांश्च यान्तु मूढा महीतलम् । गच्छध्वं च महीं मूढा जम्बुद्वीपं मनोहरम्
स्थितिर्नैकत्र युष्माकं भविष्यति पृथक्पृथक् । द्वीपे द्वीपे स्थितिं कृत्वा तिष्ठन्तु सुखिनः सदा
द्वीपस्थाभिर्गोपीभिश्च सह क्रीडन्तु निर्जने । कनिष्ठो मातृशापाच्च लवणोदो बभूव ह ॥

कनिष्ठः कथयामास मातृशापं च बालकात् । आजग्मुर्दुःखिताः सर्वे मातृस्थानं च बालकाः
श्रुत्वा विवरणं सर्वे प्रजग्मुर्धरणीतलम् । प्रणम्य चरणं मातुर्भक्तिनम्रात्ममूर्तयः ॥२९॥
सप्तद्वीपसमुद्राश्च सप्त तस्थुर्विभागशः । कनिष्ठाद्वृद्धपर्यन्तं द्विगुणं द्विगुणं मुने ॥३०॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवाः । एतेषां च जलं पृथ्व्यां सत्यार्थं च भविष्यति ॥
क्षाराः समुद्राः सप्तैव सप्तद्वीपा वसुंधराम् । रुरुदुर्बालकाः सर्वे मातृभ्रातृशुचाऽन्विताः ।
रुरोद च भृशं साध्वी पुत्रविच्छेदकातरा । मूर्छामवाप शोकेन पुत्राणां भर्तुरेव च ॥
तां शोकसागरे मग्नां विज्ञाय राधिकापतिः । आजगाम पुनस्तत्र स्मेराननसरोरुहः ॥
दृष्ट्वा हरिं सा तत्याज शोकं रोदनमेव च । आनन्दसागरे मग्ना दृष्ट्वा कान्तं बभूव ह ॥
चकार श्रीहरिं क्रोडे विजहार स्मरातुरा । तां च पुत्रपरित्यक्तां हरिस्तुष्टो बभूव ह ॥
वरं तस्यै ददौ प्रीत्या प्रसन्नवदनेक्षणः । कान्ते नित्यं तव स्थानमागमिष्यामि निश्चितम्
यथा राधा तत्समा त्वं भविष्यसि प्रिया मम । पुत्रान्द्रक्ष्यसि नित्यं त्वं मद्वरस्य प्रसादतः
इत्युक्तवन्तं श्रीकृष्णं वसन्तं विरजान्तिके । दृष्ट्वा राधावयस्याश्च कथयामासुरीश्वरीम् ॥
श्रुत्वा रुरोष सा देवी सुष्वाप क्रोधमन्दिरे । एतस्मिन्नन्तरे कृष्णो जगाम राधिकान्तिकम्
स तस्थौ राधिकाद्वारे श्रीदाम्ना सह नारद । रासेश्वरी हरिं दृष्ट्वा रुष्टोवाच प्रियं पुरः
मत्तो बहुतराः कान्ता गोलोके सन्ति ते हरे । याहि तासां संनिधानं मया ते किं प्रयोजनम्
विरजा प्रेयसी कान्ता सरिद्रूपा बभूव ह । देहं त्यक्त्वा मम भयात्तथाऽपि याहि तां प्रति
तत्तीरे मन्दिरं कृत्वा तिष्ठ तिष्ठ च याहि ताम् । नदी बभूव सा त्वं च नदो भवितुमर्हसि ॥
मदस्य नद्या सार्धं च संगमो गुणवान्भवेत् । स्वजातौ परमा प्रीतिः शयने भोजने सुखात्
देवचूडामणेः क्रीडा नद्या सार्धमहो बत । महाजनः स्मेरमुखः श्रुत्वा सद्यो भविष्यति ॥
ये त्वां वदन्ति सर्वेशं ते किं जानन्ति तत्त्वतः । भगवान्सर्वभूतात्मा नदीसंभोक्तुमिच्छति
इत्युक्त्वा राधिका देवी विरराम रुषाऽन्विता । नोत्तस्थौ भूमिशयनाद्गोपीलक्षसमन्विता ॥
काश्चिच्चामरहस्ताश्च काश्चित्सूक्ष्मांशुकाम्बराः । काश्चित्ताम्बूलहस्ताश्च काश्चिन्मालाकरा

. . . . . . . . . . . . . . . . . . वराः ॥ ४९ ॥
वाभितो रकराः काश्चित्काश्चित्पद्मकरा वराः । काश्चित्सिन्दूरहस्ताश्च पात्रहस्ताश्च काश्चन
रत्नालंकारहस्ताश्च काश्चित्कज्जलवाहिकाः । वेणुवीणाकराः काश्चित्काश्चित्कङ्कतिकाकराः
काश्चिद्गीतहस्ताश्च वस्त्रहस्ताश्च काश्चन । मुगन्धितैलहस्ताश्च काश्चन प्रमदोत्तमाः ॥
करताडकाः काश्चिद्दुंदुभिहस्ताश्च काश्चन । काश्चिन्मृदङ्गमुरजमुरलीतानकारिकाः ॥५२॥

१ क. बालाप्रियं पु°।

संगीतनिपुणाः काश्चित्काश्चिन्नर्तनतत्पराः । क्रीडावस्तुकराः काश्चिन्मधुहस्ताश्च काश्चन
सुधापात्रकराः काश्चिद्द्विपीठकराः पराः । वेषवस्तुकराः काश्चित्काश्चिच्चरणसेविकाः ॥
पुटाञ्जलिकराः काश्चित्काश्चित्स्तुतिपरा वराः । एवं कतिविधाः सन्ति राधिकापुरतो मुने
बहिर्देशस्थिताः काश्चित्कोटिशः कोटिशः सदा । काश्चिद्द्वारनियुक्ताश्च वयस्या वेत्रधारिकाः
कृष्णमभ्यन्तरं गन्तुं न ददुर्द्वारसंस्थिताः । पुरःस्थितं तं प्राणेशं राधा पुनरुवाच सा ॥
नानुरूपमत्यकथ्यमयोग्यमतिकर्कशम् ॥ ६८ ॥

राधिकोवाच—

हे कृष्ण विरजाकान्त गच्छ मत्पुरतो हरे । कथं दुनोषि मां लोल रतिचौरातिलम्पट ॥
शीघ्रं पद्मावतीं गच्छ रत्नमालां मनोरमाम् । अथवा वनमालां वा रूपेणाप्रतिमां व्रज ॥
हे नदीकान्त देवेश देवानां च गुरोर्गुरो । मया ज्ञातोऽसि भद्रं ते गच्छ गच्छ ममाऽऽश्रमात्
शश्वत्ते मानुषाणां च व्यवहारस्य लम्पट । लभतां मानुषीं योनिं गोलोकाद्व्रज भारतम् ॥
हे सुशीले शशिकले हे पद्मावति माधवि । निवार्यतां च धूर्तोऽयं किमस्यात्र प्रयोजनम् ॥
राधिकावचनं श्रुत्वा तमूचुर्गोपिका हरिम् । हितं तथ्यं च विनयं सारं यत्समयोचितम् ॥
काश्चिदूचुरिति हरे गच्छ स्थानान्तरं क्षणम् । राधारोषापनयने ह्युपायं मन्त्रयामहे वयम् ॥
काश्चिदूचुरिति प्रीत्या क्षणं गच्छ गृहान्तरम् । त्वयैव वर्धिता राधा त्वां विना कं च वक्ष्यति
काश्चिदूचुरिति प्रेम्णा राधिकाया हरिं मुने । क्षणं वृन्दावनं गच्छ मानापनयनावधि ॥
काश्चिदित्यूचुरीशं च परिहासपरं वचः । मानापनयनं भक्त्या मानिन्याः कुरु कामुक ॥
काश्चनोचुरितीशं तं याहि जात्यन्तरं तव । लोलुपस्य कथं नाथ करिष्यामो यथोचितम् ॥
काश्चनोचुरिति हरिं सस्मितं पुरतः स्थितम् । गत्वा समीपमुत्थाय मानापनयनं कुरु ॥
काश्चनोचुरिति प्राणनाथं गोप्यो दुरक्षरम् । कः क्षमः सांप्रतं द्रष्टुं राधिकामुखपङ्कजम् ॥
काश्चनोचुरिति विभुं व्रज स्थानान्तरं हरे । कोपापनयने काले पुनरागमनं तव ॥७२॥
काश्चनोचुरितीदं तं प्रगल्भाः प्रमदोत्तमाः । वयं त्वां वारयिष्यामो न चेद्याहि गृहान्तरम्
काश्चिन्निवारयामासुर्माधवं प्रमदोत्तमाः । स्मितवक्त्रं च सर्वेशं रहस्यमक्रोधनीश्वरम् ॥
गोपीभिर्वार्यमाणे च जगत्कारणकारणे । सद्यश्चुकोप श्रीदामा हरौ गेहान्तरं गते ॥७४॥
कोपादुवाच श्रीदामा राधिकां परमेश्वरीम् । रक्तपद्मेक्षणां रुष्टां रक्तपङ्कजलोचनाम् ॥

श्रीदामोवाच—

कथं वदसि मातस्त्वं कटुवाक्यं मदीश्वरम् । विचारणां विना देवि करोषि भर्त्सनं वृथा ॥
ब्रह्मानन्तेशदेवेशं जगत्कारणकारणम् । वाणीपद्मालयामायाप्रकृतीशं च निर्गुणम् ॥

१ क. °धर्मेशं ।

त्वा मायाम पूर्णकाम करोषि त्वं विडम्बनम्। देवैर्ना प्रवरा त्वं च निबोध यस्य सेवया॥
यस्य पदार्चनेनैव सर्वेषामीश्वरी परा। तन्न जानासि कल्याणि विमर्द्द वक्तुमीश्वर॥
भ्रूभङ्गलीलया कृष्ण स्रष्टु शक्तश्च त्वद्विधा। कोटिश कोटिशो देव्यस्तं न जानासि निर्गुणम्॥ ८१॥
वैकुण्ठे श्रीहरेरस्य चरणाम्बुजमार्जनम्। करोति केशैः शश्वच्छ्री सेवनं भक्तिपूर्वकम्॥
सरस्वती च स्तवनैः कर्णपीयूषमुन्दरैः। सततं स्तौति य भक्त्या न जानासि तमीश्वरम्॥
भीता च प्रकृतिर्मा सर्वेषां बीजरूपिणी। सततं स्तौति य भक्त्या तं न जानासि मानिनि॥
स्तुवन्ति सततं वेदा महिम्न पोडशीं कलाम्। क्वचिन्न विजानन्ति तं न जानासि मानिनि
वक्त्रैश्चतुर्भिर्न ब्रह्मा वेदानां जनक विभु। स्तौति सेवां च कुरुते चरणाम्बुजमीश्वरि॥
शकर पञ्चभिर्वक्त्रैः स्तौति य योगिना गुरु। साश्रुपूर्ण सपुलक सेवते चरणाम्बुजम्॥
शेष सहस्रवदनै परमात्मानमीश्वरम्। सततं स्तौति य भक्त्या सेवते चरणाम्बुजम्॥
धर्म पाता च सर्वेषां साक्षी च जगतां पति, भक्त्या च चरणाम्भोजं सेवते सततं मुदा॥
श्वेतद्वीपनिवासी य पाता विष्णु स्वयं विभु तस्यांशश्च तथा य य यं वेत्ति ऽप्यक्षरं परम्॥
सुरासुरमुनीन्द्रश्च मनवो मानवा बुधा। सेवन्ते न हि पश्यन्ति स्वप्नेऽपि चरणाम्बुजम्॥
क्षिप रोषं परित्यज्य भज पादाम्बुजं हरे। भ्रूभङ्गलीलामात्रेण सृष्टिसंहारेव च॥ ९२॥
निमेषमात्रं दृश्येन ब्रह्मण पतनं भवेत्, यस्यैकदिवसेऽष्टाविंशती द्रा पतन्त्यपि॥
एवमष्टोत्तरशतमायुर्यस्य जगद्विधे। त्वं वा काऽन्याश्च वा राधे मदीश्वरवशोऽखिलम्॥
श्रीदाम्नो वचनं श्रुत्वा केवलं कटुमुल्वलम्। सद्यश्चुकोप सा ब्रह्मन्नुत्थाय समुवास ह॥
रासेश्वरी बहिर्गत्वा तमुवाच ह निष्ठुरम्। स्फुरदोष्ठी मुक्तकेशा रक्ताम्भोरुहलोचना॥९३॥

राधिकोवाच—

रे रे जाल्म महामूढ शृणु लम्पटकिंकर। त्वं च जानासि सर्वं न जानासि त्वदीश्वरम्॥
त्वदीश्वरश्च श्रीकृष्णो न ह्यस्माकं व्रजाधिप। जानामि जनकं स्तौषि सदा निन्दसि मातरम्॥
यथाऽसुराश्च त्रिदशान् नित्यं निन्दन्ति सततम्। तथा निन्दसि मां मूढ तस्मात्त्वमसुरो भव॥
गोव्रजं गच्छ ऽसुरीं योनिं गोलोकाच्च बहिर्भव। मयाऽयं शापो मूढस्त्वं कस्त्वां रक्षितुमीश्वर॥
रासेश्वरी तमित्युक्त्वा सुदपं विरराम च, वयस्या सेव्यामासुश्चामरै रत्नमुष्टिभि॥
श्रुत्वा च वचनं तस्या कोपेन स्फुरिताधर। शशाप तां च श्रीदामा व्रज यानिं च मानुषीम्

---

१ 'मुल्बम्'।

श्रीदामोवाच—

मानुष्या इव कोपस्ते तस्मात्त्वं मानुषी भुवि । भविष्यसि न संदेहो मया शप्ता त्वमम्बिके ॥
छायया कलया वाऽपि परशक्त्या कलङ्किना । मूढा रायणपत्नीं त्वां वक्ष्यन्ति जगतीतले ॥
रायणः श्रीहरेरंशो वैश्यो वृन्दावने वने । भविष्यति महायोगी राधाशापेन गर्भजः ॥
गोकुले प्राप्य तं कृष्णं विहरिष्यसि कानने ॥ १०९ ॥
भविता ते वर्षशतं विच्छेदो हरिणा सह । पुनः प्राप्य तमीशं च गोलोकमागमिष्यसि ॥
तामित्युक्त्वा च नत्वा च स जगाम हरेः पुरः । गत्वा प्रणम्य श्रीकृष्णं शापाख्यानमुवाच ह
आनुपूर्व्यात्तु तत्सर्वं रुरोद च भृशं पुनः । उवाच तं रुदन्तं च गच्छ त्वं धरणीतलम् ॥
न जेता ते त्रिभुवने ह्यसुरेन्द्रो भविष्यसि । काले शंकरशूलेन देहं त्यक्त्वा ममान्तिकम् ॥
आगमिष्यसि पश्चाच्छ्रीयुगान्ते तु ममाऽऽशिषा । श्रीकृष्णस्य वचः श्रुत्वा तमुवाच शुचाऽन्वितः
त्वद्भक्तिरहितं मां च कदाचिन्न करिष्यसि । इत्युक्त्वा श्रीहरिं नत्वा जगाम स्वाश्रमाद्बहिः
पश्चाज्जगाम सा देवी रुरोद च पुनः पुनः । क्व यासि वत्सेत्युच्चार्य विललाप भृशं सती ॥
श्रीदामाऽपि च तां नत्वा रुरोद प्रेमविह्वलः । स एव शङ्खचूडश्च बभूव तुलसीपतिः ॥
गते श्रीदाम्नि सा देवी जगामेश्वरसंनिधिम् । सर्वं निवेदयामास हरिः प्रत्युत्तरं ददौ ॥
शोकाऽऽतुरां च तां कृष्णो बोधयामास प्रेयसीम् । शङ्खचूडश्च कालेन संप्राप पुनरीश्वरम् ॥
राधा जगाम धरणीं वाराहे हरिणा सह । वृषभानुगृहे जन्म लेभे च गोकुले मुने ॥ ११९ ॥
इत्येवं कथितं सर्वं श्रीकृष्णाख्यानमङ्गलम् । सर्वेषां वाञ्छितं सारं किं भूयः श्रोतुमिच्छसि ॥

इति श्री-ब्र० महा० श्रीकृष्णजन्मख० नारदना० सप्तसमुद्रजन्मराधा-
श्रीदामशापोद्भवो नाम तृतीयोऽध्यायः ॥ ३ ॥

अथ चतुर्थोऽध्यायः ।

नारद उवाच —

केन वा प्रार्थितः कृष्णो महीं च केन हेतुना । आजगाम जगन्नाथो वद वेदविदां वर ॥ १ ॥

नारायण उवाच—

पुरा वाराहकल्पे सा भाराक्रान्ता वसुंधरा । भृशं बभूव शोकार्ता ब्रह्माणं शरणं ययौ ॥
सुरैश्चासुरसंतप्तैर्भृशमुद्विग्नमानसैः । सार्धं तैस्तां दुर्गमां च जगाम वेधसः सभाम् ॥ २ ॥
ददर्श तस्यां देवेशं ज्वलन्तं ब्रह्मतेजसा । ऋषीन्द्रैश्च मुनीन्द्रैश्च सिद्धेन्द्रैः सेवितं मुदा ॥

१ क. °युगेऽतीते ।

अप्सरोगणनृत्यं च पश्यन्तं सस्मितं मुदा । गन्धर्वाणां च संगीतं श्रुतवन्तं मनोहरम्॥
जपन्तं परमं ब्रह्म कृष्ण इत्यक्षरद्वयम् । भक्त्याऽऽनन्दाश्रुपूर्णं तं पुलकाङ्कितविग्रहम्॥
भक्त्या सा त्रिदशैः सार्धं प्रणम्य चतुराननम् । सर्वं निवेदनं चक्रे दैत्यभारादिकं मुने॥७॥
साश्रुपूर्णा सपुलका तुष्टाव च रुरोद च । तामुवाच जगद्धाता कथं स्तौषि च रोदिषि ॥
कथमागमनं भद्रे वद भद्रं भविष्यति । सुस्थिरा भव कल्याणि भयं किं ते मयि स्थिते ॥
आश्वास्य पृथिवीं ब्रह्मा देवान्पप्रच्छ सादरम् । कथम गमनं देवा युष्माकं मम संनिधिम्॥
ब्रह्मणो वचनं श्रुत्वा देवा ऊचुः प्रजापतिम् । भाराक्रान्ता च वसुधा दस्युग्रस्ता वयं प्रभो
त्वमेव जगतां स्रष्टा शीघ्रं नो निष्कृतिं कुरु । गतिस्त्वमस्या भो ब्रह्मन्निर्वृतिं कर्तुमर्हसि ।
पीडिता येन भारेण पृथिवीयं पितामह । वयं तेनैव दुःखार्तास्तद्भारहरणं कुरु ॥ १२ ॥
देवानां वचनं श्रुत्वा पप्रच्छ तां जगद्विधिः । दूरीकृत्य भयं वत्से सुखं तिष्ठ ममान्तिकम्
येषां भारमशक्ता त्वं सोढुं पङ्कजलोचने अपनेष्यामि तं भद्रे भद्रं ते भविता ध्रुवम् ॥
तस्य सा वचनं श्रुत्वा तमुवाच स्वपीडनम् । पीडिता येन येनैवं प्रसन्नवदनेक्षणा ॥१६॥

क्षितिरुवाच—

शृणु तात प्रवक्ष्यामि स्वकीयां मानसीं व्यथाम् । विना बन्धुं सविश्वासं न न्यं कथितुमर्हति
स्त्रीजातिरबला शश्वद्रक्षणीया स्वबन्धुभिः । जनकस्वामिपुत्रैश्च गर्हिताऽन्यैश्च निश्चितम् ॥
त्वया पृष्टा जगत्तात न लज्जा कथितुं मम । येषां भारैः पीडिताऽहं श्रूयतां कथयामि ते॥
कृष्णभक्तिविहीना ये ये च तद्भक्तनिन्दकाः । तेषां महापातकिनामशक्ता भारवाहने ॥
स्वधर्माचारहीना ये नित्यकृत्यविवर्जिताः । श्रद्धाहीनाश्च वेदेषु तेषां भारेण पीडिता ॥
पितृमातृगुरुस्त्रीणां पोषणं पुत्रपोष्ययोः । ये न कुर्वन्ति तेषां च न शक्ता भारवाहने ॥
ये मिथ्यावादिनस्तात दयासत्यविवर्जिताः । निन्दका गुरुदेवानां तेषां भारेण पीडिता ॥
मित्रद्रोही कृतघ्नश्च मिथ्यासाक्ष्यप्रदायकः । विश्वासघ्नो न्यासहर्ता तेषां भारेण पीडिता ॥
कल्याणसूक्तसामानि हरेर्नामैकमङ्गलम् । कुर्वन्ति विक्रयं ये वै तेषां भारेण पीडिता ॥
जीवघाती गुरुद्रोही ग्रामयाजी च लुब्धकः । शवदाही शूद्रभोजी तेषां भारेण पीडिता ॥
पूजायज्ञोपवासादिव्रतानि विविधानि च । ये ये मूढा निहन्तारस्तेषां भारेण पीडिता ॥
सदा द्विषन्ति ये पापा गोविप्रसुरवैष्णवान् । हरिं हरिकथां भक्तिं तेषां भारेण पीडिता ॥
शङ्खादीनां च भारेण पीडिताऽहं यथा विधे । ततोऽधिकेन दैत्यानां भारेण परिपीडिता
इत्येवं कथितं सर्वं मद्व्यथाया निवेदनम् । त्वया यदि सुपाल्याऽहं प्रतीकारं कुरु प्रभो ॥

१ क. नियमानि ।

इत्येवमुक्त्वा वसुधा रुरोद च मुहुर्मुहुः । ब्रह्मा तद्रोदनं दृष्ट्वा तामुवाच कृपानिधिः ॥
भारं तवापनेष्यामि दस्यूनामप्युपायतः । उपायतोऽपि कार्याणि सिद्ध्यन्त्येव वसुंधरे ॥
कालेन भारहरणं करिष्यति महेश्वरः । मन्त्रं मङ्गलकुम्भं च शिवलिङ्गं च कुङ्कुमम् ॥
मधुकाष्ठं चन्दनं च कस्तूरीं तीर्थमृत्तिकाम् । खड्गगण्डकखण्डं च स्फाटिकं पद्मरागकम् ॥
इन्द्रनीलं सूर्यमणिं रुद्राक्षं कुशमूलकम् । शालग्रामशिलां शङ्खं तुलसीं प्रतिमां जलम् ॥
शङ्खं प्रदीपमालां च शिलामर्च्यां च घण्टिकाम् । निर्माल्यं चैव नैवेद्यं हरिद्रूर्णमणिं तथा ॥
ग्रन्थियुक्तं यज्ञसूत्रं दर्पणं श्वेतचामरम् । गोरोचनं च मुक्तां च शुक्तिं माणिक्यमेव च ॥
पुराणसंहितां वह्निं कर्पूरं परशुं तथा । रजतं काञ्चनं चैव प्रवालं रत्नमेव च ॥ ३८ ॥
कुशबीजं तीर्थतोयं गव्यं गोमूत्रगोमयम् । त्वयि ये स्थापयिष्यन्ति मूढाश्चैतानि सुन्दरि ॥
पच्यन्ते कालसूत्रे ते वर्षाणामयुतं ध्रुवम् ॥ ३९ ॥
ब्रह्मा पृथ्वीं समाश्वास्य देवताभिस्तया सह । जगाम जगतां धाता कैलासं शंकरालयम् ॥
गत्वा तमाश्रमं रम्यं ददर्श शंकरं विधिः । वसन्तमक्षयवटमूले स्वःसरितस्तटे ॥ ४१ ॥
व्याघ्रचर्मपरीधानं दक्षकन्यास्थिभूषणम् । त्रिशूलपट्टिशधरं पञ्चवक्त्रं त्रिलोचनम् ॥ ४२ ॥
नानासिद्धैः परिवृतं योगीन्द्रगणसेवितम् । परितोऽप्सरसां नृत्यं पश्यन्तं सस्मितं मुदा ॥
गन्धर्वाणां च संगीतं श्रुतवन्तं कुतूहलात् । पश्यन्तीं पार्वतीं प्रीत्या पश्यन्तं वक्रचक्षुषा ॥
जपन्तं पञ्चवक्त्रेण हरेर्नामैकमङ्गलम् । मन्दाकिनीपद्मबीजमालया पुलकाङ्कितम् ॥
एतस्मिन्नन्तरे ब्रह्मा तस्याग्रे स धूर्जटेः । पृथिव्या सुरसंघैश्च सार्धं प्रणतकंधरैः ॥ ४६ ॥
उत्तस्थौ शंकरः शीघ्रं भक्त्या दृष्ट्वा जगद्गुरुम् । ननाम मूर्ध्ना संप्रीत्या लब्धवानाशिषं ततः ॥
प्रणेमुर्देवताः सर्वे शंकरं चन्द्रशेखरम् । प्रणनाम धरा भक्त्या चाऽऽशिषं युयुजे हरः ॥
वृत्तान्तं कथयामास पार्वतीशं प्रजापतिः । श्रुत्वा नम्रमुखस्तूर्णं शंकरो भक्तवत्सलः ॥
भक्तापायं समाकर्ण्य पार्वतीपरमेश्वरौ । बभूवतुस्तौ दुःखार्तौ बोधयामास तौ विधिः ॥
ततो ब्रह्मा महेशश्च सुरसंघान्वसुंधराम् । गृहं प्रस्थापयामास समाश्वास्य प्रयत्नतः ॥
ततो देवेश्वरैस्तूर्णमागत्य धर्ममन्दिरम् । सह तेन समालोच्य प्रजग्मुर्भवनं हरेः ॥ ५२ ॥
वैकुण्ठं परमं धाम जरामृत्युहरं परम् । वायुना धार्यमाणं च ब्रह्माण्डादूर्ध्वमुत्तमम् ॥ ५३ ॥
कोटियोजनमूर्ध्वं च ब्रह्मलोकात्सनातनम् । वर्णनीयं न कविभिर्विचित्रं रत्ननिर्मितम् ॥
पद्मरागैरिन्द्रनीलै राजमार्गैर्विभूषितम् । ते मनोयायिनः सर्वे संप्रापुस्तं मनोहरम् ॥
हरेरन्तःपुरं गत्वा ददृशुः श्रीहरिं सुराः । रत्नसिंहासनस्थं च रत्नालंकारभूषितम् ॥
रत्नकेयूरवलयरत्ननूपुरशोभितम् । रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् ॥ ५७ ॥

पीतवस्त्रपरीधानं वनमालाविभूषितम् । शान्तं सरस्वतीकान्तं लक्ष्मीधृतपदाम्बुजम् ॥
कोटिकन्दर्पलीलाभं स्मेरवक्त्रं चतुर्भुजम् । सुनन्दनन्दकुमुदैः पार्षदैरुपसेवितम् ॥५९॥
चन्दनोक्षितसर्वाङ्गं सुरत्नमुकुटोज्ज्वलम् । परमानन्दरूपं च भक्तानुग्रहकारकम् ॥६०॥
तं प्रणेमुः सुरेन्द्राश्च भक्त्या ब्रह्मादयो मुने । तुष्टुवुः परया भक्त्या भक्तिनम्रात्मकंधराः
परमानन्दभारार्ताः पुलकाञ्चितविग्रहाः ॥६१॥

ब्रह्मोवाच—

नमामि कमलाकान्तं शान्तं सर्वेशमच्युतम् । वयं यस्य कलाभेदाः कलांशकलया सुराः ॥
मनवश्च मुनीन्द्राश्च मानुषाश्च चराचराः । कलाकलांशकलया भूतास्त्वत्तो निरञ्जन ॥

शंकर उवाच—

त्वामक्षयमक्षरं वा व्यक्तमव्यक्तमीश्वरम् । अनादिमादिमानन्दरूपिणं सर्वरूपिणम् ॥
अणिमादिकसिद्धीनां कारणं सर्वकारणम् । सिद्धिज्ञं सिद्धिदं सिद्धिरूपं कः स्तोतुमीश्वरः ॥

धर्म उवाच—

वेदे निरूपितं वस्तु वर्णनीयं विचक्षणैः । वेदे निर्वचनीयं यत्तन्निर्वक्तुं च कः क्षमः ॥
यस्य संभावनीयं यद्गुणरूपं निरञ्जनम् । तदतिरिक्तं स्तवनं किमहं स्तौमि निर्गुणम् ॥
ब्रह्मादीनामिदं स्तोत्रं यः पठेत्संयतो मुने । पठित्वा मुच्यते दुर्गाद्वाञ्छितं च लभेन्नरः ॥
देवानां स्तवनं श्रुत्वा तानुवाच हरिः स्वयम् । गोलोकं यात यूयं च यामि पश्चाच्छ्रिया सह
नरनारायणौ तौ द्वौ श्वेतद्वीपनिवासिनौ । एते यास्यन्ति गोलोकं तथा देवी सरस्वती ॥
अनन्तो मम मायां च कार्तिकेयो गणाधिपः । सावित्री वेदमाता च पश्चाद्यास्यन्ति निश्चितम्
तत्राऽहं द्विभुजः कृष्णो गोपीभी राधया सह । अत्राहं कमलायुक्तः सुनन्दादिभिरावृतः ॥
नारायणश्च कृष्णोऽहं श्वेतद्वीपनिवासकृत् । ममैवैताः कलाः सर्वे देवा ब्रह्मादयः स्मृताः
कलाकलांशकलया सुरासुरनरादयः । गोलोकं यात यूयं च कार्यसिद्धिर्भविष्यति । ७४॥
वयं पश्चाद्गमिष्यामः सर्वेषां सिद्धिसिद्धये । इत्युक्त्वा वै सभामध्ये विरराम हरिः स्वयम्
प्रणम्य देवताः सर्वा जग्मुर्गोलोकमद्भुतम् । विचित्रं परमं धाम जरामृत्युहरं परम् ॥
ऊर्ध्वं वैकुण्ठतोऽगम्यं पञ्चाशत्कोटियोजनम् । वायुना धार्यमाणं च निर्मितं स्वेच्छया विभो
समनिर्वचनीयं च देवास्ते गमनोत्सुकाः । ते मनोयायिनः सर्वे सम्प्रापुर्विरजानटम् ॥
दृष्ट्वा देवाः सरित्तीरं विस्मयं परमं ययुः । शुद्धस्फटिकसंकाशं सुविस्तीर्णं मनोहरम् ॥
मुक्तामाणिक्यपरममणिरत्नाकरान्वितम् । कृष्णशुभ्रहरिद्रक्तमणिराजिविराजितम् ॥

---

१ क 'नतो म' । २ क 'नोन्मुखा' ।

प्रवालाङ्कुरमुद्भूतं कुत्रचित्सुमनोहरम् : परमामूल्यसद्रत्नाकरराजिविभूषितम् ॥७८॥
विधेश्वरस्यमाश्चर्यं निधिश्रेष्ठाकरान्वितम् । पद्मरागेन्द्रनीलानामाकरं कुत्रचिन्मुने॥७९॥
कुत्रचिच्च मरकताकरश्रेणीसमन्वितम् । स्यमन्तकाकरं कुत्र कुत्रचिद्रुचकाकरम् ॥८०॥
अमूल्यपीतवर्णाभं मणिश्रेण्याकरान्वितम् । रत्नाकरं कुत्रचिच्च कुत्रचित्कौस्तुभाकरम् ॥
कुत्र निर्वचनीयानां मणीनामाकरं परम् । कुत्रचित्कुत्रचिद्रम्यविहारस्थलमुत्तमम् ॥८२॥
दृष्ट्वा तु परमाश्चर्यं जग्मुस्तत्पारमीश्वराः । ददृशुः पर्वतश्रेष्ठं शतशृङ्गं मनोरमम् ॥८३॥
पारिजाततरूणां च वनराजिविराजितम् । कल्पवृक्षैः परिवृतं वेष्टितं कामधेनुभिः ॥
कोटियोजनमूर्ध्वं च दैर्घ्यं दशगुणोत्तरम् । शैलस्यपारिमितं पञ्चाशत्कोटियोजनम् ८५
कोटियोजनमूर्ध्वं च दैर्घ्यं दशगुणोत्तरम् । शैलस्यपारिमितं पञ्चाशत्कोटियोजनम् ८६
शतशृङ्गस्यैव शिखरे रासमण्डलम् । दशयोजनविस्तीर्णं वर्तुलाकारमुत्तमम्॥८६॥
पुष्पोद्यानसहस्रेण पुष्पितेन सुगन्धिना । संकुलेन मधुघ्राणा समूहेन समन्वितम् ॥८७॥
सुरत्नद्रव्यसंयुक्तै राजितं रत्नमन्दिरैः । रत्नमण्डपकोटीनां सहस्रेण समन्वितम् ॥८८॥
रत्नसोपानयुक्तेन सद्रत्नकलशेन च । हरिन्मणीनां स्तम्भेन शोभितेन च शोभितम् ॥
सिंदूरवर्णमणिभिः परितः खचितेन च । इन्द्रनीलैर्मरकतैर्मण्डितेन मनोहरैः ॥९०॥
रत्नप्राकारसंयुक्तमणिभेदैर्विराजितम् । द्वारैः कपाटसंयुक्तैश्चतुर्भिश्च विराजितम्॥९१॥
रज्जुग्रन्थिसमायुक्तं रसालपल्लवान्वितैः । परितः कदलीस्तम्भसमूहैश्च समन्वितम् ॥९२॥
शुक्लधान्यपर्णजालफलदूर्वाङ्कुरान्वितम् । चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥९३॥
वेष्टितं गोपकन्यानां समूहैः कोटिशो मुने । रत्नालंकारसंयुक्तै रत्नमालाविराजितैः ॥
रत्नकङ्कणकेयूररत्ननूपुरभूषितैः । रत्नकुण्डलयुग्मेन गण्डस्थलविराजितैः ॥ ९५ ॥
रत्नाङ्गुलीयललितैर्हस्ताङ्गुलिविराजितैः । रत्नपाशकवृन्दैश्च विराजितपदाङ्गुलैः ॥९६॥
भूषितै रत्नभूषाभिः सद्रत्नमुकुटोज्ज्वलैः । गजेन्द्रमुक्ताकेशैर्नानिकामध्यराजितैः ॥
सिन्दूरबिन्दुना सार्धमलकाधःस्थलोज्ज्वलैः । चारुचम्पकवर्णैश्चन्दनद्रवचर्चितैः ॥
पीतवस्त्रपरीधानैर्बिम्बाधरमनोहरैः । शरत्पार्वणचन्द्राणां प्रभामुष्टमुखोज्ज्वलैः ॥९९॥
शरत्प्रफुल्लपद्मानां शोभामोषणलोचनैः । कस्तूरीपत्रिकायुक्तै रेखाकज्जलोज्ज्वलैः ॥
प्रफुल्लमालतीमालाजालैः कबरशोभितैः । मधुलुब्धमधुघ्राणां समूहैश्च विसंकुलैः ॥
चारुणा गमनेनैव गजखञ्जनगञ्जनैः ॥ १०१ ॥
वक्रभ्रूभङ्गसंयोगस्लक्ष्णस्मितसमन्वितैः । पक्वदाडिमबीजाभदन्तपङ्क्तिविराजितैः ॥१०२॥
खगेन्द्रचञ्चुशोभाढ्यनासिकोन्नतभूषितैः । गजेन्द्रगण्डयुग्माभस्तनभारनतैरिव ॥१०३॥

१ क. 'त्नप्रकाशसं'। २ क. 'युक्तै र'। ३ क. 'र्मलाजाक'। ४ क. 'कपटैश्च'।

नितम्बकठिनश्रोणीपीनभारभरानतैः । कन्दर्पशरचेष्टाभिर्जर्जरीभूतमानसैः ॥ १०७ ॥
दर्पणैः पूर्णचन्द्रास्यसौन्दर्यदर्शनोत्सुकैः । राधिकाचरणाम्भोजसेवासक्तमनोरथैः ॥१०८॥
सुन्दरीणां समूहैश्च रक्षितं राधिकाज्ञया । क्रीडासरोवराणां च लक्षैश्च परिवेष्टितम् ॥
श्वेतरक्तैर्लोहितैश्च वेष्टितैः पद्मराजिभिः । सुकूजद्भिर्मधुव्रातानां समूहैः संकुलैः सदा ११०
पुष्पोद्यानसहस्रेण पुष्पितेन समन्वितम् । कोटिकुञ्जकुटीरैश्च पुष्पशय्यासमन्वितैः ॥
भोगद्रव्यसकर्पूरताम्बूलवस्त्रसंयुतैः । रत्नप्रदीपैः परितः श्वेतचामरदर्पणैः ॥ ११२ ॥
विचित्रपुष्पमालाभिः शोभितैः शोभितं मुने । तं रासमण्डपं दृष्ट्वा जग्मुस्ते पर्वताद्बहिः ॥
ततो विचक्षणं रम्यं ददृशुः सुन्दरं वनम् । वनं वृन्दावनं नाम राधामाधवयोः प्रियम् ॥
क्रीडास्थानं तयोरेव कल्पवृक्षचयान्वितम् । विरजानीरनीरक्तैः कम्पितं मन्दवायुभिः ॥
कस्तूरीयुक्तपत्राब्जैः पुष्पौघैः सुरभीकृतम् । नवपल्लवसंसक्तपरपुष्टरुतैर्युतम् ॥११६॥
कुत्र केलिकदम्बानां कदम्बैः कमनीयकम् । मन्दाराणां चम्पकानां चन्दनानां तथैव च ॥
सुगन्धिकुसुमानां च गन्धेन सुरभीकृतम् । आम्राणां नागरङ्गाणां पनसानां तथैव च ॥
तालानां नारिकेलानां वृन्दैर्वृन्दारकं वनम् । जम्बूनां बदरीणां च खर्जूराणां विशेषतः ॥
गुवाकाम्रातकानां च जम्बीराणां च नारद । कदलीनां श्रीफलानां दाडिमानां मनोहरैः ।
सुपक्वफलसंयुक्तैः समूहैश्च विराजितम् । पिप्पलीनां च शालानामश्वत्थानां तथैव च ॥
निम्बानां शाल्मलीनां च तिन्तिडीनां च शोभनैः । अन्येषां तरुभेदानां संकुलैः संकुलं सदा
परितः कल्पवृक्षाणां वृन्दैर्वृन्दैर्विराजितम् । मल्लिकामालतीकुन्दकेतकीमाधवीलताः ॥
एतासां च समूहैश्च यूथिकाभिः समन्वितम् । चारुकुञ्जकुटीरैस्तैः पञ्चाशत्कोटिभिर्मुने ॥
रत्नप्रदीपदीपैश्च धूपेन सुरभीकृतैः । शृङ्गारद्रव्ययुक्तैश्च वासितैर्गन्धवायुभिः । १२१ ।
चन्दनाक्तैः पुष्पतल्पैर्मालाजालसमन्वितैः । मधुलुब्धमधुपानां कलशब्दैश्च शब्दितम् ॥
रत्नालंकारशोभाढ्यैर्गोपीवृन्दैश्च वेष्टितम् । पञ्चाशत्कोटिगोपीभी रक्षितं राधिकाज्ञया ।
द्वात्रिंशत्काननं तत्र रम्यं रम्यं मनोहरम् । वृन्दावनाभ्यन्तरितं निर्जनस्थानमुत्तमम् ॥
सुपक्वमधुरस्वादुफलैर्वृन्दारकं मुने । गोष्ठानां च गवां चैव समूहैश्च समन्वितम् ॥१२९॥
पुष्पोद्यानसहस्रेण पुष्पितेन सुगन्धिना । मधुलुब्धमधुपानां समूहेन समन्वितम् ॥१३०॥
पञ्चाशत्कोटिगोपीनां निवासैश्च विराजितम् । श्रीकृष्णतुल्यरूपाणां सद्रत्नगुण्ठितैर्वरैः ॥
दृष्ट्वा वृन्दावनं रम्यं ययुर्गोलोकमीश्वराः । परितो वर्तुलाकारं कोटियोजनविस्तृतम् ॥
रत्नप्राकारसंयुक्तं पञ्चद्वारान्वितं मुने । गोपानां च समूहैश्च द्वारपालैः समन्वितम् ॥

१ क. “वद्र” ।

आश्रमै रत्नखचितैर्नानाभोगसमन्वितैः । गोपीनां कृष्णभृत्यानां पञ्चाशत्कोटिभिर्युतम् ॥
भक्तानां गोपवृन्दानामाश्रमैः शतकोटिभिः । ततोऽधिकसुविस्तीर्णैः सद्रत्नग्रथितैर्युतम् ॥
आश्रमैः पार्षदानां च ततोऽधिकविलक्षणैः । अमूल्यरत्नरचितैः संयुक्तं शतकोटिभिः ॥
पार्षदप्रवराणां च श्रीकृष्णरूपधारिणाम् । आश्रमैः कोटिभिर्युक्तं सद्रत्नेन विनिर्मितैः ॥
राधिकाशुद्धभक्तानां गोपीनामाश्रमैर्वरैः । सद्रत्नरचितैर्दिव्यैर्द्वात्रिंशत्कोटिभिर्युतम् ॥
तासां च किङ्करीणां च भवनैः सुमनोहरैः । मणिरत्नादिरचितैः शोभितं दशकोटिभिः ॥
शतजन्मतपःपूता भक्ता ये भारते भुवि । हरिभक्तिपरा ये च कर्मनिर्वाणकारकाः ॥
स्वप्ने ज्ञाने हरेर्ध्याने निविष्टमानसा मुने । राधाकृष्णेति कृष्णेति भजन्तो दिवानिशम् ॥
तेषां श्रीकृष्णभक्तानां निवासैः सुमनोहरैः । सद्रत्नमणिनिर्माणैर्नानाभोगसमन्वितैः ॥
पुष्पशय्यापुष्पमालाश्वेतचामरशोभितैः । रत्नदर्पणशोभाढ्यैर्हरिन्मणिसमर्पितैः ॥१४३॥
अमूल्यरत्नकलशसमूहान्वितशेखरैः । सूक्ष्मवस्त्राभ्यन्तरितैः संयुक्तं शतकोटिभिः ॥
देवास्तमद्भुतं दृष्ट्वा किंयद्दूरं ययुर्मुदा । तत्राक्षयवटं रम्यं ददृशुर्जगदीश्वराः ॥
पञ्चयोजनविस्तीर्णमूर्ध्वं तद्द्विगुणं मुने । सहस्रस्कन्धसंयुक्तशाखासंस्थासमन्वितम् ॥
रक्तपक्वफलाकीर्णं शोभितं रत्नवेदिभिः । कृष्णस्वरूपांस्तन्मूले ददृशुर्वल्लभाञ्छिशून्[1] ॥
पीतवस्त्रपरीधानान्क्रीडासक्तमनोहरान् । चन्दनोक्षितसर्वाङ्गान्रत्नभूषणभूषितान् ॥
ददृशुस्तत्र देवेशाः पार्षदप्रवरान्हरेः । ततोऽविदूरे ददृशू राजमार्गं मनोहरम् ॥१४९॥
सिन्दूराकारमणिभिः परितो रचितं मुने । इन्द्रनीलैः पद्मरागैर्हीरकैः रुक्मकैस्तथा ॥१५०॥
निर्मितैर्वेदिभिर्युक्तं परितो रत्नमण्डपम् । चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥१५१॥
दधिपूर्णलाजफलपुष्पदूर्वाङ्कुरान्वितम् । सूक्ष्मसूत्रग्रन्थियुक्तश्रीखण्डपल्लवान्वितम् ॥
रम्भास्तम्भसमूहैश्च कुङ्कुमाक्तैर्विराजितम् । सद्रत्नमण्डलघटैः फलशाखसमन्वितैः ॥
सिन्दूरकुङ्कुमाक्तैश्च गन्धचन्दनचर्चितैः । भूषितैः पुष्पमालाभिः पादपैः परिभूषितम् ॥
गोपिकानां समूहैश्च क्रीडासक्तैश्च वेष्टितम् । बहुमूल्येन रत्नेन रत्नसोपाननिर्मितान् ॥
वह्निशौचांशुकैः रम्यैः श्वेतचामरदर्पणैः । रत्नतल्पविचित्रैश्च पुष्पमाल्यैर्विराजितान् ॥
षोडशद्वारसंयुक्तान्द्वारपालैश्च रक्षितान् । परितः परिखायुक्तान्रत्नप्राकारवेष्टितान् ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितान् । गृहान्मनोरमान्दृष्ट्वा ते देवा गमनोत्सुकाः ॥
जग्मुः शीघ्रं किंयद्दूरं ददृशुः सुन्दरं ततः । आश्रमं राधिकायाश्च रासेश्वर्याश्च नारद ॥
देवाविदेव्या गोपीनां वरायाश्चारुनिर्मितम् । प्राणाधिकायाः कृष्णस्य रम्यं रम्यमनोहरम् ॥

1 क. 'गुर्वल्लवाञ्छि' ।

सर्वानिर्वचनीयं च पण्डितैर्न निरूपितम् । सुचारुवर्तुलाकारं पद्मगव्यूतिप्रमाणकम् ॥
शतमन्दिरसंयुक्तं ज्वलितं रत्नतेजसा । अमूल्यरत्नसाराणां चयैर्विरचितं परम् ॥१६२॥
दुर्लङ्घ्याभिर्गभीराभिः परिखाभिः सुशोभितम् । कल्पवृक्षैः परिवृतं पुष्पोद्यानशतान्तरम् ॥
सुमूल्यरत्नखचितप्राकारैः परिवेष्टितम् । सद्रत्नवेदिकायुक्तैर्युक्तं द्वारैश्च सप्तभिः ॥१६४॥
संयुक्तं रत्नचित्रैश्च विचित्रैर्वर्तुलं मुने । प्रधानसप्तद्वारेभ्यः क्रमशः क्रमशो मुने ॥१६५॥
सर्वतोऽपि ततस्तत्र षोडशद्वारसंयुतम् । देवा दृष्ट्वा च प्राकारं सहस्रधनुरुच्छ्रितम् ॥
सद्रत्नक्षुद्रकलशाग्रैर्गृहैः सुमनोहरैः । प्रदीप्तं तेजसा रम्यं परमं विस्मयं ययुः ॥१६७॥
ततः प्रदक्षिणीकृत्य किंचिद्दूरं ययुर्मुदा । पुरतो गच्छतां तेषां पश्चाद्भूतस्तदाश्रमः ॥
गोपानां गोपिकानां च ददृशुश्चाऽऽश्रमान्परान् । अमूल्यरत्नरचितान्शतकोटिमितान्मुने ॥
दर्शं दर्शं च परितो गोपानां सर्वमाश्रमम् । गोपिकानां चापरं वा रम्यं रम्यं नवं नवम् ॥
गोलोकं निखिलं दृष्ट्वा पुलकाङ्गं ययुः सुराः । तदेव वर्तुलाकारं रम्यं वृन्दावनं वनम् ॥
ददृशुः शतशृङ्गं च तद्बहिर्विरजानदीम् । विरजां तां ययुर्देवा ददृशुः शून्यमेव च ॥
वाय्वाधारं च गोलोकं सद्रत्नमयमद्भुतम् । ईश्वरेच्छाविनिर्माणं राधिकाज्ञानुबन्धनात् ॥
युक्तं सहस्रैः सरसां केवलं मङ्गलालयम् । नृत्यं च ददृशुस्तत्र देवाश्च सुमनोहरम् ॥
सुतानं चारुसंगीतं राधाकृष्णगुणान्वितम् । श्रुत्वैव गीतपीयूषं मूर्छामापुः सुरा मुने ॥
क्षणेन चेतनां प्राप्य ते देवाः कृष्णमानसाः । ददृशुः परमाश्चर्यं स्थाने स्थाने मनोहरम् ॥
ददृशुर्गोपिकाः सर्वा नानावेषविधायिकाः । काश्चिन्मृदङ्गहस्ताश्च काश्चिद्वीणाकरा वराः ॥
काश्चिच्चामरहस्ताश्च करतालकराः पराः । काश्चिद्यन्त्रवाद्यहस्ता रत्ननूपुरशोभिताः ॥
सद्रत्नकिङ्किणीजालशब्देन शब्दिता वराः । काश्चिन्मस्तककुम्भाश्च नृत्यभेदमनोरथाः ॥
पुंवेषनायिकाः काश्चित्काश्चित्तासां च नायिकाः । कृष्णवेषधराः काश्चिद्राधावेषधराः पराः ॥
काश्चित्संयोगविरताः काश्चिदालिङ्गने रताः । क्रीडासक्ताश्च ता दृष्ट्वा सस्मिता जगदीश्वराः ॥
प्रगच्छन्तः किंचिद्दूरं ददृशुश्चाऽऽश्रमान्बहून् । राधासखीनां गेहाश्च प्रधानानां च नारद ॥
रूपेणैव गुणेनैव वेषेण यौवनेन च । सौभाग्येनैव वयसा सदृशीनां च तत्र वै ॥१८३॥
त्रयस्त्रिंशद्वयस्याश्च राधिकायाश्च गोपिकाः । वेषनिर्वचनीयाश्च तासां नामानि च शृणु ॥
सुशीला च शशिकला यमुना माधवी रती । कदम्बमाला कुन्ती च जाह्नवी च स्वयंप्रभा ॥
चन्द्रमुखी च सावित्री माधवी सुमुखी सुखा । पद्मालया पारिजाता गौरी च सर्वमङ्गला ॥

१ क शब्दिता। २ क. 'ओ पद्ममुखा सावित्री सुमुखा सु'।

कालिका कमला दुर्गा भारती च सरस्वती । गङ्गाऽम्बिका मधुमती चम्पा पर्णा च सुन्दरी ॥
कृष्णप्रिया सती चैव नन्दिनी नन्दनेति च । एताः समानाः सद्रत्नरचिता राधिकाप्रियाः ॥
एतासां समरूपाणां रत्नधातुविचित्रितान् । नानाप्रकारचित्रेण चित्रितान्सुमनोहरान् ॥
अमूल्यरत्नकलशसमूहैः शिखरोज्ज्वलान् । सद्रत्नरचितान्कुम्भानाश्रमान्ददृशुस्तथा ॥
ब्रह्माण्डाद्बहिरूर्ध्वे च नास्ति लोकस्तदूर्ध्वकः । ऊर्ध्वे शून्यमयं सर्वं तदन्ता सृष्टिरेव च ॥
रसातलेभ्यः सप्तभ्यो नास्त्यधः सृष्टिरेव च । तदधश्च जलं ध्वान्तमगन्तव्यमदृश्यकम् ॥
ब्रह्माण्डानां तद्बहिश्च सर्वं मत्तो निशामय ॥ १९३ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० गोलोकवर्णनं नाम
चतुर्थोऽध्यायः ॥ ४ ॥

अथ पञ्चमोऽध्यायः ।

नारायण उवाच—

गोलोकं निखिलं दृष्ट्वा देवास्ते हृष्टमानसाः । पुनराजग्मू राधायाः प्रधानद्वारमेव च ॥
सद्रत्नमणिनिर्माणं वेदिकायुग्मसंयुतम् । हरिद्राकारमणिना वज्रमिश्रितेन च ॥ २ ॥
अमूल्यरत्नरचितकपाटेन विभूषितम् । द्वारे नियुक्तं ददृशुर्वीरभानुमनुत्तमम् ॥ ३ ॥
रत्नसिंहासनस्थं च रत्नाभरणभूषितम् । पीतवस्त्रपरिधानं सद्रत्नमुकुटोज्ज्वलम् ॥ ४ ॥
द्वारं चित्रविचित्रेण विचित्रं परमाद्भुतम् । सर्वं निवेदनं चक्रुर्देवा दौवारिकं मुदा ॥५॥
तानुवाच द्वारपालो निःशङ्कं त्रिदशेश्वरान् । नाहं विनाऽऽज्ञया गन्तुं दातुं साम्प्रतमीश्वरः
किंकरान्प्रेषयामास श्रीकृष्णस्थानमेव च । हरेरनुज्ञां संप्राप्य ददौ गन्तुं सुरान्मुने ॥
तं संभाष्य ययुर्देवा द्वितीयं द्वारमुत्तमम् । ततोऽधिकं विचित्रं च सुन्दरं सुमनोहरम् ॥
द्वारे नियुक्तं ददृशुश्चन्द्रभानुं च नारद । किशोरं श्यामलं चारुवर्गवेषधरं वरम् ॥
रत्नसिंहासनस्थं च रत्नभूषणभूषितम् । गोपानां च समूहेन पञ्चलक्षेण शोभितम् ॥१०॥
तं संभाष्य ययुर्देवास्तृतीयं द्वारमुत्तमम् । ततोऽतिसुन्दरं चित्रं ज्वलन्तं मणितेजसा ॥
द्वारे नियुक्तं ददृशुः सूर्यभानुं च नारद । द्विभुजं मुरलीहस्तं किशोरं श्यामसुन्दरम् ॥
मणिकुण्डलयुग्मेन कपोलस्थलराजितम् । रत्नदण्डकरं श्रेष्ठं प्रेष्यं गवेशयोः परम् ॥
नवलक्षेण गोपानां वेष्टितं च नृपेन्द्रवत् । तं संभाष्य ययुर्देवाश्चतुर्थं द्वारमेव च ॥१४॥
तेभ्यो विलक्षणं रम्यं सुदीप्तं मणितेजसा । अत्यद्भुतं विचित्रेण भूषितं सुमनोहरम् ॥

द्वारे नियुक्तं ददृशुर्वसुभानुं व्रजेश्वरम् । किशोरं सुन्दरवरं मणिदण्डधरं परम् ॥१६॥
रत्नसिंहासनस्थं च रत्नभूषणभूषितम् । पक्वबिम्बाधरोष्ठं च सस्मितं सुमनोहरम् ॥१७॥
तं संभाष्य ययुर्देवाः पञ्चमं द्वारमेव च । वज्रभित्तिस्थितैश्चित्रविचित्रैर्ज्वलितं परम् ॥
द्वारपालं च ददृशुर्देवभानुं च तत्र वै । चारुसिंहासनस्थं च रत्नभूषणभूषितम् ॥१९॥
मयूरपिच्छचूडं च रत्नमालाविभूषितम् । कदम्बपुष्पसंसक्तसद्रत्नकुण्डलोज्ज्वलम् ॥२०॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् । नृपेन्द्रवरतुल्यं च दशलक्षप्रजान्वितम् ॥ २१ ॥
तं वेत्रपाणिं संभाष्य ययुर्देवा मुदाऽन्विताः । विलक्षणं द्वारषट्कं चित्रराजिविराजितम् ॥
वज्रभित्तियुग्मयुक्तं पुष्पमाल्यविभूषितं । द्वारे नियुक्तं ददृशुः शक्रभानुं व्रजेश्वरं ॥
नानालंकारशोभाढ्यं दशलक्षप्रजान्वितम् । श्रीखण्डपल्लवासक्तकपोलं कुण्डलोज्ज्वलम् ॥
तूर्णं सुरास्तं संभाष्य ययुर्द्वारं च सप्तमम् । नानाप्रकारचित्रं च पड्भ्यश्चातिविलक्षणम् ॥
द्वारे नियुक्तं ददृशू रत्नभानुं हरेः प्रियम् । चन्दनोक्षितसर्वाङ्गं पुष्पमालाविभूषितम् ॥
भूषितं भूषणै रम्यैर्मणिरत्नमनोहरैः ॥ २१ ॥
गोपेन्द्रैर्दशलक्षैश्च राजेन्द्रमिव राजितम् । रत्नसिंहासनस्थं च स्मेराननसरोरुहम् ॥२७॥
तं वेत्रहस्तं संभाष्य जग्मुर्देवेश्वरा मुदा । विचित्रमष्टमं द्वारं सप्तभ्योऽपि विलक्षणम् ॥
दौवारिकं ते ददृशुः सुपार्श्वं सुमनोहरम् । सस्मितं सुन्दरवरं श्रीखण्डतिलकोज्ज्वलम् ॥
बन्धुजीवाधरोष्ठं च रत्नकुण्डलमण्डितम् । सर्वालंकारशोभाढ्यं रत्नदण्डधरं वरम् ॥
गोपेन्द्रैर्दशलक्षैश्च किशोरैश्च समन्वितम् । ततः शीघ्रं ययुर्देवा नवमं द्वारमीप्सितम् ॥
वज्रसद्रत्नरचितं चतुर्वेदिसमन्वितम् । अपूर्वचित्ररचितं मालाजालैर्विराजितम् ॥ ३२ ॥
द्वारपालं च ददृशुः सुबलं ललिताकृतिम् । नानाभूषणशोभाढ्यं भूषणार्हं मनोहरम् ॥
व्रजेन्द्रैर्दशलक्षैश्च संयुक्तं सुमनोहरम् । तं दण्डहस्तं संभाष्य सुरा द्वारान्तरं ययुः ॥
विशिष्टं दशमद्वारं दृष्ट्वा ते विस्मयं ययुः । सर्वानिर्वचनीयं चाप्यदृष्टमश्रुतं मुने ॥
ददृशुर्द्वारपालं च सुदामानं च सुन्दरम् । अनिर्वचनीयरूपं कृष्णतुल्यं मनोहरम् ॥
गोपविंशतिलक्षाणां समूहैः परिवारितम् । तं दण्डहस्तं दृष्ट्वैव जग्मुर्द्वारान्तरं सुराः ॥
द्वारमेकादशाख्यं च सुचित्रं महदद्भुतम् । द्वारपालं च तत्रस्थं श्रीदामानं व्रजेश्वरम् ॥
राधिकापुत्रतुल्यं च पीतवस्त्रेण भूषितम् । अमूल्यरत्नरचितरम्यसिंहासनस्थितम् ॥३९॥
अमूल्यरत्नभूषाभिर्भूषितं सुमनोहरम् । चन्दनागुरुकस्तूरीकुङ्कुमेन विराजितम् ॥४०॥
गण्डस्थलकपोलार्हसद्रत्नकुण्डलोज्ज्वलम् । सद्रत्नश्रेष्ठरचितविचित्रमुकुटोज्ज्वलम् ॥

---

१ क स्वर्णे ।

प्रफुल्लमालतीमालाजालैः सर्वाङ्गभूषितम् । कोटिगोपैः परिवृतं राजेन्द्राधिकमुज्ज्वलम् ॥
तं संभाष्य ययुर्द्वारं द्वादशाख्यं सुरा मुदा । अमूल्यरत्नरचितवेदिकाभिः समन्वितम् ॥
सर्वेषां दुर्लभं चित्रमदृश्यमश्रुतं मुने वज्रभित्तिस्थितं चित्रं सुन्दरं सुमनोहरम् ॥४४॥
द्वारे नियुक्ता ददृशुर्देवा गोपाङ्गना वराः । नवयौवनसंपन्ना रत्नाभरणभूषिताः ॥
पीतवस्त्रपरीधानाः कबरीभारभूषिताः । सुगन्धिमालतीमालाजालैः सर्वाङ्गभूषिताः ॥४६॥
रत्नकङ्कणकेयूररत्ननूपुरभूषिताः । रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताः ॥ ४७ ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चिताः । पीनश्रोणीभरानम्रा नितम्बाभारखण्डिताः ॥
गोपीनां शतकोटीनां श्रेष्ठाः प्रेष्ठा हरेरपि गोपीश्च कोटिशो दृष्ट्वा सुरास्ते विस्मयं ययुः
संभाष्य ता मुदा युक्ता ययुर्द्वारान्तरं मुने । ततश्च क्रमशो विप्र त्रिषु द्वारेषु तत्र वै ॥
गोपाङ्गनानां श्रेष्ठाश्च ददृशुः सुमनोहराः । वराणां च वरा रम्या धन्या मान्याश्च शोभनाः
सर्वाः सौभाग्ययुक्ताश्च राधिकायाः प्रियाश्च ताः । भूषिता भूषणै रम्यैः प्रोद्भिन्नवयौवनाः
एवं द्वारत्रयं दृष्ट्वा स्वप्नज्ञानाद्भुताश्रुतम् । अदृश्यमतिरम्यं चाप्यनिरूप्यं विचक्षणैः ॥
तास्ताः संभाष्य देवास्ते विस्मिता ययुरीश्वराः । राधिकाभ्यन्तरं द्वारं षोडशाख्यं मनोहरम्
सर्वासां च प्रधानं च गोप्यं गोपाङ्गनागणैः । त्रयस्त्रिंशद्वयस्यानां निकरैर्वेष्टितं मुने ॥
तेषामनिर्वचनीयैर्नानागुणसमन्वितैः । रूपयौवनसंपन्नै रत्नालंकारभूषितैः ॥ ५६ ॥
रत्नकङ्कणकेयूररत्ननूपुरभूषितैः । सद्रत्नकिङ्किणीजालैर्मध्यदेशविभूषितैः ॥ ५७ ॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितैः । प्रफुल्लमालतीमालाजालैर्वक्षःस्थलोज्ज्वलैः ॥५८॥
शरत्पार्वणपद्मानां प्रभां मुष्णन्मुखेन्दुभिः । पारिजातप्रसूनानां मालाजालेन वेष्टितैः ॥
पक्वबिम्बाधरोष्ठैश्च स्मेराननसरोरुहैः । पक्वदाडिमबीजाभिः शोभितैर्दन्तपङ्क्तिभिः ॥
चारुचम्पकवर्णाभिर्मध्यस्थलकज्जलैर्मुने । गजमौक्तिकयुक्ताभिर्नासिकाभिर्विराजितैः ॥६१॥
खगेन्द्रचारुचञ्चूनां शोभामुष्णाभिरेव च । गजेन्द्रगण्डकठिनस्तनभारभरानतैः ॥६२॥
पीनश्रोणिभरार्तैश्च मुकुन्दपदमानसैः । निमेषरहिता देवा द्वारं च ददृशुश्च ताः ॥६३॥
सद्रत्नमणिरत्नैश्च वेदिकायुग्मशोभितम् । हरिन्मणीनां स्तम्भानां समूहैः संयुतं सदा ॥
सिन्दूराकारमणिभिर्मध्यस्थलविराजितैः । पारिजातप्रसूनानां मालाजालैर्विभूषितम् ॥
तत्संस्पर्शैर्गन्धवाहैः सर्वत्र सुरभीकृतम् । दृष्ट्वा तत्परमाश्चर्यं राधिकाभ्यन्तरं सुराः ॥
श्रीकृष्णचरणाम्भोजदर्शनैकमनोरथाः । ताः संभाष्य ययुः शीघ्रं पुलकाञ्चितविग्रहाः ॥
भक्त्युद्रेकादश्रुपूर्णाः किंचिन्नम्रात्मकंधराः । आरात्ते ददृशुर्देवा राधिकाभ्यन्तरं वरम् ॥
मन्दिराणां च मध्यस्थं चतुःशालं मनोहरम् । अमूल्यरत्नसाराणां सारेण रचितं परम् ॥

नानारत्नमणिस्तम्भैर्वज्रयुक्तैश्च भूषितम् । पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥
मुक्तासमूहैर्माणिक्यैः श्वेतचामरदर्पणैः । अमूल्यरत्नसाराणां कलशैर्भूषितं मुने ॥७१॥
पट्टसूत्रग्रन्थियुक्तश्रीखण्डपल्लवान्वितैः । मणिस्तम्भसमूहैश्च रम्यप्राङ्गणभूषितम् ॥७२॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् । शुक्लधान्यशुक्लपुष्पप्रवालफलतण्डुलैः ॥ ७३ ॥
पर्णदूर्वाक्षतैर्लाजैर्निर्मञ्छनविभूषितैः । फलयुक्तै रत्नकुम्भैः सिन्दूरकुङ्कुमान्वितैः ॥
पारिजातप्रसूनानां मालायुक्तैर्विराजितम् । प्रसूनाक्तैर्गन्धवाहैः सर्वत्र सुरभीकृतम् ॥
सर्वानिर्वचनीयं च यद्द्रव्यमनिरूपितम् । ब्रह्माण्डे दुर्लभं यद्यद्वस्तुभिस्तैर्विराजितम् ॥
पारिजातप्रसूनानां मालाजालैः सुशोभितम् । रत्नशय्यासु ललिताः शुक्लवस्त्रपरिच्छदाः
कोटिशो रत्नकुम्भाश्च रत्नपात्राणि नारद । अमूल्याणि चारूणि तैस्तैरेव विभूषितम् ॥
नानाप्रकारवाद्यानां कलनादैर्निनादितम् । स्वरयन्त्रैश्च वीणाभिर्गोपीसंगीतसुश्रुतम् ॥७९॥
मोहितं वंशशब्दैश्च मृदङ्गानां च नारद । गोपानां कृष्णतुल्यानां समूहैः परिवारितम् ॥
राधासखीनां गोपीनां वृन्दैर्वृन्दैर्विराजितम् । राधाकृष्णगुणोद्रेकपदसंगीतसुश्रुतम् ॥८१॥
एवमभ्यन्तरं दृष्ट्वा बभूवुर्विस्मिताः सुराः । शुश्रुवुर्मधुरं गीतं ददृशुर्नृत्यमुत्तमम् ॥८२॥
तत्र तस्थुः सुराः सर्वे ध्यानैकतानमानसाः । रत्नसिंहासनं रम्यं ददृशुस्त्रिदशेश्वराः ॥८३॥
धनुःशतप्रमाणं च परितो वर्तुलाकृतिम् । सद्रत्नक्षुद्रकलशसमूहैश्च समन्वितम् ॥८४॥
चित्रपुत्तलिकपुष्पचित्रकाननभूषितम् । तत्र तेजःसमूहं च सूर्यकोटिसमप्रभम् ॥८५॥
प्रभया ज्वलितं ब्रह्मन्नाश्चर्यमहदद्भुतम् । सप्ततालप्रमाणं तद्व्याप्तमूर्ध्वं समन्ततः ॥८६॥
तेजोरूपं च सर्वेषां [1]महाश्रमविवर्जितम् । सर्वव्यापि सर्वबीजं चक्षूरोधकरं परम् ॥८७॥
दृष्ट्वा तेजःस्वरूपं च ते देवा ध्यानतत्पराः । प्रणेमुः परया भक्त्या भक्तिनम्रात्मकंधराः ॥
परमानन्दसंयोगादश्रुपूर्णविलोचनाः । पुलकाङ्कितसर्वाङ्गा वाञ्छापूर्णमनोरथाः ॥ ८९ ॥
नत्वा तेजःस्वरूपं च तमीशं त्रिदशेश्वराः । तत्रोत्थाय ध्यानयुक्ताः प्रतस्थुस्तेजसः पुरः ॥
ध्यात्वैवं जगतां धाता बभूव संपुटाञ्जलिः । दक्षिणे शंकरं कृत्वा वामे धर्मं च नारद ॥
भक्त्युद्रेकात्प्रतुष्टाव ध्यानैकतानमानसः । परात्परं गुणातीतं परमात्मानमीश्वरम् ॥९२॥

ब्रह्मोवाच—

वरं वरेण्यं वरदं वरदानां च कारणम् । कारणं सर्वभूतानां तेजोरूपं नमाम्यहम् ॥
मङ्गलं मङ्गलानां च मङ्गलं मङ्गलप्रदम् । समस्तमङ्गलाधारं तेजोरूपं न० ॥ ९४ ॥
स्थितं सर्वत्र निर्लिप्तमात्मरूपं परात्परम् । निरीहमवितर्क्यं च तेजोरूपं न० ॥ ९५ ॥

---

१ क. व्यासाश्रमविराजितम् ।

सगुणं निर्गुणं ब्रह्म ज्योतीरूपं सनातनम् । साकारं च निराकारं तेजोरूपं न० ॥९६॥
तमनिर्वचनीयं च व्यक्तमव्यक्तमेककम् । स्वेच्छामयं सर्वरूपं तेजोरूपं न० ॥ ९७ ॥
गुणत्रयविभागाय रूपत्रयधरं परम् । कलया ते कृताः सर्वे किं जानन्ति श्रुतेः परम् ॥
सर्वाधारं सर्वरूपं सर्वबीजमबीजकम् । सर्वान्तकमनन्तं च तेजोरूपं न० ॥ ९९ ॥
लक्ष्यं षड्गुणरूपं च वर्णनीयं विचक्षणैः । किं वर्णयामि लक्ष्यं च तेजोरूपं न० १००
अशरीरं विग्रहवदिन्द्रियं यदतीन्द्रियम् । यदसाक्षि सर्वसाक्षि तेजोरूपं न० ॥ १०१ ॥
गमनार्हमपादं यदचक्षुः सर्वदर्शनम् । हस्तास्यहीनं यद्भोक्तृ तेजोरूपं न० ॥ १०२ ॥
वेदे निरूपितं वस्तु सन्तः शक्ताश्च वर्णितुम् वेदे निरूपितं यत्तत्तेजोरूपं न० ॥ १०३ ॥
सर्वेशं यदनीशं यत्सर्वादि यदनादि यत् । सर्वात्मकमनात्मं यत्तेजोरूपं न० ॥ १०४ ॥
अहं विधाता जगतो वेदानां जनकः स्वयम् । पाता धर्मो हरो हर्ता स्तोतुं शक्ता न केऽपि यत् ॥ १०५ ॥

सेवया तव धर्मोऽयं पालने च निरूपितः । तवाऽऽज्ञया च संहर्ता त्वया काले निरूपिते ॥
निःशेषोत्पत्तिकर्ताऽहं त्वत्पदाम्भोजसेवया । कर्मिणां फलदाता च त्वं भक्तानां च नः प्रभुः
ब्रह्माण्डे बिम्बसदृशे भूत्वा विषयिणो वयम् । एवं कतिविधाः सन्ति तेष्वनन्तेषु सेवकाः
यथा न संख्या रेणूनां तथा तेषामणीयसाम् । सर्वेषां जनकश्चेशो यस्तं स्तोतुं च के क्षमाः
एकैकलोमविवरे ब्रह्माण्डमेकमेककम् । यस्यैव महतो विष्णोः षोडशांशस्तवैव सः ११०
ध्यायन्ते योगिनः सर्वे तवैतद्रूपमीप्सितम् । त्वद्भक्तदास्यनिरताः सेवन्ते चरणाम्बुजम् ॥
किशोरं सुन्दरतरं यद्रूपं कमनीयकम् । भक्तध्यानानुरूपं च दर्शयास्माकमीश्वर ॥ ११२ ॥
नवीनजलदश्यामं पीताम्बरधरं वरम् । द्विभुजं मुरलीहस्तं सस्मितं सुमनोहरम् ॥ ११३ ॥
मयूरपिच्छचूडं च मालतीमालमण्डितम् । चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ११४
अमूल्यरत्नसाराणां सारभूषणभूषितम् । अमूल्यरत्नरचितकिरीटमुकुटोज्ज्वलम् ॥ ११५ ॥
शरत्प्रफुल्लपद्मानां प्रभामोच्यास्यचन्द्रकम् । पक्वबिम्बसमानेन ह्यधरोष्ठेन राजितम् ॥
पक्वदाडिमबीजाभदन्तपङ्क्तिमनोहरम् । केलीकदम्बमूले च स्थितं रासरसोन्मुखम् ॥
गोपीवक्त्रास्मिततनुं राधावक्षःस्थलस्थितम् । एवं वाञ्छितरूपं ते द्रष्टुं को वा न चोत्सुकः
इत्येवमुक्त्वा विश्वसृट् प्रणनाम पुनः पुनः । एवं स्तोत्रेण तुष्टाव धर्मोऽपि शंकरः स्वयम् ॥
ननाम भूयो भूयश्च साश्रुपूर्णविलोचनः । सिद्धेन्द्रोऽपि पुनः स्तोत्रं प्रचक्रे त्रिदशेश्वरः ॥

---

१ क. सुरा. । २ क. °यं रक्षितारं च रक्षति । ३ क. निषेकलिपिक° । ४ क. भरया । ५ क. चोत्सुकम् ।

दयासास्तत्राऽऽश्रमे सर्वे श्रीकृष्णतेजसा मुने। स्तवराजमिमं नित्यं ब्रह्मेशधर्मभिः कृतम्॥
पूजाकाले हरेरेवं भक्तियुक्तश्च यः पठेत्। सुदुर्लभां दृढां भक्तिं निश्चलां लभते हरेः॥
सुरासुरमुनीन्द्राणां दुर्लभं दास्यमेव च। अणिमादिकसिद्धिं च सालोक्यादिचतुष्टयम्॥
इहैव विष्णुतुल्यश्च विख्यातः पूजितो ध्रुवम्। वाक्सिद्धिर्मन्त्रसिद्धिश्च भवेत्तस्य मुनिश्चितम्
सर्वसौभाग्यमारोग्यं यशसा पूरितं जगत्। पुत्रश्च विद्या कविता निश्चला कमला तथा॥
पत्नी पतिव्रता साध्वी सुशीला सुस्थिराः प्रजाः। कीर्तिश्च चिरकालीना ह्यन्ते कृष्णान्तिके
गतिः॥ १२९॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० गोलोकवर्णने श्रीकृ-
ष्णस्तोत्रराजपठनं नाम पञ्चमोऽध्यायः॥ ५॥

====

अथ षष्ठोऽध्यायः।

**नारायण उवाच—**

ध्यात्वा स्तुत्वा च निष्ठन्तो देवास्ते तेजसः पुरः। ददृशुस्तेजसो मध्ये शरीरं कमनीयकम्
नवजलाम्भोदवर्णाभं सस्मितं सुमनोहरम्। परमाह्लादकं रूपं त्रैलोक्यचित्तमोहनम्॥२॥
गण्डस्थलकपोलाभ्यां ज्वलन्मकरकुण्डलम्। सद्रत्ननूपुराभ्यां च चरणाम्भोजराजितम्॥
वह्निशुद्धहरिद्राभामूल्यवस्त्रविराजितम्। मणिरत्नेन्द्रसाराणां स्वेच्छाकौतुकनिर्मितैः॥
भूषितं भूषणैः स्वैस्तद्रूपेणैव भूषितैः। विनोदमुरलीयुक्तबिम्बाधरमनोहरम्॥ ५॥
प्रसन्नेक्षणपश्यन्तं भक्तानुग्रहकारकम्। सद्रत्नगुटिकायुक्तकवचोरःस्थलोज्ज्वलम्॥६॥
कौस्तुभाख्यसद्रत्नप्रदीपेनेनसोज्ज्वलम्। तत्र तेजसि चार्वङ्गीं ददृशू राधिकाभिधाम्
पश्यन्तीं सस्मितं कान्तं पश्यन्तीं वक्रचक्षुषा। मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिविराजितम्
ईषद्धास्यप्रसन्नास्यां शरत्पङ्कजलोचनाम्। शरत्पार्वणचन्द्राभाविनिन्द्यास्यमनोहराम्॥
बन्धुजीवप्रभामुष्टाधरोष्ठरुचिराननाम्। रणन्मञ्जीरयुग्मेन पादाम्बुजविराजिताम्॥१०॥
मणीन्द्राणां प्रभामोषनखराजिविराजिताम्। कुङ्कुमाभासमाच्छाद्यपदाधोरागभूषिताम्॥
अमूल्यरत्नसाराणां रशनाश्रेणिभूषिताम्। हुताशनविशुद्धांशुकामूल्यवस्त्रोज्ज्वलाम्॥
महामणीन्द्रसाराणां किङ्किणीमध्यसंयुताम्। सद्रत्नहारकेयूरकरकङ्कणभूषिताम्॥१३॥
रत्नेन्द्रसाररचितकपोलोज्ज्वलकुण्डलाम्। कर्णोपरि मणीन्द्राणां कर्णभूषणभूषिताम्॥
खगेन्द्रचञ्चुनासाग्रगजेन्द्रमौक्तिकान्विताम्। मालतीमालया वक्रकबरीभारशोभिताम्॥

१ क. 'पासद्ध थे'।

मालया कौस्तुभेन्द्राणां वक्षःस्थलसुशोभिताम् । पारिजातप्रसूनानां मालाजालोज्ज्वलाम्बराम्
रत्नाङ्गुलीयनिकरैः कराङ्गुलिविभूषिताम् । दिव्यशङ्खविकारैश्च चित्ररागविभूषितैः ॥
सूक्ष्मसूत्राकृतैः रम्यैर्भूषिता शङ्खभूषणैः । सद्रत्नसारगुटिकाराजिसूत्रसुशोभिताम् ॥ १८ ॥
प्रतप्तस्वर्णवर्णाभामाच्छाद्यचारुविग्रहाम् । नितम्बश्रोणिललितां पीनस्तननताम्बराम् ॥
भूषितां भूषणैः सर्वैः सौन्दर्येण विभूषितैः । विस्मितास्त्रिदशाः सर्वे दृष्ट्वा तामीश्वरीं वराम्
तुष्टुवुस्ते सुराः सर्वे परिपूर्णमनोरथाः ॥ २० ॥

ब्रह्मोवाच—

तव चरणसरोजे मन्मनश्चञ्चरीको भ्रमतु सततमीश प्रेमभक्त्या सरोजे ॥
भुवनविभवभोगात्त्रासशान्त्योषधाय सुदृढसुपरिपक्वां देहि भक्तिं च दास्यम् ॥

शंकर उवाच—

भवजलनिधिमग्नश्चित्तमीनो मदीयो भ्रमति सततमस्मिन्घोरसंसारकूपे ॥
विषयमतिविनिन्द्यं सृष्टिसंहाररूपमपनय तव भक्तिं देहि पादारविन्दे ॥ २२ ॥

धर्म उवाच—

तव निजजनसार्धं संगमो मे मदीश भवतु विषयबन्धच्छेदने तीक्ष्णखड्गः ।
तव चरणसरोजे स्थानदानैकहेतुर्जनुषि जनुषि भक्तिं देहि पादारविन्दे ॥ २३ ॥
इत्येवं स्तवनं कृत्वा परिपूर्णकमानसाः । कामपूरस्य पुरतस्तिष्ठन्तो राधिकापतेः ॥
सुराणां स्तवनं श्रुत्वा तानुवाच कृपानिधिः । हितं तथ्यं च वचनं स्मेराननसरोरुहः ॥

श्रीकृष्ण उवाच—

तिष्ठतागच्छत सुरा मदीया नात्र संशयः । शिवाश्रयाणां कुशलं प्रष्टुं युक्तं न सांप्रतम्
निश्चिन्ता भवतात्रैव का चिन्ता वो मयि स्थिते । स्थितोऽहं सर्वजीवेषु प्रत्यक्षोऽहं स्वतेजसा
युष्माकं यदभिप्रायं सर्वं जानामि निश्चितम् । शुभाशुभं च यत्कर्म कालेन खलु भविष्यति ॥
महत्क्षुद्रं च यत्कर्म सर्वं कालकृतं सुराः । स्वे स्वे काले च तरवः फलिताः पुष्पिणः सदा ॥
परिपक्वफला कालेनाऽपक्वफलान्विताः । सुखं दुःखं विपत्संपच्छोकचिन्ताशुभाशुभम् ॥
स्वकर्मफलनिष्पन्नं सर्वकालेऽप्युपस्थितम् । न हि कस्य प्रियः को वा नाप्रियो वा जगत्त्रये ॥
काले कार्यवशात्सर्वे भवन्त्येवाप्रियाः प्रियाः । राजानो मनवः पृथ्व्यां दृष्टा युष्माभिरत्र वै
स्वकर्मफलपाकेन सर्वे कालवशंगताः । युष्माकमधुना चैव गोलोके यत्क्षणं गतम् ॥
पृथिव्यां तत्क्षणेनैव सप्त मन्वन्तरं गतम् । इन्द्राः सप्त गतास्तत्र देवेन्द्रश्चाष्टमोऽधुना ॥
कालचक्रं भ्रमत्येव मदीयं च दिवानिशम् । इन्द्राश्च मनवो भूपाः सर्वे कालवशंगताः ॥

कीर्तिः पृथिव्यां पुण्यमथ कथामात्रावशेषितम् । अधुनापि च राजानो दुष्टाश्च हरिनिन्दकाः
बभूवुर्बहवो भूमौ महाबलपराक्रमाः । सर्वे यास्यन्ति राजानः कालान्तरवशं ध्रुवम् ॥
उपस्थितोऽपि कालोऽयं वातो वाति निरन्तरम् । वह्निर्दहति सूर्यश्च तपत्येव ममाऽऽज्ञया
व्याधयः सन्ति देहेषु मृत्युश्चरति जन्तुषु । वर्षन्त्येते जलधराः सर्वे देवा ममाऽऽज्ञया
ब्राह्मणधनिष्ठा विप्राश्च तपोनिष्ठास्तपोधनाः । ब्रह्मर्षयो ब्रह्मनिष्ठा योगनिष्ठाश्च योगिनः ॥
ते सर्वे मद्भयाद्भीताः स्वकर्मधर्मतत्पराः । मद्भक्ताश्चैव निःशङ्काः कर्मनिर्मूलकारकाः ॥
देवाः कालस्य कालोऽहं विधाता धातुरेव च । संहारकर्तुः संहर्ता पातुः पाता परात्परः ॥
ममाऽऽज्ञयाऽयं संहर्ता नाम्ना तेन हरः स्मृतः । त्वं विश्वसृट् सृष्टिहेतोः पाता धर्मस्य रक्षणात्
ब्रह्मादितृणपर्यन्तं सर्वेषामहमीश्वरः । स्वकर्मफलदाताऽहं कर्मनिर्मूलकारकः ॥ ४४ ॥
अहं यान्संहरिष्यामि कस्तेषामपि रक्षिता । यानहं पालयिष्यामि तेषां हन्ता न कोऽपि वा
सर्वेषामपि संहर्ता स्रष्टा पाताऽहमेव च । नाहं शक्तश्च भक्तानां संहारे नित्यदेहिनाम् ॥
भक्ता ममानुगा नित्यं मत्पादार्चनतत्पराः । अहं भक्तान्तिके शश्वत्तेषां रक्षणहेतवे ॥
सर्वे नश्यन्ति ब्रह्माण्डे भ्रमन्ति पुनः पुनः । न मे भक्ताः प्रणश्यन्ति निःशङ्काश्च निरापदः
अतो विपश्चितः सर्वे दास्यं वाञ्छन्ति नो वरम् । ये मां दास्यं प्रयाचन्ते धन्यास्तेऽन्ये-
च वञ्चिताः ॥ ६९ ॥
जन्ममृत्युजराव्याधिभयं च यमयातना । अन्येषां कर्मिणामस्ति न भक्तानां च कर्हिचित्
भक्ता न लिप्ताः पापेषु पुण्येषु सर्वकर्मिणः । अहं धुनोमि तेषां च कर्मभोगमसुनिश्चितम् ॥
अहं प्राणश्च भक्तानां भक्ताः प्राणा ममापि च । ध्यायन्ते ते च मां नित्यं तान्स्मरामि दि-
वानिशम् ॥ १२ ॥
चक्रं सुदर्शनं नाम षोडशारं सुतीक्ष्णकम् । यत्तेजः षोडशांशोऽपि नास्ति सर्वेषु जीविषु ॥
भक्तान्तिके तु तच्चक्रं दत्त्वा रक्षार्थमीप्सितम् । न स्वास्थ्यं न च प्रीतिर्मे यामि तेषां च संनि-
धिम् ॥ १४ ॥
न मे स्वास्थ्यं च वैकुण्ठे गोलोके राधिकान्तिके । यत्र तिष्ठन्ति भक्तास्ते तत्र तिष्ठाम्यहर्निशम्
प्राणेभ्यः प्रेयसी राधा प्रियतरासि दिवानिशम् । यूयं प्राणाधिका लक्ष्मीर्न मे भक्तात्परा प्रिया
भक्तदत्तं च यद्द्रव्यं मत्त्याऽश्नामि सुरेश्वराः । अभक्तदत्तं नाश्नामि ध्रुवं भुङ्क्ते बलिं स्वयम्
स्त्रीपुत्रस्वजनांस्त्यक्त्वा ध्यायन्ते मामहर्निशम् । युष्मान्विहाय तान्नित्यं स्मराम्यहमहर्नि-
शम् ॥ १८ ॥

---

१ क. भग्ये ।

दुष्टा यदा मे भक्तानां ब्राह्मणानां गवामपि । क्रतूनां देवतानां च हिंसां कुर्वन्ति निश्चितम् ॥
तदाऽचिरं ते नश्यन्ति यथा वह्नौ तृणानि च । न कोऽपि रक्षिता तेषां मयि हन्तर्युपस्थिते ॥
यास्यामि पृथिवीं देवा यात यूयं स्वमालयम् । यूयं चैवांशरूपेण शीघ्रं गच्छत भूतलम् ॥
इत्युक्त्वा जगतां नाथो गोपानाहूय गोपिकाः । उवाच मधुरं वाक्यं सत्यं यत्समयोचितम् ॥
गोपा गोप्यश्च शृणुत यात नन्दव्रजं परम् । वृषभानुगृहे क्षिप्रं गच्छ त्वमपि राधिके ॥ ६३ ॥
वृषभानुप्रिया साध्वी नन्दगोपकलावती । सुबलस्य सुता सा च कमलांशसमुद्भवा ॥
पितॄणां मानसी कन्या धन्या मान्या च योषिताम् । पुरा दुर्वाससः शापाज्जन्म तस्या व्रजे गृहे
तस्या गृहे जन्म लभ शीघ्रं नन्दव्रजं व्रज । त्वामहं बालरूपेण गृह्णामि कमलानने ॥
त्वं मे प्राणाधिका राधे तव प्राणाधिकोऽप्यहम् । न किंचिदावयोर्भिन्नमेकाङ्गं सर्वदैव हि ॥
श्रुत्वैवं राधिका तत्र रुरोद प्रेमविह्वला । पपौ चक्षुश्चकोराभ्यां मुखचन्द्रं हरेर्मुने ॥ ६८ ॥
जन्मुर्लेभुस्ते गोपाश्च गोप्यश्च पृथिवीतले । गोपानामुत्तमानां च मन्दिरे मन्दिरे शुभे ॥
एतस्मिन्नन्तरे सर्वे ददृशू रथमुत्तमम् । मणिरत्नेन्द्रसारेण हीरकेण विभूषितम् ॥ ७० ॥
श्वेतचामरलक्षेण शोभितं दर्पणायुतैः । सूक्ष्मकापासवस्त्रेण वह्निशुद्धेन भूषितम् ॥ ७१ ॥
सद्रत्नकलशानां च सहस्रेण सुशोभितम् । पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥
पार्षदप्रवरैर्युक्तं शातकुम्भमयं शुभम् । तेजःस्वरूपमतुलं शतसूर्यसमप्रभम् ॥ ७३ ॥
तत्रस्थं पुरुषं श्यामं सुन्दरं कमनीयकम् । शङ्खचक्रगदापद्मधरं पीताम्बरं वरम् ॥ ७४ ॥
किरीटिनं कुण्डलिनं वनमालाविभूषितम् । चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥
चतुर्भुजं स्मेरवक्त्रं भक्तानुग्रहकारकम् । मणिरत्नेन्द्रसाराणां सारभूषणभूषितम् ॥
देवीं तद्वामतो रम्यां शुक्लवर्णां मनोहराम् । रत्नालंकारशोभाढ्यां शोभितां पीतवाससा ॥
शरत्पार्वणचन्द्रास्यां शरत्पङ्कजलोचनाम् । पक्वबिम्बाधरोष्ठीं च स्मेरयुक्तां मनोहराम् ॥
वेणुवीणाग्रन्थहस्तां भक्तानुग्रहकारिकाम् । विद्याधिष्ठातृदेवीं च ज्ञानरूपां सरस्वतीम् ॥
अपरां दक्षिणे रम्यां श्वेतचन्द्रसमप्रभाम् । प्रतप्तस्वर्णवर्णाभां सस्मितां सुमनोहराम् ॥
सद्रत्नकुण्डलाभ्यां च सुकपोलविराजिताम् । अमूल्यरत्नखचितामूल्यवस्त्रेण भूषिताम् ॥
अमूल्यरत्नकेयूरकरकङ्कणशोभिताम् । सद्रत्नसारमञ्जीरकलशब्दसमन्विताम् ॥ ८२ ॥
मणीन्द्रकिङ्किणीयुक्तमध्यदेशसमन्विताम् । पारिजातप्रसूनानां मालावक्षःस्थलोज्ज्वलाम् ॥
प्रफुल्लमालतीमालासंयुक्तकबरीयुताम् । शरच्चन्द्रप्रभामुष्णन्मुखचारुविभूषिताम् ॥ ८४ ॥

---

१ क. °स्या गर्भे ।

कस्तुरीबिन्दुसंयुक्तसिन्दूरतिलकान्विताम् । सुचारुकज्जलासक्तशरत्पङ्कजलोचनाम् ॥
सहस्रदलसंसक्तलीलाकमलसंयुताम् । नागवर्णं च पश्यन्तं पश्यन्तीं वक्रचक्षुषा ॥
अवरुह्य रथात्तूर्णं सश्रीकः सहपार्षदः । जगाम च सभां रम्यां गोपगोपीसमन्विताम् ॥
देवा गोप्यश्च गोपाश्च तस्थुः प्राञ्जलयो मुदा स सवेदोक्तस्तोत्रेण कृतेन च सुरर्षिभिः
गत्वा नारायणो देवो विलीनः कृष्णविग्रहे । दृष्ट्वा च परमाश्चर्यं ते सर्वे विस्मयं ययुः ॥
एतस्मिन्नन्तरे तत्र शातकुम्भमयाद्रथात् । अवरुह्य स्वयं विष्णुः पाता च जगतां पतिः ॥
आजगाम चतुर्बाहुर्वनमालाविभूषितः । पीताम्बरधरः श्रीमान्सस्मितः सुमनोहरः ॥९१॥
सर्वालंकारशोभाढ्यः सूर्यकोटिसमप्रभः । उत्तस्थुस्ते च तं दृष्ट्वा तुष्टुवुः प्रणता मुने ॥
स चापि लीनस्तत्रैव राधिकेशस्य विग्रहे । ते दृष्ट्वा महदाश्चर्यं विस्मयं परमं ययुः ॥
संविलीने हरेरङ्गे श्वेतद्वीपनिवासिनि । एतस्मिन्नन्तरे तूर्णमाजगाम स्वरान्वितः ॥९४॥
शुद्धस्फटिकसंकाशो नाम्ना संकर्षणः स्मृतः । सहस्रशीर्षा पुरुषः शतसूर्यसमप्रभः ॥
आगतं तुष्टुवुः सर्वे दृष्ट्वा तं विष्णुविग्रहम् । स चागत्य नतस्कन्धस्तुष्टाव राधिकेश्वरम्
सहस्रमूर्ध्ना भक्त्या च प्रणनाम च नारद । आवां च धर्मपुत्रौ द्वौ नरनारायणाभिधौ ॥
लीनोऽहं कृष्णपादाब्जे बभूव फाल्गुनो वरः । ब्रह्मेशशेषधर्माश्च तस्थुरेकत्र तत्र वै ॥
एतस्मिन्नन्तरे देवा ददृशू रथमुत्तमम् । स्वर्णसारविकारं च नानारत्नपरिच्छदम् ॥९९॥
मणीन्द्रसारसंयुक्तं वह्निशुद्धांशुकान्वितम् । श्वेतचामरसंयुक्तं भूषितं दर्पणायुतैः ॥१००॥
सद्रत्नसारकलशसमूहेन विराजितम् । पारिजातप्रसूनानां मालाजालैः सुशोभितम् ॥
सहस्रचक्रसंयुक्तं मनोयायिमनोहरम् । ग्रीष्ममध्याह्नमार्तण्डप्रभामोषकरं वरम् ॥१०२॥
मुक्तामाणिक्यवज्राणां समूहेन समुज्ज्वलम् । चित्रपुत्तलिकापुष्पसरःकाननचित्रितम् ॥
देवानां दानवानां च रथानां प्रवरं मुने । दत्तं शंकरप्रीत्या निर्मितं विश्वकर्मणा ॥
पञ्चाशद्योजनोर्ध्वं च चतुर्योजनविस्तृतम् । रतितुल्यवधूयुक्तं शोभितं रतिमन्दिरैः ॥
रथमध्ये ददृशुर्देवीं रत्नालंकारभूषिताम् । प्रदग्धस्वर्णसाराणां प्रभामोषकरद्युतिम् ॥
तेजःस्वरूपामतुलां मूलप्रकृतिमीश्वरीम् । सहस्रभुजसंयुक्तां नानायुधसमन्विताम् ॥
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकारिकाम् । गण्डस्थलकपोलस्थसद्रत्नकुण्डलोज्ज्वलाम् ॥
रत्नेन्द्रसाररचितकणन्मञ्जीररञ्जिताम् । मणीन्द्रमेखलायुक्तमध्यदेशसुशोभिताम् ॥
सद्रत्नसारकेयूरवलयकङ्कणभूषिताम् । मन्दारपुष्पमालाभिरुरःस्थलसमुज्ज्वलाम् ॥११०॥

---

१ क. रविदग्धरमायुक्तं शो० । २ क. "रभूषणभू" ।

निःम्बकठिनश्रोणीं पीनोन्नतकुचानताम् । शरत्सुधाकराभासविनिन्द्यास्यमनोहराम् ॥
कज्जलोज्ज्वलरेखाक्तशरत्पङ्कजलोचनाम् । चन्दनागुरुकस्तूरीचित्रपत्रविभूषिताम् ॥
नवीनबन्धुजीवाभामोष्ठाधरसुशोभिताम् । मुक्तापङ्क्तिप्रभामुष्टदन्तराजिविराजिताम् ॥
प्रफुल्लमालतीमालासंसक्तकबरीं वराम् ॥ ११३ ॥
पक्षीन्द्रचञ्चुनासाग्रगजेन्द्रमौक्तिकान्विताम् । वह्निशुद्धांशुकेनातिज्वलितेन समुज्ज्वलाम्
सिंहपृष्ठसमारूढां सुताभ्यां सहितां मुदा । अवरुह्य रथात्तूर्णं श्रीकृष्णं प्रणनाम च ॥
सुताभ्यां सहिता देवी समुवास वरानना । गणेशः कार्तिकेयश्च नत्वा कृष्णं परात्परम्
ननाम शंकरं धर्ममनन्तं कमलोद्भवम् । उत्तस्थुरागते देवा दृष्ट्वा तौ त्रिदशेश्वरौ ॥
आशिषं च ददुर्देवा वासयामासुरन्तिके । ताभ्यां सह सल्लापं चक्रुर्देवा मुदान्विताः
तस्थुर्देवाः सभामध्ये देवस्य पुरतो हरेः । गोपा गोप्यश्च बहुशो बभूवुर्विस्मयाकुलाः ॥
उवाच कमलां कृष्णः स्मेराननसरोरुहः । त्वं गच्छ भीष्मकगृहं नानारत्नसमन्वितम्
वैदर्भ्या उदरे जन्म लभ देवि सनातनि । तव पाणिं ग्रहीष्यामि गत्वाऽहं कुण्डिनं सति
तां देव्यः पार्वतीं दृष्ट्वा समुत्थाय त्वरान्विताः । रत्नसिंहासने रम्ये वासयामासुरम्बिकाम् ॥
विप्रेन्द्र पार्वतीलक्ष्मीवागधिष्ठातृदेवताः । तस्थुरेकासने तत्र संभाष्य च यथोचितम् ॥
ताश्च संभाषयामासुः सर्वाश्च गोपकन्यकाः । ऊचुर्गोपालिकाः काश्चिन्मुदा तासां च संनिधौ
श्रीकृष्णः पार्वतीं तत्र समुवाच जगत्पतिः । देवि त्वमंशरूपेण व्रज नन्दव्रजे शुभे ॥
उदरे च यशोदायाः कल्याणि नन्दरेतसा । लभ जन्म महामाये सृष्टिसंहारकारिणि ॥
ग्रामे ग्रामे च पूजां ते कारयिष्यामि भूतले । कृत्स्ने महीतले भक्त्या नगरेषु वनेषु च ॥
तत्राधिष्ठातृदेवीं त्वां पूजयिष्यन्ति मानवाः । द्रव्यैर्नानाविधैर्दिव्यैर्बलिभिश्च मुदान्विताः
त्वद्भूमिस्पर्शमात्रेण सूतिकामन्दिरे शिवे । पिता मां तत्र संस्थाप्य त्वामादाय गमिष्यति
कंसदर्शनमात्रेण गमिष्यसि शिवान्तिकम् । भारावतरणं कृत्वाऽऽगमिष्यामि स्वमाश्रमम्
इत्युक्त्वा श्रीहरिस्तूर्णमुवाच च षडाननम् । अंशरूपेण वत्स त्वं गमिष्यसि महीतलम् ॥
जाम्बवत्याश्च गर्भे च लभ जन्म सुरेश्वर । अंशेन देवताः सर्वा गच्छन्तु धरणीतलम् ॥
भारहारं करिष्यामि वसुधायाश्च निश्चितम् । इत्युक्त्वा राधिकानाथस्तस्थौ सिंहासने वरे
तस्थुर्देवाश्च देव्यश्च गोपा गोप्यश्च नारद । एतस्मिन्नन्तरे ब्रह्मा समुत्तस्थौ हरेः पुरः ॥
पुटाञ्जलिर्नतस्कन्धस्तमुवाच विनयान्वितः ॥ ११४ ॥

ब्रह्मोवाच—

अवधानं कुरु विभो किंकरस्य निवेदनम् । आज्ञां कुरु महाभाग कस्य कुत्र स्थलं भुवि

१ क. सहसा ।

भर्ता पातोद्धारकर्ता सेवकानां प्रभुः सदा। स भृत्यः सर्वदा भक्त ईश्वराज्ञां करोति यः
के देवा. केन रूपेण देहांशेन कलया कथं। कुत्र कस्याभिधेयं च विषयं च महीतले ॥
ब्रह्मणो वचनं श्रुत्वा प्रत्युवाच जगत्पतिः। यत्र यस्यांशकांशं च कथयामि विधानतः॥

श्रीकृष्ण उवाच—

कामदेवो रौक्मिणेयो रतिर्मायावती सती। शम्बरस्य गृहे यावच्छायारूपेण संस्थिता॥
स्वं तस्य पुत्रो भविता नाम्नाऽनिरुद्ध एव च। भारती शोणितपुरे बाणपुत्री भविष्यति
अनन्तो देवकीगर्भाद्रौहिणेयो जगत्पतिः। मायया गर्भसंकर्षान्नाम्ना संकर्षणः प्रभुः॥
कालिन्दी सूर्यतनया गङ्गांशेन महीतले। अर्धांशेनैव तुलसी लक्ष्मणा राजकन्यका ॥
सावित्री वेदमाता च नाम्ना नाग्नजिती सती। वसुधरा सत्यभामा शैब्या देवी सरस्वती
रोहिणी मित्रविन्दा च भविता राजकन्यका। सूर्यपत्नी रत्नमाला कलया च जगत्प्रभो॥
स्वाहांशेन सुशीला च रुक्मिण्याद्याः स्त्रियो नव। दुर्गांशार्धा जाम्बवती महिषीः दश स्मृताः॥ १४६ ॥
अर्धांशेन शैलपुत्री यातु जाम्बवतो गृहम्। कैलासे शंकराज्ञया च बभूव पार्वती पुरा
कैलासगामिनं विष्णुं श्वेतद्वीपनिवासिनम्। आलिङ्गनं देहि कान्ते नास्ति दोषो ममाऽऽज्ञया॥ १४७ ॥

ब्रह्मोवाच—

कथं शिवाज्ञा तां देवीं बभूव राधिकापते। विष्णोः संभाषणे पूर्वं श्वेतद्वीपनिवासिनः॥

श्रीभगवानुवाच—

पुरा गणेशं द्रष्टुं च जग्मुः सर्वदेवताः। श्वेतद्वीपात्स्वयं विष्णुर्जगाम शंकरालये ॥
दृष्ट्वा गणेशं मुदितः समुवास सुखासने। सुखेन ददृशुः सर्वे त्रैलोक्यमोहनं वपुः॥
किरीटिनं कुण्डलिनं पीताम्बरधरं वरम्। सुन्दरं श्यामरूपं च नवयौवनसंयुतम्॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम्। रत्नालंकारशोभाढ्यं स्मेराननसरोरुहम्॥१५१॥
रत्नसिंहासनस्थं च पार्षदैः परिवेष्टितम्। वन्दितं च सुरैः सर्वैः शिवेन पूजितं स्तुतम्
तं दृष्ट्वा पार्वती विष्णुं प्रसन्नवदनेक्षणा। मुखमाच्छादितं चक्रे वाससा व्रीडया सती
अतीव सुन्दरं रूपं ददर्श दर्श पुनः पुनः। ददर्श मुखमाच्छाद्य निमेषरहिता सती॥
परमाद्भुतवेषं च सस्मिता वक्रचक्षुषा। सुखसागरसंमग्ना बभूव पुलकाञ्चिता॥१५६॥

---

१ क. ºमहुरो।

क्षणं ददर्श पञ्चास्यं शुभ्रवर्णं त्रिलोचनम् । त्रिशूलपट्टिशधरं कन्दर्पकोटिसुन्दरम् ॥
क्षणं ददर्श श्यामं तमेकास्यं च द्विलोचनम् । चतुर्भुजं पीतवस्त्रं वनमालाविभूषितम् ॥
एकं ब्रह्म मूर्तिभेदमभेदं वा निरूपितम् । दृष्ट्वा बभूव सा माया सकामा विष्णुमायया
महेशाश्च त्रयो देवा ब्रह्मविष्णुमहेश्वराः । ताभ्यामुत्कर्षपाताच्च श्रेष्ठः सत्त्वगुणात्मकः
दृष्ट्वा ते पार्वती भक्त्या पुलकाञ्चितविग्रहा । मनसा पूजयामास परमात्मानमीश्वरम् ॥
दुर्गान्तराभिप्रायं च बुबुधे शंकरः स्वयम् । सर्वान्तरात्मा भगवानन्तर्यामी जगत्पतिः
दुर्गां निर्जनमाहूय तामुवाच हरः स्वयम् । बोधयामास विविधं हितं तत्त्वमखण्डितम्

शंकर उवाच—

निवेदनं मदीयं च निबोध शैलकन्यके । शृङ्गारं देहि भद्रं ते हरये परमात्मने ॥ १६४॥
अहं ब्रह्मा च विष्णुश्च ब्रह्मैकं च सनातनम् । देवको भेदरहितो विषयो मूर्तिभेदकः
एवं प्रकृतिः सर्वेषां माता त्वं सर्वरूपिणी । स्वयंभूरसि वाणी त्वं लक्ष्मीर्नारायणोरसि
मम वक्षसि दुर्गा त्वं निबोधाऽऽध्यात्मिकं सति । शिवस्य वचनं श्रुत्वा तमुवाच सुरेश्वरी

पार्वत्युवाच—

दीनबन्धो कृपासिन्धो तव मामकृपा कथम् । सुचिरं तपसा लब्धो नाथस्त्वं जगतां मया
मादृशीं किंकरीं नाथ न परित्यक्तुमर्हसि । अयोग्यमीदृशं वाक्यं मा मा वद महेश्वर॥
तव वाक्यं महादेव करिष्याम्येव पालनम् । देहान्तरे जन्म लब्ध्वा भजिष्यामि हरिं हर
इत्येवं वचनं श्रुत्वा विरराम महेश्वरः । उच्चैर्जहासाभयदः पार्वत्यै चाभयं ददौ ॥
तत्प्रतिज्ञापालनाय पार्वती जाम्बवद्गृहे । लभिष्यति जनुर्यातन्नाम्ना जाम्बवती सती ॥

ब्रह्मोवाच—

भूमौ कतिविधे भूपे संस्थिते पार्वती कथम् । लब्धा भारते जन्म निन्दिते भाल्लुके गृहे

श्रीकृष्ण उवाच—

रामावतारे त्रेताया देवांशाश्च ययुर्महीम् । हिमालयांशो भल्लूको जाम्बवान्नाम किंकरः
रामस्य वरदानेन चिरंजीवी श्रिया युतः । कोटिसिंहबलाधानं बिभर्ति च महाबलः ॥
पितुरंशगृहे दुर्गा जगामांशेन भूतलम् । पूर्वं पूर्वस्य वृत्तान्तं कथितं शृणु मन्मुखात् ॥
सर्वेषां च सुराणां वै वंशा गच्छन्तु भूतलम् । नृपपुत्रा मत्सहाया भविष्यन्ति रणे विधे
कमलाकलया सर्वा भवन्तु नृपकन्यकाः । मन्महिष्यो भविष्यन्ति सहस्राणां च षोडश
धर्मोऽयमंशरूपेण पाण्डुपुत्रो युधिष्ठिरः । वायोरंशो भीमसेनः स वज्री ह्यर्जुनः स्वयम्

१ ग. 'परिव' । २ क. एवं पू' ।

नकुलः सहदेवश्च स्वर्वैद्यांशसमुद्भवौ । सूर्यांशः कर्णवीरश्च विदुरः स यमः स्वयम् ॥
दुर्योधनः कलेरंशः समुद्रांशश्च शंतनुः । अश्वत्थामा शंकरांशो द्रोणो वह्न्यंशसंभवः ॥
हुताशनांशो भगवान्धृष्टद्युम्नो महाबलः । चन्द्रांशोऽप्यभिमन्युश्च भीष्मश्चैव वसूद्भवः
वसुदेवः कश्यपांशोऽप्यदित्यंशा च देवकी । वस्वंशो नन्दगोपश्च यशोदा वसुकामिनी
द्रौपदी कमलांशा च यज्ञकुण्डसमुद्भवा । सुभद्रा शतरूपांशा देवकीगर्भसंभवा ॥ १८४ ॥
देवा गच्छन्तु पृथिवीमंशेन भारहारकाः । कलया देवपत्न्यश्च गच्छन्तु पृथिवीतलम् ॥
इत्येवमुक्त्वा भगवान्विरराम च नारद । सर्वं विवरणं श्रुत्वा तत्रोवास प्रजापतिः ॥
कृष्णस्य वामे वाग्देवी दक्षिणे कमलालया । पुरतो देवताः सर्वाः पार्वती चापि नारद
गोप्यो गोपाश्च परितो राधा वक्षःस्थलस्थिता । एतस्मिन्नन्तरे सा च समुवाच व्रजेश्वरी ॥

राधिकोवाच—

शृणु नाथ प्रवक्ष्यामि किंकरीवचनं प्रभो । प्राणा दहन्ति सततं मन्दोलयति मे मनः ॥
चक्षुर्निमीलनं कर्तुमशक्ता तव दर्शने । त्वया विना कथं नाथ यास्यामि धरणीतलम् ॥
कियत्कालान्तरेणैव मेलनं मे त्वया सह । प्राणेश्वर ब्रूहि सत्यं भविष्यत्येव गोकुले ॥
निमेषं च युगशतं भविता मे त्वया विना । कं द्रक्ष्यामि क्व यास्यामि को वा मां
पालयिष्यति ॥ १९२ ॥
मातरं पितरं बन्धुं भ्रातरं भगिनीं सुतम् । त्वया विनाऽहं प्राणेश चिन्तयामि न कंचन ॥
करोषि मायया छन्नां मां चेन्मायेश भूतले । विस्मृतां विमं दत्त्वा सत्यं मे शपथं कुरु
अनुक्षणं मम मनोमधुपो मधुसूदन । करोतु भ्रमणं नित्यं समाध्वीके पदाम्बुजे ॥ १९९ ॥
यत्र यत्र च यस्यां वा योनौ जन्म भवत्विदम् । त्वं स्वस्य स्मरणं दास्यं मह्यं दास्यसि
वाञ्छितम् ॥ १९६ ॥
कृष्णस्त्वं राधिकाऽहं च प्रेमसौभाग्यमावयोः । न विस्मरामि भूमौ च देहि मह्यं वरं परम्
यथा त्वया सह प्राणाः शरीरे छायया सह । तथाऽऽवयोर्जन्म यातु देहि मह्यं वरं विभो
चक्षुर्निमेषविच्छेदो भविता नाऽऽवयोर्भुवि । तत्राऽऽत्मापि कुत्रापि देहि मह्यं वरं प्रभो
मम प्राणास्तव तनुः केन वा करणा हरे । आत्मना मुरलीपाणे मनसा वा विनिर्मितौ ॥
स्त्रियः कतिविधाः सन्ति पुरुषा वा पुरुष्टुतः । नास्ति कुत्रापि कान्ता वा कान्त्या शवस्या
च मादृशी ॥ २०१ ॥
तव देहार्धभागेन केन चाऽहं विनिर्मिता । अयमेवाऽऽवयोर्भेदो नास्त्यतस्त्वयि मे मनः
ममाऽऽत्मा मानसं प्राणास्त्वयि संस्थापिता यथा । तवाऽऽत्ममानसप्राणा मयि वा संस्थिता-
स्तथा ॥ २०२ ॥

अतो निमेषविरहादात्मनोर्विक्लवं मनः । प्रदग्धं संततं प्राणा दहन्ति विरहश्रुतौ ॥२०४॥
इत्येवमुक्त्वा सा देवी तत्रैव सुरसंसदि । भूयो भूयो रुरोदोच्चैर्धृत्वा तच्चरणाम्बुजम् ॥
क्रोडे कृत्वा तु तां कृष्णो मुखं संमृज्य वाससा । बोधयामास विविधं सत्यं तथ्यं हितं वचः॥

**श्रीकृष्ण उवाच—**

आध्यात्मिकं परं योगं शोकच्छेदनकारकम् । शृणु देवि प्रवक्ष्यामि योगीन्द्राणां च दुर्लभम्
आधाराधेययोः सर्वं ब्रह्माण्डं पश्य सुन्दरि । आधारव्यतिरेकेण नास्त्याधेयस्य संभवः ॥
फलाधारं च पुष्पं च पुष्पाधारं च पल्लवम् । स्कन्धश्च पल्लवाधारः स्कन्धाधारस्तरुः स्वयम्
वृक्षाधारोऽप्यङ्कुरश्च जीवशक्तिसमन्वितः । अष्टिरेकाऽङ्कुराधारश्चाष्टयाधारो वसुंधरा
शेषो वसुंधराधारः शेषाधारो हि कच्छपः । वायुश्च कच्छपाधारो वाय्वाधारोऽहमेव च
ममाऽऽधारस्वरूपा त्वं त्वयि तिष्ठामि सांप्रतम् । त्वं च शक्तिसमूहा च मूलप्रकृतिरीश्वरी
त्वं शरीरस्वरूपाऽसि त्रिगुणाधाररूपिणी । तवाऽऽत्माऽहं निरीहश्च चेष्टावांश्च त्वया सह
पुरुषाद्वीर्यमुत्पन्नं वीर्यात्संततिरेव च । तयोराधाररूपा च कामिनी प्रकृतेः कला ॥
विना देहेन काऽऽत्मा च क्व शरीरं विनाऽऽत्मना । प्राधान्यं च तयोर्देवि विना त्वाद्यां
कुतो भवः ॥ २११ ॥
न कुत्राप्याऽऽवयोर्भेदो राधे संसारबीजयोः । यत्राऽऽत्मा तत्र देहं च न भेदो विनयेन किम्
यथा क्षीरे च धावल्यं दाहिका च हुताशने । भूमौ गन्धो जले शैत्यं तथा त्वयि मयि स्थितिः
धावल्यदुग्धयोरैक्यं दाहिकानलयोर्यथा । भूगन्धजलशैत्यानां नास्ति भेदस्तथाऽऽवयोः
मया विना त्वं निर्जीवा चादृश्योऽहं त्वया विना । त्वया विना भवं कर्तुं नालं सुन्दरि
निश्चितम् ॥ २१९ ॥
विना मृदा घटं कर्तुं यथा नालं कुलालकः । विना स्वर्णं स्वर्णकारोऽलंकारं कर्तुमक्षमः ॥
स्वयमात्मा यथा नित्यस्तथा त्वं प्रकृतिः स्वयम् । सर्वशक्तिसमायुक्ता सर्वाधारा सनातनी
मम प्राणसमा लक्ष्मीर्वाणी च सर्वमङ्गला । महेशानन्तधर्माश्च त्वं मे प्राणाधिका प्रिया
समीपस्था इमे सर्वे सुरा देव्यश्च राधिके । एभ्योऽत्यन्याधिका नो चेत्कथं वक्षः-
स्थलस्थिता ॥ २२६ ॥
त्यजाश्रुमोक्षणं राधे भ्रान्तिं च निष्फलां सति । विहाय शङ्कां निःशङ्कं वृषभानुगृहं व्रज ॥
कलावत्याश्च जठरे मासानां नव सुन्दरि । वायुना पूरयित्वा च गर्भं रोधय मायया ॥
दशमे समनुप्राप्ते त्वमाविर्भव भूतले । स्वात्मरूपं परित्यज्य शिशुरूपं विधाय च ॥२२६॥

---

१ क. °नकर्तनम् । २ क. द्वयो° ।

मायुनिप्राणे काले कलावत्याः समीपतः । भूमौ विवसनीभूय पतिता रोदिषि ध्रुवम् ॥
अयोनिसंभवा त्वं च भविता गोकुले सति । अयोनिसंभवोऽहं च नाऽऽश्योगर्भसंस्थितिः ॥
भूमिसंस्पर्शमात्रं मा गोकुले प्रापयिष्यति । तव हेतोर्गमिष्यामि कृत्वा कंसभयं छलम् ॥
यशोदामन्दिरे मां च सानन्दं नन्दनन्दनम् । नित्यं द्रक्ष्यसि कल्याणि ममाऽऽश्लेषणपूर्वकम्
स्मृतिस्ते भविता बालवेषेण मम राधिके । स्वच्छन्दं विहरिष्यामि नित्यं वृन्दावने वने ॥
त्रिःसप्तशतकोटीभिर्गोपीभिर्गोकुलं व्रज । त्वयाऽऽत्मसदृश्यापि सुशीलादिभिरेव च ॥ २३१ ॥
संस्थाप्य त्वत्सहिता गोपीर्गोकुल एव च । ता आश्वास्य प्रबोधैश्च मितया च सुधागिरा
अहं गोपालसुहृदः संस्थाप्यात्रैव राधिके । वसुदेवाश्रमं पश्चाद्यास्यामि मथुरां पुरीम् ॥
व्रजं व्रजन्तु क्रीडार्थं मम सङ्गे प्रियाप्रियाः । वल्लवानां गृहे जन्म लभन्तां गोपकोटयः ॥
इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद । ऊचुर्देवाश्च देव्यश्च गोपा गोप्यश्च तत्र वै ॥
ब्रह्मेशशेषधर्माश्च श्रीकृष्णं तं परात्परम् । शिवापद्मासरस्वत्यस्तुष्टुवुः परया मुदा ॥
भक्त्या गोपाश्च गोप्यश्च विरहज्वरकातराः । तत्र संस्तूय श्रीकृष्णं प्रणेमुः प्रेमविह्वलाः ॥
प्राणाधिकं प्रियं कान्तं राधापूर्णमनोरथम् । परितुष्टोऽभवद्भक्त्या विरहज्वरकातराम्[1] ॥
साश्रुपूर्णातिदीनां च दृष्ट्वा राधां भयाकुलाम् । प्रबोधवचनं सत्यमुवाच तां हरिः स्वयम्

श्रीकृष्ण उवाच——

प्राणाधिके महादेवि स्थिरा भव भयं त्यज । यथा त्वं च तथाऽहं च का चिन्ता ते मयि स्थिते
किं तु ते कथयिष्यामि किंचिदेवास्त्यमङ्गलम् । वर्षाणां शतकं पूर्णं त्वद्विच्छेदो मया सह ॥
श्रीदामशापजन्येन कर्मभोगेन सुन्दरि । भविष्यत्येव मम च मथुरागमनं ततः ॥ २४३ ॥
तत्र भारावतरणं पित्रोर्बन्धनमोचनम् । मालाकारतन्तुवायकुब्जिकानां च मोक्षणम् ॥
घातयित्वा च यवनं मुचुकुन्दस्य मोक्षणम् । द्वारकायाश्च निर्माणं राजसूयस्य दर्शनम् ॥
उद्वाहं राजकन्यानां सहस्राणां च षोडश । दशाधिकशतस्यापि शत्रूणां दमनं तथा ॥
मित्रोपकरणं चैव वाराणस्याश्च दाहनम् । हरस्य जृम्भणं तत्र बाणस्य भुजकृन्तनम् ॥
पारिजातस्य हरणं यद्यत्कर्माणि तानि च । गमनं तीर्थयात्रायां मुनिसंघप्रदर्शनम् ॥
संभाषणं च बन्धूनां यज्ञसंपादनं पितुः । शुभक्षणे[2] पुनस्तत्र त्वया सार्धं प्रदर्शनम् ॥
करिष्यामि च तत्रैव गोपिकानां च दर्शनम् ॥ २४९ ॥
मुख्यमध्यात्मिकं दत्त्वा पुनः सार्धं त्वया सह । दिवानिशमविच्छेदो मया सार्धमतःपरम् ॥
भविष्यति त्वया मार्गे पुनरागमनं व्रजे । कान्ते विच्छेदसमये वर्षाणां शतके सति ॥

१ क. 'त्वया । परितुष्टाऽभवद्भक्त्या च वि' । २ ख. 'शुभ' ।

मित्यं संमीलनं स्वप्ने भविष्यति त्वया सह मम न राधणांशेत्यन्तस्य यानं च द्वारकामें।।
शतवर्षान्तरे साध्यमेतदेव मुनिश्चितम् . भविष्याति पुनस्तत्र वने रासस्त्वया सह ॥
पुनः पित्रोश्च गोपीना शोकसंमार्जनं परम् । कृत्वा भ रावतरणं पुनरागमनं मम ॥
त्वया सहापि गोलोके गोपैर्गोपीभिरेव च मम नारायणांशस्य वाण्या च पद्मया सह॥
वैकुण्ठगमनं राधे नित्यस्य परमात्मन. । श्वेतद्वीप धर्मगेहमंशाना च भविष्यति ॥
देवाना चैव देवीनामंशा यास्यन्ति स्वस्वयम् । पुन संस्थितिरत्रैव गोलोके मे त्वया सह ।।
इत्येवं कथितं सर्वं भविष्यं च शुभाशुभम् । मया निरूपितं यत्तत्कान्ते केन निवार्यते।।
इत्येवमुक्त्वा श्रीकृष्णः कृत्वा राधा स्ववक्षसि । तस्थौ ताधु सुराः सर्वे सुरपत्न्यश्च विस्मिता ॥ २१२ ॥
उवाच श्रीहरिर्देवान्देवीं च समयोचितम् । देवा गच्छत कार्याय स्वालयं विषयोचितम् ।।
गच्छ पार्वति कैलासे सुताभ्यां स्वामिना सह । मया नियोजितं कर्म सर्वं काले भविष्यति ।।
भविता कल्या जन्म सर्वेषा च धनेश्वरि । सुद्रागा चैव महता देवं लम्बोदरं विना ॥
प्रणम्य श्रीहरिं देवाः स्व स्वं ययुर्मुदा । लक्ष्मीं सरस्वतीं भक्त्या प्रणम्य पुरुषोत्तमम्।।
हरिणा योजितं कर्म कर्तुं ययुः मही दयु. । मुत्रां निरूपितं स्थानं देवानामपि दुर्लभम्।।
उवाच राधिका कृष्णो वृषभानुगृहं व्रज । गोपगोपीसमूहैश्च सह पूर्वनिरूपितैः॥२६१॥
अहं यास्यामि मथुरां वसुदेवालयं प्रिये । पश्चात्कंसभयं त्याज्य गोकुलं तव संनिधिम् ॥
राधा प्रणम्य श्रीकृष्णं रक्तपङ्कजलोचना । भृशं रुरोद पुरतः प्रेमविच्छेदकातरा।।२६७।।
स्थायं स्थायं कचिद्यान्ती गत्वा गत्वा पुनः पुनः। पुन. पुनः समागत्य दर्शं दर्शं हरेर्मुखम् ,
पपौ चक्षुश्चकोराभ्या निमेषरहिता सती शरत्पार्वणचन्द्राभसुधापूर्णं प्रभोर्मुखम्।।२६९।।
ततः प्रदक्षिणीकृत्य सप्तधा परमेश्वरी । प्रणम्य सप्तधा चैव पुनस्तस्थौ हरेः पुरः।।२७०।।
आजग्मुर्गोपिकाना च त्रिःसप्तशतकोटयः । आजगाम च गोपाना समूहः कोटिसंख्यकः
गोपाना गोपिकाना च समूहैः सह राधिका । पुन. प्रणम्य तं राधा तत्र तस्थौ च नारद ॥
त्रयस्त्रिंशद्वयस्याभिर्गोपीभि. सह सुन्दरी । गोपाना च समूहैश्च प्रणम्य प्रययौ महीम् ।।
हरिणा योजितं स्थानं प्रजग्मुर्नन्दगोकुलम् । वृषभानुगृहं राधा गोपी गोपगृहं ययौ ॥
मही गताया राधाया गोपीभिः सह गोपकैः । बभूव श्रीहरिः सद्यः पृथिवीं गमनोत्सुकः
समाप्य गोपान्गोपीश्च नियोज्य स्वीयकर्मणि । मनोयायी जगत्स्वामी जगाम मथुरां हरिः .
पूर्वं यद्यत्तपस्तं च देवकीवसुदेवयोः । बभूव सद्यस्तत्कंपः पुत्रपङ्कं जघान ह ॥२७७॥

वधे च क्षुद्रजन्तूनां हिंसकानां च पण्डितः। कार्षापणं समुत्सृज्य मृत्युकाले प्रमुच्यते ॥
अहिंसकानां क्षुद्राणां वधः शतगुणं ध्रुवम्। प्रायश्चित्तं मृत्युकाले कार्षिकं पद्मयोनिना।
वधे विशिष्टजन्तूनां पश्वादीनां च कामतः। ततः शतगुणं पापं निश्चितं मनुरब्रवीत् ॥
नराणां म्लेच्छजातीनां वधे शतगुणं ततः। म्लेच्छानां च शतानां च यत्पापं लभते वधे
सच्छूद्रैकस्य च वधे तत्पापं लभते पुमान् ॥ २९ ॥
सच्छूद्राणां शतानां च यत्पापं लभते वधे। तत्पापं लभते नूनं गोवधेनेन निश्चितम् ॥
गवां दशगुणं पापं ब्राह्मणस्य वधे भवेत्। विप्रहत्यासमं पापं स्त्रीवधे लभते नरः ॥
विशेषतो हि भगिनी योष्या च शरणागता। स्त्रीहत्याशतपापं च भवेदस्या वधे नृप ॥
तपो जपं च दानं च पूजनं तीर्थदर्शनम्। विप्राणां भोजनं होमं स्वर्गार्थं कुरुते बुधः ॥
जलबुद्बुदवत्सर्वं स्वप्नतुल्यं भ्रमं भवम्। पश्यन्ति सततं सन्तो धर्मं कुर्वन्ति यत्नतः ॥
भगिनी त्यज धर्मिष्ठ स्ववंशपद्मभास्कर, बुधा कतिविधाः सन्ति समायां पृच्छ्यतां नृप।
अस्याश्चैवाष्टमो गर्भो यदपत्यं भविष्यति। बन्धो तुभ्यं प्रदास्यामि तेन मे किं प्रयोजनम्
अथवा यान्यपत्यानि भवन्ति ज्ञानिनां वर। तानि सर्वाणि दास्यामि त्वत्तः को मे वरः प्रियः
भगिनी त्यज राजेन्द्र कन्यातुल्यां प्रियां तव। मिष्टान्नपानदानेन वर्धितामनुजां सदा ॥
वसुदेववचः श्रुत्वा तत्याज भगिनीं नृपः। वसुदेवः प्रियां नीत्वा जगाम निजमन्दिरे ॥
प्रमादपत्यषट्कं च यद्भूतं च नारद। ददौ तस्मै वसुः सत्यात्स जघान क्रमेण तान् ॥
देवक्याः सप्तमे गर्भे कंसो रक्षां ददौ मिथः। रोहिणीजठरे माया तमाकृष्य ररक्ष च ॥
रक्षकाः कथयामासुर्गर्भस्रावो बभूव ह। तस्माद्बभूव भगवाना‍म्ना संकर्षणः प्रभुः ॥ ३७ ॥
तस्या एवाष्टमो गर्भो वायुपूर्णो बभूव ह। गते च नवमे मासि दशमे समुपस्थिते ॥ ३८ ॥
दृष्टिं ददौ च गर्भे च भगवान्सर्वदर्शनः। स्वयं रूपवती देवी सर्वासां योषितां वरा ॥ ३९ ॥
बभूव दर्शनात्सद्यः सुन्दरी सा चतुर्गुणा। ददर्श देवकीं कंसः प्रफुल्लवदनेक्षणाम् ॥ ४० ॥
तेजसा प्रज्वलन्तीं च मायामिव दिशो दश। ज्योतिषा संहतिं चैव यथा मूर्तिमतीमिव ॥
दृष्ट्वा तामसुरेन्द्रश्च विस्मयं परमं ययौ। अस्माद्गर्भादपत्यं च मृत्युर्नान्यं ममैव च ॥
इत्येवमुक्त्वा कंसश्च ददौ रक्षां प्रयत्नतः। देवकीं वसुदेवं च सद्द्वारं ररक्ष च ॥ ४३ ॥
पूर्णे च दशमे मासे गर्भः पूर्णो बभूव ह। बभूव सा चलत्पन्दा जडरूपा च नारद ॥
गर्भे च वायुना पूर्णे निर्लिप्तो भगवानजित्। हृत्पद्मकोशे देवक्या अधिष्ठानं चकार ह ॥
सा विश्वंभरगर्भा च मन्दिराभ्यन्तरे सती। उवास जडरूपा च क्लेशयुक्ता बभूव ह ॥—
उवास च क्षणं देवी क्षणमुत्थाय तिष्ठति। क्षणं व्रजति पादैकं क्षणं स्वपिति तत्र वै ॥

दृष्ट्वा च देवकी शीघ्रं वसुदेवो महामनाः। प्रसूतिसमयं ज्ञात्वा सस्मार हरिमीश्वरम् ॥
रत्नप्रदीपसंयुक्ते मन्दिरे सुमनोहरे। स्थापयामास षष्ठ्यं च लोहं तोयं हुताशनम्॥४९॥
मन्त्रज्ञं च नरं चैव बन्धुपत्नीर्मिगकुले: विद्वांसं ब्राह्मणं चैव अस्तो बन्धूंश्च सादरम्॥
एतस्मिन्नन्तरे तस्या रात्रेर्द्वौ प्रहरौ गतौ। त्यायं च गगनं मेघैः क्षणद्युतिसमन्वितैः ॥
बभूवुश्च वायवश्चेष्टा यथुर्निद्रा च रक्षकाः। अचेष्टिताश्च शयने मृता इव विचेतनाः ॥
एतस्मिन्नन्तरे तत्र चाऽऽजग्मुस्त्रिदशेश्वराः। तुष्टुवुर्धर्मब्रह्मेशा गर्भस्थं परमेश्वरम् ॥

देवा ऊचुः—

जगद्योनिरयोनिस्त्वमनन्तोऽव्यय एव च। ज्योतिःस्वरूपो ह्यनघः सगुणो निर्गुणो महान् ॥
भक्तानुरोधात्साकारो निराकारो निरङ्कुशः। निर्व्यूहो निखिलाधारो निःशङ्को निरुपद्रवः
निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः। स्वात्मारामः पूर्णकामो निमिषो नित्य एव च
स्वेच्छामयः सर्वहेतुः सर्वः सर्वगुणाश्रयः। सुखदो दुःखदो दुर्गो दुर्जनान्तक एव च ॥
सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः। वेदहेतुश्च वेदाश्च वेदाङ्गो वेदविद्विभुः॥५८॥
इत्येवमुक्त्वा देवाश्च प्रणेमुश्च मुहुर्मुहुः। हर्षाश्रुलोचनाः सर्वे ववृषुः कुसुमानि च॥५९॥
द्विचत्वारिंशन्नामानि प्रातरुत्थाय यः पठेत्। दृढां भक्तिं हरेर्दास्यं लभते वाञ्छितं फलम्

नारायण उवाच—

इत्येवं स्तवनं कृत्वा देवास्ते स्वालयं ययुः। बभूव जलवृष्टिश्च निश्चेष्टा मथुरापुरी ॥
घोरान्धकारनिबिडा बभूव यामिनी मुने। गते सप्तमुहूर्ते तु चाष्टमे समुपस्थिते ॥६२॥
वेदातिरिक्तदुर्ज्ञेये सर्वोत्कृष्टे शुभे क्षणे। शुभग्रहे दृष्टियुक्तेऽप्यदृष्टे चाशुभग्रहे ॥६३॥
अर्धरात्रे समुत्पन्ने रोहिण्यामष्टमीतिथौ। जयन्तीयोगसंयुक्ते चार्धचन्द्रोदये मुने ॥६४॥
दृष्ट्वा दृष्ट्वा क्षणं लग्नं भीताः सूर्यादयस्तदा। गगने क्रममुल्लङ्घ्य जग्मुर्मीनं शुभावहाः ॥
सुप्रसन्ना ग्रहाः सर्वे बभूवुस्तत्र संस्थिताः। एकादशास्ते प्रीत्या च मुहूर्तं धातुराज्ञया ॥
ववृषुश्च जलधरा ववुर्वाताः सुशीतलाः। सुप्रसन्ना च पृथिवी प्रसन्नाश्च दिशो दश ॥
ऋषयो मनवश्चैव यक्षगन्धर्वकिंनराः। देवा देव्यश्च मुदिता ननृतुश्चाप्सरोगणाः ॥
जगुर्गन्धर्वपतयो विद्याधर्यश्च नारद। सुखेन सुषुवुर्नद्यो जज्वलुश्चाग्नयो मुदा ॥७०॥
नेदुर्दुन्दुभयो नाके चाऽऽनकाश्च मनोहराः। पारिजातप्रसूनानां महावृष्टिर्बभूव ह ॥
जगाम सूतिकागेहं नारीरूपं विधाय भूः। जयशब्दः शङ्खशब्दो हरिशब्दो बभूव ह ॥
एतस्मिन्नन्तरे तत्र पपात देवकी सती। निःससार च वायुश्च देवकीजठरात्ततः ॥

१ क. °साकारो। २ क. निमेषो।

तत्रैव भगवान्कृष्णो दिव्यरूपं विधाय च। हृत्पद्मकोशाद्देवक्या हरिराविर्बभूव ह॥
अतीव कमनीयं च शरीरं सुमनोहरम्। द्विभुजं मुरलीहस्तं स्फुरन्मकरकुण्डलम्॥
ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकारकम्॥
मणिरत्नेन्द्रसाराणां भूषणैश्च विभूषितम्। नवीननीरदश्यामं शोभितं पीतवाससा॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम्। शरत्पार्वणचन्द्रास्यं बिम्बाधरमनोहरम्॥
मयूरपिच्छचूडं च सद्रत्नमुकुटोज्ज्वलम्। त्रिभङ्गवक्रमध्यं च वनमालाविभूषितम्॥
श्रीवत्सवक्षसं चारुकौस्तुभेन विराजितम्। किशोरवयसं शान्तं कान्तं ब्रह्मेशयोः परम्॥
ददर्श वसुदेवश्च देवकीपुरतो मुने। तुष्टाव परया भक्त्या विस्मयं परमं ययौ॥८१॥
कृताञ्जलिपुटो भूत्वा भक्तिनम्रात्मकंधरः। साश्रुपूर्णः सपुलको देवक्या च स्त्रिया सह

वसुदेव उवाच—

त्वामतीन्द्रियमव्यक्तमक्षरं निर्गुणं विभुम्। ध्यानासाध्यं च सर्वेषां परमात्मानमीश्वरम्॥
स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम्। निर्लिप्तं परमं ब्रह्म बीजरूपं सनातनम्॥
स्थूलात्स्थूलतरं व्याप्तमतिसूक्ष्ममदर्शनम्। स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकम्॥
शरीरवन्तं सगुणमशरीरं गुणोत्करम्। प्रकृतिं प्रकृतीशं च प्राकृतं प्रकृतेः परम्॥
सर्वेशं सर्वरूपं च सर्वान्तकरमव्ययम्। सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभुम्॥
अनन्तः स्तवनेऽशक्तोऽशक्ता देवी सरस्वती। यं वा स्तोतुमशक्तश्च पञ्चवक्त्रः षडाननः॥
चतुर्मुखो वेदकर्ता यं स्तोतुमक्षमः सदा। गणेशो न समर्थश्च योगीन्द्राणां गुरोर्गुरुः॥
ऋषयो देवताश्चैव मुनीन्द्रमनुमानवाः। स्वप्ने तेषामदृश्यं च त्वामेवं किं स्तुवन्ति ते॥
श्रुतयः स्तवनेऽशक्ताः किं स्तुवन्ति विपश्चितः। विहायैवं शरीरं च बालो भवितुमर्हसि॥
वसुदेवकृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः। भक्तिं दास्यमवाप्नोति श्रीकृष्णचरणाम्बुजे॥
विशिष्टपुत्रं लभते हरिदासं गुणान्वितम्। संकटं निस्तरेत्तूर्णं शत्रुभीत्या प्रमुच्यते॥

नारायण उवाच—

वसुदेववचः श्रुत्वा तमुवाच हरिः स्वयम्। प्रसन्नवदनः श्रीमान्भक्तानुग्रहकारकः॥

श्रीकृष्ण उवाच—

तपसां च फलेनैव पुत्रोऽहं तव सांप्रतम्। वरं वृणीष्व भद्रं ते भविष्यति न संशयः॥
पुरा तपस्विनां श्रेष्ठः सुतपास्त्वं प्रजापतिः। पत्नी ते पृश्निनाम्नी च तपसाऽऽराधितस्त्वया
पुत्रो मत्सदृशस्तत्र दृष्ट्वा मां च वृतो बुधः। मया दत्तो वरस्तुभ्यं मत्समो भविता सुतः

१ क. ते सूतपेय च।

दत्त्वा तुभ्यं वरं तात मनसाऽऽलोच्य चिन्तितः । मत्समो नास्ति भुवने पुत्रोऽहं तेन हेतुना
तपसां च प्रभावेण त्वमेव कश्यपः स्वयम् । सुतपा देवमातेयमदितिश्च पतिव्रता ॥
अधुना कश्यपांशस्त्वं वसुदेवः पिता मम । देवकी देवमातेयमदितेरंशसंभवा ॥९९॥
त्वत्तोऽदित्यां वामनोऽहं पुत्रस्तेंऽशेन संभवः । अधुना परिपूर्णोऽहं पुत्रस्ते तपसां फलात्
मां वा त्वं पुत्रभावेन ब्रह्मभावेन वा पुनः । मां प्राप्तोऽसि महाप्राज्ञ जीवन्मुक्तो भविष्यसि
यशोदाभवनं शीघ्रं मां गृहीत्वा व्रजं व्रज । संस्थाप्य तत्र मां तात मायामादाय स्थापय ॥
इत्युक्त्वा श्रीहरिस्तत्र बालरूपो बभूव ह । नग्नं भूमौ शयानं च ददर्श श्यामलं सुतम् ॥
दृष्ट्वा स बालकं तत्र मोहितो विष्णुमायया । किं वा कूटं च तन्द्रायामपूर्वं सूतिकागृहम् ॥
इत्युक्त्वा वसुदेवश्च समालोच्य स्त्रिया सह । गृहीत्वा बालकं क्रोडे जगाम नन्दगोकुलम् ॥
गत्वा नन्दव्रजं शीघ्रं विवेश सूतिकागृहम् । ददर्श शयनाविष्टां यशोदां निद्रयाऽन्विताम्
निद्रान्वितं च नन्दं च सर्वं तत्र गृहे स्थितम् । ददर्श बालिकां नग्नां तप्तकाञ्चनसंनिभाम्
ईषद्धास्यां प्रसन्नास्यां पश्यन्तीं गृहशेखरम् । तां दृष्ट्वा वसुदेवश्च विस्मयं परमं ययौ ॥
संस्थाप्य तत्र पुत्रं च कन्यामादाय सत्वरम् । जगाम मथुरां हृष्टः स्वकान्तासूतिकागृहम्
स्थापयामास तत्रैव महामायां च बालिकाम् । रोरूयमाणां तामेव दृष्ट्वा हृष्टा च देवकी ॥
रोदनेनैव सा बाला बोधयामास रक्षकान् । उत्थाय रक्षकाः शीघ्रं बालिकां जगृहुस्तदा
गृहीत्वा बालिकां ते च प्रजग्मुः कंससंनिधिम् । जगाम देवकी पश्चाद्वसुदेवश्च शोकतः ॥
दृष्ट्वा च बालिकां कंसो नातिहृष्टो महामुने । रोरूयमाणां कल्याणीं तद्दया न बभूव ह ॥
तां गृहीत्वा च पाषाणे हन्तुं पाषं सुदारुणम् । उवाच वसुदेवश्च देवकी परमादरम् ॥
भो भोः कंस नृपश्रेष्ठ नीतिशास्त्रविशारद । निबोध वाक्यं सत्यं च नीतियुक्तं मनोरमम् ॥
हत्वाऽऽवयोः पुत्रषट्कं दया ते नास्ति बान्धव । अधुना चाष्टमे गर्भे बालिकामवरां मम ॥
हत्वा तव किमैश्वर्यं भविष्यति महीतले । स्त्रियमेव हन्तुमनसा किं क्षमा रणमूर्धनि ॥११७॥
इत्येवमुक्त्वा तं वसुदेवश्च समातले । रुरोद पुरतस्तत्र कंसस्य च दुरात्मनः ॥
कंसस्तयोर्वचः श्रुत्वा तामुवाच दुरात्मना ॥ ११८ ॥

कंस उवाच—

शृणु वाक्यं मदीयं च निषेध बोधयामि ते । तृणेन पर्वतं हन्तुं शक्तो धाता च दैवतः ॥
कीटेन सिंहशार्दूलं मशकेन गजं तथा । शिशुना च महावीरं महान्तं क्षुद्रजन्तुभिः ॥
मूषकेन च मार्जारं मण्डूकेन भुजगमम् । एवं जन्येन जनकं मत्स्येनैव च मत्सकम् ॥
दहनिना च जलं नाशुं वह्निं शुष्कतृणेन च । पीताः सप्त समुद्राश्च द्विमेनैकेन जन्तुना ॥

मातुर्गतिर्विचित्रा तु दुर्ज्ञेया भुवनत्रये। दैवेन बालिका नष्टुं मां समर्था भविष्यति ॥१२१॥
बालिकां च वधिष्यामि नात्र कार्या विचारणा। इत्येवमुक्त्वा कंसश्च गृहीत्वा बालिकां तदा
हन्तुमारब्धवान्कंसस्तमुवाच वसुस्तदा। मुधा हिंसितवान्राजन्देहि बालां कृपानिधे॥
स तच्छ्रुत्वा विचारज्ञः कंसस्तुष्टो महामुने। संबोधयन्तं तत्रैव वाग्बभूवाशरीरिणी॥
हे कंस हंसि कां मूढ न विज्ञाय हरेर्गतिम्। कुत्रचित्त्वन्निहन्ताऽस्ति काले व्यक्तो भविष्यति
श्रुत्वैव देववाणीं च तत्याज बालिकां नृपः। वसुदेवो देवकी च सानन्दाय मुदान्वितौ॥
जग्मतुः स्वगृहं तौ च कन्यां कृत्वा स्ववक्षसि। मृतामिव पुनः प्राप्य ब्राह्मणेभ्यो ददौ धनम्
सा परा भगिनी विप्र कृष्णस्य परमात्मनः। एकानंशेति विख्याता पार्वत्यंशसमुद्भवा॥
वसुस्तां द्वारकायां तु रुक्मिण्युद्वाहकर्मणि। ददौ दुर्वाससे भक्त्या शंकरांशाय भक्तितः॥
एवं निगदितं सर्वं कृष्णजन्मानुकीर्तनम्। जन्ममृत्युजराघ्नं सुखदं पुण्यदं मुने ॥१३३॥

इति श्रीब्रह्म० महा० कृष्णजन्मख० नारदना० सप्तमोऽध्यायः॥ ७॥

---

अथाष्टमोऽध्यायः।

---

नारद उवाच—

जन्माष्टमीव्रतं ब्रूहि व्रतानां व्रतमुत्तमम्। फलं जयन्तीयोगस्य सामान्येनैव सांप्रतम् ॥१॥
को वा दोषोऽप्यकरणे भोजने वा महामुने। उपवासफलं किं वा जयन्त्यां च सुसंमतम्
व्रतं पूजाविधानं च संयमस्य च सांप्रतम्। उपवासपारणयोः सुविचार्य वद प्रभो ॥ ३॥

नारायण उवाच—

कृत्वा हविष्यं सप्तम्यां संयतः पारणे तथा। अरुणोदयवेलायां समुत्थाय परेऽहनि ॥४॥
प्रातःकृत्यं संविधाय स्नात्वा संकल्पमाचरेत्। मनोपवासयोर्ब्रह्मञ्छ्रीकृष्णप्रीतिहेतुकम्॥
मन्वादिदिवसे प्राप्ते यत्फलं स्नानपूजनैः। फलं भाद्रपदेऽष्टम्यां भवेत्कोटिगुणं द्विज॥
तस्यां तिथौ वारिमात्रं पितृणां यः प्रयच्छति। गया श्राद्धं कृतं तेन शताब्दं नात्र संशयः॥
स्नात्वा नित्यक्रियां कृत्वा निर्माय सूतिकागृहम्। लोहखण्डवह्निजलैर्युक्तं रक्षकसंघकैः।
तत्र द्रव्यं बहुविधं नाभिच्छेदनकर्तनम्। धात्रीस्वरूपां नारीं च यत्नतः स्थापयेद्बुधः॥
पूजाद्रव्याणि चारूणि सोपचाराणि षोडश। फलान्यष्टौ च मिष्टानि द्रव्याण्येव हि नारद
जातीफलं च कक्कोलं दाडिमं श्रीफलं तथा।
नारिकेरं च जम्बीरं कूष्माण्डं च सुवासितम्। आसनं वसनं पात्रं मधुपर्कं तथैव च॥
अर्घ्यमाचमनीयं च स्नानीयं शयनं तथा। गन्धं पुष्पं च नैवेद्यं ताम्बूलमनुलेपनम्॥

धूपदीपौ भूषणं वै चोपचारांश्च षोडश । पादप्रक्षालनं कृत्वा धृत्वा धौते च वाससी ॥
आचम्य चाऽऽसने स्थित्वा स्वस्तिवाचनपूर्वकम् । घटस्याऽऽरोपणं कृत्वा संपूज्य पञ्च देवताः ॥
घटे ह्यावाहनं कृत्वा श्रीकृष्णं परमेश्वरम् । वसुदेवं देवकीं च यशोदां नन्दमेव च ॥ १९ ॥
रोहिणीं बलदेवं च षष्ठीदेवीं वसुंधराम् । रोहिणीं ब्रह्माणीं चैव अष्टमीं स्थानदेवताम् ॥
अश्वत्थाम्ना सह बलिं हनूमन्तं बिभीषणम् । कृपं परशुरामं च वेदव्यासं मृकण्डुजम् ॥
सर्वस्याऽऽवाहनं कृत्वा ध्यानं कुर्याद्धरेस्तदा । पुष्पकं मस्तके न्यस्य पुनर्ध्यायेद्विचक्षणः ॥
ध्यानं च सामवेदोक्तं शृणु वक्ष्यामि नारद । ब्रह्मणा कथितं पूर्वं कुमाराय महात्मने ॥

बालं नीलाम्बुजाभमतिशयरुचिरं स्मेरवक्त्राम्बुजं तं
ब्रह्मेशानन्तधर्मैः कतिकतिदिवसैः स्तूयमानं परं यम् ।
ध्यानासाध्यमृषीन्द्रैर्मुनिगणमनुजैः सिद्धसंघैरसाध्यं
योगीन्द्राणामचिन्त्यमतिशयमतुलं साक्षिरूपं भजेऽहम् ॥ २० ॥

ध्यात्वा पुष्पं च दत्त्वा च तत्सर्वं च निवेदयेत् । एवं व्रती व्रतं कुर्याच्छृणु मन्त्रक्रमं मुने ॥
आसनं सर्वशोभाढ्यं सद्रत्नमणिनिर्मितम् । विचित्रं च विचित्रेण गृह्यतां शोभनं हरे ॥
वसनं वह्निशौचं च निर्मितं विश्वकर्मणा । मतप्तस्वर्णखचितं चित्रितं गृह्यतां हरे ॥ २४ ॥
पादप्रक्षालनार्थं च स्वर्णपात्रस्थितं जलम् । पवित्रं निर्मलं चारु पाद्यं च गृ० ॥ २५ ॥
मधुनिर्दधिक्षीरं शर्करासंयुतं परम् । स्वर्णपात्रस्थितं देयं स्नानार्थं गृ० ॥ २६ ॥
दूर्वाक्षतं शुक्लपुष्पं स्वच्छतोयसमन्वितम् । चन्दनागुरुकस्तूरीसहितं गृ० ॥ २७ ॥
सुस्वादु स्वच्छतोयं च वासितं गन्धवस्तुना । शुद्धमाचमनीयं च गृह्यतां परमेश्वर ॥
गन्धद्रव्यसमायुक्तं विष्णो तैलं सुवासितम् । आमलक्या द्रवं चैव स्नानीयं गृ० ॥
सद्रत्नमणिसारेण रचितां सुमनोहराम् । छादितां सूक्ष्मवस्त्रेण शय्यां च गृ० ॥
चूर्णं च वृक्षभेदानां मूलानां द्रवसंयुतम् । कस्तूरीद्रवसंयुक्तं गन्धं च गृ० ॥ ३१ ॥
पुष्पं सुगन्धियुक्तं च संयुक्तं कुङ्कुमेन च । सुप्रियं सर्वदेवानां सादरं गृ० ॥ ३२ ॥
नाना स्वस्तिकोक्तं च मिष्टद्रव्यसमन्वितम् । सुपक्वफलसंयुक्तं नैवेद्यं गृ० ॥ ३३ ॥
लड्डुकं मोदकं चैव सर्पिः क्षीरं गुडं मधु । नवोद्धृतं दधि तक्रं नैवेद्यं गृ० ॥ ३४ ॥
शालिजं शर्करायुक्तं क्षीरं स्वादु सुपक्वकम् । ताम्बूलं भोगसारं च कर्पूरादिसमन्वितम् ॥
भक्त्या निवेदितमिदं गृह्यतां परमेश्वर ॥ ३५ ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् । कर्पूरपूर्णं रुचिरं गृह्यतां परमेश्वर ॥ ३६ ॥
वृक्षभेदस्य निर्यासो गन्धयुक्तोऽग्निना सह । सुप्रियः सर्वदेवानां धूपोऽयं गृ० ॥ ३७ ॥

घोरान्धकारनाशैकहेतुरेव शुभावहः । सुप्रदीपो दीप्तिकरो दीपोऽयं गृ० ॥ २८ ॥
पवित्रं निर्मलं तोयं कर्पूरादिसुवासितम् । जीवनं सर्वजीवानां पानार्थं गृ० ॥ २९ ॥
नानापुष्पसमायुक्तं ग्रथितं सूक्ष्मतन्तुना । शरीरभूषणवरं माल्यं च प्रतिगृह्यताम् ॥
दत्त्वा देयानि द्रव्याणि पूजोपयोगितानि च । व्रतस्थानन्वितं द्रव्यं हरये देयमेव च ॥
फलानि तरुबीजानि स्वादूनि सुन्दराणि च । वंशवृद्धिकराण्येव गृह्यतां परमेश्वर ॥
आवाहितांश्च देवांश्च प्रत्येकं पूजयेद्व्रती । तान्पूज्य भक्तिभावेन दद्यात्पुष्पाञ्जलित्रयम् ॥
सुनन्दनन्दकुमुदान्गोपान्गोपीश्च राधिकाम् । गणेशं कार्तिकेयं च ब्रह्माणं च शिवं शिवाम् ॥
लक्ष्मीं सरस्वतीं चैव दिक्पालांश्च ग्रहांस्तथा । शेषं सुदर्शनं चैव पार्षदप्रवरांस्तथा ॥
संपूज्य सर्वदेवांश्च प्रणम्य दण्डवद्भुवि । ब्राह्मणेभ्यश्च नैवेद्यं दत्त्वा दद्याच्च दक्षिणाम् ॥
कथां च जन्माध्यायोक्तां शृणुयाद्भक्तिभावतः । तदा कुशासने स्थित्वा कुर्याज्जागरणं व्रती ॥
प्रभाते चाऽऽह्निकं कृत्वा संपूज्य श्रीहरिं मुदा । ब्राह्मणान्भोजयित्वा च कारयेद्धरिकीर्तनम् ॥

नारद उवाच—

व्रतकालव्यवस्थां च वेदोक्तां सर्वसंमताम् । वेदार्थं च समालोच्य संहितां च पुरातनीम् ॥
उपवासे जागरणे व्रते किं वा फलं मुने । किं वा पापं तत्र भुक्त्वा वद वेदविदां वर ॥

नारायण उवाच—

अष्टमी कर्क्षसंयुक्ता रात्र्यर्धे यदि दृश्यते । स एव मुख्यकालश्च तत्र जातः स्वयं हरिः ॥
जयं पुण्यं च कुरुते जयन्ती तेन संस्मृता । तत्रोपोष्य व्रतं कृत्वा कुर्याज्जागरणं बुधः ॥
सर्वापवादः कालोऽयं प्रधानः सर्वसंमतः । इति वेदविदां वाणी चेत्युक्ता वेधसा पुरा ॥
तत्र जागरणं कृत्वा चोपोष्य व्रतं चरेत् । कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥
वर्जनीया प्रयत्नेन सप्तमीसहिताऽष्टमी । सा सर्क्षाऽपि न कर्तव्या सप्तमीसहिताऽष्टमी ॥
अविद्धायां सर्क्षायां जातो देवकिनन्दनः । वेदवेदाङ्गगुप्तेति विशिष्टे मङ्गलक्षणे ॥ ९६ ॥
व्यतीते रोहिणीऋक्षे व्रती कुर्याच्च पारणम् । तिथ्यन्ते च हरिं स्मृत्वा कृत्वा देवार्चनं व्रती ॥
पारणं पावनं पुंसां सर्वपापप्रणाशनम् । उपवासाङ्गभूतं च फलदं सिद्धिकारणम् ॥
सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते । अन्यथा फलहानिः स्यात्कृते धारणपारणे ॥
न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् । निशायां पारणं कुर्याद्वर्जयित्वा महानिशाम् ॥
पूर्वाह्णे पारणं शस्तं कृत्वा विप्रसुरार्चनम् सर्वेषां संमतं कुर्यादृते वै रोहिणीव्रतम् ॥ ६१ ॥
बुधसोमसमायुक्ता जयन्ती यदि लभ्यते । न कुर्याद्गर्भवासं च तत्र कृत्वा व्रतं व्रती ॥

---

१ कर्क्षेण ब्रह्मनक्षत्रेण रोहिणीनक्षत्रेण संयुक्तेत्यर्थः ।

उदये चाष्टमी किंचिन्नवमी सकला यदि । भवेद्बुधेन्दुसंयुक्ता प्राजापत्यर्क्षसंयुता ॥
अपि वर्षशतेनापि लभ्यते वा न लभ्यते । व्रतं तत्र व्रती कुर्यात्पुंसां कोटिं समुद्धरेत् ॥
पूजां विना व्रतेनापि भक्तानां हीनसंपदाम् । कृतेनैवोपवासेन प्रीतो भवति माधवः ॥
भक्त्या नानोपचारेण रात्रौ जागरणेन च । फलं ददाति दैत्यारिर्जयन्तीव्रतसंभवम् ॥
वित्तशाठ्यमकुर्वाणः सम्यक्फलमवाप्नुयात् । कुर्वाणो वित्तशाठ्यं च लभते सदृशं फलम् ॥
अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं बुधः । हन्यात्पुराकृतं पुण्यं चोपवासार्जितं फलम् ॥
तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् । तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम् ॥
महानिशायां प्राप्तायां तिथिभान्तं यदा भवेत् । तृतीयेऽह्नि मुनिश्रेष्ठ पारणं कुरुते बुधः ॥
षण्मुहूर्ते व्यतीते तु रात्रावेव महानिशा । लभते ब्रह्महत्यां च तत्र भुक्त्वा च नारद ॥
गोमांसविण्मूत्रसमं ताम्बूलं च फलं जलम् । पुंभक्ष्यं शुद्धानामोदनस्य च का कथा ।
त्रियामां रजनीं प्राहुस्त्यक्त्वाऽऽद्यं च चतुष्टयम् । नाडीनां तदुभे संध्ये दिवसाद्यन्तसंज्ञिते ॥
जन्माष्टम्यां च शुद्धायां कृत्वा जागरणं व्रतम् । शतजन्मकृतात्पापान्मुच्यते नात्र संशयः
जन्माष्टम्यां च शुद्धायामुपोष्य केवलं नरः । अश्वमेधफलं तस्य व्रतं जागरणं विना ॥
यद्बाल्ये यच्च कौमारे यौवने यच्च वार्धके । सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥
श्रीकृष्णजन्मदिवसे यश्च भुङ्क्ते नराधमः । स भवेन्मातृगामी च ब्रह्महत्याशतं लभेत् ॥
कोटिजन्मार्जितं पुण्यं तस्य नश्यति निश्चितम् । अनर्हश्चाशुचिः श्राद्धे दैवे पित्र्ये च कर्मणि ।
अन्ते वसेत्कालसूत्रे यावच्चन्द्रदिवाकरौ । कृमिभिः शूकतुल्यैश्च तीक्ष्णदंष्ट्रैश्च भक्षितः ॥
पापी ततः समुत्थाय भारते जन्म चेल्लभेत् । षष्टिवर्षसहस्राणि विष्ठायां च कृमिर्भवेत् ॥
गृध्रकोटिसहस्राणि शतजन्मानि सूकरः । श्वापदः शतजन्मानि शृगालः सप्त जन्म च ॥
सप्तजन्मसु सर्पश्च काकश्च सप्तजन्मसु । ततो भवेन्नरो मूको गलत्कुष्ठी सदाऽऽतुरः ॥
ततो भवेत्पशुघ्नश्च व्याधग्राही ततो भवेत् । तदन्ते च भवेद्वायुर्वर्महीनश्च गृध्रकः ॥
ततो भवेत्स रजकस्तैलकारस्ततो भवेत् । ततो भवेद्देवलो वै ब्राह्मणश्च सदाऽशुचिः ॥
उपवासासमर्थश्चेदेकं विप्रं च भोजयेत् । तावद्धनानि वा दद्याद्यद्भुक्तं द्विगुणं भवेत् ॥
सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान् । कुर्याद्द्वादशसंख्याकानुपवासे ह्यदूषणे नरः ॥
इत्येवं कथितं वत्स श्रुतं यद्धर्मवक्त्रतः । मयोपवासपूर्वाणां विधानमष्टमे च यत् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० कृष्णजन्माष्टमीव्रतपूर्वोपवासनिरूपणं नामाष्टमोऽध्यायः ॥ ८ ॥

———

१ क. °त्रैवो भवत्वा ।

अथ नवमोऽध्यायः ।

नारद उवाच—

संस्थाप्य गोकुले कृष्णं यशोदामन्दिरे वसुः । जगाम स्वगृहं नन्दः किं चकार सुते त्सवम् ॥
किं चकार हरिस्तत्र कतिवर्षस्थितिः प्रभोः । बालक्रीडनकं तस्य वर्णय क्रमशो मुने ॥
पुरा कृता या प्रतिज्ञा गोलोके राधया सह । तत्कृतं केन विधिना प्रतिज्ञापालनं हरेः ॥
कीदृग्वृन्दावनं नाम मण्डलं किंविधं वद । रासक्रीडां जलक्रीडां संयम्य वर्णय प्रभो ॥
नन्दस्तप. किं चकार यशोदा चाप रोहिणी । हरेः पूर्वं च हलिनः कुत्र जन्म बभूव ह ॥
पीयूषखण्डमाख्यानमपूर्वं श्रीहरेः स्मृतम् । विशेषतः कविमुखान्नव्यं नूनं पदे पदे ॥
रासमण्डलक्रीडां वर्णय स्वयमेव च । परोक्षवर्णनात्काव्यं प्रशस्तं न्यवर्णनम् ॥
श्रीकृष्णांशो भवान्साक्षाद्योगीन्द्राणां गुरोर्गुरुः । यो यस्यांशः स च जनस्तस्यैव सुखतः सुखी ॥ ८ ॥
त्वयैव वर्णितौ पादौ विहीनौ तु युवां हरेः । साक्षाद्गोलोकनाथांशस्त्वमेव तत्समो महान् ॥ ९ ॥

नारायण उवाच—

ब्रह्मेशशेषविघ्नेशाः कूर्मो धर्मोऽहमेव च । नरश्च कार्तिकेयश्च श्रीकृष्णांशा वयं नव ॥
अहो गोलोकनाथस्य महिमा केन वर्ण्यते । यं स्वयं नो विजानीमो न वेदाः किं विपश्चितः
सूकरो वामनः कल्किर्बौद्धः कपिलमीनकौ । एते चांशाः कलाश्चान्ये सन्त्येव कतिधा मुने
कूर्मो नृसिंहो रामश्च श्वेतद्वीपविराड्विभुः । परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम् ॥
वैकुण्ठे कमलाकान्तो रूपभेदाच्चतुर्भुजः । गोलोके गोकुले राधाकान्तोऽयं द्विभुजः स्वयम्
अस्यैव तेजो नित्यं च चित्ते कुर्वन्ति योगिनः । भक्ताः पादाम्बुजं तेन कुतस्तेजस्विनं विना ॥ १९ ॥
शृणु विप्र वर्णयामि यशोदानन्दयोस्तपः । रोहिण्याश्च यतो हेतोर्ददृशाते हरेर्मुखम् ॥
वसूनां प्रवरो नन्दो नाम्ना द्रोणस्तपोधनः । तस्य पत्नी धरा साध्वी यशोदा सा तपस्विनी
रोहिणी सर्पमाता च कद्रूश्च सर्पकारिणी । एतेषां जन्मचरितं निबोध कथयामि ते ॥ १८ ॥
एकदा च धराद्रोणौ पर्वते गन्धमादने । पुण्यदे भारते वर्षे गौतमाश्रमसंनिधौ ॥ १९ ॥
चक्रतुश्च तपस्तत्र वर्षाणामयुतं मुने । श्रीकृष्णदर्शनार्थं च निर्जने सप्रमातटे ॥ २० ॥
न ददर्श हरिं द्रोणो धरा चैव तपस्विनी । कृत्वाऽग्निकुण्डं वैराग्यात्प्रवेष्टुं समुपस्थितौ

चिच्छेद नाडीं धात्री च स्नापयामास बालकम् । जयशब्दं जगुर्गोप्यः सर्वाभरणभूषिताः
परपुत्रोत्सवं नन्दश्चकार परमादरात् । तदा यशोदा गोपीभ्यो ब्राह्मणेभ्यो ददौ मुदा ॥
धनानि नानावस्तूनि तैलं सिन्दूरमेव च । इत्येवं कथितं वत्स यशोदानन्दयोस्तपः ॥
जन्माख्यानं च हलिनो रोहिणीचरितं तथा । अधुना ते वर्णनीयं नन्दपुत्रोत्सवं शृणु ॥
सुखदं मोक्षदं सारं जन्ममृत्युजरापहम् । मङ्गलं कृष्णचरितं वैष्णवानां च जीवनम् ॥
सर्वाशुभविनाशं च भक्तिदास्यप्रदं हरेः । श्रीकृष्णं वसुदेवश्च संस्थाप्य नन्दमन्दिरे ॥
गृहीत्वा बालिकां हृष्टो जगाम निजमन्दिरम् । कथितं चरितं तस्याः श्रुतं सम्मुखतो मुने
अधुना गोकुले कृष्णचरितं शृणु मङ्गलम् । वसुदेवे गृहं याते यशोदा नन्द एव च ॥
मङ्गले सूतिकागारे जयागारे जयान्विते । ददर्श पुत्रं भूमिष्ठं नवीननीरदप्रभम् ॥५७॥
अतीव सुन्दरं नग्नं पश्यन्तं गृहशेखरम् । शरत्पार्वणचन्द्रास्यं नीलेन्दीवरलोचनम् ॥
रुदन्तं च हसन्तं च वेणुसंसक्तविग्रहम् । हस्तद्वयं सुविन्यस्तं प्रेमवन्तं पदाम्बुजम् ॥६९॥
दृष्ट्वा नन्दः स्त्रिया सार्धं हरिं हृष्टो बभूव ह । धात्री तं स्नापयामास शीततोयेन बालकम्
चिच्छेद नाडीं बालस्य हर्षाद्गोप्यो जयं ददुः । आजग्मुर्गोपिकाः सर्वा बृहच्छ्रोण्यश्च कुचाः ॥ ६१ ॥
बालिकाश्च वयस्याश्च विप्रपत्न्यश्च सूतिकाम् । आशिषं युयुजुः सर्वा ददृशुर्बालकं मुदा
क्रोडे चक्रुः प्रशंसन्त्य ऊचुस्तत्र च काश्चन । नन्दः सचैलः स्नातश्च धृत्वा धौते च वाससी
पारम्पर्यविधिं तत्र चकार हृष्टमानसः । ब्राह्मणान्भोजयामास कारयामास मङ्गलम् ॥६४॥
वाद्यानि वादयामास बन्दिभ्यश्च ददौ धनम् । ततो नन्दश्च सानन्दं ब्राह्मणेभ्यो ददौ धनम्
सद्रत्नानि प्रवालानि हीरकाणि च सादरम् । तिलानां पर्वतान्सप्त सुवर्णशतकं मुने ॥
रौप्यं धान्याचलं वस्त्रं गोसहस्रं मनोहरम् । दधि दुग्धं शर्करां च नवनीतं घृतं मधु ॥
मिष्टान्नं लड्डुकौघं स्वादूनि मोदकानि च । भूमिं च सर्वसस्याढ्यां वायुवेगांस्तुरंगमान्
ताम्बूलानि च तैलानि दत्त्वा हृष्टो बभूव ह । रक्षितुं सूतिकागारं योजयामास ब्राह्मणान्
तत्र मन्त्रज्ञनुनान्स्थविरान्पितृगणान् । वेदांश्च पाठयामास हरेर्नामैकमङ्गलम् ॥७०॥
भक्त्या च ब्राह्मणद्वारा पूजयामास देवताः । गोपालिकाश्च वृद्धाश्च रत्नालंकारभूषिताः ॥
आनन्दाः सुमुखा गोपाः पुलकाञ्चितविग्रहाः । प्रहृष्टमानसा मङ्गलाजग्मुर्नन्दमन्दिरम् ॥
आशीर्वादं प्रयुञ्जाना ब्राह्मणा वेदपारगाः । शिष्यगाः पुष्पहस्ताश्चाप्याजग्मुर्नन्द० ॥७२॥
नानाविदाश्च गणका ज्योतिःशास्त्रविशारदाः । कविसङ्घाः पुस्तककरा आजग्मुर्नन्द० ॥
सम्मिता विप्रपत्न्यश्च वन्ध्याः स्थविरा वराः । बालिका बालकयुता आजग्मुर्नन्द० ॥७४॥

तौ मर्तुकामौ दृष्ट्वा च वाग्बभूवाशरीरिणी। द्रक्ष्यथः श्रीहरिं पृथ्व्यां गो कुले पुत्ररूपिणम्
जन्मान्तरे वसुश्रेष्ठ दुर्दर्शं योगिनां विभुम् । ध्यानासाध्यं च विदुषां ब्रह्मादीनां च वन्दितम्
श्रुत्वैवं तद्धराद्रोणौ जग्मतुः स्वालयं सुखात् । लब्ध्वा तु भारते जन्म दृष्टं ताभ्यां हरेर्मुखम्
यशोदानन्दयोरेवं कथितं चरितं तव । सुगोप्यं त्रिदशानां च रोहिणीचरितं शृणु ॥२६॥
एकदा देवमाता च पुण्योत्सवदिने सती । विज्ञापनं चरद्वारा चकार कश्यपं मुने ॥
सुस्नाता सुन्दरी देवी रत्नालङ्कारभूषिता । चकार वेषं विविधं ददर्श दर्पणे मुखम् ॥
कस्तूरीबिन्दुना सार्धं सिन्दूरबिन्दुसंयुतम् । रत्नकुण्डलशोभाढ्यं पत्राभरणभूषितम् ॥
गजमौक्तिकसंयुक्तं नासाग्रं सुमनोहरम् । शरत्पार्वणचन्द्रास्यं शरत्पङ्कजलोचनम् ॥
वक्रभ्रूभङ्गिना युक्तं विचित्रकज्जलोज्ज्वलम् । पक्वदाडिमबीजाभदन्तपङ्क्तिविराजितम् ॥
पक्वबिम्बाधरोष्ठं च सस्मितं सुन्दरं सदा । अतीव कमनीयं च मुनीन्द्रचित्तमोहनम् ॥
एवंभूतं मुखं दृष्ट्वा सुन्दरी स्वगृहे स्थिता । पश्यन्ती पतिमार्गं च कामबाणप्रपीडिता ॥
शुश्राव वार्तामदितिः कश्यपं कद्रुसंयुतम् । रत्नसारसमारम्भे तस्या वक्षःस्थले स्थितम् ॥
श्रुत्वा चुकोप साध्वी सा हताशा रतिकातरा । न शशाप पतिं प्रेम्णा शशाप सर्पमातरम्
न देवालययोग्या सा धर्मिष्ठा धर्मनाशिनी । दूरं गच्छतु स्वर्लोकादारमयोनिं च मानवीम्
श्रुत्वैवं सा चरद्वारा शशाप देवमातरम् । सा चैवं मानवीं योनिं यातु मर्त्ये जरायुताम् ॥
कश्यपो बोधयामास कद्रुं च सर्पमातरम् । काले यास्यसि मर्त्यं च मया सह शुचिस्मिते
त्यज भीतिं क्षमं दुःखं द्रक्ष्यसि श्रीहरेर्मुखम् । एवमुक्त्वा कश्यपश्च जगाम चादिते-
र्गृहम् ॥२८॥

वाञ्छां पूर्णां च तस्याश्च चकार भगवान्विभुः । ऋतौ तत्र महेन्द्रश्च बभूव च सुरर्षभः
अदितिर्देवकी चैव सर्पमाता च रोहिणी । कश्यपो वसुदेवश्च श्रीकृष्णजनको महान् ॥
रहस्यं गोपनीयं च सर्वं निगदितं मुने । अधुना बलदेवस्य जन्माख्यानं मुने शृणु ॥
अनन्तस्याप्रमेयस्य सहस्रशिरसः प्रभोः । रोहिणी वसुदेवस्य भार्यारत्नं च प्रेयसी ॥
जगाम गोकुलं साध्वी वसुदेवाज्ञया मुने । कंसर्पेणस्य रक्षार्थं कंसभीता पलायिता ॥
देवक्याः सप्तमं गर्भं माया कृष्णाज्ञया तदा । रोहिण्या जठरे तत्र स्थापयामास गोकुले
संस्थाप्य च तदा गर्भं कैलासं सा जगाम ह । दिनान्तरे कतिपये रोहिणी नन्दमन्दिरे ॥
सुषाव पुत्रं कृष्णांशं तन्नरोत्पाममीश्वरम् । ईषद्धास्यं प्रसन्नास्यं ज्वलन्तं ब्रह्मतेजसा ॥
तत्रैव जन्ममात्रेण देवा मुमुदिरे तदा । स्वर्गे दुन्दुभयो नेदुरानका मुरजादयः ॥४७॥
जयशब्दं च हुङ्कारं चक्रुर्देवा मुदाऽन्विताः । नन्दो हृष्टो ब्राह्मणेभ्यो धनं बहुविधं ददौ ॥

चिच्छेद नाडीं धात्री च स्नापयामास बालकम् । जयशब्दं जगुर्गोप्यः सर्वाभरणभूषिताः
परपुत्रोत्सवं नन्दश्चकार परमादरात् । तदा यशोदा गोपीभ्यो ब्राह्मणेभ्यो ददौ मुदा ॥
धनानि नानावस्तूनि तैलं सिन्दूरमेव च । इत्येवं कथितं वत्स यशोदानन्दयोस्तपः ॥
जन्मास्थानं च हलिनो रोहिणीचरितं तथा । अधुना ते वाञ्छनीयं नन्दपुत्रोत्सवं शृणु ॥
सुखदं मोक्षदं सारं जन्ममृत्युजरापहम् । मङ्गलं कृष्णचरितं वैष्णवानां च जीवनम् ॥
सर्वाशुभविनाशं च भक्तिदास्यप्रदं हरेः । श्रीकृष्णं वसुदेवश्च संस्थाप्य नन्दमन्दिरे ॥
गृहीत्वा बालिकां हृष्टो जगाम निजमन्दिरम् । कथितं चरितं तस्याः श्रुतं सन्मुखतो मुने
अधुना गोकुले कृष्णचरितं शृणु मङ्गलम् । वसुदेवे गृहं याते यशोदा नन्द एव च ॥
मङ्गले सूतिकागारे जयागारे जयान्विते । ददर्श पुत्रं भूमिष्ठं नवीननीरदप्रभम् ॥५७॥
अतीव सुन्दरं नग्नं पश्यन्तं गृहशेखरम् । शारत्पार्वणचन्द्रास्यं नीलेन्दीवरलोचनम् ॥
रुदन्तं च हसन्तं च वेणुसंसक्तविग्रहम् । हस्तद्वयं सुविन्यस्तं प्रेमवन्तं पदाम्बुजम् ॥५९॥
दृष्ट्वा नन्दः स्त्रिया सार्धं हरिं हृष्टो बभूव ह । धात्री तं स्नापयामास शीततोयेन बालकम्
चिच्छेद नाडीं बालस्य हर्षाद्गोप्यो जयं ददुः । आजग्मुर्गोपिकाः सर्वा बृहच्छ्रोण्यश्चकु-
स्तुचाः ॥ ६१ ॥
बालिकाश्च वयस्याश्च विप्रपत्न्यश्च सूतिकाम् । आशिषं युयुजुः सर्वा ददृशुर्बालकं मुदा
क्रोडे चक्रुः प्रशंसन्त्य ऊचुस्तत्र च काश्चन । नन्दः सचैलः स्नातश्च धृत्वा धौते च वाससी
पारम्पर्यविधिं तत्र चकार हृष्टमानसः । ब्राह्मणान्भोजयामास कारयामास मङ्गलम् ॥६४॥
वाद्यानि वादयामास बन्दिभ्यश्च ददौ धनम् । ततो नन्दश्च सानन्दं ब्राह्मणेभ्यो ददौ धनम्
सद्रत्नानि प्रवालानि हीरकाणि च सादरम् । तिलानां पर्वतान्सप्त सुवर्णशतकं मुने ॥
रौप्यं धान्याचलं वस्त्रं गोसहस्रं मनोहरम् । दधि दुग्धं शर्करां च नवनीतं घृतं मधु ॥
मिष्टान्नं लड्डुकौघं स्वादूनि मोदकानि च । भूमिं च सर्वसस्याढ्यां वायुवेगांस्तुरंगमान्
ताम्बूलानि च तैलानि दत्त्वा हृष्टो बभूव ह । रक्षितुं सूतिकागारं योजयामास ब्राह्मणान्
तत्र मन्त्रज्ञमनुजानस्थविरान्गोपिकागणान् । वेदांश्च पाठयामास हरेर्नामैकमङ्गलम् ॥७०॥
भक्त्या च ब्राह्मणद्वारा पूजयामास देवताः । गोपालिकाश्च वृद्धाश्च रत्नालंकारभूषिताः ॥
आनन्दा सुमुखा गोपाः पुलकाञ्चितविग्रहाः । प्रहृष्टमानसा मङ्गलाजग्मुर्नन्दमन्दिरम् ॥
आशीर्वादं प्रयुञ्जाना ब्राह्मणा वेदपारगाः । शुभगाः पुष्पहस्ताश्चाप्याजग्मुर्नन्द० ॥७२॥
नानाविधाश्च गणका ज्योतिःशास्त्रविशारदाः । वाक्सिद्धाः पुस्तककरा आजग्मुर्नन्द० ॥
सुस्मिता विप्रपत्न्यश्च वयस्याः स्थविरा वराः । बालिका बालकयुता आजग्मुर्नन्द० ॥७४॥

तेभ्योऽपि प्रददौ रत्नं धनानि विविधानि च । वरवस्त्राणि रौप्याणि गोसहस्राणि सादरम् ॥
नन्दस्तेभ्यो नमस्कृत्य चकार विनयं मुदा । आशिषं युयुजुः सर्वे ददृशुर्बालकं परम् ॥
एवं संभृतसंभारो बभूव व्रजपुंगवः । गणकैः कारयामास यद्भाविष्यं शुभाशुभम् ॥७७॥
एवं ववर्ध बालश्च शुक्लपक्षे यथा शशी । नन्दालये हली चैव भुङ्क्ते मातुः पयोधरम् ॥
तदा च रोहिणी हृष्टा तत्र पुत्रोत्सवे मुदा । तैलसिन्दूरताम्बूलं धनं ताभ्यो ददौ मुने ॥
दत्त्वाऽऽशिषश्च शिरसि ताश्च ते स्वालयं ययुः । यशोदारोहिणीनन्दास्तस्थुर्गेहे मुदाऽन्विताः

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० नन्दपुत्रोत्सवो नाम
नवमोऽध्यायः ॥ ९ ॥

---

अथ दशमोऽध्यायः ।

---

नारायण उवाच—

अथ कंसः सभामध्ये स्वर्णसिंहासनस्थितः । शुश्राव वाचं गगने सूनृतां शरीरिणीम् ॥ १ ॥
किं करोषि महामूढ चिन्तां स्वश्रेयसः कुरु । जातः कालो धरण्यां ते तिष्ठोपाये नराधिप ॥
नन्दाय तनयं दत्त्वा वसुदेवस्तवान्तकम् । कन्यामादाय तुभ्यं च दत्त्वा संमायया स्थितः
मायांशा कन्यकेयं च वासुदेवः स्वयं हरिः । तव हन्ता गोकुले च वर्धते नन्दमन्दिरे ॥
देवक्याः सप्तमो गर्भो वर्धते नन्दमन्दिरे । देवक्याः सप्तमो गर्भो न सुस्रावामृतं सुतम्
स्थापयामास माया तं रोहिणीजठरे किल । तत्र जातश्च शेषांशो बलदेवो महाबलः ॥
गोकुले तौ च वर्धेते बालौ ते नन्दमन्दिरे । श्रुत्वेति वचनं राजा बभूवाऽऽनम्रकंधरः
चिन्तामाप सहसा तत्याजाहारमुन्मनाः । पूतनां च समानीय प्राणेभ्यः प्रेयसीं सतीम्
उवाच भगिनीं राजा सभामध्ये च नीतिवित् ।

कंस उवाच—

पूतने गोकुलं गच्छ कार्यार्थे नन्दमन्दिरम् ॥ ९ ॥
विषाक्तं च स्तनं कृत्वा शिशवे देहि सत्वरम् । त्वं मनोयायिनी वत्से मायाशास्त्रविशारदा ॥
मायामानुषरूपं च विधाय मम योगिनि । दुर्वाससो महामन्त्रं प्राप्य सर्वत्रगामिनी ॥
सर्वरूपं विधातुं त्वं क्षमाऽसि सुप्रतिष्ठिते । इत्युक्त्वा तां महाराजस्तस्थौ संसदि नारद ॥
जगाम पूतना कंसं प्रणम्य कामचारिणी । तप्तकाञ्चनवर्णाभा नानालंकारभूषिता ॥
बिभ्रती कबरीभारं मालतीमाल्यसंयुतम् । कस्तूरीबिन्दुना युक्तं सिन्दूरं दधती मुदा ॥
मञ्जीररशनाभ्यां च कलशब्दं प्रकुर्वती । संप्राप्य गोष्ठं दुर्दर्शं नन्दालयमनोहरम् ॥

परिखाभिर्गभीराभिर्दुर्लङ्घ्याभिश्च वेष्टितम् । रचितं प्रस्तरैर्दिव्यैर्निर्मितं विश्वकर्मणा ॥
इन्द्रनीलैर्मरकतैः पद्मरागैश्च भूषितम् । सुवर्णकलशैर्दिव्यैश्चित्रितैः शेखरोज्ज्वलैः ॥
प्राकारैर्गगनस्पर्शैश्चतुर्द्वारसमन्वितैः । युक्तं लोहकपाटैश्च द्वारपालसमन्वितैः ॥ १८ ॥
वेष्टितं सुन्दरं रम्यं सुन्दरीगणवेष्टितम् । मुक्तामाणिक्यपरशैः पूर्णरत्नादिभिर्धनैः ॥
स्वर्णपात्रघटाकीर्णं गवां कोटिभिरन्वितम् । भरणीयैः किंकरैश्च गोपलक्षैः समन्वितम् ॥
दासीनां च सहस्रैश्च कर्मण्यैः समन्वितम् । प्रविवेशाऽऽश्रमं साध्वी सस्मिता सुमनोहरा
दृष्ट्वा तां प्रविशन्तीं च गोप्यो दृष्ट्वाऽनुमेनिरे । किं वा पद्मालया दुर्गा कृष्णं द्रष्टुं ॥
समागता ॥ २२ ॥

प्रणेमुर्गोपिका गोपाः पप्रच्छुः कुशलं च ताम् । ददौ सिंहासनं पाद्यं वासयामास तत्र वै
पप्रच्छ कुशलं सा च गोपानां बालकस्य च । उवास सस्मिता साध्वी पाद्यं जग्राह सादरम् ॥
तामूचुर्गोपिकाः सर्वाः का त्वमीश्वरि साम्प्रतम् । वाससे कुत्र किं नाम किं वाऽत्र कर्म नो वद
तासां च वचनं श्रुत्वा साऽप्युवाच मनोहरम् । मथुरावासिनी गोपी साम्प्रतं विप्रकामिनी
श्रुतं वाचिकवक्त्रेण तत्त्वं मङ्गलसूचकम् । बभूव स्थविरे काले नन्दपुत्रो महानिति ॥
श्रुत्वाऽऽगताऽहं तं द्रष्टुमाशिषं कर्तुमीप्सिताम् । पुत्रमानय तं दृष्ट्वा यामि कृत्वा तमाशिषम्
ब्राह्मणीवचनं श्रुत्वा यशोदा हृष्टमानसा । प्रणमय्य सुतं क्रोडे ददौ ब्राह्मणयोषितः ॥
कृत्वा क्रोडे तु तं साध्वी चुचुम्ब च पुनः पुनः । स्तनं ददौ सुखासीना हरिं पुण्यवती सती
अहोऽद्भुतोऽयं बालस्ते सुन्दरो गोपसुन्दरि । गुणैर्नारायणसमो बालोऽयमित्युवाच ह ॥
कृष्णो निजस्तनं पीत्वा जहास वक्षसि स्थितः । तस्याः प्राणैः सह पपौ विषक्षीरं सुधामिव
तत्याज बालकं साध्वी प्राणांस्त्यक्त्वा पपात ह । विकृताकारवदना चोत्तानवदना मुने
स्थूलदेहं परित्यज्य सूक्ष्मदेहं विवेश सा । आरुरोह रथं श्रीघ्रं रत्नसारविनिर्मितम् ॥
पार्षदप्रवरैर्दिव्यैर्वेष्टितं सुमनोहरैः । श्वेतचामरलक्षेण शोभितं लक्षदर्पणैः ॥ २९ ॥
वह्निशौचेन वस्त्रेण सूक्ष्मेण भूषितं वरम् । नानाचित्रविचित्रैश्च सद्रत्नकलशैर्युतम् ॥
सुन्दरं द चक्रं च ज्वलितं रत्नतेजसा । पार्षदास्तां रथे कृत्वा जग्मुर्गोलोकमुत्तमम् ॥
दृष्ट्वा तदद्भुतं लोका गोपिकाश्चातिविस्मिताः । कंसः श्रुत्वा च तत्सर्वं विस्मितश्च बभूव ह
यशोदा रं कं नीत्वा क्रोडे कृत्वा स्तनं ददौ । मङ्गलं कारयामास विप्रद्वारा शिशोर्मुने
ददाह दे : तस्याश्च नन्दः नन्दपूर्वकम् । चन्दनागुरुकस्तूरीगन्धं संप्राप्य सौरभम् ॥

नारद उवाच—

सा वा का राक्षसीरूपी कथं पुण्यवती सती। केन पुण्येन तं दृष्ट्वा जगाम कृष्णमन्दिरम्

नारायण उवाच—

म लियज्ञे बामनस्य दृष्ट्वा रूपं मनोहरम्। बलिकन्या रत्नमाला पुत्रस्नेहं चकार तम्
मनसा मानसं चक्रे पुत्रस्य सदृशो मम। पिबेद्यदि स्तनं कृष्णः करोमि तं च वक्षसि॥
हरिस्तन्मानसं ज्ञात्वा पपौ जन्मान्तरे स्तनम्। ददौ मातृगतिं तस्यै कामपूरः कृपानिधि॥
दत्त्वा विषस्तनं कृष्णे पूतना राक्षसी मुने। भवस्था मातृगतिं पाप कं भजाम विना हरिम्॥
इत्येवं कथितं विप्र श्रीकृष्णगुणकीर्तनम्। पदे पदे सुमधुरं प्रवरं कथयामि ते॥४६॥
इति श्रीब्रह्म० महा० श्रीकृष्णजन्म० नारदना० पूतनामोक्षो नाम दशमोऽध्यायः॥१०॥

====

अथैकादशोऽध्यायः।

---

नारायण उवाच—

एकदा गोकुले साध्वी यशोदा नन्दगेहिनी। गृहकर्मणि संसक्ता कृत्वा बालं स्ववक्षसि
वात्यारूपं तृणावर्तमागच्छन्तं च गोकुलम्। श्रीहरिर्मनसा ज्ञात्वा भारयुक्तो बभूव ह॥
भाराक्रान्ता यशोदा च तत्याज बालकं तदा। शयनं कारयित्वा च जगाम यमुनां मुने॥
एतस्मिन्नन्तरे तत्र वात्यारूपधरोऽसुरः। आदाय तं भ्रामयित्वा गत्वा च शतयोजनम्॥
बभञ्ज वृक्षशाखाश्च ह्यन्धीभूतं च गोकुलम्। चकार सद्यो मायावी पुनस्तत्र पपात ह॥
असुरोऽपि हरिस्पर्शाज्जगाम हरिमन्दिरम्। सुन्दरं रथमारुह्य कृत्वा कर्मक्षयं स्वकम्॥
पाण्ड्यदेशोद्भवो राजा शापाद्दुर्वाससोऽसुरः। श्रीकृष्णचरणस्पर्शाद्गोलोकं स जगाम ह
वात्यारूपे गते गोपा गोप्यश्च भयविह्वलाः। न दृष्ट्वा बालकं तत्र शयानं शयने मुने॥
सर्वे निजघ्नुः स्वं वक्षःस्थलं शोकाकुला भयात्। केचिन्मूर्छामवापुश्च रुरुदुश्चापि केचन॥
अन्वेषणं प्रकुर्वन्तो ददृशुर्बालकं मजे। धूलिधूसरसर्वाङ्गं पुष्पोद्यानान्तरस्थितम्॥१०॥
बाहीरदेशे सरस्तीरे नीरसमन्विते। पश्यन्तं गगनं शश्वद्(द्रु)दन्तं भयकातरम्॥११॥
गृहीत्वा बालकं नन्दः कृत्वा वक्षसि सत्वरम्। दर्शं दर्शं मुखं तस्य रुरोद च शुचाऽन्वितः
यशोदा रोहिणी शीघ्रं दृष्ट्वा बालं रुरोद च। कृत्वा वक्षसि तद्वक्त्रं चुचुम्ब च मुहुर्मुहुः
मङ्गलं कारयामास स्नापयामास बालकम्। स्तनं ददौ यशोदा च प्रसन्नवदनेक्षणा॥१४॥

---

१ क. 'पा मुने पु'।

नारद उवाच—

कथं शशाप दुर्वासाः पाण्ड्यदेशोद्भवं नृपम् । सुविचार्य वद ब्रह्मन्नितिहासं पुरातनम् ॥

नारायण उवाच—

पाण्ड्यदेशाधिपो राजा सहस्राक्षः प्रतापवान् । स्त्रीसहस्रं समादाय कामबाणप्रपीडितः ॥
मनोहरे निर्जने च पर्वते गन्धमादने । विजहार नदीतीरे पुष्पोद्याने मनोरमे ॥ १७ ॥
नानाप्रकारशृङ्गारं विपरीतादिकं नृपः । नखदन्तक्षताङ्कं च कामिनीनां चकार सः ॥
कृत्वा मूर्तिसहस्रं च योगीन्द्रो नृपतीश्वरः । कृत्वा स्वच्छविहारं च जलक्रीडां चकार ह ॥
नार्यो विवसनाः सर्वा नग्नाश्च नृपयोषितः । विजह्रुश्च पुष्पभद्रानदीतीरे मनोहरे ॥२०॥
एतस्मिन्नन्तरे तत्र समायातो महामुनिः । शिष्यलक्षैः परिवृतो गच्छन्वै शंकरं प्रति ॥
दृष्ट्वा मुनिं महामत्तो नोत्तस्थौ न ननाम ह । वाचा हस्तेन राजा च संभाषां न चकार ह
दृष्ट्वा चुकोप नृपतिं शशाप स्फुरिताधरः । अमुरो भव पापिष्ठ योगभ्रष्टो मुखं मम ॥
भारते लक्षवर्षं च स्थातव्यं ते नराधम । ततो हरिपदस्पर्शाद्गोलोकं यास्यसि ध्रुवम् ॥
स्थाने स्थाने हे महिष्यो जनिं लभत भारते । राजेन्द्रगेहे राजेन्द्रान्वरिष्यथ मनोहरान् ॥
इत्युक्त्वा तु मुनीन्द्रस्तु जगाम शंकरालयम् । हाहाशब्दं विकुर्वञ्च शिष्यसंघाः कृपालवः
गते मुनीन्द्रे राजेन्द्रो रुरोद च सरित्तटे । रुरुदू रमणीश्च रमण्यो विरहातुराः ॥
हे नाथ रमणश्रेष्ठेत्युच्चार्य च पुनः पुनः । त्वां विना वा क यास्यामो वयं त्वं वा क यास्यसि
वयं नो विहरिष्यामस्त्वया सार्धं सुनिर्जने । न करिष्यसि राज्यं त्वं न यास्यामो गृहं वयम्
शरच्चन्द्रप्रभामुष्टं न द्रक्ष्यामो मुखं तव । प्रसारिताभ्यां बाहुभ्यां नाऽऽनयिष्याम इत्यतः
इत्युक्त्वा रुरुदुः सर्वाः पुरस्कृत्य नराधिपम् । मूर्च्छामवापुश्चरणं धृत्वा राज्ञः सरित्तटे ॥
राज्ञाऽग्निकुण्डमाधाय नारीभिः सह नारद । स्मृत्वा हरिपदाम्भोजं ज्वलदग्निं विवेश ह ॥
हाहाकारं सुराः सर्वे विनकुर्गगने स्थिताः । इत्यूचुर्मुनयश्चैव दैवं च बलवत्तरम् ॥
स च राजा तृणावर्तो जगाम हरिमन्दिरम् । महिष्यो भारते वर्षे लेभिरे जन्म वाञ्छितम्
इत्येवं कथितं सर्वं हरेर्माहात्म्यमुत्तमम् । मोक्षणं नृपतेश्चैव मुनीन्द्रशापहेतुकम् ॥ ३९ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० तृणावर्तवधो नामैकादशोऽध्यायः ॥ ११ ॥

---

अथ द्वादशोऽध्यायः ।

---

नारायण उवाच—

एकदा मन्दिरे नन्दपत्नी सानन्दपूर्वकम् । कृत्वा वक्षसि गोविन्दं स्नापितं च स्तनं ददौ ॥

एतस्मिन्नन्तरे गोप्य आजग्मुर्नन्दमन्दिरम् । स्थविराश्च वयस्याश्च बालिका बालकान्विताः
अतृप्तं बालकं शीघ्रं संन्यस्य शयने सती । प्रणनाम समुत्थाय कर्मण्यौत्थानिके मुदा ॥
तैलसिन्दूरताम्बूलं ददौ ताभ्यो मुदाऽन्विता । मिष्टवस्तूनि वस्त्राणि भूषणानि च गोपिका ॥
एतस्मिन्नन्तरे कृष्णो रुरोद क्षुधितस्तदा । प्रेरयित्वा स चरणं मायेशो मायया विभुः ॥
पपात चरणं तस्य प्रवीणे शकटे मुने । विश्वंभरपदाघातात्तच्च चूर्णं बभूव ह ॥ ६ ॥
बभञ्ज शकटं पेतुर्भग्नकाष्ठानि तत्र वै । पपात दधि दुग्धं च नवनीतं घृतं मधु ॥ ७ ॥
दृष्ट्वाऽऽश्चर्यं गोपिकाश्च दुद्रुवुर्बालकं भयात् । ददृशुर्भग्नशकटमिन्धनाभ्यन्तरे शिशुम् ॥
भग्नभाण्डसमूहं च पतितं बहुगोरसम् । प्रेरयित्वा तु काष्ठानि जग्राह बालकं भिया ॥
मायारक्षितसर्वाङ्गं रुदितं क्षुधितं क्षुधा । स्तनं ददौ यशोदा तं रुरोद च भृशं शुचा ॥
पप्रच्छुर्बालकान्गोपा बभञ्ज शकटं कथम् । किंचिद्धेतुं न पश्यामः सहसेति किमद्भुतम्
इत्यूचुर्बालकाः सर्वे गोपाः शृणुत मद्वचः । श्रीकृष्णस्य पदाघाताद्बभञ्ज शकटं ध्रुवम् ॥
श्रुत्वा तद्वचनं गोपा गोप्यश्च जहसुर्मुदा । न हि जग्मुः प्रतीतिं च मिथ्येत्यूचुर्व्रजे प्रजाः
शिशोः स्वस्त्ययनं कार्यं चक्रुर्ब्राह्मणपुंगवाः । हस्तं दत्त्वा शिशोर्गात्रे पपाठ कवचं द्विजः
वदामि तत्ते विप्रेन्द्र कवचं सर्वरक्षणम् । यद्दत्तं मायया पूर्वं ब्रह्मणे नाभिपङ्कजे ॥ १५ ॥
निद्रिते जगतीनाथे जले च जलशायिनि । भीताय स्तुतिकर्त्रे च मधुकैटभयोर्भयात् ॥

योगनिद्रोवाच—

दूरीभूतं कुरु भयं भयं किं ते हरौ स्थिते । स्थितायां मयि च ब्रह्मन्सुखी तिष्ठ जगत्पते ॥
श्रीहरिः पातु ते वक्त्रं मस्तकं मधुसूदनः । श्रीकृष्णश्चक्षुषी पातु नासिकां राधिकापतिः ॥
कर्णयुग्मं च कण्ठं च कपालं पातु माधवः । कपोलं पातु गोविन्दः केशांश्च केशवः स्वयम्
अधरोष्ठं हृषीकेशो दन्तपङ्क्तिं गदाग्रजः । रासेश्वरश्च रसनां तालुकं वामनो विभुः ॥
वक्षः पातु मुकुन्दश्च जठरं पातु दैत्यहा । जनार्दनः पातु नाभिं पातु विष्णुश्च मेहनम् ॥
नितम्बयुग्मं गुह्यं च पातु ते पुरुषोत्तमः । जानुयुग्मं जानकीशः पातु ते सर्वदा विभुः ॥
हस्तयुग्मं नृसिंहश्च पातु सर्वत्र संकटे । पादयुग्मं वराहश्च पातु ते कमलोद्भवः ॥ २१ ॥
ऊर्ध्वं नारायणः पातु ह्यधस्तात्कमलापतिः । पूर्वस्यां पातु गोपालः पातु वह्नौ दशास्यहा ॥
वनमाली पातु याम्यां वैकुण्ठः पातु नैर्ऋतौ । वारुण्यां वासुदेवश्च सतो रक्षाकरः स्वयम्
पातु ते सततमजो वायव्यां विष्टरश्रवाः । उत्तरे च सदा पातु तेजसा जलजासनः ॥
ऐशान्यामीश्वरः पातु पातु सर्वत्र शत्रुजित् । जले स्थले चान्तरिक्षे निद्रायां पातु राघवः

1 क. 'युर्वनमा भ' । 2 क. 'स्तव बालकान्गोपी च' ।

इत्येवं कथितं ब्रह्मन्कवचं परमाद्भुतम् । कृष्णेन कृपया दत्तं स्मृतेनैव पुरा मया ॥
शुम्भेन सह संग्रामे निर्लक्ष्ये घोरदारुणे । गगने स्थितया सद्यः प्राप्तिमात्रेण सो जितः ॥
कवचस्य प्रभावेण धरण्यां पतितो मृतः । पूर्वं वर्षशतं खे च कृत्वा युद्धमयावहम् ॥
मृते शुम्भे च गोविन्दः कृपालुर्गगनस्थितः । माल्यं च कवचं दत्त्वा गोलोकं स जगाम ह ॥
कल्पान्तरस्य वृत्तान्तं कृपया कथितं मुने । अन्यन्तरमयं नास्ति कवचस्य प्रभावतः ॥
कोटिशः कोटिशो नष्टा मया दृष्टाश्च वेधसः । अहं च हरिणा सार्धं कल्पे कल्पे स्थिरा सदा
इत्युक्त्वा कवचं दत्त्वा सान्तर्धानं चकार ह । निःशङ्को नाभिकमले तस्थौ स कमलोद्भवः
सुवर्णगुटिकायां च कृत्वेदं कवचं परम् । कण्ठे वा दक्षिणे बाहौ बध्नीयाधः सुधीः सदा
विषाग्निजलशत्रुभ्यो भयं तस्य न जायते । जले स्थले चान्तरिक्षे निद्रायां रक्षतीश्वरः ॥
संग्रामे वज्रपाते च विपत्तौ प्राणसंकटे । कवचस्मरणादेव सद्यो निःशङ्कतां व्रजेत् ॥
बद्ध्वेदं कवचं कण्ठे शंकरस्त्रिपुरं पुरा । जघान लीलामात्रेण दुरन्तमसुरेश्वरम् ॥१८॥
बद्ध्वेदं कवचं काली रक्तबीजं चखाद सा । सहस्रशीर्षा धृत्वेदं विश्वं धत्ते तिलं यथा॥
आवां सनत्कुमारश्च धर्मसाक्षी च कर्मणाम् । कवचस्य प्रभावेण सर्वत्र जयिनो वयम्॥
तस्य नन्दशिशोः कण्ठे चकार कवचं द्विजः । आत्मनः कवचं कण्ठे दधार च स्वयं हरिः
प्रभावः कथितः सर्वः कवचस्य हरेस्तथा । अनन्तस्याच्युतस्यैव प्रभावमतुलं मुने ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० शकटभञ्जनयोगनि-
द्रोक्तकवचन्यासो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

अथ त्रयोदशोऽध्यायः ।

---

नारायण उवाच—

अपरं कृष्णमाहात्म्यं शृणु किंचिन्महामुने । विघ्ननिघ्नं पापहरं महापुण्यकरं परम् ॥
एकदा नन्दपत्नी च कृत्वा कृष्णं स्ववक्षसि । स्वर्णसिंहासनस्था च क्षुधितं तं स्तनं ददौ
एतस्मिन्नन्तरे तत्र विप्रेन्द्रैकः समागतः । वृतः शिष्यसमूहैश्च प्रज्वलन्ब्रह्मतेजसा ॥
प्रजपन्परमं ब्रह्म शुद्धस्फटिकमालया । दण्डी छत्री शुक्लदन्तः शोभितः शुक्लवाससा॥
ज्योतिर्मयो मूर्तिमांश्च वेदवेदाङ्गपारगः । परिविभ्रज्जटाजालं तप्तकाञ्चनसंनिभम् ॥
शरत्पार्वणचन्द्रास्यो गौराङ्गः पद्मलोचनः । योगीन्द्रो धूर्जटिः शिष्यः शुद्धभक्तो गदाभृतः
व्याख्यामुद्राकरः श्रीमान्छिन्नसंशयसन्मुदा । वेदव्याख्यां च विविधां प्रकुर्वन्निव लीलया॥

शुक्लवर्णः सत्ययुगे सुतीव्रतेजसाऽऽवृतः । त्रेतायां रक्तवर्णोऽयं पीतोऽयं द्वापरे विभुः
कृष्णवर्णः कलौ श्रीमांस्तेजसा राशिरेव च । परिपूर्णतमं ब्रह्म तेन कृष्ण इति स्मृतः
ब्रह्मणो वाचकः कोऽयमृकारोऽनन्तवाचकः । शिवस्य वाचकः षश्च नकारो धर्मवाचकः
अकारो विष्णुवचनः श्वेतद्वीपनिवासिनः । नरनारायणार्थस्य विसर्गो वाचकः स्मृतः
सर्वेषां तेजसां राशिः सर्वमूर्तिस्वरूपकः । सर्वाधारः सर्वबीजस्तेन कृष्ण इति स्मृतः ॥
कर्मनिर्मूलवचनः कृषिर्णो दास्यवाचकः । अकारो दातृवचनस्तेन कृष्ण इति स्मृतः ॥
कृषिर्निश्चेष्टवचनो नकारो भक्तिवाचकः । अकारः प्राप्तिवचनस्तेन कृष्ण इति स्मृतः ॥
कृषिर्निर्वाणवचनो णकारो मोक्षवाचकः । अकारो दातृवचनस्तेन कृष्ण इति स्मृतः ॥
नाम्नां भगवतो नन्द कोटीनां स्मरणेन यत् । तत्फलं लभते नूनं कृष्णेति स्मरणे नरः
यद्विधं स्मरणात्पुण्यं वचनाच्छ्रवणात्तथा । कोटिजन्मांहसो नाशो भवेद्यत्स्मरणादिकात्
विष्णोर्नाम्नां च सर्वेषां सारात्सारं परात्परम् । कृष्णेति सुन्दरं नाम मङ्गलं भक्तिदायकम् ॥
ककारोच्चारणाद्भक्तः कैवल्यं मृत्युजन्महम् । ऋकाराद्दास्यमतुलं षकाराद्भक्तिमीप्सिताम्
नकारात्सहवासं च तत्समं कालमेव च । रत्सारूप्यं विसर्गाच्च लभते नात्र संशयः ॥
ककारोच्चारणादेव वेपन्ते यमकिंकराः । ऋकारोक्तेर्न तिष्ठन्ति षकारात्पातकानि च ॥
नकारोच्चारणाद्रोगा अकारान्मृत्युरेव च । ध्रुवं सर्वे पलायन्ते नामोच्चारणभीरवः ॥
स्मृतवृद्धिश्रवणोद्योगात्कृष्णनाम्नो व्रजेश्वर । रथं गृहीत्वा धावन्ति गोलोकात्कृष्णकिंकराः
पृथिव्या रजसः संख्या कर्तुं शक्ता विपश्चितः । नाम्नः प्रभावसंख्यानं सन्तो वक्तुं न च क्षमाः
पुरा शंकरवक्त्रेण नाम्नोऽस्य महिमा श्रुतः । गुणनामप्रभावं च किंचिज्जानाति मद्गुरुः
ब्रह्माऽनन्तश्च धर्मश्च सुरर्षिमनुमानवाः । वेदाः सन्तो न जानन्ति महिम्नः षोडशीं कलाम् ॥
इत्येवं कथितो नन्द महिमा ते सुतस्य च । यथामति यथाज्ञानं गुरुवक्त्राद्यथा श्रुतम्
कृष्णः पीताम्बरः कंसध्वंसी च विष्टरश्रवाः । देवकीनन्दनः श्रीशो यशोदानन्दनो हरिः
सनातनोऽच्युतोऽनन्तः सर्वेशः सर्वरूपधृक् । सर्वाधारः सर्वगतिः सर्वकारणकारणम् ॥
राधाबन्धू राधिकात्मा राधिकाजीवनः स्वयम् । राधानाथो राधिकेशो राधिकारमणः स्वयम्
राधिकागृहवासी च रासमानन्दपूरणः । राधाधवो राधिकेशो राधिकाभक्तमानसः ॥
राधिकाचित्तचोरश्च रासभाषाविदः प्रभुः । परिपूर्णतमं ब्रह्म गोविन्दो गरुडध्वजः ॥
मङ्गल्यानि कृष्णस्य मुख्यानि मन्तुपाद्धदि । महागुरुमुखाच्चैव हस नन्द मुनेश्वर ॥

कृतं निरूपणं नाम्नां कनिष्ठस्य यथा श्रुतम् । ज्येष्ठस्य हलिनो नाम्नः संकेतं शृणु मन्मुखात् ॥
गर्भसंकर्षणादेव नाम्ना संकर्षणः स्मृतः । नास्त्यन्तोऽस्यैव वेदेषु तेनानन्त इति: स्मृतः ॥
बलदेवो बलोद्रेकाद्धली च हलधारणात् । शितिवासा नीलवासान्मुसली मुसलायुधात् ॥
रेवत्या सह संयोगाद्रेवतीरमणः स्वयम् । रोहिणीगर्भवासाच्च रौहिणेयो महामतिः ॥
इत्येवं ज्येष्ठपुत्रस्य श्रुतं नाम निवेदितम् । यास्याम्यहं गृहं नन्द सुखं तिष्ठ स्वमन्दिरे ॥
ब्राह्मणस्य वचः श्रुत्वा नन्दः स्तब्धो बभूव ह । निश्चेष्टा नन्दपत्नी च जहास बालकः स्वयम् ॥
प्रणम्योवाच नन्दस्तं वाक्यं विनयपूर्वकम् । पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकंधरः ॥

नन्द उवाच—

गतश्चेत्त्वं तदा कर्म करिष्यत्येव को महान् । स्वयं शुभेक्षणं कृत्वा कुरु नाम्नाऽन्नप्राशनम् ॥
नाम्नामीशश्च कथितो राधाप्राणादिको दश । तस्यापि का वा राधेति कन्यका कस्य च ध्रुवम् ॥
नन्दस्य वचनं श्रुत्वा जहास मुनिपुंगवः । निगूढं परमं तत्त्वं रहस्यं कथयामि ते ॥

गर्ग उवाच—

शृणु नन्द प्रवक्ष्यामि इतिहासं पुरातनम् ॥ ९० ॥
पुरा गोलोकवृत्तान्तं श्रुतं शंकरवक्त्रतः । श्रीदाम्नो राधया सार्धं बभूव कलहो महान् ॥
श्रीदामशापदैवेन गोपी राधा च गोकुले । वृषभानुसुता सा च माता तस्याः कलावती ॥
कृष्णस्यार्धाङ्गसंभूता नापरस्य सदृशी सती । गोलोकवासिनी सेयमत्र कृष्णाज्ञयाऽधुना ॥
अयोनिसंभवा देवी मूलप्रकृतिरीश्वरी । मातुर्गर्भं वायुपूर्णं कृत्वा च मायया सती ॥९१॥
वायुनिःसरणे काले धृत्वा च शिशुविग्रहम् । आविर्बभूव मायेयं पृथ्व्यां कृष्णोपदेशतः ॥
वर्धते सा व्रजे राधा शुक्ले चन्द्रकला यथा । श्रीकृष्णतेजसोऽर्धेन सा च मूर्तिमती सती ॥
एका मूर्तिर्द्विधाभूता भेदो वेदे निरूपितः । इयं स्त्री सा पुमान् किंवा सा वा कान्ता पुमानयम् ॥
द्वे रूपे तेजसा तुल्ये रूपेण च गुणेन च । पराक्रमेण बुद्ध्या वा ज्ञानेन संपदाऽपि च ॥
पुरतो गमनेनैव किं तु सा वयसाऽधिका । ध्यायते तामयं शश्वदिमं सा स्मरति प्रियम् ॥
रचिता साऽस्य प्राणैश्च तत्प्राणैर्मूर्तिमानयम् । अस्य राधानुसारेण गोकुलागमनं परम् ॥
स्वीकारं सार्थकं कर्तुं गोकुले यत्कृतं पुरा । कंसभीतिच्छलेनैव गोकुलागमनं हरेः ॥
प्रतिज्ञापालनार्थाय भयेशस्य भयं कुतः । राधाशब्दस्य व्युत्पत्तिः सामवेदे निरूपिता ॥
नारायणस्तामुवाच ब्रह्माणं नाभिपङ्कजे । ब्रह्मा तां कथयामास ब्रह्मलोके च शंकरम् ॥
पुरा कैलासशिखरे मामुवाच महेश्वरः । देवानां दुर्लभां नन्द निशामय वदामि ते ॥
सुरासुरमुनीन्द्राणां वाञ्छितां मुक्तिदां पराम् । रेफो हि कोटिजन्माघं कर्मभोगं शुभाशुभम् ॥

(१) आकारो गर्भवासं च मृत्युं च रोगमुत्सृजेत् । वकार आयुषो हानिमाकारो भवबन्धनम् ॥
(२) श्रवणस्मरणोक्तिभ्यः न प्रणश्यति संशयः । रेफो हि निश्चलां भक्तिं दास्यं कृष्णपदाम्बुजे
सर्वेप्सितं सदानन्दं सर्वसिद्धौघमीश्वरम् । धकारः सहवासं च तत्तुल्यकालमेव च ॥
ददाति सार्ष्टिसारूप्यं तत्त्वज्ञानं हरेः समम् । आकारस्तेजसां राशिं दानशक्तिं हरौ यथा ॥
योगशक्तिं योगमतिं सर्वकालं हरिस्मृतिम् । श्रुत्युक्तिस्मरणाद्योगान्मोहजालं च किल्बिषम्
रोगशोकमृत्युयमा वेपन्ते नात्र संशयः ॥ १११ ॥
राधामाधवयोः किंचिद्व्याख्यानं च यतः श्रुतम् । तदुक्तं च यथाज्ञानं साकल्यं वक्तुमक्षमः
आराद्वृन्दावने नन्द विवाहो भविताऽनयोः । पुरोहितो जगद्धाता कृत्वाऽग्निं साक्षिणं मुदा
कुबेरपुत्रमोक्षं च गव्यस्याऽऽहृत्य भक्षणम् । हिंसनं धेनुकस्यैव कानने तालभोजनम् ॥
बककेशिप्रलम्बानां हिंसनं चाऽथ लीलया । मोक्षणं द्विजपत्नीनां मिष्टान्नपानभोजनम् ॥
भञ्जनं शक्रयागस्य शक्राद्गोकुलरक्षणम् । गोपीनां वस्त्रहरणं व्रतसंपादनं तथा ॥११६॥
ताभ्यः पुनर्वस्त्रदानं वरदानं यथेप्सितम् । चेतसा हरणं तासामयं वश्याः करिष्यति ॥
रासोत्सवं महारम्यं सर्वेषां हर्षवर्धनम् । पूर्णचन्द्रोदये नक्तं वसन्ते रासमण्डले ॥११८॥
गोपीनां नवसंभोगात्कृत्वा पूर्णं मनोरथम् । ताभिः सह जलक्रीडां करिष्यति कुतूहलात् ॥
विच्छेदोऽस्य वर्षशतं श्रीदामशापहेतुकम् । गोपालैर्गोपिकाभिश्च भविता राधया सह ॥
मधुरागमनं तत्र गोपीनां शोकवर्धनम् । पुनः प्रबोधनं तासां दानमाध्यात्मिकस्य च ॥
स्यन्दनाक्रूरयो रक्षां सद्यस्ताभ्यां करिष्यति । रथमारोहणं कृत्वा मथुरागमनं पुनः ॥
पितृभ्रातृभिः सार्धं विलङ्घ्य यमुनां व्रजे । अक्रूराय ज्ञानदानं दर्शयित्वा स्वकं जले ॥
कौतुकेन च सायाह्ने नगरारसर्वदर्शनम् । मालाकारतन्तुवायकुब्जानां बन्धमोक्षणम् ॥
धनुर्भङ्गं शंकरस्य यागस्थानप्रदर्शनम् । हिंसनं गजमल्लानां दर्शनं नृपतेः पुरः ॥
कंसस्य हिंसनं सद्यः पित्रोर्निगडमोक्षणम् । प्रबोधनं च युष्माकमुग्रसेनाभिषेचनम् ॥
तस्य तस्य वधूनां च ज्ञानाच्छोकापनोदनम् । भ्रातुः स्वस्योपनयनं विद्यादानं गुरोर्मुखात् ॥
गुरुपुत्रप्रदानं च पुनरागमनं गृहे । छलनं नृपसैन्यानां यवनस्य दुरात्मनः ॥ १२८ ॥
निर्माणं द्वारकायाश्च मुचुकुन्दस्य मोक्षणम् । द्वारकागमनं चैव यादवैः सह कौतुकात् ॥
स्त्रीसंघानां विहरणं ताभिः सार्धं च क्रीडनम् । सौभाग्यवर्धनं तासां पुत्रपौत्रादिकस्य च ॥
मणिसंबन्धिनो मिथ्यावल्कस्य च मोक्षणम् । साहाय्यं पाण्डवानां च भारावतरणादिकम् ॥
निष्पन्नं राजसूयस्य धर्मपुत्रस्य लीलया । पारिजातस्य हरणं शक्राहंकारमर्दनम् ॥

१ क. स्वयम् । २ क. छभाम् ।

व्रतपूर्ण च सत्याया बाणस्य भुजकृन्तनम् । मर्दनं शिवसैन्यानां हरस्य जृम्भणं परम् ॥
हरणं बाणपुत्र्याश्चैवानिरुद्धस्य मोक्षणम । वाराणस्याश्च दहनं विप्रदारिद्र्यभञ्जनम् ॥
विप्रपुत्रप्रदानं च दुष्टानां दमनादिकम् । तीर्थयात्राप्रसङ्गेन युष्माभिः सह दर्शनम् ॥
कृत्वा च राधया सार्धं व्रजमागमिता पुनः । प्रस्थापयित्वा द्वारां च परं नारायणांशकम् ॥
सर्वं निष्पादनं कृत्वा गोलोके राधया सह । गमिष्यत्येव गोलोकं नाथोऽयं जगतां पतिः ॥
नारायणश्च वैकुण्ठं गमिता सम त्वया सह । धर्मगेहऋषी द्वौ च विष्णुः क्षीरोदमेव च ॥
इत्येवं कथितं नन्द भविष्यं वेदनिर्णयम् । श्रूयतां सांप्रतं कर्म यदर्थं गमनं मम ॥
माघशुक्लचतुर्दश्यां कुरु कर्म शुभे क्षणे । गुरुवारे च रेवत्यां विशुद्धे चन्द्रतारके ॥१४०॥
चन्द्रस्थे मीनलग्ने च लग्नेशपूर्णदर्शने । वणिजे करणोत्कृष्टे शुभयोगे मनोहरे ॥१४१॥
सुदुर्लभे दिने तत्र सर्वोत्कृष्टोपयोगिके । आलोच्य पण्डितैः सार्धं कुरु कर्म मुदाऽन्वितः
इत्युक्त्वा बहिरागत्य स उवास मुनीश्वरः । हृष्टो नन्दो यशोदा च कर्मोद्योगं चकार ह
एतस्मिन्नन्तरे द्रष्टुं गर्गं गोपाश्च गोपिकाः । बालका बालिकाश्चैव ह्याजग्मुर्नन्दमन्दिरम् ॥
ददृशुस्ते मुनिश्रेष्ठं मध्याह्नभास्करम् । शिष्यसंघैः परिवृतं ज्वलन्तं महतेजसा ॥
गूढयोगं प्रवोचन्तं सिद्धाय पृच्छते मुदा । पश्यन्तं समितं नन्दभवनानां परिच्छदम् ॥
स्वर्णसिंहासनस्थं च योगमुद्राधरं वरम् । भूतं भव्यं भविष्यं च पश्यन्तं ज्ञानचक्षुषा ॥
हृदीश्वरं प्रपश्यन्तं सिद्धं मन्त्रप्रभावतः । बहिर्यशोदाक्रोडस्थं तादृशं सस्मितं शिशुम् ॥
महेश्वरदत्तध्यानेन यद्रूपं च निरूपितम् । तं दृष्ट्वा परमप्रीत्या पूर्णभूतमनोरथम् ॥
साश्रुनेत्रं पुलकितं निमग्नं भक्तिसागरे । हृदि पूजां प्रणामं च कुर्वन्तं योगचर्यया ॥
मूर्ध्ना प्रणेमुस्ते तं च स च तानाशिषं ददौ । आसनस्थो मुनिस्तस्थौ ते जग्मुः स्वालयं मुदा
नन्दः स्वानन्दयुक्तश्च बन्धून्मङ्गलपत्रिकाः । प्रस्थापयामास शीघ्रमाराद्दूरस्थितान्मुदा ॥
दधिकुल्यां दुग्धकुल्यां घृतकुल्यां प्रपूरिताम् । गुडकुल्यां तैलकुल्यां मधुकुल्यां च विस्तृताम्
नवनीतकुल्यां पूर्णां च तक्रकुल्यां यदृच्छया । शर्करोदककुल्यां च परिपूर्णां च लीलया ॥
तण्डुलानां च शालीनामुच्चैश्च शतपर्वतान् । पृथुकानां शैलशतं लवणानां च सप्त च ॥
सप्त शैलाञ्छर्कराणां लड्डुकानां च सप्त च । परिपक्वफलानां च तत्र षोडश पर्वतान् ॥
यवगोधूमचूर्णानां पक्वलड्डुकपिण्डकान् । मोदकानां च शैलं च स्वस्तिकानां च पर्वतान् ॥
कपर्दकानामत्युच्चैः शैलान्सप्त च नारद । कर्पूरादिकयुक्तानां ताम्बूलानां च मन्दिरम् ॥
विस्तृतं द्वारहीनं च वासितोदकसंयुतम् । चन्दनागुरुकस्तूरीकुङ्कुमेन समन्वितम् ॥
नानाविधानि रत्नानि स्वर्णानि विविधानि च । मुक्ताफलानि रम्याणि प्रवालानि मुदाऽन्वितः

नानाविधानि चारूणि वासांसि भूषणानि च । पुत्रान्नप्राशने नन्दः कारयामास कौतुकात् ॥
संस्कारयुक्तं रुचिरं चन्दनद्रवचर्चितम् । प्राङ्गणं कदलीस्तम्भै रसालनवपल्लवैः ॥ १२ ॥
ग्रथितैः सूक्ष्मसूत्रेण वेष्टयामास कौतुकात् । युक्तं मङ्गलकुम्भैश्च फलपल्लवसंयुतैः ॥१३॥
चन्दनागुरुकस्तूरीपुष्पमालाविराजितैः । माल्यानां वरवस्त्राणां राशिभिश्च विराजितम् ॥
गवां च मधुपर्काणामासनानां च नारद । फलानां जलकुम्भानां समूहैश्च समन्वितम् ॥
नानाप्रकारैर्वाद्यैश्च दुर्लभैः सुमनोहरैः । ढक्कानां दुन्दुभीनां च पटहानां तथैव च ॥
मृदङ्गमुरजादीनामानकानां समूहकैः । वंशीसंनहनीकांस्यशरयन्त्रैश्च शब्दितम् ॥१७॥
विद्याधरीणां नृत्येन भृङ्गिमाभ्रमणेन च । गन्धर्वनायकानां च संगीतैर्मूर्च्छनायुतैः ॥१८॥
स्वर्णसिंहासनानां च रथानां निःस्वनैर्युतम् । एतस्मिन्नन्तरे नन्दमुवाच वाचको मुदा ॥
आजग्मुर्बहवो विप्राश्च बान्धवा बहवस्तथा । अश्वस्थाश्च गजस्थाश्च रथस्थाश्चेति सत्वरम्
आजग्मू राजपुत्राश्च रत्नालंकारभूषिताः । आगतो गिरिभानुश्च सस्त्रीकश्च सकिंकरः ॥
रथानां च चतुर्लक्षं गजानां च तथैव च । तुरंगमाणां कोटिश्च शिबिकानां तथैव च ॥
ऋषीन्द्राणां मुनीन्द्राणां विप्राणां च विपश्चिताम् । बन्दिनां भिक्षुकाणां च समूहैश्च समीपतः
गोपानां गोपिकानां च संख्यां कर्तुं च कः क्षमः । पश्याऽऽगत्य बहिर्भूयेत्युवाच प्राङ्गणे स्थितः
श्रुत्वैवं तानुपव्रज्य समानीय व्रजेश्वरः । प्राङ्गणे वासयामास पूजयामास सत्वरम् ॥
ऋष्यादिकसमूहं च प्रणम्य शिरसा भुवि । पाद्यादिकं च तेभ्यश्च प्रददौ सुसमाहितः ॥
वस्तुभिर्बन्धुभिः पूर्णं बभूव नन्दगोकुलम् । न कोऽपि कस्य शब्दं च श्रोतुं शक्तश्च तत्र वै
त्रिमुहूर्तं कुबेरश्च श्रीकृष्णप्रीतये मुदा । चकार स्वर्णवृष्ट्या च परिपूर्णं च गोकुलम् ॥
कौतुकाद्बहवं चक्रुर्बन्धुवर्गाश्च क्रीडया । आनम्रकंधराः सर्वे दृष्ट्वा नन्दस्य संपदम् ॥
नन्दः कृताह्निकः पूतो धृत्वा धौते च वाससी । चन्दनागुरुकस्तूरीकुङ्कुमेनैव भूषितः ॥
उवास पादौ प्रक्षाल्य स्वर्णपीठे मनोहरे । गर्गस्य च मुनीन्द्राणां गृहीत्वाऽऽज्ञां व्रजेश्वरः ॥
संस्मृत्य विष्णुमाचान्तः स्वस्तिवाचनपूर्वकम् । कृत्वा कर्म च वेदोक्तं भोजयामास बालकम्
गर्गवाक्यानुसारेण बालकस्य मुदाऽन्वितः । कृष्णेति मङ्गलं नाम ररक्ष च शुभे क्षणे ॥
सघृतं भोजयित्वा च कृत्वा नाम जगत्पतेः । वाद्यानि वादयामास कारयामास मङ्गलम् ॥
नानाविधानि स्वर्णानि धनानि विविधानि च । महार्घ्यद्रव्याणि वासांसि ब्राह्मणेभ्यो ददौ मुदा
बन्दिभ्यो भिक्षुकेभ्यश्च सुवर्णं विपुलं ददौ । भाराक्रान्ताश्च ते सर्वे न शक्ता गन्तुमेव च
ब्राह्मणान्बन्धुवर्गांश्च भिक्षुकांश्च विशेषतः । मिष्टान्नं भोजयामास परिपूर्णं मनोहरम् ॥
दीयतां दीयतां चैव खाद्यतां खाद्यतामिति । बभूव शब्दोऽत्युच्चैश्च सततं नन्दगोकुले ॥

रत्नानि परिपूर्णानि वासांसि भूषणानि च। प्रवालानि सुवर्णानि मणिसाराणि यानि चारूणि स्वर्णपात्राणि कृतानि विश्वकर्मणा। गत्वा गर्गाय विनयं चकार व्रजपुंगवः शिष्येभ्यः स्वर्णभाराणि प्रददौ विनयान्वितः। द्विजेभ्योऽप्यवशिष्टेभ्यः परिपूर्णानि नार

नारायण उवाच—

गृहीत्वा श्रीहरिं गर्गो जगाम निभृतं मुदा। तुष्टाव परया भक्त्या प्रणम्य च तमीश्वरं साश्रुनेत्रः सपुलको भक्तिनम्रात्मकंधरः। पुटाञ्जलियुतो भूत्वोवाच कृष्णपदाम्बुजे

गर्ग उवाच—

हे कृष्ण जगतां नाथ भक्तानां भयभञ्जन। प्रसन्नो भव मामीश देहि दास्यं पदाम्बुजे त्वत्पित्रा मे धनं दत्तं तेन मे किं प्रयोजनम्। देहि मे निश्चलां भक्तिं भक्तानामभयप्रद अणिमादिकसिद्धिषु योगेषु मुक्तिषु प्रभो। ज्ञानतत्त्वेऽमरत्वे वा किंचिन्नास्ति स्पृहा मम इन्द्रत्वे वा मनुत्वे वा स्वर्गलोकफले चिरम्। नास्ति मे मनसो वाञ्छा त्वत्पादसेवनं वि सालोक्यं सार्ष्टिसारूप्ये सामीप्यैकत्वमीप्सितम्। नाहं गृह्णामि ते ब्रह्मंस्त्वत्पादसेवनं वि गोलोके वाऽपि पाताले वासे नास्ति मनोरथः। किंतु ते चरणाम्भोजे संततं स्मृतिरस्तु त्वन्मन्त्रं शंकरात्प्राप्य कतिजन्मफलोदयात्। सर्वज्ञोऽहं सर्वदर्शी सर्वत्र गतिरस्तु मे कृपां कुरु कृपासिन्धो दीनबन्धो पदाम्बुजे। रक्ष मामभयं दत्त्वा मृत्युर्मे किं करिष्यति सर्वेषामीश्वरः सर्वस्त्वत्पादाम्भोजसेवया। मृत्युंजयोऽन्तकालश्च बभूव योगिनां गुरुः ब्रह्मा विधाता जगतां त्वत्पादाम्भोजसेवया। यस्यैकदिवसे ब्रह्मन्पतन्तीन्द्राश्चतुर्दश त्वत्पादसेवया धर्मः साक्षी च सर्वकर्मणाम्। पाता च फलदाता च जित्वा कालं सुदुर्जय सहस्रवदनः शेषो यत्पादाम्बुजसेवया। धत्ते सिद्धार्थवद्विश्वं शिवः कण्ठे विषं यथा सर्वसंपद्विधात्री या देवीनां च परात्परा। करोति सततं लक्ष्मीः केशैस्त्वत्पादमार्जनम् प्रकृतिर्बीजरूपा सा सर्वेषां शक्तिरूपिणी। स्मारं स्मारं त्वत्पदाब्जं बभूव तत्परा परा। पार्वती सर्वरूपा सा सर्वेषां बुद्धिरूपिणी। त्वत्पादसेवया कान्तं लेभे शिवमीश्वरम् विद्याधिष्ठात्री देवी या ज्ञानमाता सरस्वती। पूज्या बभूव सर्वेषां संपूज्य त्वत्पदाम्बुज सावित्री वेदजननी पुनाति भुवनत्रयम्। ब्रह्मणो ब्राह्मणानां च गतिस्त्वत्पादसेवया
क्षमा जगद्बिभर्तुं च रत्नगर्भा वसुंधरा। प्रसूतिः सर्वसस्यानां त्वत्पादपद्मसेवया॥२१०
राधा ममांशसंभूता तव तुल्या च तेजसा। स्थित्वा वक्षसि ते पादं सेवतेऽन्यस्य का क यथा शर्वादयो देवा देव्यः पद्मादयो यथा। सनाथं कुरु मामीश ईश्वरस्य समा कृपा। न यास्यामि गृहं नाथ न गृह्णामि धनं तव। कृत्वा मां रक्ष पादाब्जसेवायां सेवकं रत

इति स्तुत्वा साश्रुनेत्रः पपात चरणे हरेः । रुरोद च भृशं भक्त्या पुलकाञ्चितविग्रहः ॥
गर्गस्य वचनं श्रुत्वा जहास भक्तवत्सलः । उवाच तं स्वयं कृष्णो मयि ते भक्तिरस्त्विति
इदं गर्गकृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः । दृढां भक्तिं हरेर्दास्यं स्मृतिं च लभते ध्रुवम् ॥
जन्ममृत्युजरारोगशोकमोहादिसंकटात् । तीर्णो भवति श्रीकृष्णदाससेवनतत्परः ॥
कृष्णस्य सहकालं च कृष्णसार्धं च मोदते । कदाचिन्न भवेत्तस्य विच्छेदो हरिणा सह ॥

नारायण उवाच—

हरिं मुनिः स्तवं कृत्वा ददौ नन्दाय तं मुदा । उवाच तं गृहं यामि कुर्वाज्ञामिति बल्लव॥
अहो विचित्रः संसारो मोहजालेन वेष्टितः । संमीलनं च विरहो नराणां सिन्धुफेनवत् ॥
गर्गस्य वचनं श्रुत्वा रुरोद नन्द एव च । सद्भिच्छेदो हि साधूनां मरणादतिरिच्यते ॥
सर्वैशिष्यैः परिवृतं मुनीन्द्रं गन्तुमुद्यतम् । सर्वे नन्दादयो गोपा रुदन्तो गोपिकास्तदा ॥
प्रणेमुः परमप्रीत्या चक्रुस्तं विनयं मुने । दत्त्वाऽऽशिषं मुनिश्रेष्ठो जगाम मथुरां मुदा॥
ऋषयो मुनयश्चैव बन्धुवर्गाश्च बल्लवाः । सर्वे जग्मुर्धनैः पूर्णाः स्वालयं हृष्टमानसाः ॥
प्रजग्मुर्बन्दिनः सर्वे परिपूर्णमनोरथाः । मिष्टद्रव्यांशुकैर्हृष्टतुरगस्वर्णभूषणैः॥ २२१ ॥
आकण्ठपूर्णा भुक्त्वा च भिक्षुका गन्तुमक्षमाः । स्वर्णवस्त्रभरोद्रेकपरिश्रान्ता मुदाऽन्विताः
सुमन्दगामिनः केचित्केचिद्भूमौ च शेरते । केचिद्वर्त्मनि तिष्ठन्तश्चोत्तिष्ठन्तश्च केचन ॥
केचिदूपुः प्रमुदिता हसन्तस्तत्र केचन । कपर्दकानां वस्तूनां शेषांश्चोर्वीरितान्बहून् ॥
केचित्तानादद्युः स्थित्वा दर्शयन्तश्च केचन । केचिन्नृत्यं प्रकुर्वन्तो गायन्तस्तत्र केचन॥
केचिद्बहुविधा गाथाः कथयन्तः पुरातनाः । मरुत्तश्वेतसगरमांधातॄणां च भूभृताम् ॥
उत्तानपादनहुषनलादीनां च याः कथाः । श्रीरामस्याश्वमेधस्य रन्तिदेवस्य कर्मणाम् ॥
येषां केषां नृपाणां च श्रुता वृद्धमुखात्कथाः । कथयन्तश्च ताः केचिच्छ्रुतवन्तश्च केचन
स्थायं स्थायं गताः केचित्स्वापं स्वापं च केचन । एवं सर्वे प्रमुदिताः प्रजग्मुः स्वालयं क्रमात्
हृष्टो नन्दो यशोदा च बालं कृत्वा च वक्षसि । तस्थौ स्वमन्दिरे रम्ये कुबेरभवनोपमे॥
एवं प्रवर्धितौ बालौ शुक्लचन्द्रकलोपमौ । गवां पुच्छं च भित्तिं च धृत्वा चोत्तस्थतुर्मुदा
शब्दार्धं वा तदर्धं वा क्षमौ वक्तुं दिने दिने । चिक्रीडतुश्च वर्धन्तौ गच्छन्तौ प्राङ्गणे मुने ॥
बालौ द्विपादं पादं वा गन्तुं शक्तौ बभूव ह । गन्तुं शक्तौ हि जानुभ्यां प्राङ्गणे वा गृहे हरिः
वर्षाधिको हि वयसा कृष्णात्संकर्षणः स्वयम् । ततो मुदं वर्धयन्तौ वर्धितौ च दिने दिने ॥
भ्रमन्तौ गोकुले बालौ प्रहृष्टौ गमने क्षमौ । उक्तवन्तौ स्फुटं वाक्यं मायाबालकविग्रहौ ॥
गर्गो जगाम मथुरां वसुदेवाश्रमं मुने । स तं ननाम पप्रच्छ पुत्रयोः कुशलं तयोः ॥

मुनिस्तं कथयामास कुशलं सुमहोत्सवम्। आनन्दाश्रुनिमग्नश्च श्रुतिमात्राद्बभूव ह ॥
देवकी परमप्रीत्या पप्रच्छ च पुनः पुनः। आनन्दाश्रुनिमग्ना सा रुरोद च मुहुर्मुहुः॥
गर्गस्तावाशिषं दत्त्वा जगाम स्वालयं मुदा। स्वगृहे तस्थतुस्तौ च कुबेरभवनोपमे ॥

नारायण उवाच—

यत्र कल्पे कथा चेयं तत्र त्वमुपबर्हणः। पञ्चाशत्कामिनीनां च पतिर्गन्धर्वपुंगवः ॥
तासां प्राणाधिकस्त्वं च शृङ्गारनिपुणो युवा। ततोऽभूद्ब्रह्मगः शापाद्दासीपुत्रो द्विजस्य च
ततोऽधुना ब्रह्मपुत्रो वैष्णवोच्छिष्टभोजनात्। सर्वदर्शी च सर्वज्ञः स्मारको हरिसेवया॥
कथितं कृष्णचरितं नामान्नप्राशनादिकम्। जन्ममृत्युजराविघ्नमपरं कथयामि ते ॥२४७॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० कृष्णान्नप्राशननामकरणप्रस्तावो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## अथ चतुर्दशोऽध्यायः।

---

नारायण उवाच—

एकदा नन्दपत्नी च स्नानार्थं यमुनां ययौ। गव्यपूर्णं गृहं दृष्ट्वा जहास मधुसूदनः ॥१॥
दधिदुग्धाज्यतक्रं च नवनीतं मनोरमम्। गृहस्थितं च यत्किंचिद्बभक्षाद मधुसूदनः ॥२॥
मधु हैयंगवीनं यत्स्वस्तिकं शकटस्थितम्। भुक्त्वा पीत्वाऽगुरुकैर्नवतर्संस्कारं कर्तुमुद्यतम्॥
ददर्श बालकं गोपी स्नात्वाऽऽगत्य स्वमन्दिरम्। गव्यशून्यं भग्नभाण्डं मञ्चादिरिक्तभाजनम्
दृष्ट्वा पप्रच्छ बालांश्च अहो कर्मेदमद्भुतम्। यूयं वदत सत्यं च कृतं केन सुदारुणम्॥
यशोदावचनं श्रुत्वा सर्वमूचुश्च बालकाः। चखाद सत्यं बालस्ते नास्मभ्यं दत्तमेव च ॥
बालानां वचनं श्रुत्वा चुकोप नन्दगेहिनी। वेत्रं गृहीत्वा दुद्राव रक्तपङ्कजलोचना ॥७॥
पलायमानं गोविन्दं सा ग्रहीतुं न शशाक ह। ध्यानासाध्यं शिवादीनां दुरापमपि योगिनाम्
यशोदा भ्रमणं कृत्वा विश्रान्ता घर्मसंयुता। तस्थौ कोपपरीतात्मा शुष्ककण्ठोष्ठतालुका
विश्रान्तां मातरं दृष्ट्वा कृपालुः पुरुषोत्तमः। संतस्थौ पुरतो मातुः सस्मितो जगदीश्वरः ॥
करे धृत्वा च तं देवी समानीय स्वमालयम्। बद्ध्वा वस्त्रेण वृक्षे च तताड मधुसूदनम् ॥
बद्ध्वा कृष्णं यशोदा सा जगाम स्वालयं प्रति। हरिस्तस्थौ वृक्षमूले जगतां पतिरीश्वरः॥
श्रीकृष्णस्पर्शमात्रेण सहसा तत्र नारद। पपात वृक्षः शैलाभः शब्दं कृत्वा भयानकम्
सुवेषः पुरुषो दिव्यो वृक्षादाविर्बभूव ह। दिव्यस्यन्दनमारुह्य जगाम स्वालयं पुरः ॥१४॥
प्रणम्य जगतीनाथं शातकौम्भपरिच्छदम्। किशोरः सस्मितो गौरो रत्नालंकारभूषितः ॥

सा वृक्षपतनं दृष्ट्वा भिया त्रस्ता व्रजेश्वरी । क्रोडे चकार बालं तं रुदन्तं श्यामसुन्दरम् ॥
आजग्मुर्गोकुलस्थाश्च गोपा गोप्यश्च तद्गृहम् । यशोदा भर्त्सयामासुः शान्ति चक्रुः ॥
शिशोर्मुदा ॥ १७ ॥
अत्यन्तस्थविरे काले तनयोऽयं बभूव ह । धनं धान्यं च रत्नं वा तत्सर्वं पुत्रहेतुकम् ॥
सुमतिर्नोऽस्ति ते सत्यं ज्ञातं नन्द व्रजेश्वरि । न भक्षित यत्पुत्रेण तत्सर्वं निष्फलं भुवि ॥
पुत्रं बद्ध्वा गव्यहेतोर्वृक्षमूले च निष्ठुरे । गृहकर्मणि व्यग्राया दैवाद्वृक्षः पपात ह ॥ २० ॥
वृक्षस्य पतनाद्गोपीभाग्याद्बालोऽपि जीवित. । प्रनष्टे बालके मूढे वस्तूनां किं प्रयोजनम्
आशिषं युयुजुर्विप्रा बन्दिनश्च शुभावहाम् । द्विजेन कारयामासुर्नामसंकीर्तनं हरेः ॥२२॥
एवं कृत्वा जनाः सर्वे प्रययुर्निजमन्दिरम् । उवाच पत्नीं नन्दश्च रक्तपङ्कजलोचनः ॥

नन्द उवाच—

यास्यामि तीर्थमद्यैव कण्ठे कृत्वा तु बालकम् । अथवा त्व गृहाद्गच्छ त्वया मे किं
प्रयोजनम् ॥ २४ ॥
शतकूपाधिका वापी शतवापीसमं सरः । सरःशताधिको यज्ञः पुत्रो यज्ञशताधिकः ॥
तपोदानोद्भवं पुण्यं जन्मान्तरसुखप्रदम् । सुखप्रदोऽपि सत्पुत्र इहैव च परत्र च ॥२६॥
पुत्रादपि परो बन्धुर्न भूतो न भविष्यति । एवमुक्त्वा स्वभार्यां च तस्थौ नदः स्वमन्दिरे
यशोदा रोहिणी चैव नियुक्ता गृहकर्मणि ॥ २७ ॥

नारद उवाच—

सुवेष. पुरुषः को वा वृक्षरूपी च गोकुले । भगवन्हेतुना केन वृक्षत्वं समवाप ह ॥२८॥

नारायण उवाच—

कुबेरतनयः श्रीमान्नाम्ना यो नलकूबरः । जगाम नन्दनवनं क्रीडार्थं सह रम्भया ॥२९॥
निर्जने सरस्वतीरे पुष्पोद्याने मनोहरे । वटवृक्षसमीपे च सौरभे पुष्पवायुना ॥ ३० ॥
विधाय पुष्पशयनं रत्नदीपैश्च दीपितम् । चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् ॥३१॥
परितः पुष्पमाल्यैश्च क्षौमवस्त्रैश्च वेष्टितम् । तत्र रम्भां समानीय विजहार यथेच्छया ॥
शृङ्गाराष्टप्रकारं च विपरीतादिकं सुखम् । चुम्बनं षट्प्रकारं च यथास्थानं निरूपितम् ॥
अङ्गप्रत्यङ्गसंयोगत्रिविधाश्लेषणं मुदा । नखदन्तकरक्रीडां चकार रसिकेश्वरः ॥३४॥
नग्नावुभौ ... कामशास्त्रविशारदः । रतिभोग प्रकुर्वन्तं ददर्श देवलो मुनिः ॥
नग्ना रम्भा मुक्तकेशी पीनश्रोणिपयोधराम् । नखदन्तक्षताङ्गीं च पुलकाङ्कितविग्रहाम् ॥

---

१ क. प्राणेभ्योऽपि सुनिश्चितम् ।

पश्यन्ती प्राणनाथं च पश्यन्तं सस्मितं मुदा । वक्रभ्रूभङ्गसंयुक्तां कामुकीं च ददर्श ताम् ।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम् । विचित्ररत्नमाल्यैश्च पुष्पमाल्यैश्च भूषिताम् ॥
किङ्किणीजालसंयुक्तां सिन्दूरबिन्दुसंयुताम् । तया युक्तं पुलकितं नोत्तिष्ठन्तं स्मरान्वितम्
वृक्षस्त्वं याहि पापिष्ठेत्युवाच मुनिपुंगवः । शशाप रम्भां कामार्तां मानुषी त्वं भवेति च ॥
जन्मेजयस्य सुभगा भविता कामिनीति च । त्वमेव गोकुले गच्छ वृक्षरूपी भवेति च ॥
श्रीकृष्णस्पर्शमात्रेण पुनरायास्यसि गृहम् । रम्भे त्वमिन्द्रसंयोगात्पुनरायास्यसि ध्रुवम् ॥
इत्येवमुक्त्वा स मुनिर्जगाम निजमन्दिरम् । कुबेरतनयः श्रीमान्स जगाम निजालयम् ॥
इत्येवं कथितं विप्र रम्भाख्यानं वदामि ते । सुचन्द्रस्य गृहे रम्भा लेभे जन्म भारते ॥
कन्या लक्ष्मीस्वरूपा च बभूव सुन्दरी वरा । तां च सालंकृतां कृत्वा सुचन्द्रो नृपतीश्वरः ।
नानाकौतुकसंयुक्तां ददौ जन्मेजयाय च । जन्मेजयस्य सुभगा बभूव महिषी वरा ॥
स्थाने स्थाने निर्जने च राजा रेमे तया सह । एकदा नृपतिश्रेष्ठश्चाश्वमेधेन दीक्षितः ॥
अश्वसंगोपनं कृत्वा तस्थौ शक्रश्च मन्दिरे । यज्ञाश्वं रुचिरं मत्वा कौतुकेन च सुन्दरी ॥
द्रष्टुं जगाम सा साध्वी चाश्वमेकाकिनी मुदा । शक्रोऽश्वनिकटे भूत्वा धर्षयामास तां सतीम्
तया निवार्यमाणश्च रेमे तत्र तया सह । मूर्छामवाप शक्रश्च बुबुधे न दिवानिशम् ॥१०॥
सा च संभोगमात्रेण देहं तत्याज योगतः । नृपस्य लज्जया भीत्या शक्रः स्वर्गं जगाम ह
राजा श्रुत्वा मृतां दृष्ट्वा विललाप भृशं मुहुः । यज्ञं समाप्य विप्रेभ्यो ददौ पूर्णां च दक्षिणाम्
रम्भा च मानवं देहं त्यक्त्वा स्वर्गं जगाम ह । इत्येवं कथितं सर्वं वृक्षार्जुनविभञ्जनम् ॥
नलकूबरमोक्षश्च रम्भायाश्च महामुने । पुण्यदं कृष्णचरितं जन्ममृत्युजरापहम् ॥
इत्येवं कथितं सर्वमपरं कथयामि ते ॥ ६४ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० वृक्षार्जुनभञ्जनो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

अथ पञ्चदशोऽध्यायः ।

नारायण उवाच—

एकदा कृष्णसहितो नन्दो वृन्दावनं ययौ । तत्रोपवनभाण्डीरे चारयामास गोधनम् ॥
सरःसु स्वादु तोयं च पाययामास तत्पपौ । उवास वृक्षमूले च बालं कृत्वा स्ववक्षसि ॥

---

१ क. °स्फुरत् । २ क. सौभाग्या । ३ क. °संभोगात्तु° । ४ क भवम् ।

एतस्मिन्नन्तरे कृष्णो मायामानुषविग्रहः । चकार माययाऽकस्मान्मेघाच्छन्नं नभो मुने ॥
मेघावृतं नभो दृष्ट्वा श्यामलं काननान्तरम् । झञ्झावातं मेघशब्दं वज्रशब्दं च दारुणम् ॥
वृष्टिधारामतिस्थूलां कम्पमानांश्च पादपान् । दृष्ट्वैवं पतितस्कन्धान्नन्दो भयमवाप ह ॥
कथं यास्यामि गोवत्सान्विहाय स्वाश्रमं व्रज । गृहं यदि न यास्यामि भविता बालकस्य किम्
एवं नन्दे प्रवदति रुरोद श्रीहरिस्तदा । [1]पयोभिया हरिश्चैव पितुः कण्ठं दधार सः ॥
एतस्मिन्नन्तरे राधा जगाम कृष्णसंनिधिम् । गमनं कुर्वती राजहंसखञ्जनगञ्जनम् ॥
शरत्पार्वणचन्द्राभामुष्टवक्त्रमनोहरा । शरन्मध्याह्नपद्मानां शोभामोचनलोचना ॥ ९ ॥
परितस्तारकापक्ष्मविचित्रकज्जलोज्ज्वला । खगेन्द्रचञ्चुचारु[2]श्रीशंसानाशकनासिका ॥
तन्मध्यस्थलशोभार्हस्थूलमुक्ताफलोज्ज्वला । कबरीवेषसंयुक्ता मालतीमाल्यवेष्टिता ॥
ग्रीष्ममध्याह्नमार्तण्डप्रभामुष्टककुण्डला । पक्वबिम्बफलानां च श्रीमुष्टाधरयुग्मका ॥ १२ ॥
मुक्तापङ्क्तिप्रभातैकदन्तपङ्क्तिसमुज्ज्वला । ईषत्प्रफुल्लकुन्दानां सुप्रभानाशकस्मिता ॥
कस्तूरीबिन्दुसंयुक्तसिन्दूरबिन्दुभूषिता । कपाल मल्लिकायुक्तं बिभ्रती श्रीयुतं सती ॥
सुचारुवर्तुलाकारकपोलपुलकान्विता । मणिरत्नेन्द्रसाराणां हारोरःस्थलभूषिता ॥ १५ ॥
सुचारुश्रीफलयुगकठिनस्तनसंगता । पत्रावलीश्रियायुक्ता दीप्ता सद्रत्नतेजसा ॥ १६ ॥
सुचारुवर्तुलाकारमुदरं सुमनोहरम् । विचित्रत्रिवलीयुक्तं निम्ननाभिं च बिभ्रती ॥ १७ ॥
सद्रत्नसाररचितमेखलाजालभूषिता । कामास्त्रसारभ्रूभङ्गयोगीन्द्रचित्तमोहिनी ॥ १८ ॥
कठिनश्रोणियुगुलं धरणीधरनिन्दितम् । स्थलपद्मप्रभामुष्टचरणं दधती मुदा ॥ १९ ॥
रत्नभूषणसंयुक्तं यावकद्रवसंयुतम् । मणीन्द्रशोभासंमुष्टनालक्तकपुनर्भवम् ॥ २० ॥
सद्रत्नसाररचितक्वणन्मञ्जीररञ्जितम् । रत्नकङ्कणकेयूरचारुशङ्खविभूषिता ॥ २१ ॥
रत्नाङ्गुलीयनिकरवह्निशुद्धांशुकोज्ज्वला । च रच्चम्पकपुष्पाणां प्रभामुष्टकलेवरा ॥
सहस्रदलसंयुक्तक्रीडाकमलमुज्ज्वलम् । श्रीमुखश्रीदर्शनार्थं बिभ्रती रत्नदर्पणम् ॥ २४ ॥
दृष्ट्वा तां निर्जने नन्दो विस्मयं परमं ययौ । चन्द्रकोटिप्रभामुष्टां भासयन्तीं दिशो दश ।
ननाम तां साश्रुनेत्रो भक्तिनम्रात्मकंधरः । जानामि त्वां गर्गमुखात्पद्माधिकप्रियां हरेः
जानामीमं महाविष्णोः परं निर्गुणमच्युतम् । तथाऽपि मोहितोऽहं च मानवो विष्णुमायया
गृहाण प्राणनाथं च गच्छ भद्रे यथासुखम् । पश्चाद्दास्यसि मत्पुत्रं कृत्वा पूर्णमनोरथम्
इत्युक्त्वा प्रददौ तस्यै रुदन्तं बालकं भिया । जग्राह बालकं राधा जहास मधुरं सुखात्

१ क. मायाभिया भयेभ्यश्च पि° । २ क. °श्रीसंपन्ना° । ३ क. °धरणीदरनि° । ४ क. दधार सा ।

उवाच नन्दं सा यत्नात्प्रकाश्यं रहस्यकम् । अहं दृष्टा त्वया नन्द कतिजन्मफलोदयात् ॥
प्राक्त्वं गर्गवचनात्सर्वं जानासि कारणम् । अकथ्यमावयोर्गोप्यं चरितं गोकुले व्रज ॥
वरं वृणु व्रजेश त्वं यत्ते मनसि वाञ्छितम् । ददामि लीलया तुभ्यं देवानामपि दुर्लभम् ॥
राधिकावचनं श्रुत्वा तामुवाच व्रजेश्वरः । युवयोश्चरणे भक्तिं देहि नान्यत्र मे स्पृहा ॥
युवयोः संनिधौ वासं दास्यसि त्वं सुदुर्लभम् । आवाभ्यां देहि जगतामम्बिके परमेश्वरि ॥
श्रुत्वा नन्दस्य वचनमुवाच परमेश्वरी । दास्यामि दास्यमतुलमिदानीं भक्तिरस्तु ते ॥
आवयोश्चरणाम्भोजे युवयोश्च दिवानिशम् । प्रफुल्लहृदये शश्वत्स्मृतिरस्तु सुदुर्लभा ॥
माया युवां च प्रच्छन्नौ न करिष्यति मद्वरात् । गोलोके यास्यथान्ते च विहाय मानवीं तनुम् ॥
एवमुक्त्वा तु सानन्दं कृत्वा कृष्णं स्ववक्षसि । दूरं निनाय श्रीकृष्णं बाहुभ्यां च यथेप्सितम् ॥
कृत्वा वक्षसि तं कामाच्छ्लेषं श्लेषं चुचुम्ब च । पुलकाञ्चितसर्वाङ्गी सस्मार रासमण्डलम् ॥
एतस्मिन्नन्तरे राधा मायासद्रत्नमण्डपम् । ददर्श रत्नकलशशतेन च समन्वितम् ॥
नानाविचित्रचित्राढ्यं चित्रकाननशोभितम् । सिन्दूराकारमणिभिः स्तम्भसंघैर्विराजितम्[1]
चन्दनागुरुकस्तूरीकुङ्कुमद्रवयुक्तया । संयुक्तं मालतीमालासमूहपुष्पशय्यया ॥ ४२ ॥
नानाभोगसमायुक्तं दिव्यदर्पणसंयुतम् । मणीन्द्रमुक्तामाणिक्यमालाजालैर्विभूषितम् ॥
मणीन्द्रसाररचितकपाटेन समन्वितम् । भूषितं भूषितैर्वस्त्रैः पताकानिकरैर्वरैः ॥ ४४ ॥
कुङ्कुमाकारमणिभिः सहसोपानसंयुतम् । युक्तं षट्पदसंयुक्तैः पुष्पोद्यानं च पुष्पितैः ॥
सा देवी मण्डपं दृष्ट्वा जगामाभ्यान्तरं मुदा । ददर्श तत्र ताम्बूलं कर्पूरादिसमन्वितम् ॥
जलं च रत्नकुम्भस्थं स्वच्छं शीतं मनोहरम् । सुधामधुभ्यां पूर्णानि रत्नकुम्भानि नारद ॥
पुरुषं कमनीयं च किशोरं श्यामसुन्दरम् । कोटिकन्दर्पलीलाभं चन्दनेन विभूषितम् ॥
शयानं पुष्पशय्यायां सस्मितं सुमनोहरम् । पीतवस्त्रपरीधानं प्रसन्नवदनेक्षणम् ॥
मणीन्द्रसारनिर्माणं क्वणन्मञ्जीररञ्जितम् । सद्रत्नसारनिर्माणकेयूरवलयान्वितम् ॥५०॥
मणीन्द्रकुण्डलाभ्यां च गण्डस्थलविराजितम् । कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् ॥
शारत्पार्वणचन्द्रास्यप्रभामुष्टमुखोज्ज्वलम् । शरत्प्रफुल्लकमलप्रभामोचनलोचनम् ॥५२॥
मालतीमाल्यसंश्लिष्टशिखिपिच्छसुशोभितम् । त्रिवक्रचूडां बिभ्रन्तं पश्यन्तं रत्नमन्दिरम् ॥
क्रोडं बालकशून्यं च दृष्ट्वा तं नवयौवनम् । सर्वस्मृतिस्वरूपा सा तथाऽपि विस्मयं ययौ ॥
रूपं रासेश्वरी दृष्ट्वा मुमोह सुमनोहरम् । वामाक्षचक्षुश्चकोराभ्यां मुखचन्द्रं पपौ मुदा ॥
निमेषरहिता राधा नवसंगमलालसा । पुलकाङ्कितसर्वाङ्गी सस्मिता मदनातुरा ॥५६॥

---

[1] क. °दिग्विराजितम् ।

तामुवाच हरिस्तत्र स्मेराननसरोरुहाम् । नवसंगमयोग्यां च पश्यन्तीं वक्रचक्षुषा ॥

श्रीकृष्ण उवाच—

राधे स्मरसि गोलोकवृत्तान्तं सुरसंसदि । अद्य पूर्णं करिष्यामि स्वीकृतं यत्पुरा प्रिये
त्वं मे प्राणाधिका राधे प्रेयसी च वरानने । यथा त्वं च तथाऽहं च भेदो हि नाऽऽवयोर्ध्रुवम्
यथा क्षीरे च धावल्यं यथाऽग्नौ दाहिका सति । यथा पृथिव्यां गन्धश्च तथाऽहं त्वयि संततम्
विना मृदा घटं कर्तुं विना स्वर्णेन कुण्डलम् । कुलालः स्वर्णकारश्च न हि शक्तः कदाचन
तथा त्वया विना सृष्टिमहं कर्तुं न च क्षमः । सृष्टेराधारभूता त्वं बीजरूपोऽहमच्युतः॥६२॥
आगच्छ शयने साध्वि कुरु वक्षःस्थले हि माम् । त्वं मे शोभास्वरूपाऽसि देहस्य भूषणं यथा
कृष्णं वदन्ति मां लोकास्त्वयैव रहितं यदा । श्रीकृष्णं च तदा तेऽपि त्वयैव सहितं परम् ॥
त्वं च श्रीस्त्वं च संपत्तिस्त्वमाधारस्वरूपिणी । त्वं स्त्री पुमानहं राधे इति वेदेषु निर्णयः ।
सर्वशक्तिस्वरूपाऽसि सर्वरूपोऽहमक्षरः ॥
यदा तेजःस्वरूपोऽहं तेजोरूपाऽसि त्वं तदा । न शरीरी यदाऽहं च तदा त्वमशरीरिणी ॥
सर्वबीजस्वरूपोऽहं सदा योगेन सुन्दरि । त्वं च शक्तिस्वरूपा च सर्वस्त्रीरूपधारिणी ॥
ममाङ्गांशस्वरूपा त्वं मूलप्रकृतिरीश्वरी । शक्त्या बुद्ध्या च ज्ञानेन मया तुल्या वरानने
आवयोर्भेदबुद्धिं च यः करोति नराधमः । तस्य वासः कालसूत्रे यावच्चन्द्रदिवाकरौ ॥
पूर्वान्सप्त परान्सप्त पुरुषान्पातयत्यधः । कोटिजन्मार्जितं पुण्यं तस्य नश्यति निश्चितम् ॥
अज्ञानादावयोर्निन्दां ये कुर्वन्ति नराधमाः । पच्यन्ते नरके घोरे यावच्चन्द्रदिवाकरौ ॥
राशब्दं कुर्वतस्त्रस्तो ददामि भक्तिमुत्तमाम् । धाशब्दं कुर्वतः पश्चाद्यामि श्रवणलोभतः
ये सेवन्ते च दत्त्वा मामुपचारांश्च षोडश । यावज्जीवनपर्यन्तं या प्रीतिर्जायते मम ॥
सा प्रीतिर्मम जायेत राधाशब्दात्ततोऽधिका । प्रिया न मे तथा राधे राधावक्ता ततोऽधिकः
ब्रह्माऽनन्तः शिवो धर्मो नरनारायणावृषी । कपिलश्च गणेशश्च कार्तिकेयश्च मत्प्रियः ॥
लक्ष्मीः सरस्वती दुर्गा सावित्री प्रकृतिस्तथा । मम प्रियाश्च देवाश्च तास्तथाऽपि न तत्समाः
ते सर्वे प्राणतुल्या मे त्वं मे प्राणाधिका सती । भिन्नस्थानस्थितास्ते च त्वं च वक्षःस्थले स्थिता
या मे चतुर्भुजा मूर्तिर्बिभर्ति वक्षसि प्रियाम् । सोऽहं कृष्णस्वरूपस्त्वां बिभर्मि स्वयं सदा
इत्येवमुक्त्वा श्रीकृष्णस्तस्थौ तल्पे मनोरमे । उवाच राधिका नाथं भक्तिनम्रात्मकंधरा ॥

राधिकोवाच—

स्मरामि सर्वं जानामि विस्मरामि कथं विभो । यत्त्वं वदसि सर्वाऽहं त्वत्पादाब्जप्रसादतः ॥
ईश्वरस्याप्रियाः केचित्प्रियाश्च कुत्र केचन । ये यथा मां न स्मरन्ति तथा तेषु तवाकृपा

तृणं च पर्वतं कर्तुं समर्थः पर्वतं तृणम् । तथाऽपि योग्यायोग्ये च संपत्तौ च समा कृपा
तिष्ठत्यहं शयानस्त्वं कथाभिर्येरक्षणं गतम् । तत्क्षणं च युगसमं नाहं प्रापयितुं क्षमा ॥
वक्षःस्थले च शिरसि देहि ते चरणाम्बुजम् । दुनोति मन्मनः सद्यस्त्वदीयविरहानलात्
पुरः पपात मे दृष्टिस्त्वदीयचरणाम्बुजे । नीता मया न हि क्लेशाद्दृष्टुमन्यत्कलेवरम् ॥
प्रत्येकमङ्गं दृष्ट्वैव दत्ता शान्ते मुखाम्बुजे । दृष्ट्वा मुखारविन्दं च नान्यं गन्तुं च सा क्षमा
राधिकावचनं श्रुत्वा जहास पुरुषोत्तमः । तामुवाच हितं तथ्यं श्रुतिस्मृतिनिरूपितम् ॥

श्रीकृष्ण उवाच—

न खण्डनीयं तत्तत्र मया पूर्वं निरूपितम् । तिष्ठ भद्रे क्षणं भद्रं करिष्यामि तव प्रिये ॥
त्वन्मनोरथपूर्णस्य स्वयं कालः समागतः ॥ ८७ ॥
यस्य यल्लिखितं पूर्वं यत्र काले निरूपितम् । तदेव खण्डितुं राधे क्षमो नाहं च को विधिः
विधातुश्च विधाताऽहं येषां यल्लेखनं कृतम् । ब्रह्मादीनां च क्षुद्राणां न तत्खण्ड्यं कदाचन
एतस्मिन्नन्तरे ब्रह्माऽऽजगाम पुरतो हरेः । माल्लाकमण्डलुकर ईषत्स्मेरचतुर्मुखः ॥९०॥
गत्वा ननाम तं कृष्णं प्रतुष्टाव यथागमम् । साश्रुनेत्रः पुलकितो भक्तिनम्रात्मकंधरः ॥
स्तुत्वा नत्वा जगद्धाता जगाम हरिसंनिधिम् । पुनर्नत्वा प्रभुं भक्त्या जगाम राधिकान्तिकम्
मूर्ध्ना ननाम भक्त्या च मातुस्तच्चरणाम्बुजे । चकार संभ्रमेणैव जटाजालेन वेष्टितम् ॥
कमण्डलुजलेनैव शीघ्रं प्रक्षालितं मुदा । यथागमं प्रतुष्टाव पुटाञ्जलियुतः पुनः ॥ ९४ ॥

ब्रह्मोवाच—

हे मातस्त्वत्पदाम्भोजं दृष्टं कृष्णप्रसादतः । सुदुर्लभं च सर्वेषां भारते च विशेषतः ॥
षष्टिवर्षसहस्राणि तपस्तप्तं पुरा मया । भास्करे पुष्करे तीर्थे कृष्णस्य परमात्मनः ॥
आजगाम वरं दातुं वरदाता हरिः स्वयम् । वरं वृणीष्वेत्युक्ते च स्वाभीष्टं च वृतं मुदा
राधिकाचरणाम्भोजं सर्वेषामपि दुर्लभम् । हे गुणातीत मे शीघ्रमधुनैव प्रदर्शय ॥९८॥
मयेत्युक्तो हरिरयमुवाच मां तपस्विनम् । दर्शयिष्यामि काले च वत्सेदानीं क्षमेति च ॥
नहीश्वराज्ञा विफला तेन दृष्टं पदाम्बुजम् । सर्वेषां वाञ्छितं मातर्गोलोके भारतेऽधुना ॥
सर्वा देव्यः प्रकृत्यंशा जन्याः प्राकृतिका ध्रुवम् । त्वं कृष्णाङ्गार्धसंभूता तुल्या कृष्णेन सर्वतः
श्रीकृष्णस्त्वमयं राधा त्वं राधा वा हरिः स्वयम् । न हि वेदेषु मे दृष्ट इति केन निरूपितम् ॥
ब्रह्माण्डाद्बहिरूर्ध्वं च गोलोकोऽस्ति यथाऽम्बिके । वैकुण्ठश्चाप्यमन्यश्च त्वमनन्या तथाऽ-
म्बिके ॥ १०२ ॥
यथा समस्तब्रह्माण्डे श्रीकृष्णांशांशजीविनः । तथा शक्तिस्वरूपा त्वं तेषु सर्वेषु संस्थिता

पुरुषाश्च हरेरंशास्त्वदंशा निखिलाः स्त्रियः। आत्मना देहरूपा त्वमस्याऽऽधारस्त्वमेव हि
अस्यानुप्राणैस्त्वं मातस्त्वत्प्राणैरयमीश्वरः। किमहो निर्मितः केन हेतुना शिल्पकारिणा॥
नित्योऽयं च तथा कृष्णस्त्वं च नित्या तथाऽम्बिके। अस्यांशा त्वं त्वदंशो वाऽप्ययं॥
केन निरूपितः॥ १०७॥

अहं विधाता जगतां देवानां जनकः स्वयम्। तं पठित्वा गुरुमुखाद्भवन्त्येव बुधा जनाः
गुणानां वास्तवानां ते शतांशं वक्तुमक्षमः। वेदो वा पण्डितो वाऽन्यः को वा त्वां स्तोतुमीश्वरः
स्तवानां जनकं ज्ञानं बुद्धिर्ज्ञानाम्बिका सदा। त्वं बुद्धेर्जननी मातः को वा त्वां स्तोतुमीश्वरः
यद्वस्तु दृष्टं सर्वेषां तद्धि वक्तुं बुधः क्षमः। यददृष्टाश्रुतं वस्तु तन्निर्वक्तुं च कः क्षमः॥
अहं महेशोऽनन्तश्च स्तोतुं त्वां कोऽपि न क्षमः। सरस्वती च वेदाश्च क्षमः कः स्तोतुमीश्वरः
यथागमं यथोक्तं च न मां निन्दितुमर्हसि। ईश्वराणामीश्वरस्य योग्यायोग्ये समा कृपा॥
जनस्य प्रतिपाल्यस्य क्षणे दोषः क्षणे गुणः। जननी जनको यो वा सर्वं क्षमति स्नेहतः
इत्युक्त्वा जगतां धाता तस्थौ च पुरतस्तयोः। प्रणम्य चरणाम्भोजं सर्वेषां वन्द्यमीप्सितम्
ब्रह्मणा च कृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः। राधामाधवयोः पादे भक्तिर्दास्यं लभेद्ध्रुवम्
कर्मनिर्मूलनं कृत्वा मृत्युं जित्वा सुदुर्जयम्। विलङ्घ्य सर्वलोकांश्च याति गोलोकमुत्तमम्

नारायण उवाच—

ब्रह्मणः स्तवनं श्रुत्वा तमुवाच ह राधिका। वरं वृणु विधातस्त्वं यत्ते मनसि वर्तते॥
राधिकावचनं श्रुत्वा तामुवाच जगद्विधिः। वरं च युवयोः पादपद्मभक्तिं च देहि मे॥
इत्युक्ते विधिना राधा तूर्णमोमित्युवाच ह। पुनर्ननाम तां भक्त्या विधाता जगतां पतिः
तदा ब्रह्मा तयोर्मध्ये प्रज्वाल्य च हुताशनम्। हरिं संस्मृत्य हवनं चकार विधिना विधिः
उत्थाय शयनात्कृष्ण उवास वह्निसंनिधौ। ब्रह्मणोक्तेन विधिना चकार हवनं स्वयम्॥
प्रणमय्य पुनः कृष्णं राधां तां जनकः स्वयम्। कौतुकं कारयामास सप्तधा च प्रदक्षिणाम्
पुनः प्रदक्षिणां राधां कारयित्वा हुताशनम्। प्रणमय्य ततः कृष्णं वासयामास तं विधिः
तस्या हस्तं च श्रीकृष्णं ग्राहयामास तं विधिः। वेदोक्तसप्तमन्त्रांश्च पाठयामास माधवम्
संस्थाप्य राधिकाहस्तं हरेर्वक्षसि वेदवित्। श्रीकृष्णहस्तं राधायाः पृष्ठदेशे प्रजापतिः॥
स्थापयामास मन्त्रांस्त्रीन्पाठयामास राधिकाम्। पारिजातप्रसूनानां मालां जानुविलम्बिताम्
श्रीकृष्णस्य गले ब्रह्मा राधाद्वारा ददौ मुदा। प्रणमय्य पुनः कृष्णं राधां च कमलोद्भवः॥
राधागले हरिद्वारा ददौ मालां मनोहराम्। पुनश्च वासयामास श्रीकृष्णं कमलोद्भवः॥

१ क. आत्माऽहं दे°।

तद्वामपार्श्वे राधां च सस्मितां कृष्णचेतसम् । पुटाञ्जलिं कारयित्वा माधवं राधिकां विधिः
पाठयामास वेदोक्तान्पञ्च मन्त्रांश्च नारद । प्रणमय्य पुनः कृष्णं समर्प्य राधिकां विधिः ॥
कन्यकां च यथा तातो भक्त्या तस्थौ हरेः पुरः । एतस्मिन्नन्तरे देवाः सानन्दपुलकोद्गमाः
दुन्दुभिं वादयामासुश्चाऽऽनकं मुरजादिकम् ॥ १३१ ॥
पारिजातप्रसूनानां पुष्पवृष्टिर्बभूव ह । जगुर्गन्धर्वप्रवरा ननृतुश्चाप्सरोगणाः ॥ १३२ ॥
तुष्टाव श्रीहरिं ब्रह्मा तमुवाच ह सस्मितः । युवयोश्चरणाम्भोजे भक्तिं मे देहि दक्षिणाम्
ब्रह्मणो वचनं श्रुत्वा तमुवाच हरिः स्वयम् । मदीयचरणाम्भोजे सुदृढा भक्तिरस्तु ते ॥
स्वस्थानं गच्छ भद्रं ते भविता नात्र संशयः । मया नियोजितं कर्म कुरु वत्स ममाऽऽज्ञया

नारायण उवाच—

श्रीकृष्णस्य वचः श्रुत्वा विधाता जगतां मुने । प्रणम्य राधां कृष्णं च जगाम स्वालयं मुदा
गते ब्रह्मणि सा देवी सस्मिता वक्रचक्षुषा । सा ददर्श हरेर्वक्त्रं चच्छाद व्रीडया मुखम् ॥
पुलकाङ्कितसर्वाङ्गी कामबाणप्रपीडिता । प्रणम्य श्रीहरिं भक्त्या जगाम शयनं हरेः ॥
चन्दनागुरुपङ्कं च कस्तूरीकुङ्कुमान्वितम् । ललाटे तिलकं कृत्वा ददौ कृष्णस्य वक्षसि ॥
सुधापूर्णं रत्नपात्रं मधुपूर्णं मनोहरम् । प्रददौ हरये भक्त्या बुभुजे जगतीपतिः ॥ १४० ॥
ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् । ददौ कृष्णाय सा राधा सादरं बुभुजे हरिः ॥
चखाद सस्मिता राधा हरिदत्तं सुधारसम् । ताम्बूलं तेन दत्तं च बुभुजे पुरतो हरेः ॥
कृष्णश्चर्विततताम्बूलं राधिकायै मुदा ददौ । चखाद परया भक्त्या पपौ तन्मुखपङ्कजम् ॥
राधाचर्विततताम्बूलं ययाचे मधुसूदनः । जहास न ददौ राधा क्षमेत्युक्तं तया मुदा ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवमुत्तमम् । राधिकायाश्च सर्वाङ्गे प्रददौ माधवः स्वयम् ॥
यः कामो ध्यायते नित्यं यस्यैकचरणाम्बुजम् । बभूव तस्य स वशो राधासंतोषकारणात्
यद्भृत्यभृत्यैर्मदनो जितः सर्वेक्षणं मुने । स्वेच्छामयो हि भगवाञ्जितस्तेन कुतूहलात् ॥
करे धृत्वा च तां कृष्णः स्थापयामास वक्षसि । चकार शिथिलं वस्त्रं चुम्बनं च चतुर्विधम्
बभूव रतियुद्धेन विच्छिन्ना क्षुद्रघण्टिका । चुम्बनेनोष्ठरागश्च ह्याश्लेषेण च पत्रकम् ॥
शृङ्गारेणैव कबरी सिन्दूरतिलकं मुने । जगामालककाङ्क्षश्च विपरीतादिकेन च ॥
पुलकाङ्कितसर्वाङ्गी बभूव नवसंगमात् । मूर्छामवाप सा राधा बुबुधे न दिवानिशम् ॥
प्रत्यङ्गेनैव प्रत्यङ्गमङ्गेनाङ्गं समाश्लिषत् । शृङ्गाराष्टविधं कृष्णश्चकार कामशास्त्रवित् ॥
पुनस्तां च समाश्लिष्य सस्मितां वक्रलोचनाम् । क्षतविक्षतसर्वाङ्गीं नखदन्तैश्चकार ह

१ क. विधि ।

कङ्कणानां किङ्किणीनां मञ्जीराणां मनोहरः । बभूव शब्दस्तत्रैव शृङ्गारसमरोद्भवः ॥
पुनस्तां च समाकृष्य शय्यायां च निवेश्य च । चकार रहितां राधां कबरीबन्धवाससा
निर्जने कौतुकात्कृष्णः कामशास्त्रविशारदः । चूडावेषांशुकैर्हीनं चकार तं च राधिका
न कस्य कस्माद्धानिश्च तौ द्वौ कार्यविशारदौ । जग्राह राधाहस्तात्तु माधवो रत्नदर्पणम्
मुरलीं माधवकराज्जग्राह राधिका बलात् । चित्तापहारं राधायाश्चकार माधवो बलात्
जहार राधिका रासान्माधवस्यापि मानसम् । निवृत्ते कामयुद्धे च सस्मिता वक्रलोचना
प्रददौ मुरलीं प्रीत्या श्रीकृष्णाय महात्मने । प्रददौ दर्पणं कृष्णः क्रीडाकमलमुज्ज्वलम्
चकार कबरीं रम्यां सिन्दूरतिलकं ददौ । विचित्रपत्रकं वेषं चकारैवंविधं हरिः ॥
विश्वकर्मा न जानाति सखीनामपि का कथा । वेषं विधातुं कृष्णस्य यदा राधा समुद्यता
बभूव शिशुरूपं च कैशोरं च विहाय च । ददर्श बालरूपं तं रुदन्तं पीडितं क्षुधा ॥
यादृशं प्रददौ नन्दो भीतं तादृशमच्युतम् । विनिःश्वस्य च सा राधा हृदयेन विदूयता
इतस्ततस्तं पश्यन्ती शोकार्ता विरहातुरा । उवाच कृष्णमुद्दिश्य काकूक्तिमिति कातरा
मायां करोषि मायेश किंकरीं कथमीदृशीम् । इत्येवमुक्त्वा सा राधा पपात च रुरोद च
रुरोद कृष्णस्तत्रैव वाग्बभूवाशरीरिणी । कथं रोदिषि राधे त्वं स्मर कृष्णपदाम्बुजम्
आरासमण्डलं यावत्तत्र चाऽऽगमिष्यति । करिष्यसि रतिं नित्यं हरिणा सार्धमीप्सिताम्
छायां विधाय स्वगृहे स्वयमागत्य मा रुद । कृत्वा क्रोडे च प्राणेशं मायेशं बालरूपिणम्
त्यज शोकं गृहं गच्छ सुन्दरीत्थं प्रबोधिता । श्रुत्वैवं वचनं राधा कृत्वा क्रोडे च बालकम्
ददर्श पुष्पोद्यानं च वनं सद्रत्नमण्डपम् । तूर्णं वृन्दावनाद्राधा जगाम नन्दमन्दिरम् ॥
सा मनोयायिनी देवी निमिषार्धेन नारद । संसिक्तस्निग्धमधुर रसना रक्तलोचना ॥१७२॥
यशोदायै शिशुं दातुमुद्यता सेत्युवाच ह । गृहीत्वैवं शिशुं स्थूलं रुदन्तं च क्षुधातुरम् ॥
गोष्ठे त्वत्स्वामिना दत्तं प्राप्नोमि यातना पथि । संसिक्तं वसनं वत्से मेघाच्छन्नेऽतिदुर्दिने
पिच्छिले कर्दमोद्रेके यशोदा वोढुमक्षमा । गृहाण बालकं भद्रे स्तनं दत्त्वा प्रबोधय ॥
गृहं चिरं परित्यक्तं यामि तिष्ठ सुखं सति । इत्युक्त्वा बालकं दत्त्वा जगाम स्वगृहं प्रति
यशोदा बालकं नीत्वा चुचुम्ब च स्तनं ददौ । बहिर्निविष्टा सा राधा स्वगृहे गृहकर्मणि
नित्यं नक्तं रतिं तत्र चकार हरिणा सह । इत्येवं कथितं वत्स श्रीकृष्णचरितं शुभम् ॥
सुखदं मोक्षदं पुण्यमपरं कथयामि ते ॥ १७८ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० राधाकृष्णविवाहन-
वसंगमप्रस्तावो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

====

अथ षोडशोऽध्यायः ।

---

नारायण उवाच—

माधवो बालकैः सार्धमेकदा हलिना सह । भुक्त्वा पीत्वा च क्रीडार्थं जगाम श्रीवनं मुने
तत्र नानाविधां क्रीडां चकार मधुसूदनः । कृत्वा तां शिशुभिः सार्धं चालयामास गोधनम्
ययौ मधुवनं तस्माच्छ्रीकृष्णो गोधनैः सह । तत्र स्वादु जलं पीत्वा वने च स महाबलः ॥
तत्रैकदैत्यो बलवाञ्छ्वेतवर्णो भयंकरः । विकृताकारवदनो बकाकारश्च शैलवत् ॥ ४ ॥
दृष्ट्वा च गोकुलं गोष्ठे शिशुभिर्बलकेशवौ । यथा ह्यागस्त्यो वातापिं सर्वं जग्रास लीलया॥
बकग्रस्तं हरिं दृष्ट्वा सर्वे देवा भयान्विताः । चक्रुर्हाहेति संत्रस्ता धावन्तः शस्त्रपाणयः ॥
शक्रश्चिक्षेप वज्रं च मुनेरस्थिविनिर्मितम् । न ममार बकस्तस्मात्पक्षमेकं ददाह च ॥७॥
नीहारास्त्रं शशधरः शीतार्तस्तेन दानवः । यमदण्डं सूर्यपुत्रस्तेन कुण्ठो बभूव ह ॥९॥
वायव्यास्त्रं च वायुश्च तेन स्थानान्तरं ययौ । वरुणश्च शिलावृष्टिं चकार तेन पीडितः
हुताशनश्च वाह्नेन पक्षांश्चैव ददाह सः । कुबेरस्यार्धचन्द्रेण च्छिन्नपादो बभूव ह ॥ १०॥
ईशानस्य च शूलेन बभूव मूर्छितोऽसुरः । ऋषयो मुनयश्चैव कृष्णं चक्रुर्भियाऽऽशिषम्॥
एतस्मिन्नन्तरे कृष्णः प्रज्वलन्ब्रह्मतेजसा । ददाह दैत्यसर्वाङ्गं बाह्याभ्यन्तरमीश्वरः ॥
तत्सर्वं वमनं कृत्वा प्राणांस्तत्याज दानवः ॥ १३ ॥
बकं निहत्य बलवाञ्छिशुभिर्गोधनैः सह । ययौ केलिकदम्बानां काननं सुमनोहरम्॥ १४॥
एतस्मिन्नन्तरे तत्र वृषरूपधरोऽसुरः । नाम्ना प्रलम्बो बलवान्महापूर्तश्च शैलवत् ॥ १५॥
शृङ्गाभ्यां च हरिं धृत्वा भ्रामयामास तत्र वै । दुद्रुवुर्बालकाः सर्वे रुरुदुश्च भयातुराः॥
बलो जहास बलवाञ्ज्ञात्वा भ्रातरमीश्वरम् । बालकांश्चोधयामास भयं किमित्युवाच ह ॥
तद्विषाणं गृहीत्वा च स्वयं श्रीनिधुसूनुः । भ्रामयित्वा च गगने पातयामास भूतले ॥
प्राणांस्तत्याज दैत्येन्द्रो निपत्य च महीतलम् । जहसुर्बालकाः सर्वे ननृतुश्च जगुर्मुदा ॥
हत्वा प्रलम्बं श्रीकृष्णो बलेन सह सत्वरम् । गोधनं चारयामास ययौ भाण्डीरमीश्वरः ॥
गच्छन्तं माधवं दृष्ट्वा केशी दैत्येश्वरो बली । वेष्टयामास तं शीघ्रं खुरेण विलिखन्महीम्
मूर्ध्नि कृत्वा हरिं तुष्टो गगनं शतयोजनम् । उत्पात्य भ्रमयामास पपात च महीतले॥
जग्राह स हरिं पापी चर्वयामास कोपतः । स ममज्जतो दैत्यश्च वज्रात्कर्चर्वणाद्दहो ॥
श्रीकृष्णतेजसा दग्धः प्राणांस्तत्याज भूतले । स्वर्गे दुन्दुभयो नेदुः पुष्पवृष्टिर्बभूव ह ॥
एतस्मिन्नन्तरे तत्र पार्षदा दिव्यरूपिणः । समाऽऽजग्मुः स्यन्दनस्था द्विभुजा पीतवाससः

किरीटिनः कुण्डलिनो वनमालाविभूषिताः । विनोदमुरलीहस्ताः क्वणन्मञ्जीररञ्जिताः ॥
चन्दनोक्षितसर्वाङ्गा गोपवेषधरा वराः । ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकारकाः ॥
प्रदीप्तं रथमास्थाय रत्नसारविनिर्मितम् । भाण्डीरवनमाजग्मुर्यत्र संनिहितो हरिः ॥
दिव्यवस्त्रपरीधाना रत्नालंकारभूषिताः । प्रणम्य हरिं स्तुत्वा जग्मुर्गोलोकमुत्तमम् ॥
मुक्त्वा देहं परित्यज्य वैष्णवाः पुरुषास्त्रयः । संप्राप्य दानवीं योनिं बभूवुः कृष्णपार्षदाः ॥

नारद उवाच--

के ते च दिव्यपुरुषा वैष्णवा दैत्यरूपिणः । कथयस्व महाभाग श्रुतं किं परमाद्भुतम् ॥

नारायण उवाच--

शृणु ब्रह्मन्प्रवक्ष्येऽहमितिहासं पुरातनम् । श्रुतं महेशवदनात्सूर्यपर्वणि पुष्करे ॥ ३१ ॥
हरेर्गुणप्रसङ्गेन कथयामास शंकरः । संहृष्टो मुनिसंघैश्च मया धर्मेण ब्रह्मणा ॥ ३२ ॥
ब्रह्मपुत्र महाभाग कथां भुवनपावनीम् । कथयामास विस्तार्य सावधानं निशामय ॥
गन्धर्वेशो गन्धवाहः पर्वते गन्धमादने । महास्तपस्विप्रवरो हरिसेवनतत्परः ॥ ३४ ॥
पुत्रा बभूवुश्चत्वारो गन्धर्वप्रवरा मुने । सस्मरुः कृष्णपादाब्जं स्वप्ने ज्ञाने दिवानिशम् ॥
ते च दुर्वाससः शिष्याः श्रीकृष्णार्चनतत्पराः । नित्यं दत्त्वा च कमलं संपूज्य तं पपुर्जलम् ॥ ३६ ॥
वसुदेवः सुहोत्रश्च सुदर्शनसुपार्श्वकौ । चत्वारो वैष्णवश्रेष्ठास्तेपुस्ते पुष्करे तपः ॥३७॥
चिरकालं तपस्तप्त्वा बभूवुः सिद्धमन्त्रिणः । ज्येष्ठो दुर्वाससो योगं संप्राप्य योगिनां वरः
सिद्धश्चाकृतदारश्च प्रज्वलन्ब्रह्मतेजसा । सद्यो देहं परित्यज्य बभूव कृष्णपार्षदः ॥३९॥
एकदा भ्रातरस्ते च जग्मुश्चित्रसरोवरम् । पद्मानि कृष्णपूजार्थमाहर्तुमुदये रवेः ॥४०॥
पद्मानां चयनं कृत्वा गच्छतो वैष्णवान्मुने । दृष्ट्वा निबध्य संजग्मुः सर्वे शंकरकिंकराः
गर्विष्ठा दुर्बलान्धृत्वा जग्मुः शंकरसंनिधिम् । ते सर्वे शंकरं दृष्ट्वा प्रणेमुः शिरसा मुने ॥
तानुवाच शिवः शीघ्रं प्रयुज्याऽऽशिषमुत्तमाम् । ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकारकः ॥

शिव उवाच--

के यूयं पद्महर्तारः पार्वत्याश्च सरोवरे । रक्षयते रक्षणीयं पार्वतीव्रतहेतवे ॥ ४४ ॥
नित्यं सहस्रपद्मं ददाति हरये सती । व्रते त्रैमासिके भक्त्या पतिसौभाग्यवर्धने ॥
शिवस्य वचनं श्रुत्वा तमूचुर्वैष्णवा भिया । पुटाञ्जलियुताः सर्वे भक्तिनम्रात्मकंधराः ॥

गन्धर्वा ऊचुः--

वयं गन्धर्वप्रवरा गन्धवाहसुता विभो । हरये कमलं दत्त्वा पिबामो जलमीश्वर ॥४७॥

धर्षं न विद्मो हे नाथ पार्वत्या रक्षितं सरः । गृहाण कमलं सर्वं युष्माकं च फलं कुरु ॥
न दास्यामोऽद्य कमलं पास्यामोऽद्य जलं हर । किंवा कथं न पास्यामस्तुभ्यं दत्तानि तानि च
नित्यं ध्यात्वा यत्पदाब्जं पद्मेन पूजयामहे । साक्षात्तस्मै प्रदत्त्वा च पद्मं पूता वयं प्रभो
एकं ब्रह्म ह्यद्वितीयं क्व देहः क्व च रूपवान् । भक्तानुग्रहतो देहो रूपभेदश्च मायया ॥
किं तु गृहाण पद्मानि त्वमेव मत्प्रभुः प्रभो । यतो नो मानसं पूर्णं तद्रूपं दर्शयाच्युत ॥
द्विभुजं कमनीयं च किशोरं श्यामसुन्दरम् । विनोदमुरलीहस्तं पीताम्बरधरं परम् ॥१३॥
एकवक्त्रं द्विनयनं चन्दनागुरुचर्चितम् । ईषद्धास्यप्रसन्नास्यं रत्नालंकारभूषितम् ॥१४॥
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् । मयूरपिच्छचूडं च मालतीमाल्यभूषितम् ॥
पारिजातप्रसूनानां मालाराजिविभूषितम् । कोटिकन्दर्पलावण्यलीलाधाममनोहरम् ॥
गोपीभिर्वीक्ष्यमाणं सस्मितैर्वक्रलोचनैः । नवयौवनसंपन्नं राधावक्षःस्थलस्थितम् ॥१७॥
ब्रह्मादिभिः स्तूयमानं वन्द्यं ध्येयमभीप्सितम् । स्वात्मारामं पूर्णकामं भक्तानुग्रहतत्परम्
इत्युक्त्वा पुरतः शंभोस्तस्थुर्गन्धर्वपुंगवाः । श्रीकृष्णरूपश्रवणात्पुलकाङ्कितविग्रहः ॥
गन्धर्वाणां वचः श्रुत्वा शिवस्तानित्युवाच ह । श्रीकृष्णरूपश्रवणात्साश्रुपूर्णविलोचनः ॥
मयैव यूयं विज्ञाता वैष्णवप्रवरा महीम् । पूतां कर्तुं च भ्रमथ चरणाम्भोजरेणुना ॥
अहं वाञ्छां करोम्येव श्रीकृष्णभक्तदर्शने । समागमो हि साधूनां त्रिषु लोकेषु दुर्लभः
पार्वत्याश्च सुराणां च सदा यूयं मम प्रियाः । आत्मनश्चाऽऽत्मभक्तेभ्यो वैष्णवाश्च प्रियाश्च नः
किंतु मोघं च न भवेन्मया यत्स्वीकृतं पुरा । तच्छ्रूयतां महाभागाः पार्वतीव्रतकर्मणि ॥
सरसश्चैव पद्मानि येर्हृतानि व्रतान्तरे । ते तूर्णमासुरीं योनिं गमिष्यन्ति न संशयः ॥
न हि श्रीकृष्णभक्तानामशुभं विद्यते क्वचित् । संप्राप्य मानवीं योनिं गोलोकं यास्यथ ध्रुवम्
यूयं श्रीकृष्णरूपं च भर्त्यस्थं द्रष्टुमुत्सुकाः । ध्रुवं द्रक्ष्यथ भो वत्सा वृन्दारण्ये च भारते
दृष्ट्वा कृष्णं ततो मृत्युं संप्राप्य वैष्णवोत्तमाः । दिव्यं स्यन्दनमारुह्य गमिष्यथ हरेर्गृहम् ॥
अधुना वाञ्छनीयं च रूपं द्रष्टुमिहोत्सुकाः । तत्सर्वं पश्यतेत्युक्त्वा दर्शयामास तच्छिवः
रूपं दृष्ट्वा साश्रुनेत्राः प्रणम्य सर्वरूपिणम् । आजग्मुर्दानवीं योनिमिति ते दानवेश्वराः
वसुर्देवः पुरा मुक्तः सुहोत्रश्च चकासुरः । सुदर्शनः प्रलम्बोऽयं स्वयं केशी सुपार्श्वकः ॥
हरस्य वरदानेन दृष्ट्वा रूपमनुत्तमम् । मृत्युं संप्राप्य श्रीकृष्णाज्जग्मुस्ते कृष्णमन्दिरम् ॥
इत्येवं कथितं विप्र हरेश्चरितमद्भुतम् । बककेशिप्रलम्बानां मोक्षणं मोक्षकारकम् ॥

नारद उवाच—

श्रुतं सर्वं महाभाग त्वत्प्रसादाद्यदद्भुतम् । अधुना श्रोतुमिच्छामि पार्वत्या किं कृतं मनम्

को वाऽऽराध्यो व्रतस्यास्य किं फलं नियमश्च कः । कानि द्रव्याणि भगवन्व्रतोपयोगिकानि च
कलिकाले व्रतं किं वा प्रतिष्ठायां निरूपणम् । सुविचार्य वद विभो श्रोतुं कौतूहलं मम ॥

नारायण उवाच—

व्रतं त्रैमासिकं नाम पतिसौभाग्यवर्धनम् । आराध्यो भगवान्कृष्णो राधिकासहितो मुने ॥
विषुवे च समारम्भः समाप्तिर्दक्षिणायने । संयम्य पूर्वदिवसे कृत्वाऽवश्यं हविष्यकम् ॥
स्नात्वा देशाख्यसंक्रान्त्यां संकल्प्य जाह्नवीतटे । घटे मणौ शालग्रामे जले वा पूजयेद्व्रती ॥
ध्यायेद्भक्त्या च राधेशं संपूज्य पञ्च देवताः । ध्यानं च सामवेदोक्तं निबोध कथयामि ते
नवीननीरदश्यामं पीतकौशेयवाससम् । शरत्पार्वणचन्द्रास्यमीषद्धास्यसमन्वितम् ॥८१॥
शरत्फुल्लपद्माक्षं मञ्जुलाञ्छनराञ्जितम् । मानसं गोपिकानां च मोहयन्तं मुहुर्मुहुः ॥
राधया दृश्यमानं च राधावक्षःस्थलस्थितम् । ब्रह्मानन्तेशधर्माद्यैः स्तूयमानमहं भजे ॥
ध्यात्वा कृष्णं च ध्यानेन तथावाह्य व्रती मुदा । ध्यायेत्तदा राधिकां च ध्यानं मध्यंदिनेर(रि)तम्
राधां रासेश्वरीं रम्यां रासोल्लासरसोत्सुकाम् । रासमण्डलमध्यस्थां रासाधिष्ठातृदेवताम् ॥
रासेश्वरोरःस्थलस्थां रसिकां रसिकप्रियाम् । रसिकप्रवरां रम्यां रमां च रमणोत्सुकाम् ॥

फलं विंशाधिकं सप्तशतं नवसहस्रकम् । दद्यान्नानाविधं द्रव्यं नैवेद्यं सुमनोहरम् ॥
संस्कृताग्निं च संस्थाप्य होमं कुर्याद्विचक्षणः । नवतिं च सहस्राणि हुत्वाऽऽज्येन तिलेन च
सवस्त्रं च सभोज्यं च यज्ञसूत्रफलान्वितम् । गन्धपुष्पार्चितान्भक्त्या दद्यान्नवतिलड्डुकान् ॥
दद्यान्नवतिकुम्भांश्च शीततोयप्रपूरितान् । एवंविधं व्रतं कृत्वा दद्याद्विप्राय दक्षिणाम् ॥
दक्षिणायाः परिमितं वेदेषु परिरूपितम् । वृषेन्द्राणां सहस्रं च स्वर्णशृङ्गसमन्वितम् ॥
इत्येवं कथितं विप्र कृतं त्रैमासिकव्रतम् । विशिष्टसंततिकरं पतिसौभाग्यवर्धनम् ॥
व्रतस्यास्य प्रभावेण सौभाग्यं शतजन्मनि । सत्पुत्रजननी सा च भवेज्जन्मशतं ध्रुवम् ॥
कदाऽपि न भवेत्तस्या भेदश्च पतिपुत्रयोः । दासवत्तयोर्भवेत्पुत्रो भर्ता च स्ववशंकरः ॥
अनुक्षणं भवेद्राधाकृष्णभक्तियुता सती । भवेद्व्रतप्रभावेण प्राप्तज्ञानहरिस्मृतिः ॥
व्रतं च सामवेदोक्तं कृतं पूर्वमथाऽऽवयोः । सर्वेषां च व्रतानां च श्रेष्ठं शृणु वदामि ते ॥
स्वायंभुवस्य च मनोः शतरूपाभिधा सती । तया कृतं प्रथमतः कृत्वाऽगस्त्यं पुरोहितम्
तदा कृतं देवहूत्या चाऽऽकूत्या च कृतं तदा । पुरोहितं पुलस्त्यं च कृत्वा श्रुत्युक्तया मुने
चकार रोहिणी तत्तु क्रतुं कृत्वा पुरोहितम् । रतिश्चकार तद्व्रतं गौतमस्तत्पुरोहितः ॥
अकारि तद्व्रतं भक्त्या तारया गुरुकान्तया । महासंभृतसंभारो वसिष्ठस्तत्पुरोहितः ॥
तद्दृष्ट्वा गुरुपत्न्याश्च शक्रशच्या कृतं व्रतम् । महासंभृतसंभारस्तत्पुरोधा बृहस्पतिः ॥
व्रतं चकार स्वाहा च सर्वतोऽपि विलक्षणम् । अतिसंभृतसंभारो मरीचिस्तत्पुरोहितः ॥
तद्दृष्ट्वा पार्वती ब्रह्मन्नुवाच शंकरं मुदा । पुटाञ्जलियुता देवी भक्तिनम्रात्मकंधरा ॥

पार्वत्युवाच—

आज्ञां कुरु जगन्नाथ करोमि व्रतमुत्तमम् । आवयोरिष्टदेवस्य व्रतानां च परं व्रतम् ॥
हरेराराधनं नाथ सर्वमङ्गलकारणम् । इष्टं दत्तं श्रुतेः पाठं तीर्थे पुण्यां प्रदक्षिणम् ॥
हरेराराधनस्यापि कलां नार्हन्ति षोडशीम् । बहिरभ्यन्तरे यस्य हरिस्मृतिरनुक्षणम् ॥
जीवन्मुक्तस्य तस्यैव मुक्तिर्भवति दर्शनात् । तस्य पादाब्जरजसा सद्यः पूता वसुंधरा ॥
तस्य दर्शनमात्रेण पुनाति भुवनत्रयम् । ब्रह्मा विष्णुश्च धर्मश्च शेषस्त्वं च गणेश्वरः ॥
ध्यायं ध्यायं यत्पदाब्जं तेजसा तत्समो महान् । यश्च यं संततं ध्यायेत्स तमाप्नोति निश्चितम्
गुणेन तेजसा बुद्ध्या ज्ञानेन तत्समो भवेत् । कृष्णस्य स्मरणाद्ध्यानात्तपसा तस्य सेवया
मया प्राप्तो हि भगवान्स्वामी वा पुत्र एव च । प्रलब्धे लीलया सर्वं पूर्णं मन्मानसं तदा ॥
स्वामी मे त्वादृशः पुत्रौ कार्तिकेयगणेश्वरौ । पिता हिमाद्रिः कृष्णांशो स्मर किं दुर्लभं प्रभो
पार्वतीवचनं श्रुत्वा सुप्रीतः शंकरः स्वयम् । प्रहस्योवाच मधुरं पुलकाङ्कितविग्रहः ॥

महादेव उवाच—

महालक्ष्मीस्वरूपाऽसि किमसाध्यं तवेश्वरि । सर्वसंपत्स्वरूपा त्वमनन्तशक्तिरूपिणी ॥
त्वं च यस्य गृहे देवि स चैश्वर्यस्य भाजनम् । न लक्ष्मीर्यद्गृहे तस्य जीवनान्मरणं वरम्
अहं ब्रह्मा च विष्णुश्च त्वयि भवत्या शुभप्रदे । संहारसृष्टिकाले च त्वत्प्रसादाद्वयं क्षमाः॥
को वा हिमालयः कोऽहं कौ कार्तिकगणेश्वरौ । त्वद्विहीना अशक्ताश्च त्वया च वयमीश्वराः
शुक्ताः पतिव्रता याश्च याः पुराऽऽज्ञा. श्रुतौ श्रुताः । गृहीत्वाऽऽज्ञामीश्वरस्य व्रतं कुरु पतिव्रते
व्रतमेतत्कृतं याभिस्ताभ्यः कुरु विलक्षणम् । सनत्कुमारो भगवान्व्रते तेऽस्तु पुरोहितः ॥
बमलानां ब्राह्मणानां द्रव्याणां दायकोऽप्यहम् । कुबेरं द्रव्यकोशे च रक्षकं कुरु सुन्दरि ॥
व्रते च दानाध्यक्षोऽहं धनदात्री च श्रीः स्वयम् । पाठको वह्निदेवश्च वरुणो जलदायकः
वस्तूनां वाहका यक्षास्तदध्यक्षः षडाननः । स्थानसंस्कारकर्ता च व्रतेऽत्र पवनः स्वयम्
परिवेष्टा स्वयं शक्रश्चन्द्रोऽधिष्ठापको व्रते । सूर्यश्च दाननिर्वक्ता योग्यायोग्यं यथोचितम्
व्रतोपयुक्तं यद्द्रव्यं दत्त्वा नियमितं प्रिये । ततोऽधिकं फलं पुष्पं हरये देहि सुन्दरि ॥
व्रते नियमितान्विप्रान्भोजयित्वा ततोऽधिकान् । असंख्यान्ब्राह्मणान्देवि भवत्या कुरु
निमन्त्रणम् ॥ १४० ॥
समाप्तिदिवसे स्वर्णं रत्नं मुक्तां प्रवालकम् । व्रतोक्तां दक्षिणां दत्त्वा सर्वं देहि द्विजातये
इत्युक्त्वा शंकरस्तां च कारयामास तद्व्रतम् । व्रतं चकार सा दुर्गा सर्वाभ्यश्च विलक्षणम्
इत्येवं कथितं विप्र पार्वत्या यद्व्रतं कृतम् । रत्नं चोद्धुमशक्ताश्च ब्राह्मणाः पार्वतीव्रते ॥
इतिहासः श्रुतः सर्वः प्रकृतं शृणु नारद । श्रीकृष्णबालचरितं नूतनं नूतनं पदे पदे ॥१४४॥
हत्वा सान्दानवेन्द्रांश्च शिशुभिः सह गोकुले । जगाम स्वगृहं कृष्णः कुबेरभवनोपमम् ॥
सर्वेभ्यो वनवार्तां च प्रोक्तां च शिशुभिर्मुदा । श्रुत्वैवं विस्मिताः सर्वे नन्दो भयमवाप ह
आनीय वृद्धगोपांश्च गोपिकाः स्थविरास्तथा । युक्तिं चकार तैः सार्धमालोच्य सम-
योचिताम् ॥ १४७ ॥
कृत्वा युक्तिं च गोपेशस्तत्स्थानं त्यक्तुमुद्यतः । गन्तुं वृन्दावनं सर्वानुवाच तत्क्षणं मुने ॥
नन्दोक्तं च समाकर्ण्य ते सर्वे गन्तुमुद्यताः । गोपाश्च गोपिकाश्चैव बालका बालिकास्तथा॥
कृष्णेन हलिना सार्धं प्रययुर्बालका मुदा । संगीतं च प्रगायन्तो नानावेषसमन्विताः ॥
वेणुप्रवादकाः केचित्केचिच्छृङ्गप्रवादकाः । करतालकराः केचिद्वीणाहस्ताश्च केचन ॥
केचिद्यन्त्रकराः केचिच्छृङ्गहस्ताश्च केचन । नवपल्लवकर्णाश्च केचिद्गोपालबालकाः ॥
केचिन्मुकुटकर्णाश्च पुष्पकर्णाश्च केचन । नवमाल्यकराः केचित्केचिदामालमालिनः ॥

केचित्पल्लवचूडाश्च पुष्पचूडाश्च केचन । गोपालबालकाः सर्वे त्रिप्रेन्द्र नवकोटयः ॥
जग्मुर्गोप्यो वयस्याश्च कोटिशः कोटिशो मुदा । वृद्धाश्च कोटिशस्तत्र बृहच्छ्रोण्यश्च-
लत्कुचाः ॥ १६६ ॥
राधिकासहचारिण्यो बाला गोपालिका मुने । ताः सुशीलादयो गत्वा नानालंकारभूषिताः
दिव्यवस्त्रपरीधानाः सस्मितास्या ययुर्मुदा । काश्चिदारुह्य शिबिकां रथमारुह्य काश्चन ॥
राधा स्यन्दनमारुह्य शातकौम्भपरिच्छदम् । तामिर्युक्ता ययौ देवी रत्नालंकारभूषिता ॥
यशोदा रोहिणी चैव रत्नालंकारभूषिता । ययौ स्यन्दनमारुह्य शातकौम्भपरिच्छदम् ॥
नन्दः सुनन्दः श्रीदामा गिरिभानुर्विभाकरः । वीरभानुश्चन्द्रभानुर्गजस्थाः प्रययुर्मुदा ॥
श्रीकृष्णबलदेवौ तौ रत्नालंकारभूषितौ । स्वर्णस्यन्दनमारुह्य जग्मतुः परया मुदा ॥
कोटिशः कोटिशो गोपा वृद्धाश्च यौवनान्विताः । अश्वस्थाश्च गजस्थाश्च रथस्थाश्चैव केचन
गोपा ययुर्मुदा युक्ताश्चोद्धता नन्दकिंकराः । वृषस्था गर्दभस्थाश्च संगीततालतत्पराः ॥
अपरा राधिकादास्यस्त्रिंशच्छतकोटयः । मुदाऽन्विताः सस्मिताश्च स्वर्णालंकारभूषिताः
काश्चित्सिन्दूरहस्ताश्च काश्चित्कज्जलवाहिकाः । काश्चित्कन्दुकहस्ताश्च काश्चित्पुत्तलि-
काकराः ॥ १६९ ॥
भोगद्रव्यकराः काश्चित्क्रीडाद्रव्यकरा वराः । तैपद्रव्यकराः काश्चित्काश्चिन्मालाकरा वराः
काश्चिद्वाद्यकहस्ताश्च प्रययुर्गोपिका मुदा । वह्निशुद्धाकाना च वाहिकाश्चैव काश्चन ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रववाहिकाः । काश्चित्संगीतनिरताः काश्चिच्चित्रकथारताः ॥
कोटिशः कोटिशो रम्याः प्रययुः शिबिकान्विताः । कोटिशः कोटिशश्चाश्चाः कोटिशः
कोटिशो रथाः ॥ १६९ ॥
कोटिशः कोटिशश्चैव शकटा द्रव्यपूरिताः । कोटिशः कोटिशश्चैव वृषेन्द्रा द्रव्यवाहकाः
कोटिशः कोटिशश्चैव दासलक्षाणि हस्तिनाम् । हस्तिपाकुशयुक्तानि ययुर्वृन्दावनं वनम्
सर्वे वृन्दावनं गत्वा दृष्ट्वा शून्यगृहं मुने । वृक्षमूले यथास्थानं तस्थुः सर्वे यथोचितम् ॥
उवाच गोपाञ्छ्रीकृष्णो गृहांश्चोत्तमान्घनान् । अत्र संतिष्ठतेत्येवं श्रुत्वा श्रीकृष्णभाषितम्
कुत्र सन्ति गृहाः कृष्णेत्येवमूचुश्च गोपकाः । इति तेषां वचः श्रुत्वा श्रीकृष्णो वाक्य-
मब्रवीत् ॥ १७४ ॥

श्रीकृष्ण उवाच—

अत्र स्थाने गृहाः सन्ति प्रसन्ना देवनिर्मिताः । देवप्रीतिं विना शक्या न हि द्रष्टुं च केचन
अद्य तिष्ठत गोपालाः संपूज्य वनदेवताः । प्रातर्युयं गृहान्रम्यान्द्रक्ष्यथाथ ध्रुवं मुदा ॥

धूपदीपादिनैवेद्यैर्बलिभिः पुष्पचन्दनैः। देवीं च वटमूलस्थां पूजां कुरुत चण्डिकाम् ॥
कृष्णस्य वचनं श्रुत्वा गोपाः संपूज्य देवताम्। भुक्त्वा भोगान्दिने रात्रौ तत्रैव सुषुपुर्मुदा

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० मकप्रलम्बककेशिवधपूर्व-
कवृन्दावनगमनं नाम षोडशोऽध्यायः ॥ १६ ॥

अथ सप्तदशोऽध्यायः।

नारायण उवाच—

सुप्तेषु व्रजनन्देषु नक्तं वृन्दावने वने। सुनिद्रिते च निद्रेशे मातृवक्षःस्थलस्थिते ॥ १ ॥
निद्रितासु च गोपीषु रम्यतल्पस्थितासु च। यूनां च सुखसंयोगानुपक्तमानसासु च ॥
कासुचिच्छिशुयुक्तासु सखीयुक्तासु कासुचित्। कासुचिच्छकटस्थासु स्यन्दनस्थासु कासुचित्
पूर्णेन्दुकौमुदीयुक्ते स्वर्गादपि मनोहरे। नानाप्रकारकुसुमवायुना सुरभीकृते ॥ ४ ॥
सर्वप्राणिनि निश्चेष्टे मुहूर्ते पञ्चमे गते। तत्राऽऽजगाम भगवाञ्छिल्पिनां च गुरोर्गुरुः॥
बिभ्रद्दिव्यांशुकं सूक्ष्मं रत्नसारं मनोहरम्। रत्नालंकारमतुलं श्रीमन्मकरकुण्डलम् ॥
ज्ञानेन वयसा वृद्धो दर्शनीयः किशोरवत्। अतीव सुन्दरः श्रीमन्कामदेवसमप्रभः ॥
विशिष्टशिल्पनिपुणैः सार्धं शिल्पित्रिकोटिभिः। मणिरत्नैर्हेमरत्नैर्लोहास्त्रयुतहस्तकैः ॥
आजग्मुर्यक्षनिकराः कुबेरवरकिंकराः स्फाटिका रत्नवेषाश्च दीर्घस्कन्धाश्च केचन ॥९॥
पद्मरागकराः केचिदिन्द्रनीलकराः वराः। केचित्स्यमन्तककराश्चन्द्रकान्तकरास्तथा ॥
सूर्यकान्तकराश्चान्ये प्रभाकरकरा वराः। केचित्परशुहस्ताश्च लोहसारकरा वराः॥ ११॥
केचिच्च गन्धसाराणां मणीन्द्राणां च वाहकाः। केचिच्चामरहस्ताश्च केचिद्दर्पणवाहकाः
स्वर्णपात्रघटादीनां वाहकाश्चैव केचन। विश्वकर्मा च सामग्रीं दृष्ट्वा तु सुमनोहराम् ॥
नगरं कर्तुमारेभे ध्यात्वा कृष्णं शुभेक्षणम्। पञ्चयोजनविस्तीर्णं भारते श्रेष्ठमुत्तमम् ॥
पुण्यक्षेत्रं तीर्थसारमतिप्रियतमं हरेः। तत्रस्थानां मुमुक्षूणां परं निर्वाणकारणम्॥१५॥
गोलोकस्य च सोपानं सर्वेषां वाञ्छितप्रदम्। चतुष्कोटिचतुःशालं तत्रैव तिमनोहरम्॥
कपाटस्तम्भसोपानसहितैः प्रस्तरैर्वरैः। चित्रपुत्तलिकापुष्पकलशोज्ज्वलशेखरम्॥१७॥
शैलजारत्नविनिर्माणवेदिप्राङ्गणसंयुतम्। शिलाप्राकारसंयुक्तं प्रचकाराथ लीलया ॥
यथोचितबृहत्क्षुद्रद्वारद्वयसमन्वितम्। स्फाटिकाकारमणिभिर्मुदा युक्तो विनिर्ममे ॥
सोपानैर्गन्धसाराणां स्तम्भैः शङ्कुविनिर्मितैः। कपाटैर्लोहसाराणां राजतैः कलशोज्ज्वलैः

वज्रसारविनिर्माणप्राकारैः परिशोभितम् । कृत्वाऽऽश्रमं बल्लवानां यथास्थानं यथोचितम्
वृषभान्वालयं रम्यं कर्तुमारब्धवान्पुनः । प्राकारपरिखायुक्तं चतुर्द्वारान्वितं परम् ॥
चारुविंशचतुःशालं महामणिविनिर्मितम् । रत्नसारविकारैश्च तूलिकानिकरैर्वरैः ॥
सुवर्णाकारमणिभिरारोहैरतिसुन्दरैः । लोहसारकपाटैश्च शोभितं चित्रकृत्रिमैः ॥
मन्दिरे मन्दिरे रम्ये सुवर्णकलशोज्ज्वलम् । तदाश्रमैकदेशे च निर्ममेऽतिमनोहरे ॥
चारुचम्पकवृक्षाणामुद्यानाभ्यन्तरे मुने । संभोगार्थं कलावत्याः स्वामिना सह कौतुकात् ॥
विशिष्टेन मणीन्द्रेण चकाराट्टालिकालयम् । युक्तं नवभिरारोहैरिन्द्रनीलविनिर्मितैः ॥
स्थूणाकपाटनिकरैर्गन्धसारविकारजैः । अत्युच्छ्रितं मनोरम्यं सर्वतोऽपि विलक्षणम् ॥

नारद उवाच—

कलावती का भगवन्कस्य पत्नी मनोहरा । यत्नतो यद्गृहं रम्यं निर्ममे सुरकारुणा ॥

नारायण उवाच—

पितॄणां मानसी कन्या कमलांशा कलावती । सुन्दरी वृषभानस्य पतिव्रतपरायणा ॥२८॥
यस्याश्च तनया राधा कृष्णप्राणाधिका प्रिया । श्रीकृष्णार्धांशसंभूता तेन तुल्या च तेजसा
यस्याश्च चरणाम्भोजरजःपूता वसुंधरा । यस्यां च सुदृढां भक्तिं सन्तो वाञ्छन्ति संततम्

नारद उवाच—

पितॄणां मानसीं कन्यां मन्ये तिष्ठन्कथं मुने । मानवः केन पुण्येन कथमाप सुदुर्लभाम् ॥
वृषभानुर्वजपतिः पुराऽऽसीत्को महानहो । कस्य वा केन तपसा राधा कन्या बभूव ह ॥

सूत उवाच—

नारदस्य वचः श्रुत्वा महर्षिर्ज्ञानिनां वरः । प्रहस्योवाच प्रीत्या तमितिहासं पुरातनम् ॥

नारायण उवाच—

बभूवुः कन्यकास्तिस्रः पितॄणां मानसात्पुरा । कलावतीरत्नमालामेनकाश्चातिदुर्लभाः ॥
रत्नमाला च जनकं वरयामास कामुकी । शैलाधिपं हरेरंशं मेनका सा हिमालयम् ॥
दुहिता रत्नमालाया अयोनिसंभवा सती । श्रीरामपत्नी श्रीः साक्षात्सीता सत्यपरायणा
कन्यका मेनकायाश्च पार्वती सा पुरा सती । अयोनिसंभवा सा च हरेर्माया सनातनी ॥
सा लेभे तपसा देवं हरं नारायणात्मकम् । कलावती सुचन्द्रं च मनुवंशसमुद्भवम् ॥
स च राजा हरेरंशस्तां संप्राप्य कलावतीम् । मन्ये गुणवतां श्रेष्ठमात्मानमतिसुन्दरम् ॥
अहो रूपमहो वेषमहो अस्या नवं वयः । सुकोमलाङ्गं ललितं शारचन्द्राधिकाननम् ॥

गमनं दुर्लभमहो गजखञ्जनगञ्जनम् । कटाक्षैर्मोहितुं शक्ता मुनीन्द्राणां च मानसम् ॥४१॥
श्रोणियुग्मं सुललितं रम्भास्तम्भविनिर्मितम् । स्तनद्वयं सुकठिनमतिपीनोन्नतं मुने ॥४२॥
नितम्बयुगुलं चारु रथचक्रविनिर्मितम् । हस्तौ पादौ च रक्तौ च पक्वबिम्बफलाधरम् ॥
पक्वदाडिमबीजाभं दन्तपङ्क्तिमनोहरम् । शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम् ॥
भूषणैर्भूषितं रूपं कृतं सद्रत्नभूषणम् । इतीव मत्वा दृष्ट्वा च कामबाणप्रपीडितः ॥
दिव्यं स्यन्दनमारुह्य कामुकया सह कामुकः । क्रीडां चकार रहसि स्थाने स्थाने मनोहरे
रम्यायां मलयद्रोण्यां चन्दनागुरुवायुना । चारुचम्पकपुष्पाणां तल्पे रतिसुखावहे ॥४७॥
मालतीमल्लिकानां च पुष्पोद्यानेऽतिपुष्पिते । पुष्पभद्रानदीतीरे निर्जने केतकीवने ॥
मध्विमाक्षिकतटान्तःस्थकानने जन्तुवर्जिते । नन्दने मन्दरद्रोण्यां कावेरीतीरजे वने ॥४९॥
शैले शैले सुरम्ये च नद्यां नद्यां नदे नदे । द्वीपे द्वीपे तु रहसि स रेमे कामया सह ॥
नवसंगमसंयोगाद्बुबुधे न दिवानिशम् । एवं वर्षसहस्रं तद्गतमेव मुहूर्तवत् ॥ ५१ ॥
कृत्वा विहारं सुचिरं स विरक्तो बभूव ह । जगाम तपसे विन्ध्यशैलं तीर्थं तया सह ॥
भारतेऽतिप्रशस्यं च पुलहाश्रममुत्तमम् । तपस्तेपे नृपस्तत्र दिव्यवर्षसहस्रकम् ॥५३॥
मोक्षाकाङ्क्षी निःस्पृहश्च निराहारः कृशोदरः । मूर्छामाप मुनिश्रेष्ठ ध्यात्वा कृष्णपदाम्बुजम्
तद्गात्रव्याप्तवल्मीकं साध्वी दूरं चकार सा । निश्चेष्टितं पतिं दृष्ट्वा त्यक्तं प्राणैश्च पञ्चभिः
मांसशोणितरिक्तं तमस्थिसंसक्तविग्रहम् । उच्चै रुरोद शोकार्ता निर्जने तु कलावती ॥
हे नाथ नाथेत्युच्चार्य कृत्वा वक्षसि मूर्छितम् । विलप्य महादीना पतिव्रतपरायणा ॥
दृष्ट्वा नृपं निराहारं कृशं धमनिसंयुतम् । श्रुत्वा च रोदनं तस्याः कृपया च कृपानिधिः
आविर्बभूव जगतां विधाता कमलोद्भवः । क्रोडे कृत्वा च तं तूर्णं रुरोद भगवान्विभुः
ब्रह्मा कमण्डलुजलेनाऽऽसिच्य नृपविग्रहम् । जीवं संचारयामास ब्रह्मज्ञानेन ब्रह्मवित् ॥
नृपेन्द्रश्चेतनां प्राप्य पुरो दृष्ट्वा प्रजापतिम् । ननाम च तं दृष्ट्वा तं च कामसमप्रभम्
समुवाचेति संतुष्टो वरं वृणु यथेप्सितम् । स विधेर्वचनं श्रुत्वा वव्रे निर्वाणमीप्सितम् ॥
दयानिधे एवं ददय वरं दातुं समुद्यतः । प्रसन्नवदनः श्रीमान्स्मेराननसरोरुहः ॥६१॥
श्रुत्वाऽनुमानं मनसि शुष्ककण्ठोष्ठतालुका । तमुवाच सती त्रस्ता वरं दातुं समुद्यतम् ॥

कलावत्युवाच--

यदि मुक्तिं नृपेन्द्राय ददासि कमलोद्भव । अतोऽबलाया हे ब्रह्मन्का गतिर्भविता वद ॥
विना कान्तं च कान्तानां का शोभा चतुरानन । मतं पतिव्रतायाश्च पतिरेव श्रुतौ श्रुतम्
गुरुश्चाभीष्टदेवश्च तपोधर्ममयः पतिः । सर्वेभ्यश्च प्रियतरो न बन्धुः स्वामिनः परः ॥

स्वधर्मपरा ब्रह्मन्पतिसेवा सुदुर्लभा । स्वामिसेवाविहीनायाः सर्वं तन्निष्फलं भवेत् ॥
व्रतं दानं तपः पूजा जपहोमादिकं च यत् । स्नानं च सर्वतीर्थेषु पृथिव्याश्च प्रदक्षिणम् ।
दीक्षा च सर्वयज्ञेषु महादानानि यानि च । पठनं सर्ववेदानां सर्वाणि च तपांसि च ॥
वेदज्ञानां ब्राह्मणानां भोजनं देवसेवनम् । एतानि स्वामिसेवाया. कलां नार्हन्ति षोडशीम् ।
स्वामिसेवाविहीना या वदन्ति स्वामिने कटुम् । पतन्ति कालसूत्रे च यावच्चन्द्रदिवाकरौ ॥
सर्पप्रमाणाः कृमयो दशन्ति च दिवानिशम् । संततं विकृतं च कुर्वन्ति शब्दमुल्बणम् ॥
मूत्रश्लेष्मपुरीषाणां कुर्वन्ति भक्षणं मुदा । मुखे तासां ददत्येवमुल्कां च यमकिंकराः ॥
भुक्त्वा भोगं च नरके कृमियोनिं प्रयान्ति ताः । भक्षन्ति जन्मशतकं रक्तमांसपुरीषकम् ।
श्रुत्वाऽहं विदुषां वक्त्राद्वेदवाक्येषु निश्चितम् । जानामि किंचिदबला त्वं वेदजनको विभुः
गुरोर्गुरुश्च विदुषां योगिनां ज्ञानिनां तथा । सर्वज्ञमेवंभूतं त्वां बोधयामि किमुच्यते ॥
प्राणाधिकोऽयं कान्तोऽयं यदि मुक्तो बभूव ह । मम को रक्षिता ब्रह्मन्धर्मस्य यौवनस्य च
कौमारे रक्षिता तातो दत्त्वा पात्राय सत्कृतौ । सर्वदा रक्षिता कान्तस्तदभावे च तत्सुतः
त्रिष्ववस्थासु नारीणां त्रातारश्च त्रयः स्मृताः । याः स्वतन्त्राश्च ता नष्टाः सर्वधर्मबहिष्कृताः
असत्कुलप्रसूतास्ता कुलटा दुष्टमानसाः । शतजन्मकृतं पुण्यं तासां नश्यति पद्मज ॥
पुत्रस्नेहो यथा बाल्ये तथा यूनि च वार्धके । पतिव्रतानां कान्ते च सर्वकाले समा स्पृहा ॥
सुते स्तनंधये स्नेहो मातॄणां चातिशोभिते । पतिस्नेहस्य साध्वीनां कलां नार्हति षोडशीम् ।
स्तनान्धे स्तनदानान्तं मिष्टान्ने भोजनावधि । कान्ते चित्तं सतीनां च स्वप्ने ज्ञाने च संततम् ॥
दुःखान्तो बन्धुविच्छेदः पुत्राणां च ततोऽधिकः । सुदारुणः स्वामिनश्च दुःखं नातः परं स्त्रियाः
अविदग्धा यथा दग्धा ज्वलदग्नौ विपादने । तथा विदग्धा दग्धा स्याद्विदग्धाविरहानले ॥
नान्ने तृष्णा जले तृष्णा साध्वीनां स्वामिनं विना । विरहाग्नौ मनो दग्धं वह्नौ शुष्कतृणं यथा
न हि कान्तात्परो बन्धुर्नहि कान्तात्परः प्रियः । नहि कान्तात्परो देवो नहि कान्तात्परो गुरुः
नहि कान्तात्परो धर्मो नहि कान्तात्परं धनम् । नहि कान्तात्पराः प्राणा नहि कान्तात्परः
स्त्रियाः ॥ ८९ ॥

निमग्नं कृष्णपादाब्जे वैष्णवानां यथा मनः । यथैकपुत्रे मातुश्च यथा स्त्रीषु च कामिनाम् ।
धनेषु कृपणानां च चिरकालार्जितेषु च । यथा भयेषु भीतानां शास्त्रेषु विदुषां यथा ॥
स्तनादाने शिशूनां च दिदृक्षेषु शिशिना यथा । यथा जारे पुंश्चलीनां साध्वीनां च तथा प्रिये
तं विना जीवितुं ब्रह्मन्क्षणमेकं न च क्षमम् । मरणं जीवनं तासां जीवनं मरणाधिकम् ॥
सद्भर्तृरहितानां च शोकेन हतचेतसाम् । जन्मशोकनिमग्नानां कालेन पानभोजनात् ॥

विपरीतः कान्तशोको वर्धते मरणादहो । धर्मं छाया सतीनां च संगिनीनां सती वरा ॥
इतरे भोगदेहान्ते साध्वी जन्मनि जन्मनि । करोषि चेज्जगद्धातरिमं मुक्तं मया विना ॥
त्वां शप्त्वाऽहं त्वयि विभो पश्य दास्यामि स्त्रीवधम् ॥ ९६ ॥
श्रुत्वा कलावतीवाक्यमुवाच विस्मितो विधिः । हितं पीयूषसदृशं भयसंविग्नमानसः ॥

ब्रह्मोवाच—

वत्से मुक्तिं न दास्यामि स्वामिनं च त्वया विना । मुक्तं कर्तुं त्वया सार्धं सांप्रतं नाहमीश्वरः ॥ ९८ ॥
मातर्मुक्तिर्विना भोगाद्दुर्लभा सर्वसम्मता । निर्वाणतां समाप्नोति भोगी भोगविकृन्तने ॥
कतिवर्षं स्वर्गभोगं कुरुष्व स्वामिना सह । ततस्तु युवयोर्जन्म भविता भारते सति ॥
यदा भविष्यति सती कन्या ते राधिका स्वयम् । जीवन्मुक्तौ तया सार्धं गोलोकं च गमिष्यथः
कतिकालं नृपश्रेष्ठ भुङ्क्ष्व भोगं स्त्रिया सह । साध्वी वै सत्त्वयुक्ता च मा मा शप्तुं त्वमर्हसि
जीवन्मुक्ताः समाः सन्तः कृष्णपादाब्जमानसाः । वाञ्छन्ति हरिदास्यं च दुर्लभं न च निर्वृतिम् ॥ १०२ ॥
इत्युक्त्वा तौ वरौ दत्त्वा सतस्थौ पुरतस्तयोः । ययतुस्तौ तं प्रणम्य जगाम स्वालयं विधिः
आजग्मतुस्तौ कालेन भुक्त्वा भोगं च भारतम् । परं पुण्यप्रदं दिव्यं ब्रह्मादीनां च वाञ्छितम्
सुचन्द्रो वृषभानुश्च ललाभ जन्म गोकुले । पद्मावत्याश्च जठरे सुरभानस्य रेतसा ॥ ११६ ॥
जातिस्मरो हरेरंशः शुक्लपक्षे यथा शशी । ववर्धानुदिनं तत्र व्रजगेहे व्रजाधिपः ॥ ११७ ॥
सर्वज्ञश्च महायोगी हरिपादाब्जमानसः । नन्दबन्धुर्वेदज्ञश्च रूपवान्गुणवान्सुधीः ॥
कलावती कान्यकुब्जे बभूवायोनिसंभवा । जातिस्मरा महासाध्वी सुन्दरी कमलाकला ॥
कान्यकुब्जे नृपश्रेष्ठो भलन्दन उरुक्रमः । स तां संप्राप्य यागान्ते यज्ञकुण्डसमुत्थिताम् ॥
नग्नां हसन्तीं रूपाढ्यां स्तनान्धामिव बालिकाम् । तेजसा प्रज्वलन्तीं च प्रतप्तकनकप्रभाम्
कृत्वा वक्षसि राजेन्द्रः स्वकान्तायै ददौ मुदा । मालावती स्तनं दत्त्वा तां पुपोष प्रहर्षिता ॥
तदन्नप्राशनदिने सतां मध्ये शुभे क्षणे । नामरक्षणकाले च वागभूदशरीरिणी ॥ ११३ ॥
कलावतीति कन्याया नाम रक्ष नृपेति च ॥ ११४ ॥
इत्येवं वचनं श्रुत्वा तच्चकार महीपतिः । विप्रेभ्यो भिक्षुकेभ्यश्च बन्दिभ्यश्च धनं ददौ ॥
सर्वेभ्यो भोजयामास चकार सुमहोत्सवम् । कालेन सा रूपवती यौवनस्था बभूव ह ॥
अतीव सुन्दरी श्यामा मुनिमानसमोहिनी । चारुचम्पकवर्णाभा शरच्चन्द्रनिभानना ॥
ईषद्धास्यप्रसन्नास्या प्रफुल्लपद्मलोचना । नितम्बश्रोणिभारार्ता स्तनभारनता सती ॥ ११८ ॥

गच्छन्तीं राजमार्गेण गजेन्द्रमन्दगामिनीम् । ददर्श नन्दः पथि तां गच्छन्तीं च मुदाऽन्वितः
जितेन्द्रियश्च ज्ञानी च मूर्छामाप तथाऽपि च । त्रस्तो लोकान्पथि गतांस्तूर्णं पप्रच्छ सादरम्
गच्छन्ती कस्य कन्येयमिति होवाच तं जनः । भनन्दनस्य नृपतेः कन्या नाम्ना कलावती ॥
कमलाकलया कन्या संभूता नृपमन्दिरे । कौतुकेन च गच्छन्ती क्रीडार्थं सखिमन्दिरम् ॥
व्रजं व्रज व्रजश्रेष्ठेत्युक्त्वा लोको जगाम ह । प्रहृष्टमानसो नन्दो जगाम राजमन्दिरम् ॥
अवरुह्य रथात्तूर्णं विवेश नृपतेः सभाम् । उत्थाय राजा संभाष्य स्वर्णसिंहासनं ददौ ॥
इष्टालापं बहुतरं चकार च परस्परम् । विनयावनतो नन्दः संबन्धोक्तिं चकार ह ॥

नन्द उवाच—

शृणु राजेन्द्र वक्ष्यामि विशेषवचनं शुभम् । संबन्धं कुरु कन्याया विशिष्टेन च सांप्रतम्
सुरभानुसुतः श्रीमान्वृषभानुर्व्रजाधिपः । नारायणांशो गुणवान्सुन्दरश्च सुपण्डितः ॥
स्थिरयौवनयुक्तश्च योगी जातिस्मरो युवा । कन्या तेऽयोनिसंभूता यज्ञकुण्डसमुद्भवा ॥
त्रैलोक्यमोहिनी शान्ता कमलांशा कलावती । स च योग्यस्त्वद्दुहितुस्तद्योग्या ते च कन्यका
विदग्धाया विदग्धेन संबन्धो गुणवान्नृप । इत्येवमुक्त्वा नन्दस्तु विरराम च संसदि ॥
उवाच तं नृपश्रेष्ठो विनयावनतो मुने ॥ १२० ॥

भनन्दन उवाच—

संबन्धो हि विधिवशो न मे साध्यो व्रजाधिप । प्रजापतिर्योगकर्ता जन्मदाताऽहमेव च ॥
का कस्य पत्नी कन्या वा वरः को वा ससाधनः । कर्मानुरूपफलदः सर्वेषां कारणं विधिः
भवितव्यं कृतं कर्म तदमोघं श्रुतौ श्रुतम् । अन्यथा निष्फलं सर्वमनीशस्योद्यमो यथा ॥
वृषभानुप्रिया धात्रा लिखिता चेत्सुता मम । पुरा भूतैव को वाऽहं केनान्येन निवार्यते ॥
इत्येवमुक्त्वा राजेन्द्रो विनयानतकंधरः । मिष्टान्नं भोजयामास सादरेण च नारद ॥
नृपानुज्ञामुपादाय व्रजराजो व्रजं गतः । गत्वा स कथयामास सुरभानस्य संसदि ॥
सुरभानश्च यत्नेन नन्दनेन च सादरम् । संबन्धं योजयामास गर्गद्वारा च सत्वरम् ॥
विवाहकाले राजेन्द्रो विपुलं यौतकं ददौ । गजरत्नमश्वरत्नं रत्नानि मणिभूषणम् ॥
वृषभानुर्मुदा युक्तः प्राप्य तां च कलावतीम् । रेमे सुनिर्जने रम्ये बुबुधे न दिवानिशम् ॥
चक्षुर्निमेषविरहाद्व्याकुला स्वामिना विना । व्याकुलो वृषभानश्च क्षणेन च तया विना ॥
जातिस्मरा च सा कन्या मायामानुषरूपिणी । जातिस्मरो हरेरंशो वृषभानो मुदाऽन्वितः
ववर्ध च तयोः प्रेम नित्यं नित्यं नवं नवम् । सदा सकामा सा प्रौढा स च कामसमो युवा
तयोः कन्या च कालेन राधिका सा बभूव ह । देवान्सुदामशापेन श्रीकृष्णस्याऽऽज्ञया पुरा

अयोनिसंभवा सा च कृष्णप्राणाधिका सती । यस्या दर्शनमात्रेण तौ विमुक्तौ बभूवतुः
इतिहासश्च कथित प्रकृत शृणु साम्प्रतम् । पापेन्धनाना दाहे च ज्वलदग्निशिखोपम ॥
वृषभ नाश्रम गत्वा शिल्पिना प्रवरो मुने । स्थानान्तरं विश्वकर्मा जगाम स्वगणै सह ॥
क्रोशमात्र स्थल चारु मनसाऽऽलोच्य तत्त्ववित् । आश्रम कर्तुमारेभे नन्दस्य सुमहात्मनः
कृत्वाऽनुमान बुद्ध्या च सर्वेभ्योऽपि विलक्षणम् । परिखाभिर्गभीराभिश्चतुर्भि संयुत वरम्
दुर्लङ्घ्याभिर्वैरिभिश्च खनिताभिश्च प्रस्तरै । पुष्पोद्याने पुष्पिताभि पारावारेषु पुष्पितै
चारुचम्पकवृक्षैश्च पुष्पितै सुमनोहरै । परितो वासिताभिश्च सुगन्धिवायुना मुने ॥
आम्रैर्गुडाले पनसै खर्जूरैर्नारिकेलकै । दाडिमै श्रीफलैर्भृङ्गैर्जम्बीरैर्नागरङ्गकै ॥
शुद्धैराम्रातकैर्जम्बुसमूहैश्च फलान्वितै । कदलीना केतकीना कदम्बाना कदम्बकै ॥
सर्वत्र शोभिताभिश्च फलैस्तै पुष्पितैरहो । क्रीडार्हाभिर्निगूढाभिर्वाञ्छिताभिश्च सर्वदा
परिखाना रहःस्थाने चकार मार्गमुत्तमम् । दुर्गम परवर्गाणा स्वाना च सुगम सदा ॥
सङ्केतेन मणिस्तम्भैश्छादितै स्वच्छपाथसा । स्तम्भसीमाकृतमहो न सङ्कीर्ण न विस्तृतम्
परिखोपरिभागे च प्राकार सुमनोहरम् । धनु शतप्रमाण च चकारातिसमुच्छ्रितम् ॥
प्रस्तरस्य प्रमाण च पञ्चविंशतिहस्तकम् । सिन्दूराकारमणिभिर्निर्मित चातिसुन्दरम् ॥
बाह्ये द्वाभ्या च संयुक्तम तरे सप्तभिस्तथा । द्वाभिश्च सन्निरुद्धाभिर्मणिसारकपाटकै ॥
हरिन्मणीना कलशैश्चित्रदुक्तैर्विराजितम् । मणिसारविकारैश्च कपाटैश्च सुशोभितम् ॥
स्वर्णसारविनिर्माणकलशोज्ज्वलशेखरम् । नन्दालय विनिर्माय बभ्राम नगर पुन ॥
राजमार्गांश्च विविधान्स च चारूंश्चकार ह । रक्तभानुविकारैश्च वेदिभिश्च सुपत्तनै ॥
पारावारे च परितो निबद्धांश्च मनोहरान् । वाणिज्यार्हैश्च वणिजा परितो मणिमण्डपै ॥
सर्वतो दक्षिणे वामे ज्वलद्भिश्च विराजितान् । ततो वृन्दावन गत्वा निर्ममे रासमण्डलम्
सुन्दर मण्डलाकार मणिप्राकारसंयुतम् । परितो योजनायाम मणिवेदिभिरन्वितम् ॥
मणिसारविकारैश्च मण्डपैर्नवकोटिभि । शृङ्गारार्हैश्च चित्राढ्यै रतितल्पसमन्वितै ॥
नानाजातिप्रसूनाना वायुना सुरभीकृतै । रत्नप्रदीपसंयुक्तै सुवर्णकलशोज्ज्वलै ॥
पुष्पोद्याने पुष्पितैश्च सरोभिश्च सुशोभितम् । रासस्थल विनिर्माय जगामान्यत्स्थल पुर
दृष्ट्वा वृन्दावन रम्य परितुष्टो बभूव ह । वृन्दावनाभ्यन्तरे च स्थाने स्थाने सुनिर्जने ॥
कृत्वा परिमित बुद्ध्या मनसाऽऽलोच्य यत्नत । विलक्षणानि रम्याणि तत्र त्रिंशद्वनानि च
राधामाधवयोरेव क्रीडार्थं च विनिर्ममे । ततो मधुवनाभ्याशे निर्जनेऽतिमनोहरे ॥ १७० ॥
वटमूलसमीपे च सरस पश्चिमे तटे । चम्पकोद्यानपूर्वस्या वेतसीवनमध्यत ॥ १७१ ॥

पुनस्तयोश्च क्रीडार्थं चकार रत्नमण्डपम्। चतुर्भिर्वेदिकाभिश्च परीतमतिसुन्दरम्॥
सद्रत्नसाररचितं राजितं तूलिकाशतैः। अमूल्यरत्नरचितैर्नानाचित्रेण चित्रितैः॥१७३॥
कपाटैर्नवभिर्युक्तं नवद्वारैर्मनोहरैः। रत्नेन्द्रचित्रकलशैः कृत्रिमैश्च त्रिकोटिभिः॥१७४॥
परितः परितो भित्त्यामूर्ध्वं च परिशोभितम्। महामणीन्द्रविकृतैरारोहैर्नवभिर्वृतम्॥
सद्रत्नसाररचितकलशोज्ज्वलशेखरम्। पताकातोरणैर्युक्तं शोभितं श्वेतचामरैः॥१७६॥
सर्वतः पुरतो दीप्तममूल्यरत्नदर्पणैः। धनुःप्रमाणशतकमूर्ध्वमग्निशिखोपमम्॥१७७॥
शतहस्तप्रमाणं च प्रस्तारं वर्तुलाकृतिम्। शोभितं रत्नतल्पैश्च तदभ्यन्तरमुत्तमम्॥
वह्निशुद्धांशुकैर्दिव्यैर्माल्यजालविचित्रितैः। पारिजातप्रसूनानां माल्योपधानसंयुतैः॥
चन्दनागुरुकस्तूरीकुङ्कुमैः सुरभीकृतम्। नवशृङ्गाररूपैश्च कामवर्धनकारिभिः॥१८०॥
मालतीचम्पकानां च पुष्पराजिभिरन्वितम्। सकर्पूरैश्च ताम्बूलैः सद्रत्नपात्रसंस्थितैः॥
वज्रसारेण खचितैर्मुक्ताजालविलम्बिभिः। रत्नसारघटाकीर्णं रत्नपीठैः सुसंयुतम्॥
रत्नसिंहासनैर्युक्तं रत्नचित्रेण चित्रितैः। कारितं चन्द्रकान्तैश्च सुसिक्तं जलबिन्दुभिः॥
शीतवासिततोयेन संयुक्तं भोगवस्तुभिः। कृत्वा रतिगृहं रम्यं नगरं च पुनर्यथौ॥
यानि देवानां मन्दिराणि तन्नामानि लिलेख सः। मुदा युक्तो विश्वकर्मा दिव्यैर्यक्षगणैः सह॥
निर्देशं निर्दिशं नत्वा प्रययौ स्वाश्रयं मुने। सर्वैरेवं सुदृश्यानां सदृशं भगवत्कृपा॥१८३॥
नेहाऽऽश्चर्यं च नगरं बभूवेशेच्छया भुवि। इत्येवं कथितं सर्वं हरेश्चरितमङ्गलम्॥१८४॥
सुखदं पातकहरं किं भूयः श्रोतुमिच्छसि॥

नारद उवाच—

कथं वृन्दावनं नाम काननस्यास्य भारते। व्युत्पत्तिरस्य संज्ञा वा तत्त्वं वद सुतत्त्ववित्॥

सूत उवाच—

नारदस्य वचः श्रुत्वा ऋषिर्नारायणो मुदा। प्रहस्योवाच निखिलं तत्त्वमेव पुरातनम्॥

नारायण उवाच—

पुरा केदारनृपतिः सप्तद्वीपपतिः स्वयम्। आसीत्सत्ययुगे ब्रह्मन्सत्यधर्मरतः सदा॥
स रेमे सह नारीभिः पुत्रपौत्रगणैः सह। पुत्रानिव प्रजाः सर्वाः पालयामास धार्मिकः॥
कृत्वा क्रतुशतं राजा लेभे नेन्द्रत्वमीप्सितम्। कृत्वा नानाविधं पुण्यं फलकाङ्क्षी न च स्वयम्॥
नित्यं नैमित्तिकं सर्वं श्रीकृष्णप्रीतिपूर्वकम्। केदारतुल्यो राजेन्द्रो न भूतो भविता पुनः॥
पुत्रेषु राज्यं संन्यस्य प्रियां त्रैलोक्यमोहिनीम्। जैगीषव्योपदेशेन जगाम तपसे वनम्॥

१ क. रत्नापूरितपीठेषु।

हरेरेकान्तिको भक्तो ध्यायते संततं हरिम्। शश्वत्सुदर्शनं चक्रमस्ति यत्संनिधौ मुने ॥
चिरं तप्त्वा मुनिश्रेष्ठो गोलोकं च जगाम स। केदारं नाम तीर्थं च तन्नाम्ना च बभूव ह॥
तत्रापि मृतः प्राणी सद्यो मुक्तो भवेद्ध्रुवम्। कमलाशा तस्य कन्या नाम्ना वृन्दा तपस्विनी
न वव्रे सा वरं कंचिद्योगशास्त्रविशारदा। दत्तो दुर्वाससा तस्यै हरेर्मन्त्रः सुदुर्लभः॥
सा विरक्ता गृहं त्यक्त्वा जगाम तपसे वनम्। षष्टिवर्षसहस्राणि तपस्तेपे सुनिर्जने॥
आविर्बभूव श्रीकृष्णस्तत्पुरो भक्तवत्सलः। प्रसन्नवदनः श्रीमान्वरं वृणित्युवाच सः॥
दृष्ट्वा सा राधिकाकान्तं शान्तं सुन्दरविग्रहम्। मूर्छां संप्राप सा सद्यः कामबाणप्रपीडिता॥
सा च शीघ्रं वरं वव्रे पतिस्त्वं मे भवेति च। ओमित्युक्त्वा च रहसि चिरं रेमे तया सह
सा जगाम च गोलोकं कृष्णेन सह कौतुकात्। राधासमा सा सौभाग्याद्गोपीश्रेष्ठा बभूव ह॥
वृन्दा यत्र तपस्तेपे तत्तु वृन्दावनं स्मृतम्। वृन्दयाऽत्र कृता क्रीडा तेन वा मुनिपुंगव॥
अथान्यं चेतिहासं च शृणुष्व वत्स पुण्यदम्। येन वृन्दावनं नाम निबोध कथयामि ते॥
कुशध्वजस्य कन्ये द्वे धर्मशास्त्रविशारदे। तुलसीवेदवत्यौ च विरक्ते भवकर्मणि॥
तपस्तप्त्वा वेदवती प्राप नारायणं परम्। सीता जनककन्या सा सर्वत्र परिकीर्तिता॥
तुलसी च तपस्तप्त्वा वाञ्छां कृत्वा हरिं प्रति। दैवाद्दुर्वाससः शापात्प्राप्य शङ्खासुरं पतिम्
पश्चात्संप्राप्य कमलाकान्तं कान्तं मनोहरम्। सा चैव हरिशापेन वृक्षरूपा सुरेश्वरी॥
तस्याः शापेन च हरिः शालग्रामो बभूव ह। तथा तस्यौ च सततं शिलावक्षसि सुन्दरी॥
विस्तीर्णं कथितं सर्वं तुलसीचरिते च ते। तथाऽपि च प्रसङ्गेन किंचिदुक्तं मुने पुनः॥
तस्याश्च तपसः स्थानं तदिदं च तपोधन। तेन वृन्दावनं नाम प्रवदन्ति मनीषिणः॥२१२॥
अथवा ते प्रवक्ष्यामि परं हेत्वन्तरं शृणु। येन वृन्दावनं नाम पुण्यक्षेत्रस्य भारते॥२१३॥
राधाषोडशनाम्नां च वृन्दानाम श्रुतौ श्रुतम्। तस्याः क्रीडावनं रम्यं तेन वृन्दावनं स्मृतम्
गोलोके प्रीतये तस्याः कृष्णेन निर्मितं पुरा। क्रीडार्थं भुवि तन्नाम्ना वनं वृन्दावनं स्मृतम्

नारद उवाच—

कानि षोडश नामानि राधिकाया जगद्गुरो। तानि मे वद शिष्याय श्रोतुं कौतूहलं मम
श्रुतं नाम्नां सहस्रं च सामवेदे निरूपितम्। तथाऽपि श्रोतुमिच्छामि त्वत्तो नामानि षोडश
अभ्यन्तराणि तेषां वा तदन्यान्येव मे विभो। अहो पुण्यस्वरूपाणि भक्तानां वाञ्छितानि च
नामानि तेषां त्वत्तानि सर्वेषां दुर्लभानि च। पावनानि जगन्मातुर्जगतामपि कारणम्॥

नारायण उवाच—

राधा रासेश्वरी रासवासिनी रसिकेश्वरी। कृष्णप्राणाधिका कृष्णप्रिया कृष्णस्वरूपिणी॥

कृष्णवामाङ्गसंभूता परमानन्दरूपिणी । कृष्णा वृन्दावनी वृन्दा वृन्दावनविनोदिनी ॥
चन्द्रावती चन्द्रकान्ता शतचन्द्रनिभानना । नामान्येतानि साराणि तेषामभ्यन्तराणि च ॥
राधेत्येवं च संसिद्धा राकारो दानवाचकः । स्वयं निर्वाणदात्री या सा राधा परिकीर्तिता ॥
रा च रासे च भवनाद्धा एव धारणादहो । हरेरालिङ्गनादारात्तेन राधा प्रकीर्तिता ॥
रासेश्वरस्य पत्नीयं तेन रासेश्वरी स्मृता । रासे च वासो यस्याश्च तेन सा रासवासिनी ॥
सर्वासां रसिकानां च देवीनामीश्वरी परा । प्रवदन्ति पुरा सन्तस्तेन तां रसिकेश्वरीम् ॥
प्राणाधिका प्रेयसी सा कृष्णस्य परमात्मनः । कृष्णप्राणाधिका सा च कृष्णेन परिकीर्तिता ।
कृष्णस्यातिप्रिया कान्ता कृष्णो वाऽस्याः प्रियः सदा । सर्वैर्देवगणैरुक्ता तेन कृष्णप्रिया स्मृता ॥ २२७ ॥
कृष्णरूपं संविधातुं या शक्ता चावलीलया । सर्वांशैः कृष्णसदृशी तेन कृष्णस्वरूपिणी
वामाङ्गार्धेन कृष्णस्य या संभूता परा सती । कृष्णवामाङ्गसंभूता तेन कृष्णेन कीर्तिता ॥
परमानन्दराशिश्च स्वयं मूर्तिमती सती । श्रुतिभिः कीर्तिता तेन परमानन्दरूपिणी ॥
कृषिर्मोक्षार्थवचनो न एवोत्कृष्टवाचकः । आकारो दातृवचनस्तेन कृष्णा प्रकीर्तिता ॥
अस्ति वृन्दावनं यस्यास्तेन वृन्दावनी स्मृता । वृन्दावनस्याधिदेवी तेन वाऽथ प्रकीर्तिता ॥
संघः सखीनां वृन्दः स्यादकारोऽप्यस्तिवाचकः । सखिवृन्दोऽस्ति यस्याश्च सा वृन्दा परिकीर्तिता ॥ २३९ ॥
वृन्दावने विनोदश्च सोऽस्या ह्यस्ति च तत्र वै । वेदा वदन्ति तां तेन वृन्दावनविनोदिनीम् ॥
नखचन्द्रावलीवक्त्रचन्द्रोऽस्ति यत्र संततम् । तेन चन्द्रावती सा च कृष्णेन परिकीर्तिता ॥
कान्तिरस्ति चन्द्रतुल्या सदा यस्या दिवानिशम् । सा चन्द्रकान्ता हर्षेण हरिणा परिकीर्तिता ।
शरच्चन्द्रप्रभा यस्याश्चाऽऽननेऽस्ति दिवानिशम् । मुनिना कीर्तिता तेन शरच्चन्द्रप्रभानना ॥
इदं षोडशनामोक्तमर्थव्याख्यानसंयुतम् । नारायणेन यद्दत्तं ब्रह्मणे नाभिपङ्कजे ॥२४०॥
ब्रह्मणा च पुरा दत्तं धर्माय जनकाय मे । धर्मेण कृपया दत्तं मह्यमादित्यपर्वणि ॥२४१॥
पुष्करे च महातीर्थे पुण्याहे देवसंसदि । राधाप्रभावप्रस्तावे सुप्रसन्नेन चेतसा ॥२४२॥
इदं स्तोत्रं महापुण्यं तुभ्यं दत्तं मया मुने । निन्दकायावैष्णवाय न दातव्यं महामुने ॥२४३॥
यावज्जीवमिदं स्तोत्रं त्रिसंध्यं यः पठेन्नरः । राधामाधवयोः पादपद्मे भक्तिर्भवेदिह ॥२४४॥
अन्ते लभेत्तयोर्दास्यं शश्वत्सहचरो भवेत् । अणिमादिकसिद्धिं च संप्राप्य नित्यविग्रहम् ॥
व्रतदानोपवासैश्च सर्वैर्नियमपूर्वकैः । चतुर्णां चैव वेदानां पाठैः सर्वार्थसंयुतैः ॥ २४६ ॥

---

१ ध. धेनिपा ।

सर्वेषां यज्ञतीर्थानां करणैर्विधिबोधितैः । प्रदक्षिणेन भूमेश्च कृत्स्नाया एवं सप्तधा ॥२४७॥
शरणागतरक्षाया भक्तानां ज्ञानदानतः । देवानां वैष्णवानां च दर्शनेनापि यत्फलम् ॥
तदेव स्तोत्रपाठस्य कलां नार्हति षोडशीम् । स्तोत्रस्यास्य प्रभावेण जीवन्मुक्तो भवेन्नरः ॥

नारद उवाच—

संप्राप्तं परमाश्चर्यं स्तोत्रं सर्वसुदुर्लभम् । कवचं चापि देव्याश्च संसारविजयं प्रभो ॥
कृतं स्तोत्रं सुयत्नेन प्राप्तं तदपि दुर्लभम् । श्रुत्वा कृष्णकथां चित्रां त्वत्पादाब्जप्रसादतः ॥
अधुना श्रोतुमिच्छामि यद्रहस्यं च तद्वद । प्रातश्च नगरं दृष्ट्वा किमूचुर्वल्लवा मुने ॥

नारायण उवाच—

गतायां तत्र यामिन्यां गते च विश्वकर्मणि । अरुणोदयवेलायां जनाः सर्वे जजागरुः ॥
उत्थाय दृष्ट्वा नगरं सर्वेभ्योऽपि विलक्षणम् । किमाश्चर्यं किमाश्चर्यमित्यूचुर्व्रजवासिनः
कांश्चिद्गोपान्केचिदूचुः कुत एतदभूदिदम् । न जाने केन रूपेण को भूपो प्रभवेदिति ॥
बुबुधे मनसा नन्दो गर्गवाक्यमनुस्मरन् । श्रीहरेरिच्छया सर्वं जगदेतच्चराचरम् ॥२५६॥
ब्रह्मादितृणपर्यन्तं यस्य भ्रूभङ्गलीलया । आविर्भूतं तिरोभूतं तस्यासाध्यं च किं कुतः ॥
विवरेष्वेव यल्लोम्नां ब्रह्माण्डान्यखिलानि च । ईशस्य तन्महाविष्णोः किमसाध्यं हरेरहो
ब्रह्मानन्तेशधर्माश्च ध्यायन्ते यत्पदाम्बुजम् । किमसाध्यं तदीशस्य मायामानुषरूपिणः ॥
भ्रामं भ्रामं तन्नगरं दर्शं दर्शं गृहं गृहम् । पाठं पाठं च नामानि सर्वेभ्यो निलयं ददौ ॥
कृत्वा शुभक्षणं नन्दो वृषभानश्च कौतुकी । चकार स गणैः सार्धं मुदाऽऽश्रमनिवेशनम् ॥
सर्वे वृन्दावनस्थाश्च प्रसन्नवदनेक्षणाः । मुदा प्रवेशनं चक्रुः स्वं स्वमाश्रममुत्तमम् ॥
सर्वे मुमुदिरे गोपाः स्वे स्वे स्थाने मनोहरे । बालका बालिकाश्चैव चिक्रीडुश्च प्रहर्षिताः ॥
श्रीकृष्णो बलदेवश्च शिशुभिः सह कौतुकात् । क्रीडां चकार तत्रैव स्थाने स्थाने मनोहरे ॥
इत्येवं कथितं सर्वं निर्माणं नगरस्य च । अबलानां वने रासमण्डलस्य च नारद ॥२६५॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारद० वृन्दावननगरवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

अथाष्टादशोऽध्यायः ।

शौनक उवाच—

अहो विचित्रं सूत रम्यं सुमनोहरम् । श्रुतं कृष्णस्य चरितं सुखदं मोक्षदं परम् ॥

सूत उवाच—
श्रुत्वा नगरनिर्माणं नारदो मुनिसत्तमः । पप्रच्छ कृष्णचरितमपरं सुमनोहरम् ॥ २ ॥
नारद उवाच—
श्रीकृष्णाख्यानचरितं पीयूषमृषिसत्तम । ज्ञानसिन्धो निगद मां शिष्यं च शरणागतम्
नारदस्य वचः श्रुत्वा मुदा नारायणः स्वयम् । उवाच परमाशिरस्य चरितं परमाद्भुतम्
नारायण उवाच—
एकदा बालकैः सार्धं बलेन सह माधवः । जगाम श्रीमधुवनं यमुनातीरनीरजम् ॥५॥
विचेरुर्गोसहस्रैश्च चिक्रीडुर्बालकास्तदा । विश्रान्तास्तृट्परीताश्च क्षुधाऽतिपरिपीडिताः ॥
तमूचुर्गोपशिशवः श्रीकृष्णं परमेश्वरम् । क्षुदस्मान्बाधते कृष्ण किं कुर्मो ब्रूहि किंकरान् ॥
शिशूनां वचनं श्रुत्वा तानुवाच दयानिधिः । हितं तथ्यं च वचनं प्रसन्नवदनेक्षणः ॥
श्रीकृष्ण उवाच—
बाला गच्छत विप्राणां यज्ञस्थानं सुखावहम् । अन्नं याचत ताञ्शीघ्रं ब्राह्मणांश्च क्रतू-
न्मुखान् ॥ ९ ॥
विप्रा आङ्गिरसाः सर्वे स्वाश्रमे श्रीवनान्तिके । यज्ञं कुर्वन्ति विप्राश्च श्रुतिस्मृतिविशारदाः
निःस्पृहा वैष्णवाः सर्वे मां यजन्ति मुमुक्षवः । मायया मां न जानन्ति मायामानुषरूपिणम्
न चेद्ददति युष्मभ्यमन्नं विप्राः क्रतून्मुखाः । तत्कान्ता याचत क्षिप्रं दयायुक्ताः शिशून्प्रति
श्रीकृष्णवचनं श्रुत्वा ययुर्बालकपुंगवाः । पुरतो ब्राह्मणानां च तस्थुरानम्रकंधराः ॥
इत्यूचुर्बालकाः शीघ्रमन्नं दत्त द्विजोत्तमाः । न शुश्रुवुर्द्विजा वै चित्ते चिच्छुत्वा स्थिराः
स्थिताः ॥ १४ ॥
ते ययू रन्धनागारं ब्राह्मण्यो यत्र पाचिकाः । गत्वा बाला विप्रभार्याः प्रणेमुर्नतकंधराः ॥
नत्वोचुर्बालकाः सर्वे विप्रभार्याः पतिव्रताः । अन्नं दत्त मातरोऽस्मान्क्षुधार्तान्बालकानपि
बालानां वचनं श्रुत्वा दृष्ट्वा तांश्च मनोहरान् । पप्रच्छुः सादरं साध्व्यः स्मेराननसरोरुहाः
विप्रपत्न्य ऊचुः—
के यूयं प्रेषिताः केन कानि नामानि कोविदाः । दास्यामोऽन्नं बहुविधं व्यञ्जनैः सहितं वरम्
ब्राह्मणीनां वचः श्रुत्वा ता ऊचुस्ते मुदाऽन्विताः । स्निग्धा हसन्तः स्फीताश्च सर्वे गोपा-
लबालकाः ॥ १९ ॥
बाला ऊचुः—
प्रेषिता रामकृष्णाभ्यां वयं क्षुत्पीडिता भृशम् । दत्तान्नं मातरोऽस्मभ्यं क्षिप्रं यामस्तदन्तिकम्

इतो विदूरे भाण्डीरे वनाभ्यन्तरमेव च । वटमूले मधुवने वसन्तौ रामकेशवौ ॥ २१ ॥
विश्रान्तौ क्षुधितौ तौ च याचेतेऽन्नं च मातरः । किमु देयमदेयं वा शीघ्रं वदत नोऽधुना ॥
गोपानां वचनं श्रुत्वा हृष्टानन्दाश्रुलोचनाः । पुलकाङ्कितसर्वाङ्ग्यस्तत्पादाब्जमनोरथाः ॥
नानाव्यञ्जनसंयुक्तं शाल्यन्नं सुमनोहरम् । पायसं पिष्टकं स्वादु दधि क्षीरं घृतं मधु ॥
रौप्ये कांस्ये राजते च पात्रे कृत्वा मुदाऽन्विताः । ताः सर्वा विप्रपत्न्यश्च प्रययुः कृष्ण-
संनिधिम् ॥ २६ ॥
नानामनोरथं कृत्वा मनसा गमनोत्सुकाः । पतिव्रतास्ता धन्याश्च श्रीकृष्णदर्शनोत्सुकाः
श्रीकृष्णं ददृशुर्गत्वा रामं च सहबालकम् । वटमूले वसन्तं तमुडुमध्ये यथोडुपम् ॥२७॥
श्यामं किशोरवयसं पीतकौशेयवाससम् । सुन्दरं सस्मितं शान्तं राधाकान्तं मनोहरम् ॥
शरत्पार्वणचन्द्रास्यं रत्नालंकारभूषितम् । रत्नकुण्डलयुग्माभ्यां गण्डस्थलविराजितम् ॥
रत्नकेयूरवलयरत्ननूपुरभूषितम् । आजानुलम्बितां शुभ्रां बिभ्रतं रत्नमालिकाम् ॥३०॥
मालतीमालया कण्ठवक्षःस्थलविराजितम् । चन्दनागुरुकस्तुरीकुङ्कुमाचितविग्रहम् ॥
सुनसं सुकपोलं च पक्वबिम्बाधरं वरम् । पक्वदाडिमबीजाभं बिभ्रतं दन्तमुत्तमम् ॥३२॥
शिखिपिच्छसमायुक्तं बद्धचूडं परात्परम् । कदम्बपुष्पयुग्माभ्यां कर्णमूले विराजितम् ॥
ध्यानासाध्यं योगिनां च भक्तानुग्रहकारकम् । ब्रह्मेशधर्मशेषेन्द्रैः स्तूयमानं मुनीश्वरैः ॥
दृष्ट्वैवमीश्वरं भक्त्या प्रणेमुर्द्विजयोषितः । स्वानां ज्ञानानुरूपं च तुष्टुवुर्मधुसूदनम् ॥

विप्रपत्न्य ऊचुः—

त्वं ब्रह्म परमं धाम निरीहो निरहंकृतिः । निर्गुणश्च निराकारः साकारः सगुणः स्वयम् ॥
साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः । प्रकृतिः पुरुषस्त्वं च कारणं च तयोः परम् ॥
सृष्टिस्थित्यन्तविषये ये च देवास्त्रयः स्मृताः । ते त्वदंशाः सर्वबीजा ब्रह्मविष्णुमहेश्वराः ॥
यस्य लोम्नां च विवरे चाखिलं विश्वमीश्वर । महाविराण्महाविष्णुस्त्वं तस्य जनको विभो ॥
तेजस्त्वं चापि तेजस्वी ज्ञानं ज्ञानी च तत्परः । वेदेऽनिर्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥
महदादिसृष्टिसूत्रं पञ्चतन्मात्रमेव च । बीजं त्वं सर्वशक्तीनां सर्वशक्तिस्वरूपकः ॥४१॥
सर्वशक्तीश्वरः सर्वः सर्वशक्त्याश्रयः सदा । त्वमनीहः स्वयंज्योतिः सर्वानन्दः सनातनः
अहोऽप्याकारहीनस्त्वं सर्वविग्रहवानपि । सर्वेन्द्रियाणां विषयं जानासि नेन्द्रियी भवान्
सरस्वती जडीभूता यत्स्तोत्रे यन्निरूपणे । जडीभूतो महेशश्च शेषो धर्मो विधिः स्वयम् ॥
पार्वती कमला राधा सावित्री वेदसूरपि । वेदश्च जडतां याति के वा शक्ता विपश्चितः ॥

१ क. पुनर्धं ।

वयं किं स्तवनं कुर्मः स्त्रियः प्राणेश्वरेश्वर । प्रसन्नो भव नो देव दीनबन्धो कृपां कुरु ॥
इति पेतुश्च ता विप्रपत्न्यस्तच्चरणाम्बुजे । अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः ॥८७॥
विप्रपत्नीकृतं स्तोत्रं पूजाकाले च यः पठेत् । स गतिं विप्रपत्नीनां लभते नात्र संशयः ॥

नारायण उवाच—

ताः पदाम्भोजपतिता दृष्ट्वा श्रीमधुसूदनः । वरं वृणुत कल्याणं भविता चेत्युवाच ह ॥
श्रीकृष्णस्य वचः श्रुत्वा विप्रपत्न्यो मुदाऽन्विताः । तमूचुर्वचनं भक्त्या भक्तिनम्रात्मकंधराः

द्विजपत्न्य ऊचुः—

वरं कृष्ण न गृह्णीमो नः स्पृहा त्वत्पदाम्बुजे । देहि त्वं दास्यमस्मभ्यं दृढां भक्तिं सुदुर्लभाम्
पश्यामोऽनुक्षणं वक्त्रसरोजं तव केशव । अनुग्रहं कुरु विभो न यास्यामो गृहं पुनः ॥९२॥
द्विजपत्नीवचः श्रुत्वा श्रीकृष्णः करुणानिधिः । ओमित्युक्त्वा त्रिलोकेशस्तस्थौ बालकसंसदि
प्रदत्तं विप्रपत्नीभिर्मिष्टमन्नं सुधोपमम् । बालकान्भोजयित्वा तु स्वयं च बुभुजे विभुः ॥
एतस्मिन्नन्तरे तत्र शातकुम्भं रथं परम् । ददृशुर्विप्रपत्न्यश्च पतन्तं गगनाद्दहो ॥ ९५ ॥
रत्नदर्पणसंयुक्तं रत्नसारपरिच्छदम् । रत्नस्तम्भैर्निबद्धं च सद्रत्नकलशोज्ज्वलम् ॥
श्वेतचामरसंयुक्तं वह्निशुद्धांशुकान्वितम् । पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥
शतचक्रसमायुक्तं मनोयायि मनोहरम् । वेष्टितं पार्षदैर्दिव्यैर्वनमालाविभूषितैः ॥ ९८ ॥
पीतवस्त्रपरीधानै रत्नालंकारभूषितैः । नवयौवनसंपन्नैः श्यामलैः सुमनोहरैः ॥ ९९ ॥
द्विभुजैर्मुरलीहस्तैर्गोपवेषधरैर्वरैः । शिखिपिच्छगुञ्जमालाबद्धवक्रिमचूडकैः ॥ १०० ॥
अवरुह्य रथात्तूर्णं ते प्रणम्य हरेः पदम् । रथमारोहणं कर्तुमूचुर्ब्राह्मणकामिनीः ॥१०१॥
विप्रभार्या हरिं नत्वा जग्मुर्गोलोकमीप्सितम् । बभूवुर्गोपिकाः सद्यस्त्यक्त्वा मानुषविग्रहान्
हरिश्छायां विनिर्माय तासां च विष्णुमायया । प्रस्थापयामास गृहान्ब्राह्मणानां स्वयं विभुः ॥
विप्राश्च भार्या उद्दिश्य परमोद्विग्नमानसाः । अन्वेषणं प्रकुर्वन्तो ददृशुः पथि कामिनीः ॥
दृष्ट्वोचुर्ब्राह्मणाः सर्वे तास्ते च विनयान्विताः । पुलकाङ्कितसर्वाङ्गाः प्रसन्नवदनेक्षणाः ॥

ब्राह्मणा ऊचुः—

अहोऽतिधन्या यूयं च दृष्टो युष्माभिरीश्वरः । अस्माकं जीवनं व्यर्थं वेदपाठोऽप्यनर्थकः ॥
वेदे पुराणे सर्वत्र विद्वद्भिः परिकीर्तिताः । हरेर्विभूतयः सर्वाः सर्वेषां जनको हरिः ॥
तपो जपो व्रतं ज्ञानं वेदाध्ययनमर्चनम् । तीर्थस्नानमनशनं सर्वेषां फलदो हरिः ॥१०८॥
श्रीकृष्णः सेवितो येन किं तस्य तपसां फलैः । यावः कल्पतरुर्येन किं तस्यान्येन शाखिना
श्रीकृष्णो हृदये यस्य तस्य किं कर्मभिः कृतैः । किं पीतसागरस्यैव पौरुषं कूपलङ्घने ॥

इत्येवमुक्त्वा विप्राश्च गृहीत्वा कामिनीर्वराः। आजग्मुः स्वगृहं हृष्टास्ताभिः सार्धं च रेमिरे
तासां ततोऽधिकं प्रेम क्रीडासु सर्वकर्मसु। दाक्षिण्यं मायया शश्वत् ब्राह्मणानामतर्कितम्
अथ नारायणः सोऽयं बलेन शिशुभिः सह। जगाम स्वालयं तूर्णं पूर्णब्रह्म सनातनः ॥
इत्येवं कथितं सर्वं हरेर्माहात्म्यमुत्तमम्। पुरा श्रुतं धर्मवक्त्रात्किं भूयः श्रोतुमिच्छसि ॥

नारद उवाच—

ऋषीन्द्र केन पुण्येन बभूव विप्रयोषिताम्। मुनीन्द्रयोगसिद्धानां दुर्लभा गतिरीश्वरी ॥
इमाः का वा पुण्यवत्यः पुरा तस्थुर्महीतलम्। आजग्मुः केन दोषेण वद संदेहभञ्जनम् ॥

नारायण उवाच—

सप्तर्षीणां रमण्यश्च रूपेणाप्रतिमाः पराः। गुणवत्यः सुशीलाश्च वरिष्ठाश्च पतिव्रताः ॥
नवीनयौवनाः सर्वाः पीनश्रोणिपयोधराः। दिव्यवस्त्रपरीधाना रत्नालंकारभूषिताः ॥
तप्तकाञ्चनवर्णाभाः स्मेराननसरोरुहाः। मुनीनां मोहितुं शक्ता मानसं वक्रचक्षुषा ॥
दृष्ट्वा तासां स्तनश्रोणिमुखानि सुन्दराणि च। अनलश्चकमे ताश्च मदनानलपीडितः ॥८०॥
अग्निस्थानस्थितानां च शिखया सुरतोन्मुखः। स्पृष्ट्वा चाङ्गानि तासां च बभूव हतचेतनः
पतिव्रता न जानन्ति पतिपादाब्जमानसाः। अग्निरङ्गानि तासां च दर्शं दर्शं मुमोह च ॥
वह्नेश्च मानसं ज्ञात्वा भगवानङ्गिरा मुनिः। शशाप तं चेत्युवाच सर्वभक्षो भवेति ह ॥
वह्निः सचेतनो भूत्वा तुष्टाव मुनिपुंगवम्। व्रीडया नम्रवदनश्चकम्पे ब्रह्मतेजसा ॥
क्रुद्धो मुनिवरः स्पृष्टाः कामिन्यश्च शशाप ह। यात यूयं पापयुक्ता मानुषीं योनिमेव च
भारते ब्राह्मणानां च गृहे लभत जन्म वै। करिष्यन्ति विवाहं च युष्माकं कुलजा द्विजाः
श्रुत्वा वाक्यं मुनेस्ताश्च रुरुदुः प्रेमविह्वलाः। पुटाञ्जलियुताः सर्वा ऊचुस्तं विदुषां वरम्

मुनिपत्न्य ऊचुः—

न स्पृष्टास्मान्मुनिश्रेष्ठ निष्पापाश्च पतिव्रताः। अजानन्त्यः परस्पृष्टा न च नस्त्यक्तुमर्हसि
भक्तानां किंकरीणां च न दण्डं कर्तुमर्हसि। युष्माकं चरणाम्भोजं कदा द्रक्ष्यामहे वयम्
खड्गच्छेदाद्वज्रपातात्सर्वप्रहरणान्मुने। दारुणः कान्तविच्छेदः साध्वीनां दुःसहः सदा
वरिष्ठानां गुणवतां परान्कान्तान्महामुनीन्। एवंभूतान्कथं त्यक्त्वा यास्यामः पृथिवीतलम्
यास्यामो यदि विप्रेश कदाऽत्राऽऽगमनं वद। अज्ञानस्पर्शदोषश्च न स्यान्नो विधिबोधितः
अहल्यया पुनः प्राप्तः स्वामीन्द्रस्य प्रधर्षणात्। सा संभोगात्पुनः शुद्धा स्पर्शनाद्वर्जिता वयम्
विचारं कुरु धर्मिष्ठ वेदवेदाङ्गपारग। विधिकर्तुश्च पुत्रस्त्वं सर्ववेदविदां वर ॥ ९४ ॥

---

१ क. भेदक°।

अन्येषां च भयात्कान्ता व्रजन्ति शरणं पतिम् । स्वकान्तभयसंविग्नाः शरणं कं व्रजन्ति ताः
अभयं देहि धर्मिष्ठ भययुक्ताभ्य एव च । पुत्रे शिष्ये कलत्रे च को दण्डं कर्तुमक्षमः ॥
दुर्बलः सबलो वाऽपि स्ववस्तूनामपीश्वरः । स्वद्रव्यविक्रयं कर्तुं न चान्यो रक्षितुं क्षमः॥
कामिनीनां वचः श्रुत्वा दयालुर्मुनिपुंगवः । प्रेम्णा रुरोद तासां च निरीक्ष्य मुखपङ्कजम्॥
वेदवेदाङ्गपारज्ञो ज्ञानिनां योगिनां वरः । पत्नीविच्छेदविषये मूर्छां प्राप तथाऽपि सः ॥
सर्वे बभूवुः शोकार्ता विरहोद्विग्नमानसाः । निरीक्ष्य तासां वक्त्राणि तस्थुः पुत्तलिका यथा
कृत्वा विलापं सुचिरं सर्ववेदविदां वरः । भ्रातृभिश्च सहाऽऽलोच्य ता उवाच शुचाऽऽतुरः

अङ्गिरा उवाच—

यूयं शृणुत वक्ष्यामि वचनं सत्यमेव च । स्वकर्मभोगिनां भोगमाकर्णाच्च श्रुतौ श्रुतम् ॥
गतो भोगश्च युष्माकमस्माभिः सह निश्चितम् । गते भोगे पुनर्भोगो न हि वेदे निरूपितः॥
शुभाशुभं च यत्कर्म भारते कृतिभिः सह । नाभुक्तं क्षीयते कर्म जन्मकोटिशतैरपि ॥
परभुक्तां च कान्तां च यो भुङ्क्ते स नराधमः । स पच्यते कालसूत्रे यावच्चन्द्रदिवाकरौ ॥
न सा दैवे न सा पैत्र्ये पाकार्हा पापसंयुता । तस्या आलिङ्गने भर्ता भ्रष्टश्रीस्तेजसा हतः
देवताः पितरस्तस्य हव्यदाने च तर्पणे । सुखिनो न भवन्त्येवमित्याह कमलोद्भवः ॥
तस्माद्यत्नेन भार्याया रक्षणं कुरुते सुधीः । अन्यथा पापभाग्भर्ता निश्चितं नरकं व्रजेत् ॥
पदे पदे सावधानः कान्तां रक्षति पण्डितः । न भर्ता न स्थली येषां दोषाणां च करण्डिका
कलत्रं पाकपात्रं च सदा रक्षितुमर्हति । परस्पर्शादशुद्धं च शुद्धा स्वस्पर्शने सदा ॥
स्वकान्तं च परित्यज्य परं गच्छति याऽधमा । कुम्भीपाके सा प्रयाति यावच्चन्द्रदिवाकरौ॥
तामेव यमदूताश्च संस्थाप्य नरकान्तरे । उत्तिष्ठन्ति विदूराच्चैस्कुर्वन्ति दण्डताडनाम् ॥
सर्पप्रमाणाः कीटाश्च तीक्ष्णदंष्ट्राः सुदारुणाः । दशन्ति पुंश्चलीं तत्र सततं च दिवानिशम्
विकृताकारशब्दं च करोति शश्वतं भिया । न ममार महारोग सूक्ष्मदेहविधारिणी ॥
मुहूर्तार्धं सुखं भुक्त्वा लोकेऽत्र यशसा हता । पतिता परलोके च गतिमेतादृशीं लभेत्॥
परस्पृष्टा च या नारी या स्पृहां कुरुते परम् । साऽपि दुष्टा परित्याज्या चेत्याह कमलोद्भवः
तस्मात्त्याज्या परैर्बलाद्दृष्टा कृतिभिः कृता । असूर्यंपश्या या दाराः शुद्धास्ताश्च पतिव्रताः
स्वच्छन्दगामिनी या च स्वतन्त्रा सूकरीसमा । अन्तर्दुष्टा सदा सैव निश्चितं परगामिनी ॥
स्वामिसाध्वी च या नारी कुलधर्मप्रिया स्थिता । कान्तेन सार्धं सा कान्ता वैकुण्ठं याति
निश्चितम् ॥ ११९ ॥

यात यूयं च शुचिवं मानुषीं योनिमीप्सिताम् । कृष्णदर्शनमात्रेण गोलोकं यास्यथ ध्रुवम्॥

हरिणा निर्मिताऽछाया युष्माकं योगमायया। ता विप्रमन्दिरे स्थित्वा चाऽऽगमिष्यन्ति
नो भुवम् ॥१२१॥
पुनरंशेन नः पत्न्यो भविष्यथ न संशयः। युष्माकं मम शापश्च बभूव च वराधिकः ॥
इत्येवमुक्त्वा स मुनिर्विरराम शुचाऽन्वितः। ता आगत्य महीं शापाद्बभूवुर्विप्रयोषितः ॥
दत्त्वाऽन्नं हरये भक्त्या प्रजग्मुर्हरिमन्दिरम्। बभूव निश्चितं तासां शापश्च संपदोऽधिकः ॥
निन्द्या नीचाच्च संपत्तिर्विपत्तिर्महतो वरा। अहो सद्यः सतां कोपश्चोपकाराय कल्पते ॥
विना विपत्तेर्महिमा कुतः कस्य भवेद्भुवि। भूताः कान्तपरित्यागान्मुक्ता ब्राह्मणयोषितः
इत्येवं कथितं सर्वं हरेश्चरितमुत्तमम्। अहो पुण्यवतीनां च मोक्षाख्यानं मनोहरम् ॥
श्रीकृष्णाख्यानं विप्रेन्द्र नूतनं नूतनं पदे पदे। नहि तृप्तिः श्रुतवतां केन श्रेयसि तृप्यते ॥
यावद्रम्यं तत्कथितं यच्छ्रुतं गुरुवक्त्रतः। वद मां वाञ्छितं यत्ते किं भूयः श्रोतुमिच्छसि॥

नारद उवाच—

यद्यच्छ्रुतं त्वया पूर्वं गुरुवक्त्रात्कृपानिधे। मङ्गलं कृष्णचरितं तन्मे ब्रूहि जगद्गुरो[1] ॥

सूत उवाच—

श्रुत्वा देवर्षिवचनमृषिर्नारायणः स्वयम्। अपरं कृष्णमाहात्म्यं प्रवक्तुमुपचक्रमे ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० विप्रपत्नीमोक्षणप्रस्तावो
नामाष्टादशोऽध्यायः ॥ १८ ॥

अथैकोनविंशोऽध्यायः।

नारायण उवाच—

एकदा बालकैः सार्धं बलदेवं विना हरिः। जगाम यमुनातीरं यत्र कालियमन्दिरम् ॥
परिपक्वफलं भुक्त्वा यमुनातीरजे वने। स्वेच्छामयस्तृट्परीतः पपौ च निर्मलं जलम् ॥
गोकुलं चारयामास शिशुभिः सह कानने। विजहार च तैः सार्धं स्थापयामास गोकुलम्॥
क्रीडानिमग्नचित्तोऽयं बालकाश्च मुदाऽन्विताः। भुक्त्वा नवतृणं गावो विषतोयं पपुर्मुने ॥
विषाक्तं च जलं पीत्वा दारुणान्तकचेष्टया। ज्वालाभिः कालकूटाना सद्यः प्राणांश्च तत्यजुः
दृष्ट्वा मृतं गोसमूहं गोपाश्चिन्ताकुला भिया। विषण्णवदनाः सर्वे तमूचुर्मधुसूदनम् ॥६॥
ज्ञात्वा सर्वं जगन्नाथो जीवयामास गोकुलम्। उत्तस्थुस्तत्क्षणं गावो ददृशुः श्रीहरेर्मुखम्
कृष्णः कदम्बमारुह्य यमुनातीरनीरजम्। पपात सर्पभवने नागमध्ये नराकृतिः ॥ ८॥

[1] क. 'न्नरो'।

शतहस्तप्रमाणं च मलोत्थानं बभूव ह । बाला हर्षं विषादं च मेनिरे तत्र नारद ॥९॥
सर्पो नराकृतिं दृष्ट्वा कालीयः क्रोधविह्वलः । जग्राह श्रीहरिं तूर्णं तद्वलोहं यथा नरः॥
दग्धकण्ठोदरो नागश्चोद्विग्नो ब्रह्मतेजसा। प्राणा यान्त्येवमुक्त्वा च चकारोद्वमनं पुनः॥
भग्नदन्तो रक्तमुखः कृष्णवज्राङ्गचर्वणात् । रक्तवक्त्रस्य भगवानुत्तस्थौ मस्तकोपरि ॥
नागो विश्वभराक्रान्तः स प्राणांस्त्यक्तुमुद्यतः । चकार रक्तोद्वमनं पपात मूर्छितो मुने॥
दृष्ट्वा तं मूर्छितं नागा रुरुदुः प्रेमविह्वलाः । केचित्पलायिता भीताः केचित्प्रविविशुर्बिलम् ॥
मरणाभिमुखं कान्तं दृष्ट्वा सा सुरसा सती । नागिनीभिः सह प्रेम्णा रुरोद पुरतो हरेः ॥
पुटाञ्जलियुता तूर्णं प्रणम्य श्रीहरिं भिया । धृत्वा पादारविन्दे च तमुवाच प्रियाऽऽकुला ॥

सुरसोवाच—

हे जगत्कान्त कान्तं मे देहि मानं च मानद । पतिः प्राणाधिकः स्त्रीणां नास्ति बन्धुश्च तत्परः
सकलभुवननाथ प्राणनाथं मदीयं न कुरु वधमनन्त प्रेमसिन्धो सुबन्धो ।
अखिलभुवनबन्धो राधिकाप्रेमसिन्धो पतिमिह कुरु दानं मे विधातुर्विधातः ॥ १८ ॥
त्रिनयनविधिशेषाः षण्मुखश्चाऽऽत्ययंसैः स्तवनविषयजाड्यात्स्तोतुमीशा न वाणी ॥
न खलु निखिलवेदाः स्तोतुमन्येऽपि देवाः स्तवनविषयशक्ताः सन्ति सन्तस्तवैव ॥
कुमतिरहमधिता योषितां काधमा वा क भुवनगतिरीशश्चस्तुपो गोचरो मे ।
विधिहरिहरशेषैः स्तूयमानश्च यस्त्वमतनुमनुनमीशं स्तोतुमिच्छामि तं त्वाम् ॥२०॥
स्तवनविषयभीता पार्वती यस्य पत्नी श्रुतिगणजनयित्री स्तोतुमीशा न यं त्वाम् ।
कलिकलुषनिमग्ना वेदवेदाङ्गशास्त्र श्रवणविषयमूढा स्तोतुमिच्छामि किं त्वाम् ॥ २१ ॥
शयानो रत्नपर्यङ्के रत्नभूषणभूषितः । रत्नभूषणभूषाङ्गी राधावक्षसि संस्थितः ॥ २२ ॥
चन्दनोक्षितसर्वाङ्गः स्मेराननसरोरुहः । प्रोद्यत्प्रेमरसाम्भोधौ निमग्नः सततं सुखात् ॥
मल्लिकामालतीमालाजालैः शोभितशेखरः । पारिजातप्रसूनानां गन्धामोदितमानसः ॥
पुंस्कोकिलकलध्वानैर्भ्रमरध्वानिसंयुतैः । कुसुमेषुविकारेण पुलकाङ्कितविग्रहः ॥ २५ ॥
निद्राप्रदत्तताम्बूलं भुक्तवान्यः सदा मुदा । वेदा अशक्ता यं स्तोतुं जडीभूता विचक्षणाः
तमनिर्वचनीयं च किं स्तौमि नागवल्लभा । वन्देऽहं त्वत्पदाम्भोजं ब्रह्मेशशेषसेवितम् ॥
लक्ष्मीसरस्वतीदुर्गाजाह्नवीवेदमातृभिः । सेवितं सिद्धसंघैश्च मुनीन्द्रैर्मनुभिः सदा ॥
निष्कारणायाखिलकारणाय सर्वेश्वरायापि परात्पराय ।
स्वयंप्रकाशाय परावराय परावराणामधिपाय ते नमः ॥२९॥

१ क. 'भान्दर्थं'।

हे कृष्ण हे कृष्ण सुरासुरेश ब्रह्मेश शेषेश प्रजापतीश ।
मुनीश मन्वीश चराचरेश सिद्धीश सिद्धेश गणेश पाहि ॥२०॥
धर्मेश धर्मीश शुभाशुभेश वेदेश वेदैरनिरूपितश्च ।
सर्वेश सर्वात्मक सर्वबन्धो जीवीश जीवेश्वर पाहि मत्प्रभुम् ॥ २१ ॥

इत्येवं स्तवनं कृत्वा भक्तिनम्रात्मकंधरा । विधृत्य चरणाम्भोजं तस्थौ नागेशवल्लभा ॥
नागपत्नीकृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः । सर्वपापात्प्रमुक्तस्तु यात्यन्ते श्रीहरेः पदम् ॥
इह लोके हरेर्भक्तिमन्ते दास्यं लभेद्ध्रुवम् । लभते पार्षदो भूत्वा सालोक्यादिचतुष्टयम् ॥

नारद उवाच—

नागपत्नीवचः श्रुत्वा भगवान्सर्वनन्दनः । प्रहृष्टोत्फुल्लनयनः किमुवाच हरिः स्वयम् ॥
कथयस्व महाभाग रहस्यं परमाद्भुतम् ॥

सूत उवाच—

नारदस्य वचः श्रुत्वा भगवान्सर्वदर्शनः । उवाच परमात्मानं मधुवृन्दे पदे पदे ॥२६॥

नारायण उवाच—

नागपत्नीवचः श्रुत्वा श्रीकृष्णस्तामुवाच ह । पुटाञ्जलियुतां पादे पतितां भयविह्वलाम् ॥

श्रीकृष्ण उवाच—

उत्तिष्ठोत्तिष्ठ नागेशे वरं वृणु भयं त्यज । गृहाण कान्तं हे मातर्मद्वरादजरामरम् ॥२८॥
कालिन्दीह्रदमुत्सृज्य स्वकीयं भवनं व्रज । भर्त्रा स्वगोष्ठ्या सार्धं च गच्छ वत्से सुखी भव ॥
अद्यप्रभृति नागेशि भूता कन्या च त्वं मम । त्वत्प्राणाधिक एषायं भ्राता च न संशयः ॥
मत्पादपद्मचिह्नेन गरुडस्त्वत्पतिं शुभे । कृत्वा च स्तवनं भक्त्या प्रणंस्यति मत्पदम् ॥
त्यज त्वं गरुडाद्भीतिं शीघ्रं रमणकं व्रज । ह्रदान्निर्गच्छ वत्से त्वं वरं वृणु यथेप्सितम् ॥
श्रीकृष्णस्य वचः श्रुत्वा प्रसन्नवदनेक्षणा । उवाच साश्रुनेत्रा सा भक्तिनम्रात्मकंधरा ॥

सुरसोवाच—

वरं दास्यसि चेदानीं वरदेश्वर मेऽपि च । त्वत्पादाब्जे दृढां भक्तिं निश्चलां दातुमर्हसि ॥
मन्मनस्त्वत्पदाम्भोजे भ्रमतु भ्रमरो यथा । तव स्मृतेर्विस्मृतिर्मे कदाऽपि न भविष्यति ॥
स्वकान्ते मम सौभाग्यं कान्तोऽयं ज्ञानिनां वरः । इत्येवं प्रार्थनीयं च परिपूर्णं कुरु प्रभो ॥
इत्येवमुक्त्वा सर्पस्त्री प्रतस्थौ पुरतो हरेः । शरत्पार्वणचन्द्रास्यं ददर्श श्रीहरेर्मुखम् ॥
लोचनाभ्यां पपौ वक्त्रं निमेषरहितं सती । सर्वाङ्गपुलकोद्भिन्ना सानन्दाश्रुपरिप्लुता ॥

---

१ क. सुखे । २ क. °वनन्दनः । ३ क. °स्थे स्वमीप्सितम् ।

सुन्दरं बालकं दृष्ट्वा पुत्रस्नेहं प्रकुर्वती । उवाच पुनरेवेदं भक्त्युद्रेकपरिप्लुता ॥४९॥
न यास्यामि रमणकं तत्र नास्ति प्रयोजनम् । सर्पः करोतु संसारं कुरु मां निजकिङ्करीम् ॥
न वाञ्छा मम हे कृष्ण सालोक्यादिचतुष्टये । त्वत्पदाम्भोजसेवायाः कलां नार्हन्ति षोडशीम् ॥
विना त्वत्पादसेवां च यो वाञ्छति वरान्तरम् । भारते दुर्लभं जन्म लब्ध्वाऽसौ वञ्चितः स्वयम् ॥
नागपत्न्या वचः श्रुत्वा स्मेराननसरोरुहः । प्रसन्नमानसः श्रीमानोमित्येवमुवाच ह ॥
एतस्मिन्नन्तरे दिव्यः सद्रत्नसारनिर्मितः । आजगाम रथस्तूर्णमुद्दीप्तस्तेजसा मुने ॥५४॥
पार्षदप्रवरैर्युक्तो वस्त्रमाल्यपरिच्छदः । शतचक्रो वायुवेगो मनोयायी मनोहरः ॥५५॥
अवरुह्य रथात्तूर्णं श्यामलाः श्यामकिङ्कराः । प्रणम्य कृष्णं तां नीत्वा जग्मुर्गोलोकमुत्तमम् ॥
हरिश्छायां विनिर्माय ददौ सर्पाय तेजसा । स च किञ्चिन्न बुबुधे मोहितो विष्णुमायया ॥
अवरुह्य सर्पमूर्ध्नः श्रीकृष्णः करुणानिधिः । ददौ हस्तं च कृपया शीघ्रं कालियमस्तके ॥
संप्राप्य चेतनां सद्यो ददर्श पुरतो हरिम् । पुटाञ्जलियुतां साश्रुपूर्णां च सुरसां सतीम् ॥
प्रणनाम हरिं सद्यो रुरोद प्रेमविह्वलः । भक्त्युद्रेकात्साश्रुनेत्रां पुलकाङ्कितविग्रहाम् ॥
तूष्णीम्भूतां च तां दृष्ट्वा समुवाच कृपानिधिः । यदीश्वरस्य सततं योग्यायोग्ये समा कृपा ॥

श्रीकृष्ण उवाच—

वरं वृणु त्वं कालिय यस्ते मनसि वर्तते । त्वं मे प्राणाधिको वत्स सुखं तिष्ठ भयं त्यज ॥
तस्याहमनुगृह्णामि योऽतिभक्तो ममांशजः । किञ्चिद्दमनं कृत्वा तत्प्रसादं करोम्यहम् ॥
त्वद्वंशजातान्सर्पांश्च हन्ति यो मानवाधमः । ब्रह्महत्यासमं पापं भविता तस्य निश्चितम् ॥
मत्पादपद्मचिह्ने यः करोति दण्डताडनम् । द्विगुणं ब्रह्महत्यायाः भविता तस्य किल्बिषम् ॥
लक्ष्मीर्यास्यति तद्गेहाच्छापं दत्त्वा सुदारुणम् । वंशायुर्यशसां हानिर्भविता तस्य निश्चितम् ॥
ध्रुवं वर्षशतं कालसूत्रे यास्यति मद्गिरा । स्वल्पभागाः कीटसंघा दंशिष्यन्ति च संततम् ॥
भोगान्ते जन्म लब्ध्वा च तन्मृत्युस्तस्य दंशनात् । तस्य वंशोद्भवानां च त्वद्वंशाद्भविता भयम् ॥६८॥
ये च त्वद्वंशमान्दृष्ट्वा सुपदाङ्कं मदीयकम् । प्रणमिष्यन्ति भक्त्या ते मुच्यन्ते सर्वपातकात् ॥
गच्छ शीघ्रं रमणकं त्यज भीतिं खगाधिपात् । मत्पदाङ्कं मूर्ध्नि दृष्ट्वा त्वां भक्त्या प्रणमिष्यति ॥७०॥
तव त्वद्वंशजानां च गरुडान्न भयं क्वचित् । सर्वदा ज्ञातिसर्पाणां वरोऽयं मम मद्वरात् ॥
वरं किमपरं वत्स वाञ्छितं वरयाधुना । भयं त्यक्त्वा कृपय मां त्वदीयं दुःखभञ्जनम् ॥
श्रीकृष्णवचनं श्रुत्वा कालियः कम्पितो भिया । पुटाञ्जलियुतो भूत्वा तमुवाच भुजंगमः ।

काळिय उवाच—

वरेऽन्यस्मिन्मम विभो वाञ्छा नास्ति वरप्रद । भक्तिं स्मृतिं त्वत्पदाब्जे देहि जन्मनि जन्मनि
जन्म ब्रह्मकुले वाऽपि तिर्यग्योनिषु वा समम् । तद्भवेत्सफलं यत्र स्मृतिस्त्वच्चरणाम्बुजे ॥
तन्निष्फलः स्वर्गवासो नास्ति चेत्त्वत्पदस्मृतिः । त्वत्पादध्यानयुक्तस्य यत्तत्स्थानं च तत्परम्
क्षणं वा कोटिकल्पं वा पुरुषायुः क्षयोऽस्तु वा । यदि त्वत्सेवया याति सफलो निष्फलोऽथवा
तेषां चाऽऽयुर्व्ययो नास्ति ये त्वत्पादाब्जसेवकाः । न सन्ति जन्ममरणरोगशोकार्तिभीतयः
इन्द्रत्वे वाऽमरत्वे वा ब्रह्मत्वे चातिदुर्लभे । वाञ्छा नास्त्येव भक्तानां त्वत्पादसेवनं विना ॥
सुजीर्णपटखण्डस्य समं नूतनमेव च । पश्यन्ति भक्ता किं चान्यत्सालोक्यादिचतुष्टयम् ॥
संप्राप्तस्त्वन्मनुर्ब्रह्मन्ननन्ताद्यावदेव हि । तावत्त्वद्भावनेनैव त्वद्गुणोऽहमनुग्रहात् ॥ ८१ ॥
मां च भक्तमभक्तं वा विज्ञाय गरुडः स्वयम् । देशाद्दूरं च न्यक्कारं चकार दृढभक्तिमान् ॥
भवता च दृढां भक्तिं दत्त्वा मे वरदेश्वर । स च उक्तश्च भक्तोऽहं न मां त्यक्तुं क्षमोऽधुना
त्वत्पादपद्मचिह्नाक्तं दृष्ट्वा श्रीमस्तकं मम । सदोषं गुणयुक्तं मां सोऽधुना त्यक्तुमक्षमः ॥
ममाऽऽराध्याश्च नागेन्द्रा न तद्बाध्योऽहमीश्वर । भयं न केभ्यः सर्वत्र तमनन्तं गुरुं विना
यं देवेन्द्राश्च देवाश्च मुनयो मनवो नराः । स्वप्ने ध्याने न पश्यन्ति चक्षुषोर्गोचरः स मे ॥
भक्तानुरोधात्साकारः कुतस्ते विग्रहो विभो । सगुणस्त्वं च साकारो निराकारश्च निर्गुणः ॥
स्वेच्छामयः सर्वधाम सर्वबीजं सनातनम् । सर्वेषामीश्वरः साक्षी सर्वात्मा सर्वरूपधृक् ॥
ब्रह्मेशशेषधर्मेन्द्रवेदवेदाङ्गपारगाः । स्तोतुं यमीशं ते जाड्याः सर्पः स्तोष्यति तं विभुम् ॥
हे नाथ करुणासिन्धो दीनबन्धो क्षमोघमम् । खलस्वभावादज्ञानात्कृष्ण त्वं चार्चितो मया
नाक्षलक्ष्यो यथाऽऽकाशो न दृश्यान्तो न लङ्घ्यकः । न स्पृश्यो हि न चाऽऽवर्यस्तथा
तेजस्त्वमेव च ॥ ९१ ॥
इत्येवमुक्त्वा नागेन्द्रः पपात चरणाम्बुजे । ओमित्युक्त्वा हरिस्तुष्टः सर्वं तस्मै वरं ददौ ॥
नागराज कृतं स्तोत्रं प्रातरुत्थाय यः पठेत् । तद्वंश्यानां च तस्यैव नागेभ्यो न भयं भवेत्
स नागशय्यां कृत्वैव स्वप्तुं शक्तः सदा भुवि । विषपीयूषयोर्भेदो नास्त्येव तस्य भक्षणे
नागग्रस्ते नागघाते प्राणान्ते विषभोजनात् । स्तोत्रस्मरणमात्रेण सुस्थो भवति मानवः ॥
मूर्ध्नि कृत्वा स्तोत्रमिदं कण्ठे वा दक्षिणे करे । बिभर्ति यो भक्तियुक्तो नागेभ्योऽपि न तद्भयम्
यत्र गेहे स्तोत्रमिदं नागस्तत्र न तिष्ठति । विषाग्निवज्रभीतिश्च न भवेत्तत्र निश्चितम् ॥
इह लोके हरेर्भक्तिं स्मृतिं च सततं लभेत् । अन्ते च स्वकुलं पूत्वा दास्यं च लभते ध्रुवम् ।

---

१ क. °माश्रमम् ।

नारायण उवाच—

नागेन्द्राय वरं दत्त्वा पुनस्तं जगदीश्वरः । उवाच मधुरं वाक्यं परिणामसुखावहम् ॥

श्रीकृष्ण उवाच—

गच्छ त्वं च रमणकं यथेन्द्रनगरं परम् । सार्धं स्वगोष्ठ्या नागेन्द्र यमुनाजलवर्त्मना ॥
श्रुत्वा नागो हरेराज्ञां रुरोद प्रेमविह्वलः । कदा द्रक्ष्यामि त्वत्पादपद्मं नाथेत्युवाच ह ॥
प्रणम्य शतकृत्वश्च स्त्रिया गोष्ठ्या सहेश्वरम् । जगाम जलमार्गेण नागेन्द्रो विरहातुरः ॥
यमुनाह्रदतोयं च बभूवामृतकल्पकम् । प्रसन्ना जन्तवः सर्वे बभूवुस्तेन नारद ॥ १०३ ॥
गत्वा ददर्श भवनं यथेन्द्रनगरं परम् । आज्ञया च कृपासिन्धोर्निर्मितं विश्वकर्मणा ॥
तत्र तस्थौ च नागेन्द्रः स्त्रिया पुत्रगणैः सह । निःशङ्को हर्षयुक्तश्च हरिभावनतत्परः ॥
इत्येवं कथितं सर्वं हरेश्चरितमद्भुतम् । सुखदं मोक्षदं सारं परं किं श्रोतुमिच्छसि ॥

सूत उवाच—

महर्षेर्वचनं श्रुत्वा नारदो हर्षविह्वलः । ऋषिं पप्रच्छ संदेहं सर्वसंदेहभञ्जनम् ॥ १०७ ॥

नारद उवाच—

कथं विहाय कालीयः स्वपूर्वभवनं परम् । जगाम यमुनातीरं तन्मे ब्रूहि जगद्गुरो ॥ १०८ ॥

नारायण उवाच—

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् । यच्छ्रुतं धर्मवक्त्रान्मे मलये सूर्यपर्वणि ॥
कृष्णाख्यानप्रसङ्गेन सुप्रभापश्चिमे तटे । पप्रच्छ धर्मं पुलहः कथितं मुनिसंसदि ॥ ११० ॥
इदमाख्यानमाश्चर्यमुवाच तं कृपानिधिः । तत्र श्रुतं मया विप्र निबोध कथयामि ते ॥
शेषाज्ञया नागगणाः प्रतिसंवत्सरं भिया । कार्तिकीपूर्णिमायां तु कुर्वन्ति गरुडार्चनम् ॥
पुष्पैर्धूपैश्च दीपैश्च नैवेद्यैर्विविधैर्मुदा । पुष्करे च महातीर्थे सुस्नातो भक्तिसंयुत ॥ ११३ ॥
तस्य पूजां च कालीयो न चकारात्यहंकृतः । नागपूजोपकरणं बलाद्भक्षितुमुद्यतः ॥
चक्रुर्निवारणं नागा नीतिमूचुर्मदोद्धतम् । न शक्ता वारणे ते चेत्याविर्भूतः खगेश्वरः ॥
दृष्ट्वा खगेश्वरं नागा कालीयप्राणरक्षया । प्राणशक्त्या च युयुधुर्यावत्सूर्योदयं मुने ॥
पक्षीन्द्रतेजसा सर्वे समुद्विग्नाः पलायिताः । अनन्तं शरणं जग्मुः सर्वेषामभयप्रदम् ॥
पलायनपरान्दृष्ट्वा नागांश्च करुणानिधिः । तत्र तस्थौ च निःशङ्कः कालीयस्तं ददर्श ह
स्मृत्वा हरिपदाम्भोजं कालीयो युयुधे मुने । मुहूर्तं च तयोर्युद्धं बभूवातीव दारुणम् ॥
पराजितश्च नागेन्द्रस्तेजसा गरुडस्य च । भिया पलायनं कृत्वा जगाम यमुनाह्रदम् ॥
न तं सौभरिशापेन खगेन्द्रो गन्तुमीश्वरः । तत्र तस्थौ भिया नागो जग्मुः पश्चाच्च तद्गणाः

नारद उवाच—

कथं च सौभरेः शापो बभूव गरुडाय वै । कथं न शक्तो गन्तुं तं ह्रदमीश्वरवाहनः ॥

नारायण उवाच—

दिव्यं वर्षसहस्रं च वर्षाणां तत्र सौभरिः । तपस्तप्त्वा महासिद्धो दध्यौ कृष्णपदाम्बुजम्
समीपे ध्यायमानस्य कूले च यमुनाजले । गणेन सार्धं निःशङ्कः करोति भ्रमणं मुदा ॥
पुच्छपुच्छफाल्य बहुधा परितः परमेच्छया । मुनिं प्रदक्षिणीकृत्य यात्यायाति मुदाऽन्वितः
सकुटुं सुमहात्मानं दर्शं दर्शं खगाधिपः । जग्राह चञ्चुना मीनं मुनीन्द्रस्य समीपतः ॥
गच्छन्तं तं मीनमुखं ददर्श कोपचक्षुषा । प्रकम्पितो मुनेर्दृष्ट्या मीनस्तोये पपात ह ॥
तमुवाच मुनीन्द्रश्च पुनरादातुमुद्यतम् । मीनश्च गरुडत्रासात्तस्थौ मुनिसमीपतः ॥१०९॥

सौभरिरुवाच—

गच्छ दूरं गच्छ दूरं खगेन्द्र मत्समीपतः । का योग्यता मत्पुरस्ते महीतु जीवभक्षणम् ॥
श्रीकृष्णवाहनं ज्ञात्वा चाऽऽत्मानं बहु मन्यसे । त्वद्विधान्कोटिशः कृष्णः स्रष्टुं शक्तश्च
वाहकान् ॥११०॥
करोमि भस्मसात्तूर्णं त्वां च भ्रूभङ्गलीलया । वाहनं च रमेशस्य न स्वयं तव किङ्करः ॥
अद्यप्रभृति पक्षीन्द्र यद्यागच्छसि मे ह्रदम् । मदीयशापात्तूर्णं च भस्मसाद्भविता ध्रुवम् ॥
मुनीन्द्रस्य वचः श्रुत्वा प्रचचाल खगेश्वरः । स्मारं स्मारं कृष्णपादं तं प्रणम्य जगाम ह ॥
अद्यप्रभृति विप्रेन्द्र खगेन्द्रस्य संततम् । ह्रदस्य श्रुतिमात्रेण कम्पो भवति निश्चितम् ॥
इतिहासश्च कथितो यः श्रुतो धर्मवक्त्रतः । सरहस्यं श्रुतिसुखं प्रकृतं शृणु मङ्गलम् ॥
विस्मयं सुचिरं बाला तोयस्थो तज्जलाद्धरिः । चक्रुर्विषादं मोहाच्च रुरुदुर्यमुनातटे ॥
स्ववक्षोघातनं चक्रुः केचिद्बालाः शुचाऽऽकुलाः । केचिन्निपत्य भूमौ च मूर्छां प्रापुर्हरिं विना
ह्रदं प्रवेष्टुं केचिच्च विरहेण समन्विताः । केचिद्गोपालबालाश्च चक्रुश्च तन्निवारणम् ॥
कृत्वा विलापं केचिच्च प्राणांस्त्यक्तुं समुद्यताः । तेषां केचिज्ज्ञानवन्तो रक्षां चक्रुः प्रयत्नतः
केचिद्रुरुदुश्च हाहेति कृष्ण कृष्णेति केचन । केचिद्वक्तुं प्रवृत्तिं च प्रययुर्नन्दसंनिधिम् ॥
केचित्संपीडितास्तत्र शोकमोहभयातुराः । इत्यूचुः किं करिष्यामः क्व नोऽस्माकं गतो हरिः
हे नन्दसूनो हे कृष्ण प्राणेभ्योऽप्यधिकप्रिय । हे बन्धो दर्शनं देहीत्यूचुः प्राणाः प्रयान्ति हि
एतस्मिन्नन्तरे केचिद्बालका नन्दसंनिधिम् । संप्रापुरतिलोलाश्च रुदन्तः शोकविह्वलाः ॥
प्रवृत्तिमूचुस्तं शीघ्रं यशोदां शृण्वतो शुभम् । गोपा गोपालिकाश्चैव रक्तपङ्कजलोचनाः ॥

श्रुत्वा वार्तां च ते सर्वे शीघ्रं जग्मुः शुचाऽन्विताः । कालिन्दनन्दिनीतीरं रुरुदुर्बालकैर्युताः ॥
गत्वा संमीलिताः सर्वे रुरुदुः शोकमूर्छिताः । ह्रदं विशन्तीमम्बां तां केचिच्चक्रुर्निवारणम् ॥
गोपा गोपालिकाश्चैव जघ्नुरङ्गानि शोकतः । केचिद्विलुलुठुस्तत्र मूर्छां प्रापुश्च केचन ॥
ह्रदं विशन्तीं तां राधां वारयामास काचन । मूर्छां च प्राप सा शोकान्मृतेव च सरित्तटे ॥
विलप्यातिभृशं नन्दो मूर्छां प्राप पुनः पुनः । वृषोऽपि रोदनं कृत्वा भूयो मूर्छामवाप ह ॥
विलपन्तं भृशं नन्दं यशोदां शोककर्शिताम् । गोपांश्च गोपिकांश्चैव राधिकामतिमूर्छिताम् ॥
रुदतो बालकान्सर्वान्बालिकाश्च शुचाऽन्विताः । सर्वांश्च बोधयामास बलश्च ज्ञानिनां वरः ॥

बलदेव उवाच —

गोपा गोपालिका बालाः सर्वे शृणुत मद्वचः । हे नन्द ज्ञानिनां श्रेष्ठ गर्गवाक्यस्मृतिं कुरु ॥
जगद्विभर्तुः शेषस्य संहर्तुः शंकरस्य च । विधातुः संविधातुश्च भुवि कर्मात्परानयः ॥
परमाणुः परो व्यूहः स्थूलात्स्थूलः परात्परः । विद्यमानोऽप्यदृश्यश्च संयोगी योगिनामपि ॥
दिशां नास्ति समाहारः स्वेच्छयी नाऽऽकार एव च । अपि सर्वेश्वरो वाच्य इत्यूचुः श्रुतयः
स्फुटम् ॥ १९५ ॥
नाऽऽत्मा दृश्यो नाऽऽत्मलक्ष्यो न वध्यो न हि दृश्यकः । नाग्निग्रस्तो न हिंस्यश्चापि दिमांस्या-
त्मिकां विदुः ॥ १९६ ॥
विग्रहोऽस्यैव कृष्णस्य भक्तध्यानार्थमेव च । ज्योतिःस्वरूपस्य विभोर्नाऽस्त्यन्तमस्य मा-
त्मनः ॥ १९७ ॥
जलप्लुते च ब्रह्माण्डे जलशायी जनार्दनः । यन्नाभिपद्मजो ब्रह्मा तस्येशस्य ह्रदे विपत् ॥
मशकश्चेत्क्षमो भङ्क्तुं ब्रह्माण्डमखिलं पितः । न तथाऽपि तदंशं तं भक्तुं सर्वः क्षमो भवेत् ॥
इत्येवं कथितं सर्वमाध्यात्मिकमनुत्तमम् । निगूढं योगिनां सारं संशयच्छेदकारणम् ॥
बलदेववचः श्रुत्वा गर्गवाक्यमनुस्मरन् । तत्याज शोकं नन्दश्च जनश्च व्रजयोषितः ॥
प्रबोधं मेनिरे सर्वे न यशोदा न राधिका । वस्तुविच्छेदविषये प्रबोधे न स्थितं मनः ॥
एतस्मिन्नन्तरे कृष्णमुत्तरन्तं जलान्मुने । ददृशुस्तं सुप्रसन्नाः प्रजाश्च व्रजयोषितः ॥
शरत्पार्वणचन्द्रास्यं सस्मितं सुमनोहरम् । अस्निग्धवक्रमास्निग्धमलुप्तचन्दनाञ्जनम् ॥
सर्वाभरणसंयुक्तं ज्वलन्तं ब्रह्मतेजसा । मयूरपिच्छचूडं च वंशीवदनमुज्ज्वलम् ॥ २०४ ॥
यशोदा बालकं दृष्ट्वा कृत्वा वक्षसि सस्मिता । चुचुम्ब वदनाम्भोजं प्रसन्नवदनेक्षणा ॥
क्रोडे चकार नन्दश्च बलश्च रोहिणी मुदा । निमेषरहिताः सर्वे ददृशुः श्रीमुखं हरेः ॥

---

१ क० वंशीधरो पा° ।

प्रेमान्धा बालकाः सर्वे चक्रुरालिङ्गनं हरेः । पपुश्चक्षुश्चकोरैश्च मुखचन्द्रं च गोपिकाः ॥
एतस्मिन्नन्तरे तत्र सहसा काननान्तरम् । दावाग्निर्वेष्टयामास तैः सर्वैः सह गोकुलम् ॥
दृष्ट्वा शैलप्रमाणाग्निं परितः काननान्तरे । प्रणाशं मेनिरे सर्वे भयमाप्य संकटे ॥
श्रीकृष्णं तुष्टुवुः सर्वे संपुटाञ्जलयो भ्रमाः । बाला गोप्यश्च संत्रस्ता भक्तिनम्रात्मकंधराः ॥

बाला ऊचुः—

यथा संरक्षितं ब्रह्मन्सर्वापत्स्वेव नः कुलम् । तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन ॥
त्वमिष्टदेवताऽस्माकं त्वमेव कुलदेवता । स्रष्टा पाता च संहर्ता जगतां च जगत्पते ॥
वह्निर्वा वरुणो वाऽपि चन्द्रो वा सूर्य एव च । यमः कुबेरः पवन ईशानाद्याश्च देवताः ॥
ब्रह्मेशशेषधर्मेन्द्रा मुनीन्द्रा मनवः स्मृताः । मानवाश्च तथा दैत्या यक्षराक्षसकिंनराः ॥
ये ये चराचराश्चैव सर्वे तव विभूतयः । आविर्भावतिरोभावः सर्वेषां च तवेच्छया ॥
अभयं देहि गोविन्द वह्निसंहरणं कुरु । वयं त्वां शरणं यामो रक्ष नः शरणागतान् ॥
इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा पदाम्बुजम् । दूरीभूतस्तु दावाग्निः श्रीकृष्णामृतदृष्टितः ॥
दूरीभूते च दावाग्नौ ननृतुस्ते मुदाऽन्विताः । सर्वापदः प्रणश्यन्ति हरिस्मरणमात्रतः ॥
इदं स्तोत्रं महापुण्यं प्रातरुत्थाय यः पठेत् । वह्नितो न भवेत्तस्य भयं जन्मनि जन्मनि ॥
शत्रुग्रस्ते च दावाग्नौ विपत्तौ प्राणसंकटे । स्तोत्रमेतत्पठित्वा तु मुच्यते नात्र संशयः ॥
शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत् । इह लोके हरेर्भक्तिमन्ते दास्यं लभेद्ध्रुवम् ॥

नारायण उवाच—

दवाग्निमोक्षणं कृत्वा तैः सार्धं शृणु नारद । जगाम श्रीहरिर्गेहं कुबेरभवनोपमम् ॥
ब्राह्मणेभ्यो धनं नन्दः परिपूर्णं ददौ मुदा । भोजनं कारयामास ज्ञातिवर्गांश्च बान्धवान् ॥
नानाविधं मङ्गलं च हरेर्नामानुकीर्तनम् । वेदांश्च पाठयामास विप्रद्वारा मुदाऽन्वितः ॥
एवं मुमुदिरे सर्वे वृन्दारण्ये गृहे गृहे । श्रीकृष्णचरणाम्भोजध्यानैकतानमानसाः ॥
इत्येवं कथितं सर्वं हरेश्चरितमङ्गलम् । कालिकिल्बिषकाष्ठानां दाहने दहनोपमम् ॥१८७॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० कालीयदमनदावाग्निमोक्षणं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः ।

नारायण उवाच—

एकदा बालकैः सार्धं बलेन सह माधवः । भुक्त्वा पीत्वाऽनुलिप्तश्च वृन्दारण्यं जगाम ह

क्रीडां चकार भगवान्कौतुकेन च तैः सह । क्रीडानिमग्नचित्तानां दूरं तद्गोकुलं ययौ ॥
तस्य प्रभावं विज्ञातुं विधाता जगतां पतिः । चकार निह्नुतिं गाश्च वत्सांश्च बालकानपि ॥
विज्ञाय तदभिप्रायं सर्वज्ञः सर्वकारकः । पुनश्चकार तत्सर्वं योगीन्द्रो योगमायया ॥
जगाम श्रीहरिर्गेहं कालयित्वा च गोकुलम् । बलेन बालकैः सार्धं क्रीडाकौतुकमानसः ॥
एवं चकार भगवान्वर्षमेकं च प्रत्यहम् । यमुनागमनं गोभिर्बलेन सह बालकैः ॥ ८ ॥
ब्रह्मा प्रभावं विज्ञाय लज्जानम्रात्मकंधरः । आजगाम हरेः स्थानं भाण्डीरवटमूलके ॥
ददर्श कृष्णं तत्रैव गोपाल्गणवेष्टितम् । यथा पार्वणचन्द्रं च विमान्तं स्वगणैः सह ॥
रत्नसिंहासनस्थं च हसन्तं सस्मितं मुदा । पीतवस्त्रपरीधानं ज्वलन्तं ब्रह्मतेजसा ॥९॥
रत्नकेयूरवलयरत्नमञ्जीररञ्जितम् । रत्नकुण्डलयुग्माभ्यां स्वकपोलस्थलोज्ज्वलम् ॥१०॥
कोटिकन्दर्पलावण्यं लीलाधाममनोहरम् । चन्दनागुरुकस्तूरीकुङ्कुमार्चितविग्रहम् ॥११॥
पारिजातप्रसूनानां मालाजालैर्विभूषितम् । नवीननीरदश्यामं प्रोद्भिन्ननवयौवनम् ॥१२॥
मालतीमाल्यसंयुक्तं मयूरपिच्छचूडकम् । स्वाङ्गसौंदर्यदीप्त्या च कृतभूषणभूषितम् ॥
शरत्पार्वणचन्द्रस्य प्रभामुष्टास्यसुन्दरम् । पक्वबिम्बाधरौष्ठं च खगेन्द्रचञ्चुनासिकम् ॥
शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम् । मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिमनोहरम् ॥
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् । शान्तं च राधिकाकान्तं परिपूर्णतमं परम्
एवंभूतं प्रभुं दृष्ट्वा प्राणनाथातिविस्मितः । दर्शं दर्शमपीश्वरं तं प्रणनाम पुनः पुनः ॥
यद्दृष्टं हृदयाम्भोजे तद्रूपं बहिरेव च । या मूर्तिः पुरतो दृष्टा सा पश्चात्स्थितस्ततः ॥
तत्र वृन्दावने सर्वं दृष्ट्वा कृष्णसमं मुने । ध्यायं ध्यायं च तद्रूपं तत्र तस्थौ जगद्गुरुः ॥
गावो वत्साश्च बालाश्च लता गुल्माश्च वीरुधः । सर्वं वृन्दावनं ब्रह्मा श्यामरूपं ददर्श ह ॥
दृष्ट्वैवं परमाश्चर्यं पुनर्ध्यानं चकार ह । ददर्श त्रिजगद्ब्रह्मा नान्यत्कृष्णं विना मुने ॥
क्व च वृक्षः क्व वा शैलः क्व मही क्व च सागराः । क्व देवाः क्व च गन्धर्वा मुनीन्द्राः क्व च मानवाः ॥ २१ ॥
क्व चाऽऽत्मा क्व जगद्बीजं क्व स्वर्गः क्वायमेव च । सर्वं च स्वदृशा ब्रह्मा ददर्श मायया हरेः
क्व कृष्णो जगतां नाथः क्व वा मायाविभूतयः । सर्वं कृष्णमयं दृष्ट्वा किंचिन्निर्वक्तुमक्षमः
कं स्तौमि किं करोमीति मनसैवं प्रगृह्य च । तत्र स्थित्वा जगद्धाता जपं कर्तुं समुद्यतः ॥
सुखं योगासनं कृत्वा बभूव संपुटाञ्जलिः । पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रोऽतिदीनवत् ॥
इडां सुषुम्नां मध्यां च पिङ्गलां नलिनी धुराम् । नाडीषट्कं च योगेन निरुध्य च प्रयत्नतः

१ क. 'नो दाह' । ।

मूलाधारं स्वाधिष्ठानं मणिपूरं मनोहरम् । विशुद्धं परमाज्ञाख्यं षट्चक्रं च निबध्य च ।।
लङ्घनं कारयित्वा च तत्षट्चक्रं क्रमाद्विधिः । ब्रह्मरन्ध्रं समानीय वायुस्तम्भं चकार ह ।।
निबध्य वायुं मध्या तामानीय हृदयाम्बुजम् । तं वायुं भ्रमयित्वा च योजयामास मध्यया ।।
एवं कृत्वा तु निष्पन्दो यो दत्तो हरिणा पुरा । जजाप परमं मन्त्रं तस्यैव च दशाक्षरम् ।
मुहूर्तं च जपं कृत्वा ध्यायं ध्यायं पदाम्बुजम् । ददर्श हृदयाम्भोजे सर्वं तेजोमयं मुने ।।
तत्तेजसोऽन्तरे रूपमतीव सुमनोहरम् । द्विभुजं मुरलीहस्तं भूषितं पीतवाससा ।। ३३ ।।
श्रुतिमूलस्थलन्यस्तोज्ज्वलन्मकरकुण्डलम् । ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम् ।।
यद्दृष्टं ब्रह्मरन्ध्रे च हृदि तद्बाहिरेव च । दृष्ट्वा च परमाश्चर्यं तुष्टाव परमेश्वरम् ।। ३५ ।।
यत्स्तोत्रं च पुरा दत्तं हरिणैकार्णवे मुने । तदीशं तेन विधिना भक्तिनम्रात्मकंधरः ।।

ब्रह्मोवाच—

सर्वस्वरूपं सर्वेशं सर्वकारणकारणम् । सर्वानिर्वचनीयं तं नमामि शिवरूपिणम् ।। ३७ ।।
नवीनजलदाकारं श्यामसुन्दरविग्रहम् । स्थितं जन्तुषु सर्वेषु निर्लिप्तं साक्षिरूपिणम् ।।
स्वात्मारामं पूर्णकामं जगद्व्यापिजगत्परम् । सर्वस्वरूपं सर्वेषां बीजरूपं सनातनम् ।।
सर्वाधारं सर्ववरं सर्वशक्तिसमन्वितम् । सर्वाराध्यं सर्वगुरुं सर्वमङ्गलकारणम् ।। ४० ।।
सर्वमन्त्रस्वरूपं च सर्वसंपत्करं वरम् । शक्तियुक्तमयुक्तं च स्तौमि स्वेच्छामयं विभुम् ।।
शक्तीशं शक्तिबीजं च शक्तिरूपधरं परम् । संसारसागरे घोरे शक्तिनौकासमन्वितम् ।।
कृपालुं कर्णधारं च नमामि भक्तवत्सलम् । आत्मस्वरूपमेकान्तं लिप्तं निर्लिप्तमेव च ।।
सगुणं निर्गुणं ब्रह्म स्तौमि स्वेच्छास्वरूपिणम् । सर्वेन्द्रियादिदेवं तमिन्द्रियालयमेव च ।।
सर्वेन्द्रियस्वरूपं च विराड्रूपं नमाम्यहम् । वेदं च वेदजनकं सर्ववेदाङ्गरूपिणम् ।।
सर्वमन्त्रस्वरूपं च नमामि परमेश्वरम् । सारात्सारतरं द्रव्यमपूर्वमनिरूपिणम् ।। ४६ ।।
स्वतन्त्रमस्वतन्त्रं च यशोदानन्दनं भजे । सन्तं सर्वशरीरेषु तमदृष्टमनूहकम् ।। ४७ ।।
ध्यानासाध्यं विद्यमानं योगीन्द्राणां गुरुं भजे । रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम् ।।
गोपीभिः सेव्यमानं च तं परेशं नमाम्यहम् । सतां सदैव सन्तं तमसन्तमसतामपि ।। ४९ ।।
योगीशं योगसाध्यं च नमामि शिवसेवितम् । मन्त्रबीजं मन्त्रराजं मन्त्रदं फलदं फलम् ।।
मन्त्रसिद्धिस्वरूपं तं नमामि च परात्परम् । सुखं दुःखं च सुखदं दुःखदं पुण्यमेव च ।।
पुण्यदं च शुभदं शुभबीजं नमाम्यहम् । इत्येवं स्तवनं कृत्वा दत्त्वा गात्रं स बालकान् ।।
निपत्य दण्डवद्भूमौ रुरोद प्रणनाम च । ददर्श चक्षुरुन्मील्य विधाता जगतां मुने ।। ५३ ।।

१ क. परम् ।

ब्रह्मणा च कृतं स्तोत्रं नित्यं भक्त्या च यः पठेत्। इह लोके सुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम् ॥ ९४ ॥
लभते दास्यमतुलं स्थानमीश्वरसंनिधौ। लब्ध्वा च कृष्णसांनिध्यं पार्षदप्रवरो भवेत् ॥

नारायण उवाच—

गते भगवत्कारणे च ब्रह्मलोके च ब्रह्मणि। श्रीकृष्णो बालकैः सार्धं जगाम स्वालयं विभुः
गावो वत्साश्च बालाश्च जग्मुर्वत्सान्तरे गृहम्। श्रीकृष्णमायया सर्वे मेनिरे ते दिनान्तरम्
गोपाः गोपालिकाः किंचित्तत्कर्तुं न क्षमास्तदा। योगिनः कृत्रिमं सर्वं किं नूतनं वा पुरातनम्
इत्येवं कथितं सर्वं श्रीकृष्णचरितं शुभम्। सुखदं मोक्षदं पुण्यं सर्वकालसुखावहम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० गोवत्सबालकहर-
णप्रस्तावो नाम विंशोऽध्यायः ॥ २० ॥

अथैकविंशोऽध्यायः।

नारायण उवाच—

एकदाऽऽनन्दयुक्तश्च नन्दो गोपगणे मुने। दुन्दुभिं वादयामास शक्रयागकृतोद्यमः ॥ १ ॥
दधि क्षीरं घृतं तक्रं नवनीतं गुडं मधु। एतान्यादाय शक्रस्य पूजां कुर्वन्त्विति ब्रुवन् ॥
ये ये सन्त्यत्र नगरे गोपा गोप्यश्च बालकाः। बालिकाश्च द्विजा भूयो वैश्याः शूद्राश्च भक्तितः ॥ ३ ॥
इत्येवं श्रावयामास स्वयमेव मुदाऽन्वितः। यष्टिमारोपयामास रम्यस्थाने सुविस्तृते ॥
ददौ तत्र क्षौमवस्त्रं मालाजालं मनोहरम्। चन्दनागुरुकस्तूरीकुङ्कुमद्रवमेव च ॥ ५ ॥
स्नातः कृताह्निको भक्त्या धृत्वा धौते च वाससी। उवास स्वर्णपीठे च प्रक्षालितपदाम्बुजः
नानामन्त्रपानैश्च ब्राह्मणैश्च पुरोहितैः। गोपालैर्गोपिकाभिश्च बालाभिः सह बालकैः ॥
एतस्मिन्नन्तरे तत्राऽऽजग्मुर्नगरवासिनः। महासंभृतसंभारा नानोपायनसंयुताः ॥ ८ ॥
आजग्मुर्मुनयः सर्वे ज्वलन्तो ब्रह्मतेजसा। शान्ताः शिष्यगणैः सार्धं वेदवेदाङ्गपारगाः ॥
गर्गश्च गालवश्चैव शाकल्यः शाकटायनः। गौतमः कश्यपः कण्वो वात्स्यः कात्यायनस्तथा
सौभरिर्वामदेवश्च याज्ञवल्क्यश्च पाणिनिः। ऋष्यशृङ्गो गौरमुखो भरद्वाजश्च वामनः ॥
कृष्णद्वैपायनः शृङ्गी सुमन्तुर्जैमिनिः कचः। पराशरश्च मैत्रेयो वैशम्पायन एव च ॥
ब्राह्मणाश्च यतिविधा भिक्षुका बन्दिनस्तथा। भूपा वैश्याश्च शूद्राश्च समाजग्मुर्महोत्सवे ॥
दृष्ट्वा मुनीन्द्रान्नन्दश्च ब्राह्मणान्भूमिपांस्तथा। स्वर्णपीठात्समुत्तस्थौ ननामोत्तस्थुरेव च ॥

प्रणम्य वासयामास मुनीन्द्रान्विप्रभूमिपान् । तेषामनुमतिं प्राप्य तत्रोवास मुमुदा ॥
पाकं च वट्टिनिकटे कर्तुमाज्ञां चकार ह । पाकप्राज्ञं ब्राह्मणानां शतमानीय सादरम् ॥
तत्र रत्नप्रदीपाश्च जज्वलुः परितस्तथा । अन्धीभूतं च धूपेन स्थानं तत्सुरभीकृतम् ॥
नानाविधानि पुष्पाणि माल्यानि विविधानि च । नैवेद्यं च बहुविधमपूर्वं सुमनोहरम् ॥
तिलडुकपूर्णं च मण्डकानां सहस्रकम् । स्वस्तिकैः परिपूर्णं च वट्टिस्थानं च नारद ॥
कलशानां सहस्रं च पूर्णं शर्करया मुने । यवगोधूमचूर्णानां लड्डुकैर्मधुरैर्वरैः ॥ १० ॥
घृतपक्वैर्विप्रकृतैः पूर्णानि कलशानि च । वृक्षपक्वानि रम्याणि चारुरम्भाफलानि च ॥
फलानि परिपक्वानि कालदेशोद्भवानि च । क्षीराणां कुम्भलक्षाणि दध्नां तावन्ति नारद ॥
मधूनां कुम्भशतकं सर्पिःकुम्भसहस्रकम् । कलशानां त्रिलक्षाणि तक्रपूर्णानि निश्चितम् ॥
घटानां पञ्चलक्षाणि गुडपूर्णानि निश्चितम् । तिलतैलेन पूर्णं च कलशानां सहस्रकम् ॥
वृषेन्द्राश्च बहुविधा भोगार्हद्रव्यवाहकाः । नानाविधानि पात्राणि सौवर्णराजतानि च ॥
स्वर्णपीठानि च ब्रह्मन्नाजग्मुर्वट्टिसंनिधिम् । वस्त्राणि वरणार्हाणि चारूणि भूषणानि च ॥
नानाविधानि वाद्यानि चारूणि मधुराणि च । वादकाः स्वरयन्त्राणि वादयामासुरुत्सवे ॥
छागलानां सहस्राणि महिषाणां शतानि च । मेषकाणां च लक्षाणि आनयामास तत्र वै ॥
शतान्येव गण्डकानामाजग्मुर्वट्टिसंनिधिम् । प्रेक्षितानि च सर्वाणि रक्षितानि च रक्षकैः ॥
बालकानां बालिकानां वृद्धाणां वृद्धयोषिताम् । यूनां च युवतीनां च संख्यां कर्तुं च कः क्षमः ॥
गायकानां च संगीतं नर्तकानां च नर्तनम् । श्रुत्वा दृष्ट्वा जनाः सर्वे मुमुहुः सुमहोत्सवे ॥
रम्भोर्वशी मेनका च घृताची मोहिनी रतिः । प्रभावती भानुमती विप्रचित्तिस्तिलोत्तमा ॥
चन्द्रप्रभा सुप्रभा च रत्नमाला मदालसा । रेणुका रमणी ब्रह्मन्नेता आजग्मुरुत्सवे ॥
तासां नृत्येन गीतेन स्तनाद्यश्रोणिदर्शनात् । रूपेण वक्रदृष्ट्या च मूर्छां प्रापुश्च मानवाः ॥
एतस्मिन्नन्तरे शीघ्रमाजगाम हरिः स्वयम् । गोपालबालकैः सार्धं बलेन बलशालिना ॥
दृष्ट्वा तं च जनाः सर्वे संभ्रान्ता हर्षविह्वलाः । उत्तस्थुरारात्संप्रीताश्च पुलकाङ्कितविग्रहाः ॥
क्रीडास्थानात्समायान्तं शान्तं सुन्दरविग्रहम् । विनोदमुरलीवेणुशृङ्गशब्दसमन्वितम् ॥
सद्रत्नसारभूषाभिर्भूषितं कौस्तुभेन च । चन्दनागुरुपङ्केन चर्चितं श्यामविग्रहम् ॥ १८ ॥
ईषन्मध्याह्नपद्मास्यं पश्यन्तं रत्नदर्पणे । चारुचन्दनचन्द्रेण कस्तूरीबिन्दुना सह ॥ १९ ॥
शशाङ्केन यथाऽऽकाशं भालमध्यविराजितम् । मालतीमालया श्यामकण्ठवक्षःस्थलो-
ज्ज्वलम् ॥ २० ॥
शरत्पङ्कजया यथाऽऽकाशं शारदीयं सुनिर्मलम् । चारुणा पीतवस्त्रेण शोभितं श्यामविग्रहम्

विमान्तं विद्युता शश्वन्नवीनं नीरदं यथा । कुन्दप्रसूनैर्गुञ्जाभिर्बद्धवक्रिमचूडकम् ॥४२॥
यथेन्द्रधनुषा भाति विमानं भगणैर्नभः । रत्नकुण्डलदीप्त्या च स्मितवक्त्रसुशोभितम् ॥
शरत्प्रफुल्लपद्मं च द्युमणेः किरणैर्यथा । विप्रक्षत्रियवैश्याश्च मुनयो बहवो मुने ॥ ४४॥
प्रणम्य वासयामासू रत्नसिंहासने शुभे । उवास रत्नपीठे स तेषां मध्ये जगत्पतिः॥४५॥
यथा बभौ शरच्चन्द्रो ज्योतिषामन्तरे च खे । श्रुत्वा तमूचुस्ते सर्वे जगतामीश्वरं परम् ॥
स्वेच्छामयं गुणातीतं ज्योतीरूपं सनातनम् । दृष्ट्वा महोत्सवं शीघ्रमुवाच पितरं हरिः ॥
सर्वेषां दुर्लभां नीतिं नीतिशास्त्रविशारदः ॥ ४७ ॥

**श्रीकृष्ण उवाच—**

भो भो वल्लवराजेन्द्र किं करोषीह सुव्रत । आराध्यः कथ्य का पूजा किं फलं पूजने भवेत्
फलेन साधनं किं वा कः साध्यः साधनेन च । देवे रुष्टे भवेत्किं वा पूजायाः प्रतिबन्धके॥
तुष्टो देवः किं ददाति फलमत्र परत्रकम् । काचिद्ददात्यत्र फलं परत्रेह न काचन॥५०॥
काचिच्च नोभयत्रापि चोभयत्रापि काचन । अवेदविहिता पूजा सर्वहानिकरण्डिका ॥
पूजेयमधुना वा ते किमु वा पुरुषक्रमात् । दृष्टो देवस्त्वया कस्मिन्पूजेयं चानुसारिणी ॥
साक्षात्खादति देवस्ते साक्षात्किं वा न खादति । साक्षाद्भुङ्क्ते च यो देवः सुप्रशस्तं तदर्चनम् ॥ ५२ ॥
पृथिव्यां ब्राह्मणा देवा इति वेदे निरूपितम् । सर्वेषां पूजनात्तात सुप्रशस्तं द्विजार्चनम् ॥
साक्षात्खादति नैवेद्यं विप्ररूपी जनार्दनः । ब्राह्मणे परितुष्टे च संतुष्टाः सर्वदेवताः ॥
किं तस्य देवपूजायां यो नियुक्तो द्विजार्चने । पूजिता ब्राह्मणा येन पूजिताः सर्वदेवताः ॥
देवाय दत्त्वा नैवेद्यं द्विजाय न प्रयच्छति । भस्मीभूतं च नैवेद्यं पूजनं निष्फलं भवेत् ॥
विप्राय देवनैवेद्यदानात्पुण्यमनन्तकम् । तुष्टो देवो वरं दत्त्वा प्रयाति च स्वमन्दिरम् ॥
दत्त्वा देवाय नैवेद्यं मूढो भुङ्क्ते स्वयं यदि । दत्तापहारी देवान्नं भुक्त्वा च नरकं व्रजेत्॥
देवदत्तं न भोक्तव्यं नैवेद्यं च विना हरेः । प्रशस्तं सर्वदेवेषु विष्णुनैवेद्यभोजनम् ॥ ५९ ॥
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् । सर्वेषां च क्रमेदं ब्राह्मणानां विशेषतः ॥
न दत्त्वा वस्तु देवाय दद्यं विप्राय चेत्सुधीः । भुक्त्वा विप्रमुखे देवास्तुष्टाः स्वर्गं प्रयान्ति च
तस्मात्सर्वप्रयत्नेन विप्राणामर्चनं कुरु । प्रशस्तफलदातॄणामिह लोके परत्र च ॥ ६१ ॥
जपस्तपश्च पूजा वा यज्ञो दानं महोत्सवः । सर्वेषां कर्मणां सारा विप्रतुष्टिश्च दक्षिणा ॥

---

१ क. विदुर्वा । २ ख. दारं ।

ब्राह्मणानां शरीरेषु तिष्ठन्ति सर्वदेवताः। पादेषु सर्वतीर्थानि पुण्यानि पादधूलिषु ॥६४॥
पादोदके च विप्राणां तीर्थतोयानि सन्ति च। तत्स्पर्शात्सर्वतीर्थेषु स्नानजन्यफलं लभेत् ॥
नश्यन्ति भक्षणाद्रोगा भक्तिभावेन वल्लव। सप्तजन्मकृतात्पापान्मुच्यन्ते नात्र संशयः ॥
धर्मं धर्मविधं कृत्वा यो विप्रं प्रणमेद्बुधः। स स्नातः सर्वतीर्थेषु सर्वपापात्प्रमुच्यते ॥
ब्राह्मणस्पर्शमात्रेण मुक्तो भवति पातकी। दर्शनान्मुच्यते पापादिति वेदे निरूपितम् ॥
अप्राज्ञो वाऽथ प्राज्ञो वा ब्राह्मणो विष्णुविग्रहः। प्रिया प्राणाधिका विष्णोर्ये विप्रा हरि-
सेविनः ॥ ६९ ॥
द्विजानां हरिभक्तानां प्रभावो दुर्लभः श्रुतौ। येषां पादाब्जरजसा सद्यः पूता वसुंधरा ॥
तेषां च पादचिह्नं यत्तीर्थं तत्परिकीर्तितम्। तेषां च स्पर्शमात्रेण तीर्थपापं प्रणश्यति ॥
आलिङ्गनात्सदालापात्तेषामुच्छिष्टभोजनात्। दर्शनात्स्पर्शनाच्चैव सर्वपापात्प्रमुच्यते ॥
भ्रमणे सर्वतीर्थानां यत्पुण्यं स्नानतो भवेत्। हरिदासस्य विप्रस्य तत्पुण्यं दर्शनाल्लभेत् ॥
ये विप्रा हरये दत्त्वा नित्यमन्नं च भुञ्जते। उच्छिष्टभोजनात्तेषां हरेर्दास्यं लभेन्नरः ॥
न दत्त्वा हरये भक्त्या भुङ्क्ते चेद्भ्रमादपि। पुरीषसदृशं वस्तु जलं मूत्रसमं भवेत् ७५
शूद्रश्चेद्धरिभक्तश्च नैवेद्यभोजनोत्सुकः। आमान्नं हरये दत्त्वा पाकं कृत्वा च खादति ॥
विप्रक्षत्रियवैश्यानां शालग्रामशिलार्चने। अधिकारो न शूद्राणां हरेरप्यर्चने तथा ॥७७॥
द्रव्याण्येतानि गोपेन्द्र विप्रेभ्यश्चेन्न दास्यति। भस्मीभूतानि सर्वाणि भविष्यन्ति न संशयः
अन्नं च सर्वजीवेभ्यः पुण्यार्थं दातुमर्हति। दत्त्वा विशिष्टजीवेभ्यो विशिष्टं फलमाप्नुयात्
अतो दत्त्वा मानुषेभ्यो लभतेऽष्टगुणं फलम्। ततो विशिष्टशूद्रेभ्यो दत्त्वा तद्द्विगुणं फलम्
दत्त्वाऽन्नं वैश्यजातिभ्यस्ततश्चाष्टगुणं फलम्। शूद्राणां द्विगुणं पुण्यं वैश्येभ्योऽन्नं प्रदाय च
दत्त्वाऽन्नं क्षत्रियेभ्योऽपि वैश्यानां द्विगुणं भवेत्। क्षत्रियाणां शतगुणं विप्रेभ्योऽन्नं प्रदाय च
विप्राणां च शतगुणं शास्त्रज्ञे ब्राह्मणे फलम्। शास्त्रज्ञानां शतगुणं भक्ते विप्रे लभेद्ध्रुवम्
स चान्नं हरये दत्त्वा भुङ्क्ते भक्त्या च सादरम् ॥ ८२ ॥
विष्णवे विप्रभक्ताय दत्त्वा दानस्य यत्फलम्। तत्फलं लभते नूनं भक्तब्राह्मणभोजने ॥
भक्ते तुष्टे हरिस्तुष्टो हरौ तुष्टे च देवताः। भवन्ति सिक्ताः शाखाश्च यथा मूलनिषेचनात् ॥
द्रव्याण्येतानि देवाय यदि कामो प्रयच्छति। सर्वे देवाश्च रुष्टाश्चेद्देवैः कः किं करिष्यति ॥
अथवाऽर्धं च वस्तूनां देहि गोवर्धनाय च। गा वर्धयति नित्यं यस्तेन गोवर्धनः स्मृतः ॥
गोवर्धनसमस्तात न पुण्यवान्न महीतले। नित्यं ददाति गोभ्यो यो नवीनानि तृणानि च ॥
तीर्थस्थानेषु यत्पुण्यं यत्पुण्यं विप्रभोजने। सर्वव्रतोपवासेषु सर्वेष्वेव तपःसु च ॥८८॥

यत्पुण्यं च महादाने यत्पुण्यं हरिसेवने । भुवः पर्यटने यत्तु सत्यवाक्येषु यद्भवेत् ८९
यत्पुण्यं सर्वयज्ञेषु दीक्षायां च लभेन्नरः । तत्पुण्यं लभते प्राज्ञो गोभ्यो दत्त्वा तृणानि च॥
भुक्तवन्तीं तृणं यश्च गां वारयति कामतः । ब्रह्महत्या भवेत्तस्य प्रायश्चित्ताद्विशुध्यति ॥
सर्वे देवा गवामङ्गे तीर्थानि तत्पदेषु च । तद्गुह्येषु स्वयं लक्ष्मीस्तिष्ठत्येव सदा पितः ॥
गोष्पदाक्तमृदा यो हि तिलकं कुरुते नरः । तीर्थस्नातो भवेत्सद्यो जयस्तस्य पदे पदे ॥
गावस्तिष्ठन्ति यत्रैव तत्तीर्थं परिकीर्तितम् । प्राणांस्त्यक्त्वा नरस्तत्र सद्यो मुक्तो भवे-
द्ध्रुवम् ॥ ९४ ॥
ब्राह्मणानां गवामङ्गं यो हन्ति मानवाधमः । ब्रह्महत्यासमं पापं भवेत्तस्य न संशयः ॥
नारायणांशान्विप्रांश्च गाश्च ये घ्नन्ति मानवाः । कालसूत्रं च ते यान्ति यावच्चन्द्रदिवाकरौ ।
इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद । आनन्दयुक्तो नन्दश्च तमुवाच स्मिताननः ॥

नन्द उवाच—

पौर्वापरीयं पूजेति महेन्द्रस्य महात्मनः । सुवृष्टिसाधनी साध्वं सर्वसस्यं मनोहरम् ॥९८॥
सस्यानि प्राणिनां प्राणाः सस्याज्जीवन्ति जीविनः । पूजयन्ति प्रशस्याश्च महेन्द्रं पुरुषक्रमात्
महोत्सवं वत्सरान्ते निर्विघ्नाय शिवाय च ॥ १०० ॥
इत्येवं वचनं श्रुत्वा बलेन सह माधवः । उच्चैर्जहास स पुनरुवाच पितरं मुदा ॥ १ ॥

श्रीकृष्ण उवाच—

अहो श्रुतं विचित्रं ते वचनं परमाद्भुतम् । उपहास्यं लोकशास्त्रवेदेष्वेव विगर्हितम् ॥
निरूपणं नास्ति कुत्र शक्राद्वृष्टिः प्रजायते । अपूर्वं नीतिवचनं श्रुतमद्य मुखात्तव ॥
शृणु नीतिं श्रुतिमतां हे तात नानयं वदेः । वचनं सामवेदोक्तं सन्तो जानन्ति सर्वतः ॥
प्रश्नं कुरुष्व मल्लांश्च विबुधानपि संसदि । ब्रुवन्तु परमार्थं च किमिन्द्राद्वृष्टिरेव च ॥५॥
सूर्याद्धि जायते तोयं तोयात्सस्यानि शाखिनः । तेभ्योऽन्नानि फलान्येव तेभ्यो जीव-
न्ति जीविनः ॥ ७ ॥
सूर्यग्रस्तं च नीरं च काले तस्मात्समुद्भवः । सूर्यो मेघादयः सर्वे विधात्रा ते निरूपिताः ॥
कल्पान्ते यो जलधरो गजश्च सागरो मतः । सस्याधिपो नृपो मन्त्री विधात्रा ते निरूपिताः ॥
जलादिकाना सस्यानां तृणानां च निरूपितम् । अब्देऽब्देऽप्येव तत्सर्वं कल्पे कल्पे युगे युगे
हस्ती समुद्रादादाय करेण जलमीप्सितम् । ददात्यनाय तद्वायुदानेन प्रेरितो घनः ॥

---

1 ख. 'विधिपा'।

स्थाने स्थाने पृथिव्यां च काले काले यथोचितम् । ईशेच्छयाऽऽविर्भूतं च न मत्तेःप्रति-
पन्थकम् ॥ ११ ॥

भूतं भव्यं भविष्यच्च महत्क्षुद्रं च मध्यमम् । धात्रा निरूपितं कर्म केन तात निवार्यते ॥
जगच्चराचरं सर्वं कृतं तेनेश्वराज्ञया । आदौ विनिर्मितं भक्ष्यं पश्चाज्जीव इति स्मृतः ॥
अभ्यासात्स्वभावो हि स्वाभावात्कर्म एव च । जायते कर्मणा भोगो जीविनां सुख-
दुःखयोः ॥ १४ ॥

यातनाजन्ममरणरोगशोकभयानि च । समुत्पत्तिर्विपद्विद्या कविता वा यशोऽयशः ॥
पुण्यं च स्वर्गवासश्च पापं नरकसंस्थितिः । भुक्तिर्मुक्तिर्हरेर्दास्यं कर्मणा घटते नृणाम् ॥
सर्वेषां जनको हरिश्चाभ्यासः शीलकर्मणाम् । धातुश्च फलदाता च सर्वं तस्येच्छया भवेत्
विनिर्मितो विराड्येन तत्त्वानि प्रकृतिर्जगत् । कूर्मश्च शेषवरणी चाऽऽब्रह्मस्तम्ब एव च
यस्याऽऽज्ञया भवत्कूर्मे धत्ते शेषं बिभर्ति सः । शेषो वसुंधरां मूर्ध्ना सा च सर्वं चराचरम्
यस्याऽऽज्ञया सदा वाति जगत्प्राणो जगत्त्रये । तपति भ्रमणं कृत्वा भूगोलं सुप्रभाकरः॥
दहत्यग्निः संचरते मृत्युश्च सर्वजन्तुषु । उत्पत्तिः शाखिनां काले पुष्पाणि च फलानि च
स्वे स्वे स्थाने समुद्राश्च तूर्णं मज्जन्त्यधोऽधुना । तमीशं भज भक्त्या च शक्रः किं करिष्यतीश्वरः
ब्रह्माण्डं च कतिविधमाविर्भूतं तिरोहितम् । विधयश्च कतिविधा यस्य भ्रूभङ्गलीलया ॥
मृत्योर्मृत्युः कालकालो विधातुर्विधिरेव सः । भज तं शरणं तात स ते रक्षां करिष्यति
अहोऽष्टाविंशदिन्द्राणां पतने यदहर्निशम् । विधातुरेव जगतामष्टोत्तरशताधिकः ॥२६॥
निमेषाधस्य पतनं निर्गुणस्याऽऽत्मनः प्रभोः । एवंभूते तिष्ठतीशे शक्रपूजा विडम्बनम्॥
इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद । प्रशशंसुश्च मुनयो भगवन्तं सभासदः २७
नन्दः सपुत्रको हृष्टः सभायां साश्रुलोचनः । आनन्दयुक्ता मनुजा यदि पुत्रैः पराजिताः ॥
श्रीकृष्णाज्ञां समाज्ञाय चकार स्वस्तिवाचनम् । क्रमेण वरणं तत्र सर्वेषां च चकार ह ॥
पर्वतस्य मुनीन्द्राणां चकार पूजनं मुदा । बुधानां ब्राह्मणानां च गवां वह्नेश्च सादरम्॥
तत्र पूजासमाप्तौ च क्रतौ च सुमहोत्सवे । नानाप्रकारवाद्यानां बभूव शब्द उल्बणः ॥
जयशब्दः शङ्खशब्दो हरिशब्दो बभूव ह । वेदमङ्गलकाण्डं च पपाठ मुनिपुंगवः ॥
बन्दिनां प्रवरो डिण्डी कंसस्य सचिवः प्रियः । उच्चैः पपाठ पुरतो मङ्गलं मङ्गलाष्टकम् ॥
कृष्णः शैलान्तिकं गत्वा भिन्नां मूर्तिं विधाय च । वस्तु खादामि शैलोऽस्मि वरं वृणिध्व्यु-
वाच ह ॥ ३४ ॥

१ क. विपत्तिः । २ क. विधेया श्च । ३ क. °तायुषः ।

उवाच नन्दं श्रीकृष्णः पश्य शैलं पितः पुरः । वरं प्रार्थय भद्रं ते भविता चेत्युवाच ह ॥
हरेर्दास्यं हरेर्भक्तिं वरं वव्रे स बल्लवः । इत्थं मुक्त्वा वरं दत्त्वा सोऽन्तर्धानं चकार ह ॥
मुनीन्द्रान्ब्राह्मणांश्चैव भोजयित्वा च गोपपाः । बन्दिभ्यो ब्राह्मणेभ्यश्च मुनिभ्यश्च धनं ददौ
मुनिभ्यो ब्राह्मणेभ्योऽपि दत्त्वा नन्दो मुदाऽन्वितः । रामकृष्णौ पुरस्कृत्य सगणः स्वालयं ययौ
रौप्यं वस्त्रं सुवर्णं च वरमश्वं मणिं तथा । भक्ष्यं द्रव्यं बहुविधं बन्दिने डिण्डिने ददौ ॥३९॥
स्तुत्वा नत्वा रामकृष्णौ मुनयो ब्राह्मणा ययुः । ययुरप्सरसः सर्वा गन्धर्वाः किंनरास्तथा
राजानो बल्लवाः सर्वे चाऽऽगता ये महोत्सवे । सर्वे प्रणम्य श्रीकृष्णं ययुः सादरपूर्वकम् ॥
एतस्मिन्नन्तरे शक्रः कोपप्रस्फुरिताधरः । मखभङ्गे बहुविधां निन्दां श्रुत्वा सुरेश्वरः ॥
मरुद्भिर्वारिदैः सार्धं रथमारुह्य सत्वरम् । जगाम नन्दनगरं वृन्दारण्यं मनोहरम् ॥४२॥
सर्वे देवा ययुः पश्चाद्युद्धशास्त्रविशारदाः । शस्त्रास्त्रपाणयः कोपाद्रथमारुह्य नारद ॥
वायुशब्दैर्मेघशब्दैः सैन्यशब्दैर्भयानकैः । चकम्पे नगरं सर्वं नन्दो भयमवाप ह ॥
भार्यां संबोध्य स्वगणमुवाच शोककातरः । रहःस्थलं समानीय नीतिशास्त्रविशारदः ॥

नन्द उवाच—

हे यशोदे समागच्छ वचनं शृणु रोहिणि । रामकृष्णौ समादाय व्रज दूरं व्रजात्प्रिये ॥
बालका बालिका नार्यो यान्तु दूरं भयाकुलाः । बलवन्तश्च गोपाश्चास्तिष्ठन्तु मत्समीपतः ॥
मेध्यांश्च निर्गमिष्यामो वयं च प्राणसंकटात् । इत्युक्त्वा बल्लवश्रेष्ठः सस्मार श्रीहरिं भिया
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकंधरः । काण्वशाखोक्तस्तोत्रेण तुष्टाव ह शचीपतिम् ॥

नन्द उवाच—

इन्द्रः सुरपतिः शक्रो दितिजः पवनाग्रजः ॥ ९११ ॥
सहस्राक्षो भगाङ्गश्च कश्यपाङ्गज एव च । बिडौजाश्च सुनासीरो मरुत्वान्पाकशासनः ॥
जयन्तजनकः श्रीमाञ्छचीशो दैत्यसूदनः । वज्रहस्तः कामसखो गौतमीव्रतनाशनः ॥
वृत्रहा वासवश्चैव दधीचिदेहभिक्षुकः । जिष्णुश्च वामनभ्राता पुरुहूतः पुरंदरः ॥
दिवस्पतिः शतमखः सुत्रामा गोत्रभिद्विभुः । लेखर्षभो बलारातिर्जम्भभेदी सुराश्रयः ॥
संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः । आखण्डलो हरिहयो नमुचिप्राणनाशनः ॥
वृद्धश्रवा वृषश्चैव दैत्यदर्पनिषूदनः । षट्चत्वारिंशन्नामानि पापघ्नानि विनिश्चितम् ॥
स्तोत्रमेतत्कौथुमोक्तं नित्यं यदि पठेन्नरः । महाविपत्तौ शक्रस्तं वज्रहस्तश्च रक्षति ॥
अतिवृष्टिशिलावृष्टिवज्रपाताच्च दारुणात् । कदाचिन्न भयं तस्य रक्षिता वासवः स्वयम् ॥

१ क. 'भङ्गं च' ।

यत्र गेहे स्तोत्रमिदं यश्च जानाति पुण्यवान् । न तत्र वज्रपतनं शिलावृष्टिश्च नारद ॥

नारायण उवाच—

स्तोत्रं नन्दमुखाच्छ्रुत्वा चुकोप मधुसूदनः । उवाच पितरं नीतिं प्रज्वलन्ब्रह्मतेजसा ॥
कं स्तौषि भीरो को वेन्द्रस्त्यज भीतिं ममान्तिके । क्षणार्धे भस्मसात्कर्तुं क्षमोऽहमवलीलया ॥
गाश्च वत्साश्च बालाश्च योषितो हि भयातुराः । गोवर्धनस्य कुहरे संस्थाप्य तिष्ठ निर्भयम् ॥
बालस्य वचनं श्रुत्वा तच्चकार मुदाऽन्वितः । हरिर्दधार शैलं तं वामहस्तेन दण्डवत् ॥
एतस्मिन्नन्तरे तत्र दीप्तोऽपि रत्नतेजसा । अन्धीभूतश्च सहसा बभूव रजसाऽऽवृतः ॥
सवातो मेघनिकरश्चच्छाद गगनं मुने । वृन्दावने बभूवातिवृष्टिरेव निरन्तरम् ॥ ६८ ॥
शिलावृष्टिर्वज्रवृष्टिरुल्कापातः सुदारुणः । समस्तं पर्वतस्पर्शात्पतितं दूरतस्ततः ॥ ६९ ॥
विफलस्तत्समारम्भो यथाऽनीशोद्यमो मुने । दृष्ट्वा मोघं च तत्सर्वं सद्यः शक्रश्चुकोप ह
जग्राहामोघकुलिशं दधीचस्थिविनिर्मितम् । दृष्ट्वा तं वज्रहस्तं च जहास मधुसूदनः ॥
सहस्तं स्तम्भयामास वज्रमेवातिदारुणम् । सहामरगणं मोघं चकार स्तम्भनं विभुः ॥
सर्वे तस्थुर्निश्चलास्ते भित्तौ पुत्तलिका यथा । हरिणा जृम्भितः शक्रः सद्यस्तन्द्रामवाप ह ॥
ददर्श सर्वं तन्द्राशो तत्र कृष्णमयं जगत् । द्विभुजं मुरलीहस्तं रत्नालंकारभूषितम् ॥ ७४ ॥
पीतवस्त्रपरीधानं रत्नसिंहासनस्थितम् । ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम् ॥ ७५ ॥
चन्दनोक्षितसर्वाङ्गमेतत्सर्वं चराचरम् । दृष्ट्वाऽद्भुततमं तत्र सद्यो मूर्छामवाप ह ॥ ७६ ॥
जजाप मन्त्रं तत्रैव प्रदत्तं गुरुणा पुरा । सहस्रदलपद्मस्थं ददर्श ज्योतिरुल्बणम् ॥ ७७ ॥
तत्रान्तरे दिव्यरूपमतीव सुमनोहरम् । नवीननीरदश्यामं श्यामसुन्दरविग्रहम् ॥ ७८ ॥
सद्रत्नसारनिर्माणज्वलन्मकरकुण्डलम् । ज्वलन्मणीन्द्रमकरकिरीटोज्ज्वलशेखरम् ॥ ७९ ॥
ज्वलता कौस्तुभेन्द्रेण कण्ठवक्षःस्थलोज्ज्वलम् । मणिकेयूरवलयमणिमञ्जीररञ्जितम् ॥
अन्तर्बहिः सम दृष्ट्वा तुष्टाव परमेश्वरम् ॥ ८० ॥

इन्द्र उवाच—

अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम् । गुणातीतं निराकारं स्वेच्छामयमनन्तकम् ॥
भक्तध्यानाय सेवायै नानारूपधरं वरम् । शुक्लरक्तपीतश्याम युगानुक्रमणेन च ॥ ८२ ॥
शुक्लतेज स्वरूपं च सत्ये सत्यस्वरूपिणम् । त्रेतायां कुङ्कुमाकारं ज्वलन्तं ब्रह्मतेजसा ॥
द्वापरे पीतवर्णं च शोभितं पीतवाससा । कृष्णवर्णं कलौ कृष्णं परिपूर्णतमं प्रभुम् ॥

---

१ क. मर्णो दृसाघनिरदि ।

नवधाराधरोत्कृष्टश्यामसुन्दरविग्रहम् । नन्दैकनन्दनं वन्दे यशोदानन्दनं प्रभुम् ॥८५॥
गोपिकाचेतनहरं राधाप्राणाधिकं परम् । विनोदमुरलीशब्दं कुर्वन्तं कौतुकेन च ॥८६॥
रूपेणाप्रतिमेनैव रत्नभूषणभूषितम् । कन्दर्पकोटिसौन्दर्यं बिभ्रतं शान्तमीश्वरम् ॥८७॥
क्रीडन्तं राधया सार्धं वृन्दारण्ये च कुत्रचित् । कुत्रचिन्निर्जनेऽरण्ये राधावक्षःस्थलस्थितम्
जलक्रीडां प्रकुर्वन्तं राधया सह कुत्रचित् । राधिकाकबरीभारं कुर्वन्तं कुत्रचिद्वने ॥८९॥
कुत्रचिद्राधिकापादे दत्तवन्तमलक्तकम् । राधाचर्विततांम्बूलं गृह्णन्तं कुत्रचिन्मुदा ॥९०॥
पश्यन्तं कुत्रचिद्राधां पश्यन्तीं वक्रचक्षुषा । दत्तवन्तं च राधायै कृत्वा मालां च कुत्रचित्
कुत्रचिद्राधया सार्धं गच्छन्तं रासमण्डलम् । राधादत्तां गले मालां धृतवन्तं च कुत्रचित् ॥
सार्धं गोपालिकाभिश्च विहरन्तं च कुत्रचित् । राधां गृहीत्वा गच्छन्तं विहाय तां च कुत्रचित
विप्रपत्नीदत्तमन्नं भुक्तवन्तं च कुत्रचित् । भुक्तवन्तं तालफलं बालकैः सह कुत्रचित् ॥
वस्त्रं गोपालिकानां च हरन्तं कुत्रचिन्मुदा । गवां गणं व्याहरन्तं कुत्रचिद्बालकैः सह ॥
कालीयमूर्ध्नि पादाब्जं दत्तवन्तं च कुत्रचित् । विनोदमुरलीशब्दं कुर्वन्तं कुत्रचिन्मुदा ॥
गायन्तं रम्यसंगीतं कुत्रचिद्बालकैः सह । स्तुत्वा शक्रः स्तवेन्द्रेण प्रणनाम हरिं भिया ॥
पुरा दत्तेन गुरुणा रणे वृत्रासुरेण च । कृष्णेन दत्तं कृपया ब्रह्मणे च तपस्यते ॥९८॥
एकादशाक्षरो मन्त्रः कवचं सर्वलक्षणम् । दत्तमेतत्कुमाराय पुष्करे ब्रह्मणा पुरा ॥९९॥
कुमारोऽङ्गिरसे दत्तं गुरवेऽङ्गिरसा मुने ॥ २०० ॥
इदमिन्द्रकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् । स हि प्राप्य दृढां भक्तिमन्ते दास्यं ॥
लभेद्ध्रुवम् ॥ २०१ ॥
जन्ममृत्युजराव्याधिशोकेभ्यो मुच्यते नरः । न हि पश्यति स्वप्नेऽपि यमदूतं यमालयम्

नारायण उवाच—

इन्द्रस्य वचनं श्रुत्वा प्रसन्नः श्रीनिकेतनः । प्रीत्या तस्मै वरं दत्त्वा स्थापयामास पर्वतम्
प्रणम्य च हरिं शक्रः प्रययौ स्वगणैः सह । गह्वरस्था जनाः सर्वे प्रजग्मुर्गह्वराद्गृहम् ॥
ते सर्वे मेनिरे कृष्णं परिपूर्णतमं विभुम् । पुरस्कृत्य व्रजस्थांश्च प्रययौ स्वालयं हरिः ॥
तुष्टाव नन्दः पुत्रं तं पूर्णब्रह्म सनातनम् । पुलकाञ्चितसर्वाङ्गो भक्तिपूर्णाश्रुलोचनः ॥६॥

नन्द उवाच—

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥
नमो ब्रह्मण्यदेवाय ब्रह्मणे परमात्मने । अनन्तकोटिब्रह्माण्डधामधाम्ने नमोऽस्तु ते ॥८॥
नमो वत्सादिरूपाणां जीवरूपाय साक्षिणे । निर्लिप्ताय निर्गुणाय निराकाराय ते नमः ॥

अतिसूक्ष्मस्वरूपाय स्थूलात्स्थूलतमाय च। सर्वेश्वराय सर्वाय तेजोरूप नमोऽस्तु ते ॥
अतिप्रत्यक्षरूपाय ध्यानासाध्याय योगिनाम्। ब्रह्मविष्णुमहेशानां वन्द्याय नित्यरूपिणे
भासे चतुर्णां वर्णानां युगेष्वेव चतुर्षु च। शुक्लरक्तपीतश्यामाभिधानगुणशालिने ॥१२॥
योगिने योगरूपाय गुरवे योगिनामपि। सिद्धेश्वराय सिद्धाय सिद्धानां गुरवे नमः ॥
यं स्तोतुमक्षमो ब्रह्मा विष्णुर्यं स्तोतुमक्षमः। यं स्तोतुमक्षमो रुद्रः शेषो यं स्तोतुमक्षमः ॥
यं स्तोतुमक्षमो धर्मो यं स्तोतुमक्षमो रविः। यं स्तोतुमक्षमो लम्बोदरश्चापि षडाननः ॥
यं स्तोतुमक्षमाः सर्वे मुनयः सनकादयः। कपिलो न क्षमः स्तोतुं सिद्धेन्द्राणां गुरोर्गुरुः॥
न शक्तौ स्तवनं कर्तुं नरनारायणावृषी। अन्ये जडधियः के वा स्तोतुं शक्ताः परात्परम्
वेदा न शक्ता नो वाणी न च लक्ष्मीः सरस्वती। न राधा स्तवने शक्ता किं स्तुवन्ति ॥
विपश्चितः ॥ १८ ॥
क्षमस्व निखिलं ब्रह्मन्नपराधं क्षणे क्षणे। रक्ष मां करुणासिन्धो दीनबन्धो भवार्णवे ॥
पुरा तीर्थे तपस्तप्त्वा पुत्रः प्राप्तः सनातनः। स्वकीयचरणाम्भोजे भक्तिं दास्यं च देहि मे
ब्रह्मत्वममरत्वं वा सालोक्यादिकमेव वा। त्वत्पदाम्भोजदास्यस्य कलां नार्हति षोडशीम्
इन्द्रत्वं वा सुरत्वं वा संप्राप्तिं सिद्धिस्वर्गयोः। राजत्वं चिरजीवित्वं सुधियो गणयन्ति किम्
एतद्यत्कथितं सर्वं ब्रह्मत्वादिकमीश्वर। भक्तसङ्गक्षणार्धस्य नोपमा ते किमर्हति ॥२३॥
त्वद्भक्तो यस्त्वत्सदृशः कस्त्वां तर्कितुमीश्वरः। क्षणार्धालापमात्रेण पारं कर्तुं स चेश्वरः॥
भक्तसङ्गाद्भवत्येव भक्तिः कर्मनेकधा। त्वद्भक्तजलदालापजलसेकेन वर्धते ॥ २५ ॥
अभक्तालापतापात्तु शुष्कतां याति तत्क्षणम्। त्वद्गुणस्मृतिसेकाच्च वर्धते तत्क्षणे स्फुटम्
त्वद्भक्त्यङ्कुरमुद्भूतं स्फीतं मानसजं परम्। न नश्यं वर्धनीयं च नित्यं नित्यं क्षणे क्षणे
ततः संप्राप्य ब्रह्मत्वं भक्तस्य जीवनाय च। ददात्येव फलं तस्मै हरिदास्यमनुत्तमम्॥
संप्राप्य दुर्लभं दास्यं यदि दासो बभूव ह। सुनिश्चयेन तेनैव जितं सर्वं भवादिकम्॥
इत्येवमुक्त्वा भक्त्या च नन्दस्तस्थौ हरेः पुरः। प्रसन्नवदनः कृष्णो ददौ तस्मै तदीप्सितम्
एवं नन्दकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत्। सुदृढां भक्तिमाप्नोति सद्यो दास्यं लभेद्धरेः
तपस्तप्त्वा यदा द्रोणस्तीर्थे च धरया सह। स्तोत्रं तस्मै पुरा दत्तं ब्रह्मणा तत्सुदुर्लभम् ॥
हरेः षडक्षरो मन्त्रः कवचं सर्वरक्षणम्। इह सौभरिणा दत्तं तस्मै तुष्टेन पुष्करे॥३३॥
तदेव कवचं स्तोत्रं स च मन्त्रः सुदुर्लभः। ब्रह्मणोंऽशेन मुनिना नन्दाय च तपस्यते ॥

---

१ क. महान्धमः। २ क. पृष्ठतं।

मन्त्रः स्तोत्रं च कवचमिष्टदेवो गुरुस्तथा । या यस्य विद्या प्राचीना न तां त्यजति निश्चितम्
इत्येवं कथितं स्तोत्रं श्रीकृष्णाख्यानमद्भुतम् । सुखदं मोक्षदं सारं भवबन्धविमोचनम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० इन्द्रयागभञ्जननन्द-
स्तोत्रप्रस्तावैकविंशोऽध्यायः ॥ २१ ॥

अथ द्वाविंशोऽध्यायः ।

नारायण उवाच—

एकदा राधिकानाथो बलेन सह बालकैः । जगाम तत्तालवनं परिपक्वफलान्वितम् ॥
वृक्षाणां रक्षिता दैत्यः खररूपी च धेनुकः । कोटिसिंहसमबलो देवानां दर्पनाशनः ॥
शरीरं पर्वतसमं कूपतुल्ये च लोचने । ईषापङ्क्तिसमा दन्तास्तुण्डं पर्वतगह्वरम् ॥
शतहस्तपरिमिता जिह्वा लोला भयानका । कासारसदृशी नाभिः शब्दस्तस्य भयानकः
दृष्ट्वा तालवनं बाला हर्षमापुरनिन्दिताः । कौतुकात्कृष्णमूचुस्ते स्मेराननसरोरुहाः ॥५॥

बाला ऊचुः—

हे कृष्ण करुणासिन्धो दीनबन्धो जगत्पते । महाबल बलभ्रातः समस्तबलिनां वर ॥६॥
अवधानं कुरु विभो क्षणार्धं नो निवेदने । क्षुधितानां शिशूनां च भक्तानां भक्तवत्सल ॥
स्वादूनि सुन्दराण्येव पश्य तालफलानि च । भद्रकं पातयितुं वृक्षान्पातितुं च फलानि च
नानावर्णानि पुष्पाणि पक्वानि दुर्लभानि च । आज्ञां करोषि चेत्कृष्ण चेष्टां कर्तुं वयं समाः
किं त्वत्र दैत्यो बलवान्खररूपी च धेनुकः । अजितस्त्रिदशैः सर्वैर्महाबलपराक्रमः ॥ १० ॥
दुर्निवार्यश्च सर्वेषां कंसस्य सचिवो महान् । हिंसकः सर्वजन्तूनां वनानामस्ति रक्षिता ॥
सुविचार्य जगत्कान्त वद नो वदतां वर । युक्तं कार्यमयुक्तं वा कर्तव्यमथवा न वा ॥
बालकानां वचः श्रुत्वा भगवान्मधुसूदनः । उवाच मधुरं बालान्वचनं तत्सुखावहम् ॥

श्रीकृष्ण उवाच—

किं वो दैत्याद्भयं बाला यूयं मत्सहचारिणः । वृक्षानभङ्क्त्वा पातयित्वा फलानि
खादतामभयम् ॥ १४ ॥
श्रीकृष्णाज्ञां समादाय बालका बलशालिनः । उत्पेतुर्वृक्षशिखरं क्षुधिताश्च फलार्थिनः ॥
नानाप्रकारवर्णानि स्वादूनि सुन्दराणि च । फलानि पातयामासुः परिपक्वानि नारद ॥
केचिद्बभञ्जुर्वृक्षांश्च पातयामासुरेव च । केचित्कोलाहलं चक्रुर्ननृतुस्तत्र केचन ॥ १७ ॥
अवरुह्य तरुभ्यश्च बालका बलशालिनः । फलान्यादाय गच्छन्तो ददृशुर्दैत्यपुंगवम् ॥

महाबलं महावीर्यं घोरं गर्दभरूपिणम् । आगच्छन्तं महावेगात्कुर्वन्तं शब्दमुल्बणम् ॥
तं दृष्ट्वा रुरुदुः सर्वे बालास्ते तत्र भीतिः । कृष्ण कृष्णेति शब्दं च प्रचक्रुर्बहुधा भृशम् ॥
अस्मान्रक्ष समागच्छ हे कृष्ण करुणानिधे । हे संकर्षण नो रक्ष प्राणा नो यान्ति दानवात् ॥

हे कृष्ण हे कृष्ण हरे मुरारे गोविन्द दामोदर दीनबन्धो ।
गोपीश गोपेश भवार्णवेऽस्माननन्त नारायण रक्ष रक्ष ॥ २२ ॥
भयेऽभये वाऽथ शुभेऽशुभे वा सुखेषु दुःखेषु च दीननाथ ।
त्वया विनाऽन्य शरणं भवार्णवे न नोऽस्ति हे माधव रक्ष रक्ष ॥ २३ ॥
जय जय गुणसिन्धो कृष्ण भक्तैकबन्धो बहुतरभययुक्तान्बालकान्रक्ष रक्ष ।
जहि दनुजकुलानामीशमस्माकमन्तं सुरकुलबलदर्पं वर्धयेमं निहत्य ॥ २४ ॥

बालानां विक्लवं दृष्ट्वा बलेन सह माधवः । आजगाम शिशुस्थानं भयहा भक्तवत्सलः ॥
भयं नास्ति भयं नास्तीत्युक्त्वा दुद्राव सत्वरम् । ईषद्धास्यप्रसन्नास्यो निर्भयं दत्तवाञ्छिशून् ॥
दृष्ट्वा कृष्णं बलं बाला ननृतुर्विजहुर्भयम् । हरिस्मृतिश्च भयदा सर्वमङ्गलदायिका ॥
श्रीकृष्णो दानवं दृष्ट्वा ग्रसन्तं पुरतः शिशून् । बलं संबोध्य बलिनमुवाच मधुसूदनः ॥

श्रीकृष्ण उवाच–

दानवो बलिपुत्रोऽयं नाम्ना साहसिको बली । गर्दभो ब्रह्मशापेन शप्तो दुर्वाससा पुरा ॥
पापिष्ठो मम वध्योऽयं महाबलपराक्रमः । अहमेनं वधिष्यामि त्वं रक्ष बालकान्बले ॥
आदाय बालकान्सर्वान्दूरं गच्छेत्युवाच ह । तान्गृहीत्वा बलः शीघ्रं जगाम त्वरयाऽऽज्ञया ॥
दृष्ट्वा कृष्णं दानवेन्द्रो महाबलपराक्रमः । जग्रास हेलया कोपाज्ज्वलदग्निशिखोपमम् ॥
बभूवातिदाहयुक्तो भर्तुकामोऽतितेजसा । उज्जग्रास पुनर्दैत्यो विभुं तेजस्विनं भिया ॥
उज्झितं संतमीशं च दृष्ट्वा दैत्यो मुमोच ह । अतीव सुन्दरं शान्तं ज्वलन्तं ब्रह्मतेजसा ॥
कृष्णदर्शनमात्रेण बभूवास्य पुरास्मृतिः । आत्मानं बुबुधे कृष्णं जगतां कारणं परम् ॥
तेन स्वरूपमीशं तं दृष्ट्वा तुष्टाव दानवः । यथागमं यथाजन्म गुणातीतं श्रुतेः परम् ॥

दानव उवाच–

वामनोऽसि त्वमंशेन मत्पितुर्यज्ञभिक्षुकः । राज्यहर्ता च श्रीहर्ता सुतलस्थलदायकः ॥
बलिर्भक्तिवशो वीरः सर्वेशो भक्तवत्सलः । शीघ्रं त्वं हिन्धि मां पापं शापाद्गर्दभरूपिणम् ॥
मुनिर्दुर्वाससः शापादीदृशं जन्म कुत्सितम् । मृत्युरुक्तश्च मुनिना त्वत्तो मम जगत्पते ॥
षोडशारेण चक्रेण सुतीक्ष्णेनातितेजसा । जहि मां जगतां नाथ संदर्शितं कुरु मोक्षदः ॥

१ क. भाद । २ क. भाद । ३ क. सद्गते ।

त्वमंशेन वराहश्च समुद्धर्तुं वसुंधराम् । वेदानां रक्षिता नाथ हिरण्याक्षनिषूदनः ॥४१॥
त्वं नृसिंहः स्वयं पूर्णो हिरण्यकशिपोर्वधे । प्रह्लादानुग्रहार्थाय देवानां रक्षणाय च ॥
त्वं च वेदोद्धारकर्ता मीनांशेन दयानिधे । नृपस्य ज्ञानदानाय रक्षायै सुरविप्रयोः ॥
शेषाधारश्च कूर्मस्त्वमंशेन सृष्टिहेतवे । विश्वाधारश्च विश्वस्त्वमंशेनापि सहस्रधृत् ॥
रामो दाशरथिस्त्वं च जानक्युद्धारहेतवे । दशकंधरहन्ता च सिन्धौ सेतुविधायकः ॥
कलया परशुरामश्च जमदग्निसुतो महान् । त्रिःसप्तकृत्वो भूपानां निहन्ता जगतीपते ॥
अंशेन कपिलस्त्वं च सिद्धानां च गुरोर्गुरुः । मातृज्ञानप्रदाता च योगशास्त्रविधायकः ॥
अंशेन ज्ञानिनां श्रेष्ठौ नरनारायणावृषी । त्वं च धर्मसुतो भूत्वा लोकविस्तारकारकः ॥
अधुना कृष्णरूपस्त्वं परिपूर्णतमः स्वयम् । सर्वेषामवताराणां बीजरूपः सनातनः ॥
यशोदाजीवनो नित्यो नन्दैकानन्दवर्धनः । प्राणाधिदेवो गोपीनां राधाप्राणाधिकप्रियः ॥
वसुदेवसुतः शान्तो देवकीदुःखभञ्जनः । अयोनिसंभवः श्रीमान्पृथिवीभारहारकः ॥५१॥
पूतनायै मातृगतिं प्रदाता च कृपानिधिः । बककेशिप्रलम्बानां ममापि मोक्षकारकः ॥
स्वेच्छामय गुणातीत भक्तानां भयभञ्जन । प्रसीद राधिकानाथ प्रसीद कुरु मोक्षणम् ॥
हे नाथ गार्दभीयोनेः समुद्धर भवार्णवात् । मूर्खस्त्वद्भक्तपुत्रोऽहं मामुद्धर्तुं त्वमर्हसि ॥
वेदा ब्रह्मादयो ये च मुनीन्द्राः स्तोतुमक्षमाः । किं स्तौमि तं गुणातीतं पुरा दैत्योऽधुना खरः ॥
एवं कुरु कृपासिन्धो येन मे न भवेज्जनुः । दृष्ट्वा पादारविन्दं ते कः पुनर्भवनं व्रजेत् ॥
ब्रह्मा स्तोता खरः स्तोता नोपहासितुमर्हसि । सर्वेश्वरस्य विज्ञस्य योग्यायोग्ये समा कृपा ॥
इत्येवमुक्त्वा दैत्येन्द्रास्तस्थौ च पुरतो हरेः । प्रसन्नवदनः श्रीमानतितुष्टो बभूव ह ॥
इदं दैत्यकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् । सालोक्यसार्ष्टिसामीप्यं लीलया लभते हरेः ॥
इह लोके हरेर्भक्तिमन्ते दास्यं सुदुर्लभम् । विद्यां श्रियं सुकविता पुत्रपौत्रान्यशो लभेत् ॥

नारायण उवाच—

श्रुत्वाऽनुमेने दैत्येन्द्रस्तवनं करुणानिधिः । कथं करोमि संहारमीदृशं भक्तमित्यहो ॥
अनुमन्य स्मृतिं तस्य संजहार हरिः स्वयम् । न हि युक्तो वधः स्तोतुर्दुर्वक्तुर्विधिरीश्वरात् ॥
दानवो मायया विष्णोर्विसस्मार पुनः स्वकम् । दुराचिः स तत्कण्ठदेशे प्रविशानं चकार ह ॥
उवाच श्रीहरिं दैत्यः कोपात्प्रस्फुरिताधरः । मुने सद्यो मर्तुकामो दैवभ्रान्तो विचेतनः ॥

दैत्य उवाच—

ध्रुवं त्वं मर्तुकामोऽसि दुर्बुद्धे मानवार्भक । अद्य प्रस्थापयिष्यामि त्वामहं यमसद्मनि ॥

---

१ क. प्रह्लादा ।

आयासि जीवनाकाङ्क्षी मम तालवनं शिशो । न यास्यसि पुनर्गेहं मान्यवं न हि द्रक्ष्यसि
न कंसो न जरासंधो नरको न समो मम । देवाः कम्पन्ति मे नित्यं के चान्ये मत्समा भुवि
न हि संहारकर्ता च मां संहर्तुं क्षमः शिवः । न च ब्रह्मा न विष्णुश्च न मृत्युः काल एव च
मम तालतरून्भङ्क्त्वा पातयित्वा फलानि च । अहंकरोषि सहसा किमहो कस्य तेजसा
कस्त्वं वद बटो सत्यं कमनीयोऽतिसुन्दरः । दुर्लभं जीवनं दातुं मह्यं कथमिहागतः ॥
इत्युक्त्वा मस्तके कृत्वा प्रेरयित्वा तु तं बली । दूरतः पातयामास श्रीकृष्णं मरणोन्मुखः
पातयित्वा च तं भूमौ विषाणाभ्यां जघान सः । कृष्णाङ्गस्पर्शमात्रेण तद्विषाणे बभञ्जतुः
दैत्यो भग्नविषाणश्च तमीशं कोपयन्मुने । जग्रास चर्वणं कर्तुं भग्नदन्तो बभूव ह ॥
तेजसा दग्धवक्त्रश्च तमुज्जग्राह तत्क्षणे । जज्वाल व्यथितः कोपाद्ददार खुरतो महीम् ॥
घूर्णयित्वा तु लाङ्गूलं शब्दं कृत्वा भयानकम् । स जगाम शिशुस्थानं दुद्रुवुर्बालका भिया
कण्ठं च प्रेरयामास मस्तकेन महाबली । बलो मुष्टिं ददौ तस्मै मूर्छामाप ततोऽसुरः ॥
क्षणेन चेतनां प्राप्य जगाम हरिसंनिधिम् । बलमुष्ट्या च व्यथितः पुनर्मूर्छामवाप सः ॥
पुनश्च चेतनां प्राप्य समुत्तस्थौ व्यथाकुलः । उत्ससर्ज बृहल्लेण्डं मूत्रं च भयमाप ह ॥
क्षणात्संविक्षणं प्राप्य महाबलपराक्रमः । कृत्वा शिरसि गोविन्दं घूर्णयामास दानवः ॥
पातयामास भूमौ तं घूर्णयित्वा पुनः पुनः । उत्पाट्य तालवृक्षं तं ताडयामास माधवः
यथा केशप्रहारेण दानवस्य भवेद्व्यथा । तथा बभूव दैत्यस्य तालवृक्षस्य ताडनात् ॥
गोवर्धनं समुत्पाट्य घातयामास तं विभुः । पपात वेगाच्छैलेन्द्रस्तस्योपरि महामुने ॥
पर्वतस्य प्रहारेण मूर्छामाप महाबलः । बभूव जर्जराङ्गश्च रुधिरं च समुद्वमन् ॥८३॥
क्षणेन चेतनां प्राप्य समुत्तस्थौ रुषाऽसुरः । गृहीत्वा पर्वतश्रेष्ठं प्रेरयामास माधवम् ॥
दृष्ट्वा शैलमुत्पतन्तं वेगेन मधुसूदनः । जग्राह दक्षिणकरे यथेक्षुदण्डवत्प्रभुः ॥ ८४ ॥
पूर्वस्थाने पर्वतं तं स्थापयामास कौतुकात् । गृहीत्वा दैत्यकर्णाग्रं पातयामास दूरतः ॥
उत्पत्य च महावेगाच्चकार वेष्टनं हरेः । पृथिवीं घर्षयामास तीक्ष्णाग्रेण खुरेण च ॥
प्रगृह्य श्रीहरिं वेगात्कृत्वा मूर्ध्नि महासुरः । उत्पपात मनोयायी लीलया लक्षयोजनम् ॥
महारं च तयोर्युद्धं निर्लक्ष्ये च बभूव ह । ततो गृहीत्वा श्रीकृष्णं पपात धरणीतले ॥
पुनर्मुहूर्तं युद्धं च बभूव भूतले तयोः । मुदा हरिः प्रशशंस महस्य दानवेश्वरम् ॥
मन्त्रघातस्य बलेः पुत्रं धन्यं तज्जीवनं परम् । स्वरस्यातु ते दानवेन्द्र वत्स निर्वाणतां मम ॥
मद्दर्शनं स्वरितबीजं परं निर्वाणकारणम् । सर्वाधिकं सर्ववरं लभ स्थानं मनोहरम् ॥

---

१ क. माह॰ । २ क. भग॰ । ३ ख. प्रलाप॰ ।

इत्येवमुक्त्वा श्रीकृष्णः सस्मार चक्रमुत्तमम् । सूर्यकोटिसमं दीप्त्या जग्राह तत्सुदर्शनम् ॥
चिक्षेप भ्रामयित्वा च षोडशारमनुत्तमम् । चिच्छेद लीलयाऽवध्यं ब्रह्मविष्णुमहेश्वरैः ॥
पपात मस्तकं भूमौ दानवस्य महात्मनः । तेजःसमूह उत्तस्थौ शतसूर्यसमप्रभः ॥
विलोक्य हरिलोकं संश्लिष्टं कृष्णपदाम्बुजे । संप्राप्य(प) परमं मोक्षमहो दानवपुंगवः ॥
गगनस्थाः सुराः सर्वे मुनयश्च भृशं मुदा । पारिजातप्रसूनानां चक्रुस्ते तत्र वर्षणम् ॥
नेदुर्दुन्दुभयः स्वर्गे ननृतुश्चाप्सरोगणाः । जगुर्गन्धर्वनिकरास्तुष्टुवुर्मुनयो मुदा ॥ ९८ ॥
स्तुत्वा जग्मुः सुराः सर्वे मुनयो हर्षविह्वलाः । धेनुकस्य वधं दृष्ट्वा तत्राऽऽजग्मुश्च बालकाः
बलश्च बलिनां श्रेष्ठस्तुष्टाव पुरुषोत्तमम् । तुष्टुवुर्बालकाः सर्वे ननृतुश्च मुदाऽन्विताः ॥
दत्त्वा कृष्णबलाभ्यां च प्रपक्वानि फलानि च । सर्वाणि भक्षयामासुर्बालाः प्रहृष्टमानसाः ॥
भुक्त्वा पीत्वा हरिः शीघ्रं बलेन बालकैः सह । जगाम स्वालयं ब्रह्मन्निहत्य दानवेश्वरम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० धेनुकवधो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

अथ त्रयोविंशोऽध्यायः ।

नारद उवाच—
केन पापेन बलिनो गर्दभत्वमवाप ह । दुर्वासाः केन दोषेण शशाप दानवेश्वरम् ॥ १ ॥
केन पुण्येन वा नाथ बलिनः श्रीहरेः पदम् । सहसैकत्वमुक्तिं च संप्राप दानवाधिपः ॥
मुने सर्वं सुविस्तार्य वद संदेहभञ्जन । अहो कविमुखे काव्यं नूतनं नूतनं पदे पदे ॥
नारायण उवाच—
शृणु वत्स प्रवक्ष्येऽहमितिहासं पुरातनम् । पुरा श्रुतं धर्मवक्त्रात्पर्वते गन्धमादने ॥ ४ ॥
पाद्मकल्पं च वृत्तान्तं विचित्रं सुमनोहरम् । नारायणकथोपेतं कर्णपीयूषमुत्तमम् ॥ ५ ॥
यत्र कल्पे कथा चेयं तत्र त्वमुपबर्हणः । आकल्पजीवी सश्रीकः सुन्दरः स्थिरयौवनः ॥
पञ्चाशत्कामिनीनां च पतिः शृङ्गारतत्परः । वरेण ब्रह्मणस्त्वं च सुकण्ठो गायनेश्वरः ॥
अनुक्षणं पपुस्तास्ते सुन्दरं मुखपङ्कजम् । निमेषरहिताः सर्वाः कामबाणप्रपीडिताः ॥
तासां प्राणेश्च घटितो विधिना स्वामिन श्रुतम् । दिवानिशं सहचरा न जीवन्ति त्वया विना
पुष्पोद्याने च रहसि स्थाने स्थाने मनोरमे । गह्वरेषु च शैलानां कन्दरेषु नदीषु च ॥
काननेषु च रम्येषु श्मशाने जन्तुवर्जिते । यथामनोरथं ताश्च क्रीडां चक्रुस्त्वया सह ॥

१ क. बलीय ।

तदा दैवाद्द्विधे, शापाद्भूत्वा दासीसुतो भवान् । अधुना ब्रह्मणः पुत्रो वैष्णवोच्छिष्टभोजनात्
असंख्यकल्पजीवी च वैष्णवप्रवरो महान् । ज्ञानदृष्ट्या सर्वदर्शी प्रियशिष्यश्च धूर्जटेः ॥
तस्य कल्पस्य वृत्तान्तं मुने मत्तो निशामय । विस्तार्य दैत्यवृत्तान्तं कथयामि सुधोपमम् ॥
एकदैव बलेः पुत्रो नाम्ना साहसिको बली । स्वतेजसा सुराञ्जित्वा प्रतस्थे गन्धमादनम् ॥
चन्दनोक्षितसर्वाङ्गो रत्नभूषणभूषितः । रत्नसिंहासनस्थश्च बहुसैन्यसमन्वितः ॥ १६ ॥
एतस्मिन्नन्तरे तेन पथा याति तिलोत्तमा । रूपेणाप्सरसां श्रेष्ठा नानावेषविधायिनी ॥
चारुचम्पकवर्णाभा रत्नाभरणभूषिता । नवयौवनसंपन्ना कामबाणप्रपीडिता ॥ १८ ॥
ईषद्धास्यप्रसन्नास्या दिव्यवस्त्रं सुबिभ्रती । वक्रभ्रूभङ्गयुक्ता सा गजेन्द्रमन्दगामिनी ॥ १९ ॥
स्तनमूरुं मुखेन्दुं च दृष्ट्वा साहसिको युवा । वायुना मुक्तवस्त्रायास्तस्या मूर्छामवाप ह ॥
सा ददर्श बलेः पुत्रमतीव सुमनोहरम् । प्रफुल्लमालतीमाला बिभ्रतं नवयौवनम् ॥ २१ ॥
शरत्पार्वणचन्द्रास्यं सुस्मितं सुमनोहरम् । दृष्ट्वा तं विस्मिता कामात्कटाक्षं च चकार सा
क्रीडार्थं चन्द्रलोकं च गच्छन्ती चन्द्रकामुकी । तस्थौ केन च्छलेनैव मत्ता शृङ्गारलालसा
दर्शं दर्शं च तस्यास्यं प्रहस्य वक्रचक्षुषा । मुखस्याऽऽच्छादनं चक्रे वाससा सा पुनः पुनः ॥
पुलकाङ्कितसर्वाङ्गं घर्मकर्मसमन्वितम् । बभूव काममत्ताया योनौ कण्डूयनं जलम् ॥
विसस्मार शशधरं बलिपुत्रमनोरथा । अहो को वेद भुवने दुर्ज्ञेयं पुंश्चलीमनः ॥ २६ ॥
पुंश्चल्या यो हि विश्वस्तो विधिना स विडम्बितः । बहिष्कृतश्च यशसा धर्मेण स्वकुलेन च
वाञ्छितं नूतनं प्राप्य विनश्यति पुरातनम् । तदा स्वकर्मसाध्या सा को वा तस्याः प्रियोऽप्रियः
[1]दैवे कर्मणि पैत्र्ये च पुत्रे बन्धौ न भर्तरि । दारुणं पुंश्चलीचित्तं सदा शृङ्गारकर्मणि ॥
प्राणाधिकं रतिज्ञं साऽमृतदृष्ट्या च पुंश्चली । रत्नप्रदं रत्नविज्ञं विषदृष्ट्या हि पश्यति ॥
सर्वेषां स्थलमस्त्येव पुंश्चलीनां न कुत्रचित् । दारुणा पुंश्चली जातिर्नरघातिन्य एव च ॥
निष्कृतिः संभोगान्ते सर्वेषामस्ति निश्चितम् । न पुंश्चलीनां विप्रेन्द्र यावच्चन्द्रदिवाकरौ ॥
अन्यासां कामिनीनां च कीटं हन्तुं च या दया । सा नास्ति पुंश्चलीनां तु कान्तं हन्तुं पुरातनम्
[2]कान्तं दृष्ट्वा हिनस्त्येव सोपायेनावलीलया । रतिज्ञं नूतनं प्राप्य विपत्तुल्यं पुरातनम् ॥
पृथिव्यां यानि पापानि पुंश्चलीष्वेव भारते । तिष्ठन्ति ताभ्यो न पराः पापिष्ठाः सन्ति केचन
पुंश्चलीपरिपक्वान्नं सर्वपातकमिश्रितम् । दैवे कर्मणि पैत्र्ये च न देयं च तथा जलम् ॥ २६ ॥
अन्नं विष्ठा जलं मूत्रं पुंश्चलीनां च निश्चितम् । दत्त्वा पितृभ्यो देवेभ्यो भुक्त्वा च नरकं व्रजेत्
शतवर्षं कालसूत्रे पचत्येव सुदारुणे । घोरान्धकारे कृमयस्तं दशन्ति दिवानिशम् ॥ २८ ॥

१ क. सदा । २ घ कान्तं ।

पुंश्चल्यन्नं च यो भुङ्क्ते दैवाद्यदि नराधमः । सप्तजन्मकृतं पुण्यं तस्य नश्यति निश्चितम् ॥
आयुःश्रीयशसां हानिरिह लोके परत्र च । तस्माद्यत्नाद्वर्जनीयं भाकपात्रं कलत्रकम् ॥
पुंश्चलीदर्शने पुण्यं यात्रासिद्धिर्भवेद्ध्रुवम् । स्पर्शने च महापापं तीर्थस्नानाद्विशुध्यति ॥
स्नानं दानं व्रतं चैव जपश्च देवपूजनम् । निष्फलं पुंश्चलीनां च भारते जीवनं वृथा ॥ ४२ ॥
कथितं कुलटाख्यानं दुर्ज्ञेयं च यथागमम् । संवादं च तयोस्तत्र प्रकृतं शृणु नारद ॥ ४३ ॥
स पुनश्चेतनां प्राप्य तां दृष्ट्वैव बलेः सुतः । कामातुरः प्रमत्तश्च जगाम कुलटान्तिकम् ॥
उवाच कुटिलापाङ्गीं पीनश्रोणिपयोधराम् । व्रीडया वाससा वक्त्रमाच्छन्नं कुर्वतीं मुदा ॥

सहासिक उवाच—

काऽसि त्वं कस्य कन्याऽसि कस्य कान्ताऽसि कामिनि । स्वयं क यासि कं सुभ्रूः पुण्यवन्तं मनोहरम् ॥ ४६ ॥
कल्पान्ते तपसा पूतं भोक्तुं त्वामेव सुन्दरि । यं तं यासि याहि सा त्वं भृत्यं मां कर्तुमर्हसि ॥
कीर्णीहि रतिपुण्येन मां भृत्यं रतिलोलुपम् । शृङ्गारलोलुपा त्वं च शृङ्गारं देहि कामुकि ॥
त्वया सह ममाऽऽश्लेषो विधिना च विनिर्मितः । निरूपितं यत्नेनैव वार्यते केन तत्प्रिये ॥
वाक्यं पीयूषसदृशं सस्मितं वद सुन्दरि । शीघ्रं मुक्ताशरीरैश्चुम्बनं कुरु निर्जने ॥ ५० ॥
आसनं देहि कल्याणि स्वोरुं कनकसंनिभम् । स्तनमण्डलकुम्भं च पीवरोरुं प्रदर्शय ॥
तीक्ष्णाग्रेण कटाक्षेण जर्जरं कुरु भामिनि । कामसर्पक्षतं पादस्पर्शनेनारुजं कुरु ॥ ५२ ॥
अधरोष्ठामृतं स्वादु देहि मे क्षुधिताय च । पक्वदाडिमबीजाभं दन्तं दर्शय सुन्दरम् ॥
गम्भीरनाभिं त्रिवलीं द्रष्टुमिच्छामि सुन्दरि । नीवीप्रमोक्षणं कर्तुमिच्छा मे वर्तते सदा ॥
श्रोणीं पश्यामि ललितां मुनिमानसमोहिनीम् । शरन्मध्याह्नपद्मानां प्रभामोचनलोचनाम् ॥
शरत्पार्वणचन्द्रास्यं प्रसन्नं च प्रदर्शय । सा च तद्वचनं श्रुत्वा तमुवाच स्मरातुरा ॥
दृष्ट्वाऽऽर्तं कामबाणेन मानसंसयकामिनी ॥ ५६ ॥

विलोत्तमोवाच—

पतिस्त्वत्सदृशो नाथ कामिनीनां मनीषितः । बलिपुत्रोऽसि धर्मिष्ठो रूपवान्गुणवान्युवा ॥
शृङ्गारनिपुणः कान्तः कामशास्त्रविशारदः । सदा मनोज्ञः स्त्रीणां त्वं सुवेषश्च स्वभावतः ॥
सुवेशं सुन्दरं शान्तं कान्तं दान्तमरोगिणम् । शृङ्गारज्ञं गुणज्ञं त्वां युवानं रसिकं शुचिम् ॥
अभिनोज्ञं दयालुं च बलिष्ठं सन्तमीश्वरम् । दातारमनुरक्तं च कान्तमिच्छति कामिनी ॥
एते सर्वे गुणाः कान्त सन्ति कान्ते त्वयि ध्रुवम् । त्वां न वाञ्छन्ति याः कान्तास्ता अविज्ञाश्च वञ्चिताः ॥ ६१ ॥

---

१ क. भामायो । २ क. शान्तः ।

संतोषं ते करिष्यामि समागम्य विधेर्गृहात्। वेषं कृत्वा तु चन्द्रस्य चागताऽथ तस्य कामिनी ॥
अन्याश्लेषणमात्रेण भविता धर्मलङ्घना याश्च धर्मान्न रक्षन्ति तासां च जीवनं वृथा ॥
चन्द्राश्लेषं न जानन्ति यास्ता मूढाः मकीर्तिताः। ता एव मातृगर्भस्था न प्राज्ञाः पौरुषे रसैः
स्ववैद्यौ मदनश्चन्द्रो मरुत्वान्नलकूबरः। एभिर्नोऽऽश्लिष्टिता यास्ता वञ्चिता रतिकर्मभिः ॥
दिवानिशं मानसं मे तेषां क्रीडां च चिन्तयेत्। विशेषतः कामदेवो निपुणो रतिकर्मणि ॥
चन्द्रशृङ्गारमाश्लेषमालापममृताधिकम्। अथ तस्य रतिर्दिनं तेन तच्चिन्तयेन्मनः ।.६६॥
तिलोत्तमावचः श्रुत्वा जहास बलिनन्दनः। सकामश्च सपुलकस्तामुवाच रहःस्थले ॥

साहसिक उवाच—

ब्रह्मणा निर्मिता त्वं च कौतुकेन तिलोत्तमे। अतो वरा चाप्सरसां विदग्धरसिकेश्वरी ॥
सुन्दोपसुन्दयोर्नाशनिमित्तेन प्रयत्नतः। सर्वरूपगुणाधारा विधिना च कृता पुरा ॥
सर्वं जानासि सर्वज्ञे विज्ञे सुरतकर्मणि। हर्षेण श्रोतुमिच्छामि वद वो मानसं वचः ॥
अतिप्रियश्च को वा च कः स्वभावो वरानने। अकथ्यं गोपनीयं च श्रोतुमिच्छामि सुन्दरि
गन्धर्वाणां सुराणां च राज्ञां पुण्यवतामपि। सर्वेषां प्राणतुल्या त्वमेषु ते कः परः प्रियः
असुरस्य वचः श्रुत्वा प्रहस्य सा तिलोत्तमा। मुखमाच्छादनं चक्रे विलोक्य वक्रचक्षुषा ॥
सत्यं सारमन्तरस्थमव्यक्तमतिगोपनम्। उवाच मानसं वाक्यमज्ञातं विदुषामपि ॥

तिलोत्तमोवाच—

कथनीयं साहसिक पुंश्चलीनां मनोवचः। स्त्रीजातीनां च सर्वासामुपहासकरं परम् ॥७५॥
सर्वेषामपि दुर्ज्ञेयं चरितं योषितामपि। विशेषतोऽपि दुर्ज्ञेयं पुंश्चलीनां मनोवचः ॥७६॥
वेदवेदाङ्गशास्त्रान्तं सर्वं जानाति पण्डितः। कान्त नान्तं विजानाति दिशामाकाशयोषिताम्
विषादप्यप्रियो वृद्धो रत्नदोऽपि च योषिताम्। युवा सर्वस्वहर्ता चेत्प्राणेभ्योऽपि परः प्रियः
युवानं सुन्दरं दृष्ट्वा झार्ता भवति पुंश्चली। विशेषतः सुवेषं च दृष्ट्वैव हतचेतना ॥
निमेषरहिता तस्य लोचनाभ्यां पिबेन्मुखम्। योनौ जलं क्षरेत्तस्याः सद्यः कण्डूयनं भवेत् ॥
मनोऽतिलोलमस्थैर्यं सर्वाङ्गानि चकम्पिरे। जडीभूतं शरीरं च प्रदग्धं मदनानलात् ॥८१॥
संप्राप्य तं चेद्धसति सोऽऽलापं कुरुते स्फुटम्। सकटाक्षं स्मेरवक्त्रं दर्शयित्वा पुनः पुनः ॥
तथा यदि वशं कर्तुं न शशाक जितेन्द्रियम्। स्वमङ्गं दर्शयित्वा तमन्तर्वाक्यं स्फुटं वदेत्
दुःसाध्ये नायके दुःखं भवेदाजन्मजन्मनि। तत्तुल्यं तत्परं प्राप्य तं विस्मरति पुंश्चली ॥
पुंश्चलीनामप्रियः कः कः प्रियो वा महीतले। योऽतिशृङ्गारनिपुणः स च प्राणाधिकः प्रियः

१ क. त्वत्तो महा नाप्सरसो वि°। ४ क. कंजा°।

पूर्वजारं पतिं पुत्रं भ्रातरं पितरं प्रसूम् । विशिष्टं नूतनं प्राप्य सर्वं त्यजति लीलया ॥८९॥
न दानेन न मानेन सत्येन स्तवनेन वा । नोपकारेण प्रीत्या वा सा साध्या सुरतिं विना ॥
शयने भोजने चापि स्वप्ने ज्ञाने दिवानिशम् । नित्यं सत्पुरुषाश्लेषं स्मरन्ति कुलटाः स्त्रियः
शृङ्गारनिपुणानां च ध्यानसाध्या चिरं परम् । दारुणा पुंश्चलीजातिः प्रार्थयन्ती नवं नवम्
सर्वासां कुलटानां च चरित्रं कथितं मया । अकथ्यं गोपनीयं च मम हृद्वचनं शृणु ॥ ९० ॥
मम सन्ति प्रियतरा गन्धर्वेषु सुरेषु च । युवानो रतिशूराश्च कामशास्त्रविशारदाः ॥ ९१ ॥
विशेषतः शशधरे स्नेहो मे विद्यते परः । ततोऽतिरिक्तः सर्वस्मादपि कामः प्रियो मम ॥
प्रियो मे कामसदृशो न भूतो न भविष्यति । स्मरस्य स्मरणात्तूर्णं सुस्निग्धं मानसं मम ॥
इत्येवं कथितं सर्वमात्मनो योषितामपि । आज्ञां कुरु महाराज यास्यामि चन्द्रसंनिधिम् ॥
चन्द्रस्थानात्तव स्थानं समागत्य सुनिश्चितम् । संतोषं तव दैत्येन्द्र करिष्यामि न संशयः
श्रुत्वैवं बलिपुत्रश्च जहासोच्चैः पुनः पुनः । सा वक्रचक्षुषाऽऽलोक्य तं जहास स्मरातुरा
छलेन दर्शयामास कठिनं स्तनयोर्युगम् । चारुचम्पकवर्णाभं वर्तुलं पीनमुच्छ्रितम् ॥९७॥
श्रोणीं सुकठिनां रम्यां रम्भास्तम्भविनिन्दिनीम् । सकटाक्षं स्मेरमुखं कपोलं पुलकाञ्चितम्
रहःस्थानं समासाद्य कामेन हतचेतना । पुलकाञ्चितसर्वाङ्गी लोचनाभ्यां पपौ मुखम् ॥
तस्य रूपं च वेषं च ददर्श ददर्श पुनः पुनः । मुखस्याऽऽच्छादनं भावात्कुर्वती सूक्ष्मवाससा
अतिकामातुरां दृष्ट्वा सुप्राज्ञो बलिनन्दनः । पप्रच्छ कामिनीं कामी भावं विज्ञातुमुत्सुकः

साहसिक उवाच—

किं करिष्यसि मां सत्यं वद पङ्कजलोचने । कार्यान्तरं करिष्यामि सुचिरं स्थातुमक्षमः ॥
कामिनीषु बलात्कारो न धर्मो धर्मिणां प्रिये । विशेषतोऽतिविदुषां नास्माकं स्वकुलोचितः
शृङ्गारं देहि वा गच्छ रतिं कर्तुं सुरान्तिके । कः क्षमो वा वशीकर्तुं पुंश्चलीं बहुगामिनीम्
दानवस्य वचः श्रुत्वा शुष्ककण्ठोष्ठतालुका । आत्मानमवमंमन्या म्रियमाना स्मरातुरा

तिलोत्तमोवाच—

कथमेवं ब्रूहि(षि)त्वं मे कान्तः प्राणाधिकः प्रियः । कथं वा कोपयुक्तोऽसि कुरु कार्यं मनीषितम् ॥ १०१ ॥
त्वामेवं विमुखं कृत्वा यामि चन्द्रान्तिकं यदि । तवाभिशापात्तत्रैव सद्यो विघ्नो भविष्यति
विहारं कुरु भद्रं ते करिष्यति हरिः स्वयम् । पदे पदे शुभं तस्य यः स्त्रीमानं च रक्षति॥
अवमन्य स्त्रियं मूढो यो याति पुरुषाधमः । पदे पदे तदशुभं करोति पार्वती सती ॥

तिलोत्तमावचः श्रुत्वा जहास बलिनन्दनः। कामशास्त्रेषु निष्णातः तद्भावं बुबुधे सुधीः
भावं विज्ञाय भावज्ञः कामशास्त्रविशारदः। करे धृत्वा समाश्लिष्य चुचुम्ब मुखपङ्कजम्॥
जगाम च तया सार्धं गन्धमादनगह्वरम्। ददर्श तत्र गत्वा च स्थानं जन्तुविवर्जितम्॥
संस्थाप्य रत्नदीपांश्च धूपं च सुमनोहरम्। शय्यां रतिकरीं कृत्वा सुष्वाप च तया सह॥
नानाप्रकारशृङ्गारं चकार काममोहितः। तिलोत्तमा तं बुबुधे सुरादपि विचक्षणम्॥
विपरीतरतौ तुष्टा बभूव रसिकेश्वरी। दिवानिशं न बुबुधे नवसंगमसूर्छिता॥ ११९॥
तिलोत्तमा कामभावाद्बलिपुत्रमुवाच ह। कृत्वा वक्षसि प्राणेशं स्तनयोरन्तरे मुदा॥

तिलोत्तमोवाच—

कदा द्रक्ष्याम्यहं कान्त मुखचन्द्रं मनोहरम्। एवंभूतं शुभदिनं कदा मे भविता पुनः॥
अपि किं रूपमाश्चर्यं गुणो वा तव दानव। ध्रुवं शृङ्गारनिपुणस्त्वत्परो नास्ति कश्चन॥
मां विस्मरसि कालेन पुरुषः षट्पदो यथा। स्त्रीणां सत्पुरुषाश्लेष आजीवं मनसि स्थितः
सत्संगमः शुभदिने पुण्यात्पुण्यवतां भवेत्। सद्विच्छेदो दुःखहेतुर्मरणादतिरिच्यते॥
पीयूषभोजनात्स्वर्गवासादपि च दुर्लभः। सत्संगमः सुखमयोऽप्यसत्संगो विषाधिकः॥
क्षणं तिष्ठ महाराज पुनरालिङ्गनं कुरु। त्वया सार्धं मम प्राणा यास्यन्ति चेतसा सह॥
इत्येवमुक्त्वा कुलटा कृत्वा वक्षसि सादरम्। पुमङ्गसङ्गोत्पुलका मूर्छामाप सुखेन च॥
कुलटालिङ्गनात्प्रातःसोऽतिकामी बभूव ह। यथा दीप्तः कृष्णवर्त्मा वर्धते हविषाऽधिकम्॥
पुनश्चकार शृङ्गारमसुरोऽष्टविधं मुने। चुम्बनं च नवविधं यथास्थाने यथोचितम्॥
नखदन्तकरैः क्रीडां चकार विविधां पुनः। किङ्किणीनां कङ्कणानां बभूव शब्द उल्बणः॥
मुनेर्दुर्वाससस्तेन ध्यानभङ्गो बभूव ह। अदृष्टस्य तयोस्तत्र वल्मीकाच्छादितस्य च॥
योगासनं कुर्वतश्च गन्धमादनगह्वरे। ध्यायतश्चरणाम्भोजं कृष्णस्य परमात्मनः॥ १२८॥
न पपात तयोर्दृष्टिः समीपस्थे महामुनौ। कामात्मनोर्न हि ज्ञानं कामेन हतचेतसोः॥
सहसा चेतनां प्राप्य प्रज्वलन्ब्रह्मतेजसा। ददर्श पुरतस्तौ तु मुनिरुन्मील्य लोचने॥
दिवानिशं न जानन्तौ संयुक्तौ काममोहितौ। दृष्ट्वा चुकोप तेजस्वी रुद्रांशो भगवान्विभुः
उवाच तौ विहारान्ते रक्तपङ्कजलोचनः। ध्यानप्राप्तपदाम्भोजविच्छेदोद्विग्नमानसः॥

दुर्वासा उवाच—

उत्तिष्ठ गर्दभाकार निर्लज्ज पुरुषाधम। भक्तप्रधानस्य बलेः पुत्रः पशुसमप्रभः॥
देवा वा मानवा वाऽपि दैत्यगन्धर्वराक्षसाः। लज्जां कुर्वन्ति सततं स्वमातो च पशून्विना
ज्ञानलज्जाविहीना च खरजातिर्विशेषतः। तस्मात्त्वं दानवश्रेष्ठ खरयोनिं व्रजाधुना॥

तिलोत्तमे त्वमुत्तिष्ठ लज्जाहीना च पुंश्चली । एतादृशी स्पृहा दैत्ये व्रज योनिं च दानवीम्
इत्येवमुक्त्वा स मुनिस्तस्थौ तत्र रुषा ज्वलन् । तौ च तुष्टुवतुर्भीतावुत्थाय व्रीडितौ मुनिम्

साहसिक उवाच—

त्वं ब्रह्मा त्वं च विष्णुश्च त्वं च साक्षान्महेश्वरः । हुताशनस्त्वं सूर्यश्च सृष्टिस्थित्य-
न्तकारकः ॥ १३७ ॥
क्षमापराधं भगवन्कृपां कुरु कृपानिधे । मूढापराधं सततं यः क्षमेत्स सदीश्वरः ॥ १३८ ॥
इत्येवमुक्त्वा दैत्येन्द्रो रुरोदोच्चैः पुरो मुनेः । कृत्वा तृणानि दशने पपात चरणाम्बुजे ॥

तिलोत्तमोवाच—

हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु । विधिसृष्टौ च सर्वेषां मूढा स्त्रीजातिरेव च ॥
ततोऽतिमत्ता कुलटा सदा कामातुरा परा । लज्जा भीतिश्चेतना च न सन्ति कामुके विभो
इत्युक्त्वा रोदनं कृत्वा जगाम शरणं मुनेः । विना विपत्तौ केषांचिज्ज्ञानं भवति भूतले ॥
तयोर्दृष्ट्वा च वैकल्यं बभूव करुणा मुनेः ॥ १४२ ॥

दुर्वासा उवाच—

अतिशापः प्रसादो वा भवेद्दैवेन दानव । सत्कीर्तिरपकीर्तिर्वा मत्कृतप्रभवा ध्रुवम् ॥
विष्णुभक्तबलेः पुत्रः सद्वंशप्रभवो जनः । जनकाद्विष्णुभक्तोऽसि जानामि त्वां सुनिश्चितम्
जनकस्य स्वभावो हि जन्ये तिष्ठति निश्चितम् । यथा श्रीकृष्णपादाङ्कः कालीयवंशमस्तके
संप्राप्य गार्दभीं योनिं वत्स निर्वाणतां व्रज । पूर्वं कृष्णार्चनफलं न हि लुप्तं सतां चिरात्
वृन्दारण्यं तालवनं व्रज शीघ्रं व्रज नितकम् । प्राणांस्त्यक्त्वा हरेश्चक्रान्मुक्तिं प्राप्स्यसि
निश्चितम् ॥ १४० ॥
तिलोत्तमे भारते त्वं बाणपुत्री भविष्यसि । श्रीकृष्णपौत्राश्लेषेण पुनः पूता भविष्यसि ॥
इत्येवमुक्त्वा स मुनिर्विरराम महामुने । तौ जग्मतुर्यथास्थानं प्रणम्य मुनिपुंगवम् ॥
इत्युक्तं सर्ववृत्तान्तं दैत्यस्य खरजन्मनः । तिलोत्तमा बाणपुत्री ह्युषाऽनिरुद्धकामिनी ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० तिलोत्तमाबलिपुत्रयो-
र्ब्रह्मशापप्रस्तावो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

अथ चतुर्विंशोऽध्यायः ।

नारायण उवाच—

निगूढं शृणु वृत्तान्तं मुनेर्दुर्वाससो मुने । अहोऽस्य दारसंयोगः कथं तदूर्ध्वरेतसः ॥ १ ॥

दृष्ट्वा तयोश्च शृङ्गारं मुनिः कामी बभूव ह । जितेन्द्रियोऽसत्संसर्गाद्दोषः सांसर्गिको भवेत्
सहसा तस्य हृदये बभूव सुरते स्पृहा । तपस्तप्त्वा तत्र दध्यौ कामिनीं मदनातुरः ॥
एतस्मिन्नन्तरे तेन पथा याति मुनीश्वरः । प्रार्थयन्त्या पतिं सन्तमौर्वश्च सुतया सह ॥
ऊरुद्भवो ब्रह्मणश्च पुरा कल्पे तपस्यतः । ऊर्ध्वरेताश्च योगीन्द्र और्वस्तेन इति स्मृतः॥
तस्य जानूद्भवा कन्या कन्दली नाम विश्रुता । दुर्वाससं प्रार्थयन्ती नान्यं मनसि रोचते
ससुतो हि मुनिश्रेष्ठो मुनेर्दुर्वाससः पुरः । तस्थौ महाप्रसन्नश्च ज्वलदग्निशिखोपमः ॥
मुनीन्द्रोऽपि मुनीन्द्रं तं पुरो दृष्ट्वा ससंभ्रमः । प्रजवेन समुत्तस्थौ ननाम च मुदाऽन्वितः
और्वो दुर्वाससं तत्र समाश्लिष्य मुदाऽन्वितः । उवाच मुनये सर्वं कन्यकाया मनोरथम्

औेर्व उवाच—

विख्याता कन्दली नाम मम कन्या मनोहरा । प्रौढा त्वामेव ध्यायन्ती श्रुत्वा वाचिक-
वक्त्रतः ॥ १० ॥
अयोनिसंभवा कन्या त्रैलोक्यं मोहितुं क्षमा । सर्वरूपगुणाधारा दोषेणैकेन संयुता ॥
अतीव कलहाविष्टा कोपेन कटुभाषिणी । नानागुणयुतं द्रव्यं न त्यजेदेकदोषतः २१ ॥
औेर्वस्य वचनं श्रुत्वा हर्षशोकान्वितो मुनिः । ददर्श कन्यां पुरतो गुणरूपसमन्विताम्
शारत्पार्वणचन्द्रास्यां शारत्पङ्कजलोचनाम् । ईषद्धास्यप्रसन्नास्यां पीनश्रोणिपयोधराम् ॥
नवयौवनसंयुक्ता पश्यन्तीं वक्रचक्षुषा । रत्नालंकारशोभाढ्यां वह्निशुद्धांशुकान्विताम्
मुनिर्मुमोह तां दृष्ट्वा कामबाणप्रपीडितः । उवाच तं मुनिश्रेष्ठं हृदयेन विदूयता ॥

दुर्वासा उवाच—

नारीरूपं त्रिभुवने मुक्तिमार्गनिरोधकम् । व्यवधानं तपस्यायाः संततं मोहकारणम् ॥
कारागारे च संसारे दुर्वहं निगडं परम् । अच्छेद्यं ज्ञानखड्गैश्च महद्भिः शंकरादिभिः॥
सङ्गिच्छायातिरिक्तं च कर्मभोगात्परात्परम् । इन्द्रियादिन्द्रियाधाराद्विद्यायाश्च मतेरपि ॥
आदेहं सङ्गिनी छाया भोगान्तं भोग एव च । देहेन्द्रियाणि जीवान्तं विद्या चैवा-
वशीलिनम् ॥ ३० ॥
मतिश्चैवावशीलान्ता सुखी जन्मनि जन्मनि । यावज्जीवी च सुखीको न तावज्जन्मखण्डनम्
यावच्च जीविनो जन्म तावद्भोगः सुखावहः । परं मुनीन्द्र सर्वस्माद्धरिपादाब्जसेवनम् ॥
ध्यायतः कृष्णपादाब्जं मम विघ्नो बभूव ह । न जाने कर्मदोषेण केन वा पूर्वजन्मनः ॥
दृष्ट्वास्या सह शृङ्गारं दृष्ट्वा दैत्यस्य मन्मनः । बभूव कामसंयुक्तं दत्तं धात्रा च तत्फलम् ॥
किं त्वहं तव कन्यायाः कटूक्तिशतकं मुने । ध्रुवं क्षमां करिष्यामि दास्यामि च ततः फलम्,

सर्वतोऽपि परा निन्दा स्त्रीकटूक्तिसहिष्णुता । अतीव निन्दित. सत्सु स्त्रीजितो भुवनत्रये
तवाऽऽज्ञां मस्तके कृत्वा ग्रहीष्यामि सुतां तव । उपेता कामिनी त्यक्तव्या कालसूत्रं व्रजेन्नरः
रहस्युपास्थितां कामात्पुंश्चली चेज्जितेन्द्रियः । परित्यजेद्धर्मभयादधर्मान्नरकं व्रजेत् ॥
इत्येवमुक्त्वा दुर्वासा विरराम मुने पुरः । मुनिर्वेदोक्तविधिना ददौ तस्मै सुतां मुने ॥
स्वस्तीत्युवाच दुर्वासा मुनिश्च यौतुकं ददौ । कन्यासमर्पणं कृत्वा मोहाच्चैव रुरोद ह ॥
मूर्छामवाप स मुनिः स्वकन्याविरहातुरः । अपत्यभेदशोकौघः स्वात्मारामं न मुञ्चति ॥
क्षणेन चेतनां प्राप्य बोधयामास कन्यकाम् । मूर्छितां तातविच्छेदाद्रुदन्तीं शोकसंयुताम्

और्व उवाच—

शृणु वत्से प्रवक्ष्यामि नीतिसारं सुदुर्लभम् । हितं सत्यं च वेदोक्तं परिणामसुखावहम् ॥
स्त्रीकान्तश्च परो बन्धुरिह लोके परत्र च । न हि कान्तात्परः प्रेयान् कुलस्त्रीणां परो गुरुः
देवपूजा व्रतं दानं तपश्चानशने जपः । स्नानं च सर्वतीर्थेषु दीक्षा सर्वमखेषु च ॥ ३५ ॥
प्रादक्षिण्यं पृथिव्याश्च ब्राह्मणातिथिसेवनम् । सर्वाणि पतिसेवायाः कलां नार्हन्ति षोडशीम्
किमेतैः पतिभक्तायाः अभक्तायाश्च भारते । यदि दुःखी सुखारम्भे साकाङ्क्षः प्रथमो भवेत्
पतिसेवापरो धर्मः सर्वशास्त्रेषु पठ्यते । स्वप्रज्ञानेन सततं कान्तं नारायणाधिकम् ॥ ३७ ॥
दृष्ट्वा तच्चरणाम्भोजसेवां नित्यं करिष्यति । परिहासेन कोपेन भ्रमेणावज्ञया सुते ॥ ३८ ॥
कटूक्तिं स्वामिनः सोऽसार्धपरोक्षान्न करिष्यति । स्त्रियो वाग्योनिदुष्टायाः कामतो भारते भुवि
प्रायश्चित्तं श्रुतौ नास्ति नरकं ब्रह्मणः शतम् । सर्वधर्मपरीता या कटूक्तिं कुरुते पतिम् ॥
शतजन्मकृतं पुण्यं तस्या नश्यति निश्चितम् । दत्त्वा कन्यां बोधयित्वा जगाम मुनिपुंगवः ॥
स्वात्मारामः स्वाश्रमे च तस्थौ स्त्रीसहितो मुदा । संभोगेच्छावृते चित्ते कामी संप्राप कामि-
नीम् ॥ ४२ ॥
अहो सुकृतिनां कामो वाङ्मात्रेण सिध्यति । शय्यां रतिकरीं कृत्वा मुनिश्रेष्ठो महामुने ।
शुभे क्षणे गृहीत्वा तां सुष्वाप निर्जने प्रियाम् । नारीरसानभिज्ञः स्यादाजन्म मुनिपुंगवः ॥
तथाऽपि सुरतौ विज्ञः कामशास्त्रविशारद. । नानाप्रकारं शृङ्गारं चकार विधिपूर्वकम् ॥
नवसंगममात्रेण मूर्छां संप्राप कन्दली । मूर्छां प्राप मुनिश्रेष्ठो बुबुधे न दिवानिशम् ॥ ४६ ॥
एवं प्रतिदिनं तत्र चकार सुरतिं मुने । विदग्धाया विदग्धेन बभूव संगमः सम ॥ ४७ ॥
स्वयमुत्र गृहासक्तस्तपस्त्यक्त्वा मुनीश्वरः । करोति कलहं नित्यं कन्दली स्वामिना सह ॥
मुनीन्द्रो बोधयामास नीतिवाक्येन कामिनीम् । सा तत्र बुबुधे किंचित्करोति कलहे स्पृहाम्
तातप्रदत्तज्ञानेन सा न शान्ता बभूव ह । न हीयते प्रबोधेन स्वभावो दुरतिक्रम. ॥ ५० ॥

नित्यं कटूक्तिं कान्तं सा करोति हेतुना विना । जगत्त्रयविशं येन यथा योगास्त्रमर्पितम् ।
तया कृता कटूक्तिश्च क्षमां तस्यां चकार ह । योगमायात्तां नित्यं सद्यो मोहाद्दयानिधिः
कटूक्तिशतकं पूर्णं तत्कालेन बभूव ह । क्षमां चकार कृपया कटूक्तिं च शताधिकाम् ॥
पत्नीकटूक्त्या नियतं प्रदग्धं मानसं मुनेः । तस्याः कटूक्तिकारिण्याः कर्म पूर्णं बभूव ह
स्वात्मारामो दयासिन्धुः कोपं त्यक्तुं न च क्षमः । शशाप भामिनीं मोहाद्भस्मराशिर्भवेति च
मुनेरिङ्गितमात्रेण भस्मसात्सा बभूव ह । एवमस्तु च्छिद्रानां च न कल्याणं जगत्त्रये ॥
शरीरे भस्मसाद्भूते प्रतिबिम्बः स चाऽऽत्मनः । जीवस्तत्रान्तरिक्षस्थो हुवाच विनयान्मुनिम्

जीव उवाच—

हे नाथ सर्वदर्शी त्वं सततं ज्ञानचक्षुषा । सर्वं जानासि सर्वज्ञः किमहं बोधयामि ते ॥
सदुक्तिर्वा कटूक्तिर्वा कोपः संताप एव च । लोभो मोहश्च कामश्च क्षुत्पिपासादिकं च यत्
स्थौल्यं कार्श्यं च नाशश्च दृश्यादृश्यं समुद्भवम् । सर्वं शरीरधर्मं च न जीवस्य न चाऽऽत्मनः
सत्त्वं रजस्तम इति शरीरं त्रिगुणात्मकम् । तच्च नानाप्रकारं च निबोध कथयामि ते ॥
किंचित्सत्त्वातिरिक्तं च किंचिदेव रजोधिकम् । तमोतिरिक्तं किंचिच्च न समं कुत्रचिन्मुने
सत्त्वोदयाच्च मुक्तीच्छा कर्मेच्छा च रजोगुणात् । तमोगुणाज्जीवहिंसा कोपोऽहंकार एव च
कोपात्कटूक्तिर्नियतं कटूक्त्या शत्रुता भवेत् । तथा चाप्रियता सद्यः शत्रुः कः कस्य भूतले
को वा प्रियोऽप्रियः को वा किं मित्रं को रिपुर्भवेत् । इन्द्रियाणि च बीजानि सर्वत्र शत्रुमित्रयोः
प्राणाधिकः प्रियः स्त्रीणां भर्तुः प्राणाधिका प्रिया । बभूव शत्रुता सद्यो दुरुक्त्या च क्षणाद्द्वयोः
यद्भूतं तद्गतं सर्वं कामदोषेण वै प्रभो । क्षमापराधं निखिलं किं कर्तव्यं मयाधुना ॥६७॥
किं करोमि क्व यामीति भविता कुत्र जन्म मे । तव नान्यस्य जायाऽहं भविष्यामि जगत्त्रये
इत्येवमुक्त्वा जीवश्च मौनीभूतो बभूव ह । मूर्छामवाप स मुनिः शोकेन हतचेतनः ॥८९॥
स्वात्मारामो महाज्ञानी जहार चेतनामहो । स्त्रीविच्छेदो विदग्धानां सर्वशोकात्परात्परः
क्षणेन चेतनां प्राप्य प्राणांस्त्यक्तुं समुद्यतः । तत्र योगासनं कृत्वा चकार वायुधारणम् ॥
एतस्मिन्नन्तरे तत्र जगाम ब्राह्मणोऽर्भकः । दण्डी छत्री रक्तवासा बिभ्रत्तिलकमुत्तमम् ॥
सस्मितः श्यामवर्णश्च प्रज्वलन्ब्रह्मतेजसा । वयसाऽतिशिशुः शान्तो ज्ञानी वेदविदां वरः
दृष्ट्वा तं संभ्रमेणैव दुर्वासाः प्रणनाम ह । वासयामास तत्रैव पूजयामास भक्तितः ॥
उवाच ब्राह्मणबटुर्दत्त्वा तस्मै सदाशिषम् । तद्दर्शनादाशिषा च सर्वं दुःखं गतं मुनेः ॥
शिशुरूपं क्षणं स्थित्वा तमुवाच विचक्षणः । पीयूषतुल्यं नीत्यर्थं नीतिशास्त्रविशारदः ॥

१ क. °पुर्भुवि । २ ख. नित्यर्थं ।

शिशुरुवाच—

सर्वं जानासि सर्वज्ञ गुरोर्मन्त्रप्रसादतः । किं तत्त्वं त्वामहं विप्र पृच्छामि शोककातरम् ॥
ब्राह्मणानां तपो धर्मस्तप साध्यं जगत्त्रयम् । स्वधर्मं वै परित्यज्य किमिदानीं करोषि मोः ॥
का कस्य पत्नी कः कान्तः कस्या वा भुवनत्रये । मूर्खाणां वञ्चनां कर्तुं करोति मायया हरिः
मिथ्या पत्नी तवेयं च क्षणात्तेन गताऽधुना । न हि सत्यमदृश्यं च मिथ्या यत्राचिरस्थितिः
एकाऽनंशा च भगिनी वसुदेवसुता हरेः । पार्वत्यंशसमुद्भूता सुशीला चिरजीविनी ॥८१॥
कल्पे कल्पे सुन्दरी सा तव पत्नी भविष्यति । मनो देहि तपस्यायां मुदा कतिपयं दिनम् ॥
कन्दली कदलीजातिर्भविष्यति महीतले । शुभदा फलदा कान्ता सकृत्सुता सुदुर्लभा ॥
कल्पान्तरे शान्तरूपा तव पत्नी भविष्यति । अत्युच्छ्रितस्य दमनमुचितं च श्रुतौ श्रुतम् ॥
इत्येवमुक्त्वा शीघ्रं च विप्ररूपी जनार्दनः । दत्त्वा ज्ञानं च विप्राय सोऽन्तर्धानं चकार ह ॥
मुनिः सर्वं भ्रमं त्यक्त्वा तपस्यायां मनो दधे । कन्दली कदलीजातिर्बभूव धरणीतले ॥
दैत्यस्तालवनं गत्वा बभूव गर्दभाकृतिः । तिलोत्तमा बाणपुत्री बभूव समये मुने ॥८७॥
दैत्येन्द्रो विष्णुचक्रेण प्राणास्त्यक्त्वा सुवाञ्छितम् । संप्राप्य चरणाम्भोजं मुनेरपि सुदुर्लभम्
काले तिलोत्तमा भूत्वा जगाम स्वालयं पुनः । कृष्णपौत्रालिङ्गनेन परिपूर्णमनोरथा ॥
इत्येवं कथितं श्रुत्वा श्रीकृष्णाख्यानमुत्तमम् । पदे पदे सुन्दरं च किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० तालफलभक्षणप्रसङ्गे बलिपुत्रमोक्षो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

अथ पञ्चविंशोऽध्यायः ।

नारद उवाच—

श्रुतं किमद्भुतं ब्रह्मन् हरेश्चरितमङ्गलम् । विशेषतस्तव मुखे ह्यतीव सुमनोहरम् ॥ १ ॥
मृताया मुनिकन्याया शापाद्दुर्वाससो मुनेः । किं चकार समागत्य तन्मे ब्रूहि तपोधन ॥

नारायण उवाच—

सरस्वतीनदीतीरे तपस्यां कुर्वतो मुनेः । पपात धौतमूर्ध्वाच्च धार्यमाणं च वायुना ॥३॥
पृथिव्यां पतिते वस्त्रे तपस्त्यक्त्वा मुनीश्वरः । ध्यानेन बुबुधे सर्वं कन्यासंबन्धिसंकटम् ॥
जगाम शोकाविष्टोऽपि तूर्णं जामातुराश्रमम् । सिषेच पृथिवीरेणुं ह्यश्रुलोचनबिन्दुना ॥
गत्वाऽऽलयसमीपं च विप्रः कातरमानसः । हे वत्से कन्दलीत्येवमुवाच च पुनः पुन. ॥

---

१ क. ब्रह्मन् ।

श्वशुरस्य स्वरं ज्ञात्वा दुर्वासा भयविह्वलः । बहिर्भूय शीघ्रं च पपात चरणाम्बुजे ॥७॥
प्रणम्य श्वशुरं शोकाद्विललाप भृशं पुनः । प्रवृत्तिं कथयामास मृततो मुनिसत्तमम् ॥८॥
श्रुत्वा वार्तां शुचाऽविष्टः पपात धरणीतले । मूर्छामाप महाज्ञानी निश्चेष्टो हि यथा मृतः
मृतं दृष्ट्वा स दुर्वासा मेने मनसि संकटम् । चेतनां कारयामास प्रयत्नेन महामुनेः ॥
संप्राप्य चेतनां शीघ्रमुवाच तं पुरःस्थितम् । जामातरं शोकयुतं भीतं प्रणतकंधरम् ॥
महाशोकादश्रुपूर्णो रक्तपङ्कजलोचनम् । कोपात्कम्पितसर्वाङ्गश्वासरक्तः स्फुरिताधरः ॥

और्व उवाच—

अये ब्रह्मन्नत्रिवंश्य पौत्रस्त्वं जगतीपतेः । स्वल्पदोषे बहुतरः कृतो दण्डस्त्वया कथम् ॥
त्वज्जन्म शंकरांशेन शिष्यस्तस्य जगद्गुरोः । वेदवेदाङ्गविज्ञश्च सर्वज्ञो गुणवान्स्वयम् ॥
अनसूया महासाध्वी च मङ्गाशा तव प्रसूः । न जाने केन दोषेण तव चैतादृशी मतिः ॥
गुणवाञ्जनको यस्य माता गुणवती सती । तयोः पुत्रो दयाहीनो गतिः सूक्ष्मा श्रुतेरहो ॥
मम प्राणाधिका कन्या मुदा त्वयि समर्पिता । महागुणान्विता स्वल्पदोषेण परिमिश्रिता ॥
वाग्दुष्टायाश्च दण्डो हि परित्यागः श्रुतौ श्रुतः । त्वया क्रोधाद्यदि त्यक्ता पित्रा यत्नेन पालिता
मदपत्यं स्वल्पदोषे यतो भस्मीकृतं त्वया । पराभवस्तव महान्भविष्यति न संशयः ॥
महता क्षुद्रजन्तूनां सर्वेषां जीविनां सदा । स्रष्टा पाता च शास्ता च भगवान्करुणानिधिः
इत्युक्त्वा च मुनिश्रेष्ठो विलप्य च पुनः पुनः । हेऽम्ब वत्से क्वासीत्युक्त्वा जगाम स्वालयं रुषा
गते मुनीन्द्रे दुर्वासा विललाप भृशं पुनः । ज्ञानेन विस्मृतः शोको बभूव द्विगुणः पुनः ॥
शोकानलो हि कालेन विच्छिन्नो ज्ञानमात्मना । बन्धुदर्शनशुष्केन्धदानेन वर्धते पुनः ॥
स्मारं स्मारं प्रिया तत्र विलप्य च पुनः पुनः । बोधयित्वा स्वमात्मानं तपस्याया मनो दधौ
इत्येवं कथितं सर्वं मुने शापस्य कारणम् । बभूव तस्य कालेन दुःसहश्च पराभवः ॥

नारद उवाच—

दुर्वासाः शंकरस्यांशः शिवतुल्यश्च तेजसा । तेजस्वी को महानेव चकार तत्पराभवम् ॥

नारायण उवाच—

अम्बरीषो हि राजेन्द्रः सूर्यवंशसमुद्भवः । श्रीकृष्णचरणाम्भोजे तन्मनाः संततं मुने ॥
न राज्येषु न भार्यासु न पुत्रेषु प्रजासु च । न संपत्सु क्षणं चित्तं पुण्यकर्मार्जितासु च ॥
ध्यायतेऽहर्निशं धर्मी स्वप्ने ज्ञाने हरिं मुदा । महाजितेन्द्रियः शान्तो विष्णुभक्तपरायणः ॥
एकादशीव्रतरतः कृष्णपूजासु तत्परः । सर्वकर्मस्वलिप्तश्च कर्ता कृष्णार्पितेषु च ॥२०॥
सुतीक्ष्णं षोडशारं च हरेश्चक्रं सुदर्शनम् । तेजसा हरितुल्यं च सूर्यकोटिसमप्रभम् ॥

ब्रह्मादिभिः स्तूयमानं पूजितं च सुरासुरैः । प्रभुणा रक्षितं शश्वद्रक्षायै नृपसंनिधौ ॥३१॥
एकादशीव्रतं कृत्वा द्वादशीदिवसे सति । स्नात्वा विधाय पूजां च काठेन विधिपूर्वकम्
दत्त्वा दानं ब्राह्मणेभ्यः सुवर्णरजतादिकम् । ब्राह्मणान्भोजयित्वा च भोजनार्थमुवास ह
एतस्मिन्नन्तरे विप्रस्तपस्वी क्षुधितो मुने । दण्डी छत्री शुक्लवासा बिभ्रत्तिलकमुत्तमम् ॥
जटिलोऽतिकृशश्रान्तः शुष्ककण्ठोष्ठतालुकः । तत्राऽऽजगाम भगवान्दुर्वासा नृपतेः पुरः ॥
स च दृष्ट्वा मुनीन्द्रं तमुत्थाय च प्रणम्य च । दत्त्वा पाद्यं च संप्रीत्या स्वर्णसिंहासनं ददौ
तस्मै दत्त्वाऽऽशिषं विप्रः समुवास सुखासने । प्रपच्छ राजा तं प्रीतः काऽऽज्ञा ते वद काङ्क्षितम्
नृपेन्द्रवचनं श्रुत्वा तमुवाच महामुनिः । बुभुक्षितस्य मे राजन्देह्यन्नं विधिपूर्वकम् ॥३९॥
किं त्वघमर्षणमन्त्रं जप्त्वाऽऽयाम्यचिरेण वै । क्षणं प्रतीक्षतां राजन्नित्युक्त्वा च गतो मुनिः ॥
गते विप्रे तु राजर्षिश्चिन्तां प्राप दुरत्ययाम् । विलोक्य विगतप्रायां द्वादशीं भयसंयुतः ॥
एतस्मिन्नन्तरे तत्र समायान्तं गुरुं मुदा । नत्वा निवेद्य सर्वं तु नृपतिः समुवाच ह ॥
नाऽऽयाति मुनिशार्दूलः प्रयाति द्वादशी तिथिः । संकटेऽस्मिन्निषेयं च विविच्य विधिपूर्वकम्
शीघ्रं वद मुनिश्रेष्ठ भद्राभद्रं च मामिति ॥ ४३ ॥
श्रुत्वा नृपोक्तिं त्वरितमुवाच मुनिपुंगवः । हितं तथ्यं च वेदोक्तं परिणामसुखावहम् ॥

वसिष्ठ उवाच—

द्वादश्यां समतीतायां त्रयोदश्यां तु पारणम् । उपवासफलं हत्वा व्रतिनं हन्ति निश्चितम् ॥
ब्रह्महत्यासमं पापं भवेत्तस्य श्रुतौ श्रुतम् । भक्ष्यद्रव्यं सुरातुल्यमित्याह कमलोद्भवः ॥
न भोजयित्वा भुङ्क्ते यदतिथिं समुपस्थितम् । स भवतः क्षुधितो भुङ्क्ते कुम्भीपाके भवेद्ध्रुवम्
शतवर्षं तत्र तिष्ठन्पश्चाच्चाण्डालतां व्रजेत् । व्याधियुक्तो दरिद्रश्च भवेज्जन्मनि जन्मनि ॥
अतोऽतिसूक्ष्मं किं नृपोऽधुना परमसंकटे । रक्षां कुरु द्वयोर्धर्मं समालोच्य वदामि ते ॥
उपवासफलं रक्ष कृष्णस्य चरणोदकम् । भुक्त्वा शीघ्रमपो राजंस्तद्भक्षणमभक्षणम् ॥
इत्युक्त्वा ब्रह्मणः पुत्रो विरराम महामुने । बुभुजे तज्जलं किंचित्कृष्णपादाम्बुजं स्मरन् ॥
एतस्मिन्नन्तरे ब्रह्मन्नाजगाम मुनीश्वरः । चिच्छेद कोपात्सर्वज्ञः स्वजटां नृपतेः पुरः ॥
ततः समुत्थितः शीघ्रं पुरुषोऽग्निशिखोपमः । खड्गहस्तो महाभीमो राजेन्द्रं हन्तुमुद्यतः
हरेश्चक्रं च तं दृष्ट्वा सूर्यकोटिसमप्रभम् । चिच्छेद कृत्यापुरुषं ब्राह्मणं छेत्तुमुद्यतम् ॥
दृष्ट्वा सुदर्शनं विप्रो दुद्राव भयविह्वलः । द्विजः पश्चात्तं ददर्श ज्वलदग्निशिखोपमम् ॥
ब्रह्माण्डभ्रमणं कृत्वा निर्विण्णोऽतिभयाकुलः । तं च मत्वा जगन्नाथं ब्रह्माणं शरणं ययौ ॥
त्राहि त्राहीत्येवमुक्त्वा विवेश ब्राह्मणः सभाम् । उत्थाय ब्रह्मा विप्रेन्द्रं पप्रच्छ कुशलं मुने ॥

सर्वं स कथयामास वृत्तान्तं मूलतो विधिम्। श्रुत्वा ब्रह्मा निशश्वास तमुवाच भयाकुलः ॥

ब्रह्मोवाच---

हरिदासं वत्स शप्तुं गतोऽसि कस्य तेजसा। रक्षिता यस्य भगवांस्तं को हन्ता जगत्त्रये॥
क्षुद्राणां महतां चैव भक्तानां रक्षणाय च। ररक्ष सततं चक्रं श्रीहरिर्भक्तवत्सलः ॥६०॥
यो मूढो वैष्णवं द्वेष्टि विष्णुप्राणसमं द्विज। तस्य संहारकर्तारं संहर्तुमीश्वरो हरिः ॥ ६१ ॥
शीघ्रं स्थानान्तरं गच्छ वत्स त्राणं न वाऽधुना। अन्यथा त्वां मया सार्धं हनिष्यति सुदर्शनम्
किं ब्रह्मलोकं ब्रह्माण्डं दग्धुं शक्तं क्षणेन यत् तेजसा विष्णुतुल्यं यत्केनान्येन निवार्यते॥
ब्रह्मणो वचनं श्रुत्वा ततो दुद्राव ब्राह्मणः। त्रस्तो जगाम कैलासं शंकरं शरणं भिया ॥
कृपानिधान मां रक्षेत्युवाच शंकरं भिया। न हि पप्रच्छ कुशलं सर्वज्ञो ब्राह्मणं शिवः॥
उवाच दीनदीनेशः संहर्ता जगतां क्षणात्। स्थिरो भव द्विजश्रेष्ठ मदीयं वचनं शृणु ॥

शंकर उवाच---

पौत्रस्त्वं जगतां धातुरत्रेश्च तनयो मुने। वेदज्ञाताऽसि सर्वज्ञ मूर्खतुल्यं तु कर्म ते ॥६७॥
वेदेषु च पुराणेषु सेतिहासेषु सर्वतः। निरूपितो यः सर्वेशस्तं न जानासि मूढवत् ॥
अहं ब्रह्मा च इन्द्रश्च आदित्या वसवस्तथा। धर्मेन्द्रो च सुराः सर्वे मुनीन्द्रा मनवस्तथा॥
आविर्भूतास्तिरोभूता यस्य भ्रूभङ्गलीलया। तस्य प्राणाधिकं भक्तं हंसि त्वं कस्य तेजसा
अहं ब्रह्मा च कमला दुर्गा वाणी च राधिका। न हि भक्तात्परा: प्रेम्णा भक्ताश्च सर्वतः प्रियाः
क्षुद्रांश्च महतो भक्तान्छश्वद्रक्षति यत्नतः। सर्वान्तरात्मा भगवांश्चक्रेण दुःसहेन च ॥
नियुज्य चक्रं दुर्वार्यं स्वात्मतुल्यं च तेजसा। तथाऽपि न प्रतीतिश्च स्वयं गच्छति रक्षितुम्
स्वकीयगुणनाम्नां च श्रवणादतिसंभ्रमः। भक्तसङ्गे भ्रमत्येव च्छायेव संततं हरिः॥७४॥
कान्ता प्राणाधिका शश्वन्न हि कोऽपि ततोऽधिकः। भक्तान्द्वेष्टि स्वयं सा चेत्तूर्णं त्यजति तां प्रभुः ॥ ७५ ॥
सर्वेषां च प्रिया विप्राः स्वशरीरादपि द्विज। ब्राह्मणेभ्यः प्रिया भक्ताः प्राणेभ्यश्च हरेरपि॥
ईश्वरस्य प्रियः को वाऽप्रियः को वा जगत्त्रये। यः शिष्टस्तं भजेच्छश्वद्ध्यायते सततं सदा
महति प्रलये ब्रह्मन्ब्रह्माण्डौघे जलप्लुते। न तत्र नाशो भक्तानां सर्वेषां च भविष्यति ॥
भज ब्राह्मण गोविन्दं स्मर तस्य पदाम्बुजम्। सर्वापदो विनश्यन्ति श्रीहरेः स्मरणादपि॥
मज शीघ्रं च वैकुण्ठे वैकुण्ठः शरणं तव। दास्यत्येवाभयं तुभ्यं करुणासागरो विभुः ॥
एतस्मिन्नन्तरे व्याधं कैलासं चक्रतेजसा। यथा च सूर्यकिरणैः सुप्रदीप्तं महीतलम् ॥

---

१ क. द्वाध।

दग्धा ज्वालाकरालैश्च सर्वे कैलासवासिनः । त्राहि त्राहीत्येवमुक्त्वा शंकरं शरणं ययुः ॥
दृष्ट्वा चक्रं दुर्निग्रहं शंकरः करुणानिधिः । पार्वत्या सह संप्रीत्या ब्राह्मणायाऽऽशिषं ददौ
तेनः सत्यं तपः सत्यं यदि चेच्चिरसंचितम् । कृतापराधो भीतश्च द्विजो भवतु विज्वरः ॥

पार्वत्युवाच—

यत्प्रभोर्मम पुण्येषु ब्राह्मणः शरणागतः । ममाऽऽशिषा महाभीत्या शीघ्रं भवतु विज्वरः
इत्येवमुक्त्वा कृपया विरराम शिवा शिवः । मुनिः प्रणम्य देवेशं वैकुण्ठं शरणं ययौ ॥
गत्वा वैकुण्ठभवनं मनोयायी मुनीश्वरः । दृष्ट्वा सुदर्शनं पश्चाद्विवेशान्तःपुरं हरेः ॥८७॥
ददर्श श्रीहरिं विप्रो रत्नसिंहासनस्थितम् । शङ्खचक्रगदापद्मधरं पीताम्बरं परम् ॥८८॥
श्यामं चतुर्भुजं शान्तं लक्ष्मीकान्तं मनोहरम् । रत्नालंकारशोभाढ्यं रत्नमालाविभूषितम्
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम् । सद्रत्नसाररचितं किरीटोज्ज्वलशेखरम् ॥९०॥
पार्षदप्रवरेन्द्रैश्च सेवितं श्वेतचामरैः । पद्मासेवितपादाब्जं सरस्वत्या स्तुतं पुरः ॥९१॥
सुनन्दनन्दकुमुदप्रचण्डादिभिरावृतम् । गुणानुवादं गायन्तं तैस्तैः पश्यन्तमीप्सितम् ॥
एवंभूतं प्रभुं दृष्ट्वा दण्डवत्प्रणनाम च । तुष्टाव सामवेदोक्तस्तोत्रेण परमेश्वरम् ॥

दुर्वासा उवाच—

त्राहि मां कमलाकान्त त्राहि मां करुणानिधे । दीनबन्धोऽतिदीनेश करुणासागर प्रभो ॥
वेदवेदाङ्गसंस्रष्टुर्विधातुश्च स्वयं विधे । मृत्योर्मृत्युः कालकाल त्राहि मां संकटार्णवे ॥
संहारकर्तुः संहारः सर्वेशः सर्वकारणः । महाविष्णुतरोर्बीज रक्ष मां भवसागरे ॥९६॥
शरणागतशोकार्तभयत्राणपरायण । भगवंस्त्वं मां भीतं नारायण नमोऽस्तु ते ॥ ९७ ॥
वेदेष्वाद्यं च यद्वस्तु वेदाः स्तोतुं न च क्षमाः । सरस्वती जडीभूता किं स्तुवन्ति विपश्चितः
शेषः सहस्रवक्त्रेण यं स्तोतुं जडतां व्रजेत् । पञ्चवक्त्रो जडीभूतो जडीभूतश्चतुर्मुखः ॥
श्रुतयः स्मृतिकर्तारो वाणी चेत्स्तोतुमक्षमा । कोऽहं विप्रश्च वेदज्ञः शिष्यः किं स्तौमि मानद
मनूनां च महेन्द्राणामष्टाविंशतिभे गते । दिवानिशं यस्य विधेरष्टोत्तरशतायुषः ॥१०१॥
तस्य पातो भवेद्यस्य चक्षुरुन्मीलनेन च । तमनिर्वचनीयं च किं स्तौमि पाहि मां प्रभो ॥
इत्येवं स्तवनं कृत्वा पपात चरणाम्बुजे । नयनाम्बुजनीरेण सिषेच भयविह्वलः ॥१०३॥
दुर्वाससा कृतं स्तोत्रं हरेश्च परमात्मनः । पुण्यदं सामवेदोक्तं जगन्मङ्गलनामकम् ॥१०४॥
यः पठेत्संकटग्रस्तो भक्तियुक्तश्च संयतः । नारायणस्तं कृपया शीघ्रमागत्य रक्षति ॥
राजद्वारे श्मशाने च कारागारे भयाकुले । शत्रुग्रस्ते दस्युभीतौ हिंस्रजन्तुसमन्विते ॥

१ क. तन्त्रैः । २ क. ग्रम् ।

वेष्टिते राजसैन्येन मग्ने पोते महार्णवे। स्तोत्रस्मरणमात्रेण मुच्यते नात्र संशयः॥१०७॥

नारायण उवाच—

मुनेश्च स्तवनं श्रुत्वा भगवान्भक्तवत्सलः। प्रहस्योवाच मधुरं पीयूषवृष्टिवन्मुदा॥१०८॥

श्रीभगवानुवाच—

उत्तिष्ठोत्तिष्ठ भद्रं ते भविष्यति वरेण मे। किं तु मे वचनं नित्यं शृणु सत्यं सुखावहम्॥
अन्येषां च भवेज्ज्ञानं श्रुत्वा शास्त्रं सतां मुखात्। स्वमूर्तिपन्ति शास्त्राणि भवे सन्तश्चरन्ति हि
कर्म वेदविरुद्धं च सर्वेषामतिगर्हितम्। करोति विद्वाश्चेज्ज्ञात्वा स च जीवन्मृताधिकः॥
पुराणेषु च वेदेषु चेतिहासेषु ब्राह्मण। वैष्णवानां च महिमा श्रुतः सर्वैश्च सर्वतः॥११२॥
अहं प्राणा वैष्णवानां मम प्राणाश्च वैष्णवाः। तानेव द्वेष्टि यो मूढो ममासूनां च हिंसकः
पुत्रान्पौत्रान्कलत्रांश्च राज्यं लक्ष्मीं विहाय च। ध्यायन्ते सततं ये मां को मे तेभ्यः परः प्रियः
परा भक्तान्न मे प्राणा न च लक्ष्मीर्न शंकरः। न भारती न च ब्रह्मा न दुर्गा न गणेश्वरः
न ब्राह्मणा न वेदाश्च न वेदजननी परा। न गोपी न च गोपाला न राधा प्राणतः प्रिया
इत्येवं कथितं सर्वं सत्यं सारं च वास्तवम्। न प्रशंसापरं तेषां ते च प्राणाधिकाः प्रियाः
मां द्विषन्ति च ये मूढा ज्ञानहीनाश्च वञ्चिताः। आत्मानं ये न जानन्ति ते यान्ति निरयं चिरम्॥११९॥
ये द्विषन्ति च मद्भक्तान्प्राणानामधिकं प्रियान्। तेषां शास्ता त्वहं तूर्णं परत्र निरयं चिरम्
प्रभावोऽहं च सर्वेषामीश्वरः परिपालकः। तथाऽपि न स्वतन्त्रोऽहं भक्ताधीनो दिवानिशम्
गोलोके वाऽथ वैकुण्ठे द्विभुजं च चतुर्भुजम्। रूपमात्रमिदं शश्वत्प्राणा मे भक्तसंनिधौ॥
यदुक्तं भक्तदत्तं च भक्षणीयं च तन्मम। अभक्ष्यं द्रव्यमन्येन दत्तं चेदमृतोपमम्॥
अम्बरीषं नृपश्रेष्ठं निरीहं तमहिंसकम्। कथं हंसि दयाशीलं सर्वप्राणिहिते रतम्॥
दया कुर्वन्ति ये सन्तः सततं सर्वजन्तुषु। तान्द्विषन्ति च ये मूढास्तेषां हन्ताऽहमेव च॥
भक्तानां हिंसकं शत्रुमहं रक्षितुमक्षमः। अम्बरीषालयं गच्छ स त्वां रक्षितुमीश्वरः॥

नारायण उवाच—

इदं वाक्यं च तच्छ्रुत्वा ब्राह्मणो भयविह्वलः। विषण्णमानसस्तस्थौ स्मरन्कृष्णपदाम्बुजम्
एतस्मिन्नन्तरे ब्रह्मा भवान्या सह शंकरः। धर्मश्चन्द्रादयो देवा आजग्मुर्मुनिपुंगवाः॥
प्रणम्य तुष्टुवुः सर्वे परमात्मानमीश्वरम्। पुलकाञ्चितसर्वाङ्गा भक्तिनम्रात्मकंधराः॥१२८॥

ब्रह्मोवाच—

स्वात्मस्वरूप निर्लिप्त भक्तानुग्रहकारक। भक्तापराधजनकं रक्ष ब्राह्मणपुंगवम्॥१२९॥

१ ख. न च व्यापी।

महादेव उवाच—

दीनबन्धो जगन्नाथ नायं विप्रो जगद्बहिः । कृतापराधं दीनं च पाहीमं शरणागतम् ॥

पार्वत्युवाच—

भक्त एवाम्बरीषस्ते न द्विजा न सुरा वयम् । सर्वेषामीश्वरस्त्वं च रक्ष विप्रं कृतागसम् ॥

धर्म उवाच—

सर्वेषां जनकस्त्वं च पाता दण्डकृदीश्वरः । शिशुहेतोः शिशुं हन्ति पितैवेदं कुतः प्रभो ॥

इन्द्र उवाच—

कृपया समता शश्वत्सर्वेषु जीवेषु प्रभो । अपराधफलं भुक्तमधुनेमं पातुमर्हसि ॥१३३॥

रुद्र उवाच—

शान्तिं कर्तुं समुचितमुचितं सांप्रतं कुरु । कृतकुण्ठस्य मूढस्य पालनं कर्तुमर्हसि ॥१३४॥

दिक्पाल उवाच—

कृतापराधं विप्रं च च्छेत्तुमर्हसि न श्रुतौ । अपराधशमं कृत्वा सदा पाति सदीश्वरः ॥

ब्रह्मा ऊचुः—

यो द्वेष्टि वैष्णवं मूढस्तं रक्षाः सर्वदेवताः । पीडां कुर्मो वयं शश्वत्पश्चात्त्वं पातुमर्हसि ॥

मुनय ऊचुः—

नाथ विप्रे परामूते सर्वे जीवन्मृता वयम् । दण्डं विधानुपेक्षस्य भवेच्छ्वा स्वजातिषु ॥

अत्रिरुवाच—

त्वयैव दत्तः पुत्रो मे क्रोधी त्वत्सेवकः सदा । न कं बिभेति त्रैलोक्ये तेजस्वी तेजसा तव

लक्ष्मीरुवाच—

क्षमापराधं भगवन् ब्राह्मणं शरणागतम् । स्तुवन्ति देवविप्राश्च न विप्रं हन्तुमर्हसि ॥

सरस्वत्युवाच—

बोधयिष्यामि देवानां जनकं कामदं श्रुतिम् । भगवन्स्वामी सर्वेषां सर्वांश्च पातुमर्हसि ॥

पार्षदा ऊचुः—

भवतः स्मृतिमात्रेण सर्वेषां सर्वमङ्गलम् । भवत्सर्वापदो यान्ति पाहीमं शरणागतम् ॥

नर्तका ऊचुः—

दारिद्र्यभञ्जन वयं भिक्षुकास्तव संततम् । भिक्षां नः सांप्रतं देहि परित्राणं द्विजस्य च ॥

एतेषां स्तवनं श्रुत्वा प्रभुः शरणवत्सलः । प्रहस्योवाच वचनं सर्वसंतोषकारणम् ॥

श्रीभगवानुवाच—

सर्वे शृणुत मद्वाक्यं नीतियुक्तं सुखावहम्। विप्ररक्षां करिष्यामि युष्माकमाज्ञया ध्रुवम् ॥
किंत्वयं यातु वैकुण्ठादम्बरीषालयं पुनः। करोतु पारणं तत्र राज्ञः सुप्रीतये मुनिः ॥
विप्रस्तस्यातिथिर्भूत्वा निर्दोषं शप्तुमुद्यतः। सुदर्शनं तु तं रक्ष्यं ब्राह्मणं हन्तुमुद्यतम् ॥
पूर्णं वर्षमयं भीतो भ्रमत्येव भुवं मुदा। उपवासी स राजेन्द्रः सस्त्रीकश्च शुचाऽन्वितः ॥
ततोऽहमुपवासी च भक्तोपवासकारणात्। स्तनान्धं बालकं दृष्ट्वा न भुङ्क्ते जननी यथा
ममाऽऽशिषा मुनिश्रेष्ठः सद्यो भवतु विज्वरः। पथि तत्राऽस्य हिंसां च मच्चक्रं न करिष्यति
अहमेवाद्य निश्चिन्तः सुखं भोक्ष्यामि निश्चितम्। भक्तदत्तं च यद्वस्तु प्रीत्या कृत्वा सुधोपमम्
लक्ष्मीदत्तं च तद्द्रव्यं न चाहं भोक्तुमीश्वरः। विना भक्तप्रदानेन न च सा दातुमीश्वरी
हे मुनीन्द्र महाप्राज्ञ गच्छ वत्स नृपालयम्। सर्वे देवाश्च देव्यश्च गच्छन्तु मुनयो गृहम् ॥
इत्युक्त्वा श्रीहरिस्तूर्णं ययौ स्वान्तःपुरं मुदा। ययुः सर्वे मुदा युक्ताः प्रणम्य जगदीश्वरम् ॥
ब्राह्मणश्च मनोयायी जगाम नृपमन्दिरम्। सुदर्शनं च तच्चक्रं सूर्यकोटिसमप्रभम् ॥
उपोष्य वत्सरं राजा शुष्ककण्ठोष्ठतालुकः। सिंहासनस्थो ददर्श पुरतो मुनिपुंगवम् ॥
उत्थाय संभ्रमात्सद्यः प्रणम्य सादरं मुदा। भोजयित्वा तु मिष्टान्नं ब्राह्मणं बुभुजे स्वयम् ॥
भुक्त्वा तुष्टो द्विजश्रेष्ठो युयुजे परमाशिषम्। जगाम स्वालयं तूर्णं प्रशशंस पुनः पुनः ॥
उवाच पथि विप्रेन्द्रो मनसा विस्मयाकुलः। माहात्म्यं दुर्लभमहो वैष्णवानामिति द्विजः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० मुनिमोक्षणप्रस्तावो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

## अथ षड्विंशोऽध्यायः।

नारद उवाच—

द्वादशीलङ्घने दोषः श्रुतस्त्वन्मुखतो मुने। पराभवो मुनेश्चैव नृपत्राणं हरेरहो ॥ १ ॥
अधुना श्रोतुमिच्छामि सर्वपापनिसितं च मे। एकादशीव्रतस्यास्य विधानं वद निश्चितम् ॥
अहो श्रुतो श्रुतं किंचिन्मतभेदान्न निश्चितम्। श्रुतीनां कारणमुखाच्छ्रोतुं कौतूहलं मम

नारायण उवाच—

एकादशीव्रतमिदं देवानामपि दुर्लभम्। श्रीकृष्णप्रीतिजनकं तपःश्रेष्ठं तपस्विनाम् ॥ ४ ॥
देवानां च यथा कृष्णो देवीनां प्रकृतिर्यथा। आश्रमाणां यथा विप्रो वैष्णवानां यथा शिवः

१ क. व्रतानां दुर्लभं परम्।

यथा गणेशः पूज्यानां यथा वाणी विपश्चिताम् । शास्त्राणां च यथा वेदास्तीर्थानां जाह्नवी यथा
तैजसानां यथा स्वर्णं प्राणिनां वैष्णवो यथा । धनानां च यथा विद्या सद्गुणिनां च यथा प्रिया
प्रमथानां यथा रुद्रः श्रेयसां च यथा मतिः । आत्मा यथेन्द्रियाणां च चञ्चलानां यथा मनः
गुरूणां च यथा माता बन्धूनां च यथा पतिः । बलिष्ठानां यथा दैवं कालः कल्पयतां यथा
सुशीलं चैव मित्राणां शत्रूणां रुग्यथा मुने । यथा कीर्तिः कीर्तिमतां गृहिणां च यथा गृहम्
यथा खलो हिंसकानां दुष्टानां चैव पुंश्चली । तेजस्विनां महेशश्च सहिष्णूनां यथा क्षितिः॥
यथाऽमृतं भक्षणानां दाहकानां यथाऽनलः । यथा श्रीधनदातॄणां सतीनां च यथा सती ॥
प्रजेशानां यथा ब्रह्मा सरितां सागरो यथा । यथा साम श्रुतीनां च गायत्री छन्दसां यथा॥
वृक्षाणां च यथाऽश्वत्थः पुष्पाणां तुलसी यथा । यथा मार्गो हि मासानामृतूनां च यथा मधुः
आदित्यानां यथा सूर्यो रुद्राणां शंकरो यथा । यथा भीष्मो वसूनां च वर्षाणां भारतं यथा
देवर्षीणां यथा त्वं च ब्रह्मर्षीणां यथा भृगुः । नृपाणां च यथा रामः सिद्धानां कपिलो यथा
यथा सनत्कुमारश्च योगिनां ज्ञानिनां वरः । ऐरावतो गजेन्द्राणां पशूनां शरभो यथा ॥
यथा हिमाद्रिः शैलानां मणीनां कौस्तुभो यथा । सरस्वती नदीनां च यथा पुण्यस्वरूपिणी
गन्धर्वाणां चित्ररथो यथा श्रेष्ठश्च नारद । यथा कुबेरो यक्षाणां सुमाली रक्षसां यथा ॥
यथा श्रेष्ठा च नारीणां शतरूपा वरा परा । मनूनां च यथा श्रेष्ठः स्वयं स्वायंभुवो मनुः॥
सुन्दरीणां यथा रम्भा यथा माया च मायिनाम् । एकादशीव्रतमिदं व्रतानां च वरं तथा ॥
कर्तव्यं च चतुर्णां च वर्णानां नित्यमेव च । यतीनां वैष्णवानां च ब्राह्मणानां विशेषतः ॥
सत्यं सर्वाणि पापानि ब्रह्महत्यादिकानि च । सन्त्येवौदनमाश्रित्य श्रीकृष्णव्रतवासरे ॥
भुक्त्वैतानि च पापानि यो भुङ्क्ते तत्र मन्दधीः । इहातिपातकी सोऽपि यात्यन्ते नरकं ध्रुवम्
एकादशीप्रमाणानि युगसंख्याकृतानि च । कुम्भीपाके महाघोरे स्थित्वा चाण्डालतां व्रजेत्
गलितव्याधियुक्तश्च ततः सप्तसु जन्मसु । पश्चान्मुक्तो भवेत्पापादित्याह कमलोद्भवः ॥
इत्येवं कथितं ब्रह्मन्यो दोषस्तत्र भोजने । द्वादशीलङ्घने दोषो मयोक्तश्च श्रुतः पुरा ॥
दशमीलङ्घने दोषं निबोध कथयामि ते । पुरा श्रुतो धर्मवक्त्राद्वेदसारोद्धृतोऽपि च ॥
दशमीं च त्रयोदश्यां मूढोऽज्ञानेन लङ्घयेत् । याति श्रीरस्य गृहात्पूर्णं शापं दत्त्वा तु दारुणम्
इह तद्वंशहानिश्च यशोहानिर्भवेद्ध्रुवम् । अन्ते मन्वन्तरशतमन्धकूपे वसेद्द्विज ॥१०॥
दशम्येकादशी वाऽपि द्वादशी यत्र वासरे । तत्र भुक्त्वा परदिने उपोष्य व्रतमाचरेत् ॥
द्वादश्यां च व्रतं कृत्वा त्रयोदश्यां च पारणम् । द्वादशीलङ्घने दोषो व्रतिनां तत्र विद्यते

संपूर्णैकादशी यत्र प्रभाते किंचिदेव सा । तत्रोपोष्या द्वितीया च परा चेद्यदि वर्धते ॥
षष्टिदण्डात्मिका यत्र प्रभाते च तिथित्रयम् । कुर्वन्ति गृहिणः पूर्वं चैव यत्यादयस्तथा ॥
परत्रानशनं कृत्वा नित्यकृत्यं समाचरेत् । व्रते जागरणं सर्वं पूर्वत्रैवाऽऽचरेद्बुधः ॥
तत्पूर्वदिवसे नित्यं व्रतं कृत्वा परेऽहनि । एकादश्यां व्यतीतायां पारणं तु समाचरेत् ।
वैष्णवानां यतीनां च विधवानां तथैव च । सर्वाः समा उपोष्यास्ता भिक्षूणां ब्रह्मचारिणाम्
शुक्लामेव तु कुर्वन्ति गृहिणो वैष्णवेतराः । न कृष्णालङ्घने दोषस्तेषां वेदेषु नारद ॥
शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन
इत्येवं कथितो ब्रह्मन्निर्णयोऽयं श्रुतौ श्रुतः । व्रतस्यास्य विधानं च निबोध कथयामि ते
कृत्वा हविष्यं पूर्वाह्णे न च भुङ्क्ते पुनर्जलम् । एकाकी कुशशय्यानां नक्तं शयनमाचरेत्
ब्राह्मे मुहूर्ते चोत्थाय प्रातःकृत्यं विधाय च । नित्यकृत्यं विधायाथ ततः स्नानं समाचरेत्
व्रतोपवासं संकल्प्य श्रीकृष्णप्रीतिपूर्वकम् । कृत्वा संध्यां तर्पणं च विधायाऽऽह्निकमाचरेत्
नित्यपूजां दिने कृत्वा व्रतद्रव्यं समाहरेत् । कृत्वा षोडशोपचारं प्रशस्तं विधिबोधितम् ॥
आसनं वसनं पाद्यमर्घ्यं पुष्पानुलेपनम् । धूपं दीपं च नैवेद्यं यज्ञसूत्रं च भूषणम् ॥४१॥
गन्धं स्नानीयताम्बूले मधुपर्कं पुनर्जलम् । एतान्याहृत्य दिवसे व्रतं नक्तं समाचरेत् ॥
उपविश्याऽऽसने पूतो धृत्वा धौते च वाससी । आचम्य श्रीहरिं नत्वा स्वस्तिवाचनमाचरेत्
आरोप्य मङ्गलघटं धान्याधारे शुभे क्षणे । फलशाखाचन्दनाक्तं वेदोक्तं मुनिभिर्मुदा ॥
देवषट्कं समावाह्य पृथग्ध्यानैः समाचरेत् । पूजां पञ्चोपचारैश्च प्रकृष्टैश्च विचक्षणः ॥
गणेश्वरं दिनकरं वह्निं विष्णुं शिवं शिवाम् । संपूज्यैतान्प्रणम्याथ व्रतं कुर्याद्धरिं स्मरन्
नाऽऽराध्य देवषट्कं च यदि कर्म समाचरेत् । नित्यं नैमित्तिकं चापि तत्सर्वं निष्फलं भवेत्
इत्येवं कथितं सर्वं व्रताङ्गभूतमेव च । कण्वशाखोक्तमिष्टं च व्रतं शृणु महामुने ॥१२॥
सामवेदोक्तध्यानेन ध्यात्वा कृष्णं परात्परम् । पुष्पं च शिरसि न्यस्य पुनर्ध्यानं समाचरेत्
ध्यानं शृणु निगूढं च सर्वेषामपि वाञ्छितम् । न प्रकाश्यमभक्ताय भक्तप्राणाधिकं परम्
नवीननीरदो यद्वच्छ्यामसुन्दरविग्रहम् । शरत्पार्वणचन्द्राभाविनिन्द्यास्यमनुत्तमम् ॥
शरत्सूर्योदयाब्जानां प्रभामोचनलोचनम् । स्वाङ्गसौन्दर्यशोभाभी रत्नभूषणभूषितम् ॥
गोपीलोचनकोणैश्च प्रसन्नै रतिसूचकैः । शश्वन्निरीक्ष्यमाणं तत्प्राणैरेव विनिर्मितम् ॥
रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम् । राधावक्त्रशरच्चन्द्रसुधापानचकोरकम् ॥१८॥
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् । पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥

---

१ क. षष्टी तत्पूर्वदिवसे म° । २ क. स्मृत्वा । ३ क. 'दोद्भिदश्याम' ।

सद्रत्नसारनिर्माणं किरीटोज्ज्वलशेखरम् । विनोदमुरलीन्यस्तहस्तं पूज्यं सुरासुरैः ॥
ध्यानासाध्यं दुराराध्यं ब्रह्मादीनां च वन्दितम् । कारणं कारणानां च तमीश्वरमहं भजे ॥
ध्यात्वाऽनेन तमावाह्य चोपचाराणि षोडश । दत्त्वा संपूजयेद्भक्त्या मन्त्रैरेभिश्च नारद ॥
आसनं स्वर्णनिर्माणं रत्नसारपरिच्छदम् । नानाचित्रविचित्राढ्यं गृह्यतां परमेश्वर ॥
वह्निप्रक्षालितं वस्त्रं निर्मितं विश्वकर्मणा । मूल्यानिर्वचनीयं च गृह्यतां राधिकापते ॥६४॥
पादप्रक्षालनार्हं च सुवर्णपात्रसंस्थितम् । सुवासितं शीतलं च गृह्यतां करुणानिधे ॥६५॥
इदमर्घ्यं पवित्रं च शङ्खतोयसमन्वितम् । पुष्पदूर्वाचन्दनाक्तं गृह्यतां भक्तवत्सल ॥६६॥
सुवासितं शुक्लपुष्पं चन्दनागुरुसंयुतम् सद्यस्ते प्रीतिजनकं गृह्यतां सर्वकारण ॥६७॥
चन्दनागुरुकस्तूरीकुङ्कुमोशीरमुत्तमम् । सर्वेप्सितमिदं कृष्ण गृह्यतामनुलेपनम् ॥६८॥
रसो वृक्षविशेषस्य नानाद्रव्यसमन्वितः । सुगन्धियुक्तः सुखदो धूपोऽयं प्रतिगृह्यताम् ॥
दिवानिशं सुप्रदीप्तो रत्नसारविनिर्मितः । पुनर्ध्वान्तनाशबीजं दीपोऽयं प्रतिगृह्यताम् ॥
नानाविधानि द्रव्याणि स्वादूनि सुरभीणि च । चोष्यादीनि पवित्राणि स्वात्मारामः प्रगृह्यताम्
सावित्रीग्रन्थिसंयुक्तं स्वर्णतन्तुविनिर्मितम् । गृह्यतां देवदेवेश रचितं चारुकारुणा ॥७२॥
अमूल्यरत्नरचितं सर्वावयवभूषणम् । त्विषा जाज्वल्यमानं च गृह्यतां नन्दनन्दन ॥७३॥
प्रधानो वर्णनीयश्च सर्वमङ्गलकर्मणि । प्रगृह्यतां दीप्तमन्त्रो गन्धोऽयं मङ्गलप्रदः ॥७४॥
धात्रीश्रीफलपत्रोत्थं विष्णुतैलं मनोहरम् । वाञ्छितं सर्वलोकानां भगवन्प्रतिगृह्यताम् ॥
वाञ्छनीयं च सर्वेषां कर्पूरादिसुवासितम् । मया निवेदितं नाथ ताम्बूलं प्रतिगृह्यताम् ॥
सर्वेषां प्रीतिजनकं सुमिष्टं मधुरं मधु । सद्रत्नसारपात्रस्थं गोपीकान्त प्रगृह्यताम् ॥७७॥
निर्मलं जाह्नवीतोयं सुपवित्रं सुवासितम् । पुनराचमनीयं च गृह्यतां मधुसूदन ॥७८॥
इति षोडशोपचारान्दत्त्वा भक्तो मुदाऽन्वितः । मन्त्रेणानेन पुष्पाणि माल्यं दत्त्वा प्रयत्नतः
नानाप्रकारपुष्पैश्च ग्रथितं शुक्लतन्तुना । प्रवरं भूषणानां च माल्यं च गृह्यतां प्रभो ॥८०॥
इति पुष्पाञ्जलिं दद्यान्मूलमन्त्रेण च व्रती । कुर्यात्ततस्तवनं भक्त्या पुटाञ्जलियुतः सुधीः

भक्त उवाच—

हे कृष्ण राधिकानाथ करुणासागर प्रभो । संसारसागरे घोरे मामुद्धर भयानके ॥८२॥
शतजन्मकृतायासादुद्विग्नस्य मम प्रभो । स्वकर्मपाशनिगडैर्बद्धस्य मोक्षणं कुरु ॥८३॥
प्रणमे पादपद्मे ते पश्य मां शरणागतम् । भवपाशभयाद्भीतं पाहि त्वं शरणागतम् ॥
भक्तिहीनं क्रियाहीनं विधिहीनं च वेदतः । वस्तुमन्त्रविहीनं यत्तत्संपूर्णं कुरु प्रभो ॥

१ क. °ध्यानं मा° ।

संपूर्णैकादशी यत्र प्रभाते किंचिदेव सा। तत्रोपोष्या द्वितीया च परा चेद्यदि वर्धते ॥
षष्टिदण्डात्मिका यत्र प्रभाते च तिथित्रयम्। कुर्वन्ति गृहिणः पूर्वं चैव यत्यादयस्तथा ॥
परत्रानशनं कृत्वा नित्यकृत्यं समाचरेत्। व्रते जागरणं सर्वं पूर्वत्रैवाऽऽचरेद्बुधः ॥
तत्पूर्वदिवसे नित्यं व्रतं कृत्वा परेऽहनि। एकादश्यां व्यतीतायां पारणं तु समाचरेत्।
वैष्णवानां यतीनां च विधवानां तथैव च। सर्वाः समा उपोष्यास्ता भिक्षूणां ब्रह्मचारिणाम्
शुक्लामेव तु कुर्वन्ति गृहिणो वैष्णवेतराः। न कृष्णालङ्घने दोषस्तेषां वेदेषु नारद ॥
शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत्। सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन
इत्येवं कथितो ब्रह्मन्निर्णयोऽयं श्रुतौ श्रुतः। व्रतस्यास्य विधानं च निबोध कथयामि ते
कृत्वा हविष्यं पूर्वाह्ने न च भुङ्क्ते पुनर्जलम्। एकाकी कुशशय्यायां नक्तं शयनमाचरेत्
ब्राह्मे मुहूर्ते चोत्थाय प्रातःकृत्यं विधाय च। नित्यकृत्यं विधायाथ ततः स्नानं समाचरेत्
व्रतोपवासं संकल्प्य श्रीकृष्णप्रीतिपूर्वकम्। कृत्वा संध्यां तर्पणं च विधायाऽऽह्निकमाचरेत्
नित्यपूजां दिने कृत्वा व्रतद्रव्यं समाहरेत्। कृत्वा षोडशोपचारं प्रदद्याद्विधिबोधितम् ॥
आसनं वसनं पाद्यमर्घ्यं पुष्पानुलेपनम्। धूपं दीपं च नैवेद्यं यज्ञसूत्रं च भूषणम् ॥११॥
गन्धं स्नानीयताम्बूले मधुपर्कं पुनर्जलम्। एतान्याहृत्य दिवसे व्रतं नक्तं समाचरेत् ॥
उपविश्याऽऽसने पूतो धृत्वा धौते च वाससी। आचम्य श्रीहरिं नत्वा स्वस्तिवाचनमाचरेत्
आरोप्य मङ्गलघटं धान्याधारे शुभे क्षणे। फलशाखाचन्दनाक्तं वेदोक्तं मुनिभिर्मुदा ॥
देवषट्कं समावाह्य पृथग्ध्यानैः समाचरेत्। पूजां पञ्चोपचारैश्च प्रकृष्टैश्च विचक्षणः ॥
गणेशं दिनकरं वह्निं विष्णुं शिवं शिवाम्। संपूज्यैतान्प्रणम्याथ व्रतं कुर्याद्धरिं स्मरन्
नाऽऽराध्य देवषट्कं च यदि कर्म समाचरेत्। नित्यं नैमित्तिकं चापि तत्सर्वं निष्फलं भवेत्
इत्येवं कथितं सर्वं व्रताङ्गभूतमेव च। कण्वशाखोक्तमिष्टं च व्रतं शृणु महामुने ॥१२॥
सामवेदोक्तध्यानेन ध्यात्वा कृष्णं परात्परम्। पुष्पं च शिरसि न्यस्य पुनर्ध्यानं समाचरेत्
ध्यानं शृणु निगूढं च सर्वेषामपि वाञ्छितम्। न प्रकाश्यमभक्ताय भक्तप्राणाधिकं परम्
नवीननीरदो पद्मश्यामसुन्दरविग्रहम् । शरत्पार्वणचन्द्राभाविनिन्द्यास्यमनुत्तमम् ॥
शरत्सूर्योदयाब्जानां प्रभामोचनलोचनम्। स्वाङ्गसौन्दर्यशोभाभी रत्नभूषणभूषितम् ॥
गोपीलोचनकोणैश्च प्रसन्नं रतिसूचकैः। शश्वन्निरीक्ष्यमाणं तत्प्राणैरिव विनिर्मितम् ॥
रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम्। राधावक्त्रशरच्चन्द्रसुधापानचकोरकम् ॥१४॥
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम्। पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥

१ क. यदि तत्पूर्वदिवसे व्र° । २ क. स्मृता । ३ क. 'दोलिपरयाम' ।

दत्तं पुरा ब्रह्मणे च हरिणा जलशायिना । तस्मै दत्त्वा सर्वमिदं निद्रां भेजे जगत्पतिः ॥
नाभिपद्मे जगत्स्रष्टा मधुना कैटभेन च । पीडितः परितुष्टाव मूलप्रकृतिमीश्वरीम् ॥

ब्रह्मोवाच—

दुर्गे शिवेऽभये माये नारायणि सनातनि । जये मे मङ्गलं देहि नमस्ते सर्वमङ्गले ॥
दैत्यनाशार्थवचनो दकारः परिकीर्तितः । उकारो विघ्ननाशार्थवाचको वेदसंमतः ॥ १८॥
रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः । भयशत्रुघ्नवचनश्चाऽऽकारः परिकीर्तितः ॥
स्मृत्युक्तिस्मरणाद्यस्या एते नश्यन्ति निश्चितम् । अतो दुर्गा हरेः शक्तिर्हरिणा परिकीर्तिता
विपत्तिवाचको दुर्गश्चाऽऽकारो नाशवाचकः । दुर्गं नश्यति या नित्यं सा दुर्गा परिकीर्तिता
दुर्गो दैत्येन्द्रवचनोऽप्याकारो नाशवाचकः । तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्तिता ॥
शश्च कल्याणवचन इकारोत्कृष्टवाचकः । समूहवाचकश्चैव वाकारो दातृवाचकः ॥
श्रेयःसंघोत्कृष्टदात्री शिवा तेन प्रकीर्तिता । शिवराशिर्मूर्तिमती शिवा तेन प्रकीर्तिता ॥
शिवो हि मोक्षवचनश्चाऽऽकारो दातृवाचकः । स्वयं निर्वाणदात्री या सा शिवा परिकीर्तिता
अभयो भयनाशोक्तश्चाऽऽकारो दातृवाचकः । प्रददात्यभयं सद्यः साऽभया परिकीर्तिता॥
राज्यश्रीवचनो माश्च याश्च प्रापणवाचकः । तां प्रापयति या सद्यः सा माया परिकीर्तिता ॥
माश्च मोक्षार्थवचनो याश्च प्रापणवाचकः । तं प्रापयति या नित्यं सा माया परिकीर्तिता
नारायणार्धाङ्गभूता तेन तुल्या च तेजसा । सदा तस्य शरीरस्था तेन नारायणी स्मृता ॥
निर्गुणस्य च नित्यस्य वाचकश्च सनातनः । सदा नित्या निर्गुणा या कीर्तिता सा सनातनी
जयः कल्याणवचनो ह्याकारो दातृवाचकः । जयं ददाति या नित्यं सा जया परिकीर्तिता
सर्वमङ्गलशब्दश्च संपूर्णैश्वर्यवाचकः । आकारो दातृवचनस्तद्दात्री सर्वमङ्गला ॥ ३२ ॥
नामाष्टकमिदं सारं नामार्थसहसंयुतम् । नारायणेन यद्दत्तं ब्रह्मणे नाभिपङ्कजे ॥३३॥
तस्मै दत्त्वा निद्रितश्च बभूव जगतां पतिः । मधुकैटभौ दुर्दान्तौ ब्रह्माणं हन्तुमुद्यतौ॥३४॥
स्तोत्रेणानेन स ब्रह्मा स्तुतिं नत्वा चकार ह । साक्षात्स्तुता तदा दुर्गा ब्रह्मणे कवचं ददौ
श्रीकृष्णकवचं दिव्यं सर्वरक्षणनामकम् । दत्त्वा तस्मै महामाया साऽन्तर्धानं चकार ह॥
स्तोत्रं कुर्वन्ति निद्रां च संरक्ष्य कवचेन वै । निद्रानुग्रहतः सद्यः स्तोत्रस्यैव प्रभावतः ॥
तत्राऽऽजगाम भगवान्रूपरूपी जनार्दनः । शक्त्या च दुर्गया सार्धं शंकरस्य जयाय च॥
सत्यं शंकरं मूर्ध्नि कृत्वा च निर्भयं ददौ । अत्युद्धं प्रापयामास जया तस्मै जयं ददौ ॥
स्तोत्रस्यैव प्रभावेण संप्राप्य कवचं विधिः । वरं च कवचं प्राप्य निर्भयं प्राप निश्चितम् ॥
ब्रह्मा ददौ महेशाय स्तोत्रं च कवचं वरम् । त्रिपुरस्य च संग्रामे सरथे पतिते हरौ ॥

वेदोक्तविहिताज्ञानात्तथाङ्गहीने च कर्मणि । त्वन्नामोच्चारणेनैव सर्वं पूर्णं भवेद्धरे ॥
इति स्तुत्वा तं प्रणम्य दत्त्वा विप्राय दक्षिणाम् । महोत्सवं विधायाऽथ कुर्याज्जागरणं व्रती
कृत्वा व्रतोपवासं च यदि निद्रां निषेवते । पुनरेव फलं भुङ्क्ते व्रतार्धफलमाप्नुयात् ॥
यत्नेन च हविष्यान्नं सकृदेव समाचरेत् । मन्त्रेणानेन विप्रेन्द्र श्रीकृष्णचरणं स्मरन् ॥
हे अन्न प्राणिनां प्राणा ब्रह्मणा निर्मितं पुरा । देहि मे विष्णुरूप त्वं व्रतोपवासयोः फलम्
एवं यः कुरुते भक्त्या भारते व्रतमुत्तमम् । पूर्वान्सप्त परान्सप्त स्वात्मानमुद्धरेद्ध्रुवम् ॥
मातरं भ्रातरं चैव श्वश्रूं च श्वशुरं सुताम् । जामातरं तथा भृत्यमुद्धरेन्निश्चितं नरः ॥
इत्येवं कथितं विप्र श्रीकृष्णचरितव्रतम् । सुखदं मोक्षदं सारमपरं कथयामि ते ॥९३॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० एकादशीव्रतनिरूपणं नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

अथ सप्तविंशोऽध्यायः ।

---

नारायण उवाच—

शृणु नारद वक्ष्यामि श्रीकृष्णचरितं पुनः । गोपीनां वस्त्रहरणं वरदानं मनीषितम् ॥१॥
हेमन्ते प्रथमे मासि गोपिकाः काममोहिताः । कृत्वा हविष्यं भक्त्या च यावन्मासं सुसंयुताः
स्नात्वा सूर्यसुतातीरे पार्वतीं बालुकामयीम् । कृत्वाऽऽवाह्य च मन्त्रेण पूजां कुर्वन्ति नित्यशः
चन्दनागुरुकस्तूरीकुङ्कुमैश्च मनोहरैः । नानाप्रकारपुष्पैश्च माल्यैर्बहुविधैरपि ॥ ४ ॥
धूपैर्दीपैश्च नैवेद्यैर्वस्त्रैर्नानाफलैर्मुने । मणिमुक्ताप्रवालैश्च वाद्यैर्नानाविधैरपि ॥ ५ ॥
हे देवि जगतां मातः सृष्टिस्थित्यन्तकारिणि । नन्दगोपसुतं कान्तमस्मभ्यं देहि सुव्रते ॥
मन्त्रेणानेन देवेशीं परिहारं विधाय च । ततः कृत्वा तु संकल्पमपूजन्मूलमन्त्रतः ॥७॥
मन्त्रस्तु सामवेदोक्तोऽयातयामः सबीजकः । ॐ श्रीदुर्गायै सर्वविघ्नविनाशिन्यै नम इति
पुष्पं माल्यं च नैवेद्यं धूपं दीपं तथा शुभम् । मन्त्रेणानेन दद्भक्त्या ददुः सर्वा मुदाऽन्विताः
प्रवालमालया भक्त्या चेमं मन्त्रं सहस्रधा । जपं कृत्वा च स्तुत्वा च प्रणेमुः शिरसा भुवि
सर्वमङ्गलमाङ्गल्ये सर्वकामप्रदे शिवे । देहि मे वाञ्छितं देवि नमस्ते शंकरप्रिये ॥ ११॥
इत्युक्त्वा च नमस्कारं कृत्वा दत्त्वा च दक्षिणाम् । नैवेद्यानि च सर्वाणि ब्राह्मणेभ्यो ययुर्गृहम्

नारायण उवाच—

स्तवराजं शृणु मुने तुष्टुवुर्येन पार्वतीम् । भक्त्या गोपाङ्गनाः सर्वाः सर्वाभीष्टफलप्रदाम् ॥
जगत्येकार्णवे घोरे चन्द्रसूर्यविवर्जिते । अज्ञानाकारतोयेन संप्लुते च चराचरे ॥ १४ ॥

दत्तं पुरा ब्रह्मणे च हरिणा जलशायिना । तस्मै दत्त्वा सर्वमिदं निद्रां भेजे जगत्पतिः ॥
नाभिपद्मे जगत्स्रष्टा मधुना कैटभेन च । पीडितः परितुष्टाव मूलप्रकृतिमीश्वरीम् ॥

ब्रह्मोवाच —

दुर्गे शिवेऽभये माये नारायणि सनातनि । जये मे मङ्गलं देहि नमस्ते सर्वमङ्गले ॥
दैत्यनाशार्थवचनो दकारः परिकीर्तितः । उकारो विघ्ननाशार्थवाचको वेदसंमतः ॥ १८॥
रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः । भयशत्रुघ्नवचनश्चाऽऽकारः परिकीर्तितः ॥
स्मृत्युक्तिस्मरणाद्यस्या एते नश्यन्ति निश्चितम् । अतो दुर्गा हरेः शक्तिर्हरिणा परिकीर्तिता
विपत्तिवाचको दुर्गश्चाऽऽकारो नाशवाचकः । दुर्गं नश्यति या नित्यं सा दुर्गा परिकीर्तिता
दुर्गो दैत्येन्द्रवचनोऽप्याकारो नाशवाचकः । तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्तिता ॥
शश्च कल्याणवचन इकारोत्कृष्टवाचकः । समूहवाचकश्चैव वाकारो दातृवाचकः ॥
श्रेयःसंघोत्कृष्टदात्री शिवा तेन प्रकीर्तिता । शिवराशिर्मूर्तिमती शिवा तेन प्रकीर्तिता ॥
शिवो हि मोक्षवचनश्चाऽऽकारो दातृवाचकः । स्वयं निर्वाणदात्री या सा शिवा परिकीर्तिता
अभयो भयनाशोक्तश्चाऽऽकारो दातृवाचकः । प्रददात्यभयं सद्यः साऽभया परिकीर्तिता ॥
राज्यश्रीवचनो माश्च याश्च प्रापणवाचकः । तां प्रापयति या सद्यः सा माया परिकीर्तिता ॥
माश्च मोक्षार्थवचनो याश्च प्रापणवाचकः । तं प्रापयति या नित्यं सा माया परिकीर्तिता
नारायणार्धाङ्गभूता तेन तुल्या च तेजसा । सदा तस्य शरीरस्था तेन नारायणी स्मृता ॥
निर्गुणस्य च नित्यस्य वाचकश्च सनातनः । सदा नित्या निर्गुणा या कीर्तिता सा सनातनी
जयः कल्याणवचनो याकारो दातृवाचकः । जयं ददाति या नित्यं सा जया परिकीर्तिता
सर्वमङ्गलशब्दश्च संपूर्णैश्वर्यवाचकः । आकारो दातृवचनस्तद्दात्री सर्वमङ्गला ॥ २२ ॥
नामाष्टकमिदं सारं नामार्थसहसंयुतम् । नारायणेन यद्दत्तं ब्रह्मणे नाभिपङ्कजे ॥ २३॥
तस्मै दत्त्वा निद्रितश्च बभूव जगतां पतिः । मधुकैटभौ दुर्दान्तौ ब्रह्माणं हन्तुमुद्यतौ ॥ २४॥
स्तोत्रेणानेन स ब्रह्मा स्तुतिं नत्वा चकार ह । साक्षात्स्तुता तदा दुर्गा ब्रह्मणे कवचं ददौ
श्रीकृष्णकवचं दिव्यं सर्वरक्षणनामकम् । दत्त्वा तस्मै महामाया साऽन्तर्धानं चकार ह ॥
स्तोत्रं कुर्वन्ति निद्रा च संरक्ष्य कवचेन वै । निद्रानुग्रहतः सद्यः स्तोत्रस्यैव प्रभावतः ॥
तत्राऽऽजगाम भगवान्वृषरूपी जनार्दनः । शक्त्या च दुर्गया सार्धं शंकरस्य जयाय च ॥
सरथं शंकरं मूर्ध्नि कृत्वा च निर्भयं ददौ । अस्त्वूर्ध्वं प्रापयामास जया तस्मै जयं ददौ ॥
स्तोत्रस्यैव प्रभावेण संप्राप्य कवचं विधिः । वरं च कवचं प्राप्य निर्भयं प्राप निश्चितम् ॥
ब्रह्मा ददौ महेशाय स्तोत्रं च कवचं वरम् । त्रिपुरस्य च संग्रामे सरथे पतिते हरौ ॥

ब्रह्मास्त्रं च गृहीत्वा स सनिद्रं श्रीहरिं स्मरन् । स्तोत्रं च कवचं प्राप्य जघान त्रिपुरं हरः॥
स्तोत्रेणानेन तां दुर्गां कृत्वा गोपालिकाः स्तुतिम् । लेभिरे श्रीहरिं कान्तं स्तोत्रस्यास्य प्रभावतः
गोपकन्या कृतं स्तोत्रं सर्वमङ्गलनायकम् । वाञ्छितार्थप्रदं सद्यः सर्वविघ्नविनाशनम् ॥
त्रिसंध्यं यः पठेन्नित्यं भक्तियुक्तश्च मानवः । शैवो वा वैष्णवो वाऽपि शाक्तो दुर्गात्प्रमुच्यते
राजद्वारे श्मशाने च दावाग्नौ प्राणसंकटे । हिंस्रजन्तुभयग्रस्तो मग्नः पोते महार्णवे ॥
शत्रुग्रस्ते च संग्रामे कारागारे विपद्गते । गुरुशापे ब्रह्मशापे बन्धुभेदे च दुस्तरे ॥४७॥
स्थानभ्रष्टे धनभ्रष्टे जातिभ्रष्टे शुचाऽन्विते । पतिभेदे पुत्रभेदे खलसर्पविषान्विते ॥४८॥
स्तोत्रस्मरणमात्रेण सद्यो मुच्येत निर्भयः । वाञ्छितं लभते सद्यः सर्वैश्वर्यमनुत्तमम् ॥
इह लोके हरेर्भक्तिं दृढां च सततं स्मृतिम् । अन्ते दास्यं च लभते पार्वत्याश्च प्रसादतः ॥
अनेन स्तवराजेन तुष्टुवुर्नित्यमीश्वरीम् । प्रणेमुः परया भक्त्या यावन्मासं व्रजाङ्गनाः ॥
एवं पूर्णे च मासे च समाप्तिदिवसे तथा । स्नातुं प्रजग्मुर्गोप्यश्च वस्त्राण्याधाय तत्तटे ॥
नानाविधानि द्रव्याणि रत्नमुख्यानि नारद । पीतलोहितशुक्लानि चारूणि मिश्रितानि ॥
तीरावृतान्यसंख्यानि तैश्च तीरं सुशोभनम् । चन्दनागुरुकस्तूरीवायुना सुरभीकृतम्॥९४॥
नैवेद्यैश्च बहुविधैः कालदेशोद्भवैः फलैः । धूपैः प्रदीपैः सिन्दूरैः कुङ्कुमैश्च विराजितम् ॥
जले क्रीडोन्मुखा गोप्यो बभूवुः कौतुकेन च । नग्नाः क्रीडाभिरासक्ताः श्रीकृष्णार्पितमानसाः
दृष्ट्वा कृष्णश्च वस्त्राणि द्रव्याणि विविधानि च । वासांस्यादाय वस्तूनि चखाद शिशुभिः सह
गत्वा दूरं च गोपालास्तस्थुः सर्वे मुदाऽन्विताः । वस्त्राणि पुञ्जीकृत्याऽऽदावूचुः स्कन्धेऽ-
तिलोलुपाः ॥ ९८ ॥
श्रीदामा च सुदामा च वसुदामा तथैव च । सुबलश्च सुपार्श्वश्च शुभाङ्गः सुन्दरस्तथा ॥
चन्द्रभानो वीरभानः सूर्यभानस्तथैव च । वसुभानो रत्नभानो गोपाला द्वादश स्मृताः ॥
श्रीकृष्णो बलदेवश्च प्रधानाश्च चतुर्दश । गोपा हरेर्वयस्याश्च कोटिशः कोटिशो मुने ॥
वस्त्राण्यादाय ते सर्वे तस्थुरेकत्र दूरतः । शतशः पुञ्जिकास्तत्र स्थापयामासुरुन्मुखाः ॥
किंचिद्वस्त्रं समादाय कृत्वा च पुञ्जिकां मुदा । समारुह्य कदम्बाग्रमुवाच गोपिका हरिः॥

श्रीकृष्ण उवाच—

भो भो गोपालिकाः सर्वा विनष्टा व्रतकर्मणि । कृत्वा विधानं मद्व्रतं श्रुत्वा क्रीडत मन्मथात्
संपदिते मनार्हे च मासे मङ्गलकर्मणि । यूयं नग्नाः कथं तोये व्रताङ्गहानिकारिकाः ॥
परिधेयानि वासांसि दुष्प्राप्यानि यानि च । मनार्हाणि च वस्तूनि केन नीतानि वोऽधुना
व्रते तु नग्ना या स्नाति तां रुष्टो वरुणः स्वयम् । वरुणानुचराश्चक्रुर्वासोवस्तूपनिर्हृतिम् ॥

कथं यास्यथ नग्नाश्च व्रतस्थ किं भविष्यति । व्रताराध्या कथं सा वो वस्तूनि किं न रक्षति ॥
चिन्तां कुरुत तां पूज्यां तुष्टां भक्तिभिरीश्वरीम् । युष्माकमीदृशी देवी न शक्ता वस्तुरक्षणे ॥
कथं व्रतफलं सा वो दातुं शक्ता सुरेश्वरी । फलं प्रदातुं या शक्ता सा शक्ता सर्वकर्मणि ॥
श्रीकृष्णस्य वचः श्रुत्वा चिन्तामापुर्व्रजस्त्रियः । ददृशुर्यमुनातीरं वस्त्रवस्तुविहीनकम् ॥
चक्रुर्विषादं तोये च नग्नास्ता रुरुदुर्भृशम् । क्व गतानि च वस्त्राणि वस्तूनीत्यूचुरत्र नः ॥
कृत्वा विषादं तत्रैव तमूचुर्गोपकन्यकाः । पुटाञ्जलियुताः सर्वा भक्त्या विनयपूर्वकम् ॥

गोपालिका ऊचुः—

परिधेयानि वस्त्राणि किंकरीणां सदीश्वर । निबोधयाऽस्मानमेव स्पर्शं कर्तुं त्वमर्हसि ॥
व्रतार्हाणि च वस्तूनि देवस्वानि च सांप्रतम् । अदत्तानि नोचितानि ग्रहीतुं वेदविद्वर ॥
देहि धौतानि धृत्वा च करिष्यामो व्रतं वयम् । वस्तुनाऽन्येन गोविन्द वस्तूनां भक्षणं कुरु ॥
एतस्मिन्नन्तरे तत्र श्रीदामा वस्त्रपुञ्जिकाम् । दर्शयित्वा च ताः सर्वा दूरं दुद्राव तत्पुरः ॥
दृष्ट्वा सवस्त्रं गोपालं सर्वासामीश्वरी परा । सर्वा वयस्याश्चोवाच कोपयुक्ता जलप्लुता ॥

राधिकोवाच—

हे सुशीले शशिकले हे चन्द्रमुखि माधवि । कदम्बमाले हे कुन्ति यमुने सर्वमङ्गले ॥
हे पद्ममुखि सावित्रि पारिजाते च जाह्नवि । सुधामुखि शुभे पद्मे हे गौरि हे स्वयंप्रभे
कालिके कमले दुर्गे हे सरस्वति भारति । अपर्णे रति हे गङ्गे चाम्बिके सति सुन्दरि
कृष्णप्रिये मधुमति चम्पे चन्दननन्दिनि । यूयं सर्वाः समुत्थाय बध्वाऽऽनयत बल्लवम् ॥
सर्वा राधाज्ञया तूर्णं समुत्थाय जलात्क्रुधा । प्रजग्मुर्गोपिका नग्ना योनिमाच्छाद्य पाणिना
एतासां सहचारिण्यो गोप्यस्तूर्णं सहस्रशः । प्रजग्मुस्तेन रूपेण कोपादारक्तलोचनाः ॥
वेगेन दुद्रुवुः सर्वाः श्रीदामानं च बालिकाः । वेगेन च प्रधावन्तं बिभ्रन्तं वस्त्रपुञ्जिकाम् ॥
जगाम शीघ्रं श्रीदामा यत्र गोपाः सहांशुकाः । भयेन दुद्रुवुर्गोप्यस्तत्पश्चाद्बालसंयुताः ॥
वस्त्रचोरांश्च गोपांश्च वेष्टयामासुराशु ताः । भिया प्रदुद्रुवुर्बाला यत्र कृष्णः सहांशुकः ॥
श्रीकृष्णसहितान्बालान्वेष्टयामासुराशु च । गोपिकानां भिया गोपा ददुर्वस्त्राणि माधवम्
माधवः स्थापयामास स्कन्धे स्कन्धे तरोस्तथा । कदम्बवृक्षः शुशुभे वस्त्रैर्नानाविधैरपि ॥
वस्त्राणां पुञ्जिकाः सर्वाः स्कन्धेषु विनिधाय च । उवाच गोपिकाः कृष्णः परिहासपरं वचः

श्रीकृष्ण उवाच—

भो भो गोपालिका नग्ना इदानीं किं करिष्यथ । वस्त्रयाच्ञां प्रकर्तुं च कुरुताऽऽशु पुटाञ्जलिम्

---

१ ख. पुटाञ्जलि° । २ क. °तुं मां शक्ता साऽशक्ता स° ।

गत्वा वदत युष्माकमीश्वरीमथ राधिकाम् । करोतु शीघ्रं वस्त्राणां याच्ञां कृत्वा पुटाञ्जलिम्,
अन्यथाऽहं न दास्यामि युष्मभ्यमंशुकानि च । युष्माकमीश्वरी राधा किं करिष्यति मेऽधुना,
ममाराध्या च या देवी सा वा मे किं करिष्यति । इत्येवं कथितं सर्वं ब्रूत यूयं च राधिकाम्
श्रीकृष्णवचनं श्रुत्वा ताः सर्वा गोपकन्यकाः । वीक्ष्य लोचनकोणेन प्रजग्मू राधिकान्तिकम्
चक्रुर्निवेदनं गत्वा यदुवाच हरिः स्वयम् । श्रुत्वा जहास सा राधा बभूव कामपीडिता ॥
श्रुत्वा तासां च वचनं पुलकाञ्चितविग्रहा । न जगाम हरेः स्थानं व्रीडया स्मिता सती;
जले योगासनं कृत्वा दध्यौ कृष्णपदाम्बुजम् । ब्रह्मेशानन्तधर्माणां वन्द्यमीप्सितदं परम् ॥
स्मारं स्मारं पदाम्भोजं साश्रुसंपूर्णलोचना । भावातिरेकात्प्राणेशं तुष्टाव निर्गुणं परम् ॥

राधिकोवाच—

गोलोकनाथ गोपीश मदीश प्राणवल्लभ । हे दीनबन्धो दीनेश सर्वेश्वर नमोऽस्तु ते ॥
गोपेश गोसमूहेश यशोदानन्दवर्धन । नन्दात्मज सदानन्द नित्यानन्द न० ॥ १०१ ॥
शतमन्योर्मन्युभग्न ब्रह्मदर्पविनाशक । कालीयदमन प्राणनाथ कृष्ण न० ॥ १०२ ॥
शिवानन्तेश ब्रह्मेश ब्राह्मणेश परात्पर । ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मबीज न० ॥ १०३ ॥
चराचरतरोर्बीज गुणातीत गुणात्मक । गुणबीज गुणाधार गुणेश्वर न० ॥ १०४ ॥
अणिमादिकसिद्धीश सिद्धेः सिद्धिस्वरूपक । तपस्तपस्विंस्तपसां बीजरूप न० ॥ १०५ ॥
यदनिर्वचनीयं च वस्तु निर्वचनीयकम् । तत्स्वरूप तयोर्बीज सर्वबीज न० ॥ १०६ ॥
अहं सरस्वती लक्ष्मीर्दुर्गा गङ्गा श्रुतिप्रसूः । यस्य पादार्चनान्नित्यं पूज्यास्तस्मै नमो नमः
स्पर्शेन यस्य भृत्यानां ध्यानेन च दिवानिशम् । पवित्राणि च तीर्थानि तस्मै भगवते नमः
इत्येवमुक्त्वा सा देवी जले संन्यस्य विग्रहम् । मनःप्राणांश्च श्रीकृष्णे तस्थौ स्थाणुसमा सती
राधाकृतं हरेः स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः । हरिभक्तिं च दास्यं च लभेद्राधागतिं ध्रुवम् ॥
विपत्तौ यः पठेद्भक्त्या सद्यः संपत्तिमाप्नुयात् । चिरकालगतं द्रव्यं हृतं नष्टं च लभ्यते ॥
बन्धुवृद्धिर्भवेत्तस्य प्रसन्नं मानसं परम् । चिन्ताग्रस्तः पठेद्भक्त्या परां निर्वृतिमाप्नुयात् ॥
पतिभेदे पुत्रभेदे मित्रभेदे च संकटे । मासं भक्त्या यदि पठेत्सद्यः संदर्शनं लभेत् ॥
भक्त्या कुमारी स्तोत्रं च शृणुयाद्वत्सरं यदि । श्रीकृष्णसदृशं कान्तं गुणवन्तं लभेद्ध्रुवम्
कृष्णध्या राधिका ध्यानात् श्रीकृष्णचरणाम्बुजम् । मनुरेवं चक्षुरुन्मील्य दृष्ट्वा कृष्णमयं जगत्
ददर्श वसुनारिं च ब्रह्मद्रवमयं मुने । दृष्ट्वा तन्द्राऽपपा स्वप्नमिति मेने च राधिका ॥
वस्त्रस्थाने ददर्शाथ वस्त्रं संचितं पुरा । वक्रेऽथ सहितं सर्वं तस्थावुर्गोपकन्यकाः ॥

---

१ क. विनुम् ।

जलादुत्थाय ताः सर्वा व्रतं कृत्वा मनीषितम्। संप्राप्य च वरं देव्यास्ताः सर्वा स्वालयं ययुः॥

नारद उवाच—

व्रतस्य किं विधानं च किं नाम किं फलं प्रभो। कानि द्रव्याणि देयानि का देया तत्र दक्षिणा
व्रतान्ते किं रहस्यं च बभूव सुमनोहरम्। व्यासं कृत्वा महाभाग वद नारायणीकथाम्॥

सूत उवाच—

नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुंगवः। कथां कथयितुमारेभे कवीन्द्राणां गुरोर्गुरुः॥

नारायण उवाच—

सर्वं व्रतविधानं च मत्तो वत्स निशामय। ख्यातं गौरीव्रतं नाम मार्गे मासि कृतं स्त्रिया
पुंसा च धर्मकामार्थमोक्षदं कृष्णभक्तिदम्। देशभेदे प्रसिद्धं च व्रतं पौर्वापरं स्मृतम्॥
कामदं कामुकानां च फलं कान्तनिमित्तकम्। उपोष्य पूर्वदिवसे वस्त्रं प्रक्षाल्य संयता॥
प्रातश्च मार्गसंक्रान्त्यां भक्त्या गत्वा सरित्तटम्। धृत्वा धौते च स्नात्वा च नानाद्रव्येण कन्यका॥ १२६॥
देवषट्कं च संपूज्य कृत्वा चाऽऽवाहनं घटे। गणेशं च दिनेशं च वह्निं नारायणं शिवम्
दुर्गां पञ्चोपचारैश्च संपूज्य व्रतमारभेत्। घटाधः पिण्डिकां कृत्वा चतुरस्रां सुविस्तृताम्॥
चन्दनागुरुकस्तूरीकुङ्कुमैश्च सुसंस्कृताम्॥ १२७॥
निर्माय वालुकाभिश्च दुर्गां दशभुजां पराम्। धृत्वा कपाले सिन्दूरं तदधश्चन्दनेन्दुकम्॥
तां ध्यात्वाऽऽवाहयेद्देवीं ततो भूत्वा पुटाञ्जलिः। इमं मन्त्रं पठित्वाऽऽदौ ततः पूजां समारभेत्
हे गौरि शंकरार्धाङ्गि यथा त्वं शंकरप्रिया। तथा मां कुरु कल्याणि कान्तकान्तां सुदुर्लभाम्
इमं मन्त्रं पठित्वा तु ध्यायेद्देवीं जगत्प्रसूम्। ध्यानं तत्सामवेदोक्तं निबोध सर्वकामदम्॥
शृणु नारद वक्ष्यामि मुनीन्द्राणां च दुर्लभम्। ध्यायन्त्यनेन सिद्धाश्च दुर्गां दुर्गतिनाशिनीम्
शिवां शिवप्रियां शैवां शिववक्षःस्थलस्थिताम्। ईषद्धास्यप्रसन्नास्यां सुप्रतिष्ठां सुलोचनाम्
नवयौवनसंपन्नां रत्नाभरणभूषिताम्। रत्नकङ्कणकेयूररत्ननूपुरभूषिताम्॥ १३४॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम्। मालतीमाल्यसंसक्तकबरीभ्रमरान्विताम्॥
सिन्दूरतिलकं चारुकस्तूरीबिन्दुना सह। वह्निशुद्धांशुकां रत्नकिरीटां सुमनोहराम्॥
मणीन्द्रसारसंसक्तरत्नमालासमुज्ज्वलाम्। पारिजातप्रसूनानां मालाजालानुलम्बिताम्॥
सुपीनकठिनश्रोणीं बिभ्रतीं च स्तनानताम्। नवयौवनभारौघादीषन्नम्रां मनोहराम्॥ १३८
ब्रह्मादिभिः स्तूयमानां सूर्यकोटिसमप्रभाम्। पक्वबिम्बाधरोष्ठीं च चारुचम्पकसंनिभाम्॥
मुक्तापङ्क्तिविनिन्द्यैकदन्तराजिविराजितम्। मुक्तिकामप्रदां देवीं शरच्चन्द्रमुखीं मुने॥

ध्यात्वैवं मस्तके पुष्पं निधाय च व्रती मुदा । पुष्पं गृहीत्वा भक्त्या च पुनर्ध्यात्वा च पूजयेत्
दत्त्वा षोडशोपचारान्प्रहृष्टं तत्र नित्यशः । पूर्वोक्तेनैव मन्त्रेण मुदा भक्त्या व्रते व्रती ॥
पूर्वोक्तेनैव स्तोत्रेण स्तुत्वा च प्रणमेत्तदा । कृत्वा प्रणामं भक्त्या च संयतः शृणुयात्कथाम्

नारद उवाच—

व्रतं व्रतविधानं च फलं च स्तोत्रमद्भुतम् । अधुना श्रोतुमिच्छामि गौरीव्रतकथां शुभाम् ॥
व्रतं केन कृतं पूर्वं भूमौ केन प्रकाशितम् । एतत्सर्वं सुविस्तार्य वद संदेहभञ्जन ॥१४५॥

नारायण उवाच—

कुशध्वजस्य हि सुता नाम्ना देववती सती । तया कृतं व्रतमिदं महातीर्थे च पुष्करे ॥
समाप्तिदिवसे साक्षाद्बभूव जगदम्बिका । योगिनीलक्षसंयुक्ता सूर्यकोटिसमप्रभा ॥१४७॥
शातकुम्भविनिर्माणरथस्था परमेश्वरी । ईषद्धास्यप्रसन्नास्या तामुवाच सुसंयताम् ॥

पार्वत्युवाच—

हे देववति भद्रं ते वरं वृणु यथेप्सितम् । तव व्रतेन तुष्टाऽहं तुभ्यं दास्यामि वाञ्छितम् ॥
पार्वतीवचनं श्रुत्वा दृष्ट्वा तां हृष्टमानसाम् । पुटाञ्जलियुता साध्वी प्रणम्योवाच नारद ॥

वेदवत्युवाच—

देवि नारायणं कान्तं मह्यं देहि मनीषितम् । चेऽन्यस्मिन्स्पृहा नास्ति दृढां भक्तिं च तत्पदे
श्रुत्वा वेदवतीवाक्यं प्रहस्य जगदम्बिका । अवरुह्य रथात्तूर्णं तामुवाच हरिप्रियाम् ॥

पार्वत्युवाच—

ज्ञातं सर्वं जगन्मातस्त्वं च लक्ष्मीः स्वयं सती । भारतं पादरजसा पूतं कर्तुं समागता ॥
त्वत्पादरजसा साध्वि सद्यः पूता वसुंधरा । निखिलानि च तीर्थानि पूतानि परमेश्वरि
व्रतं ते लोकशिक्षार्थं तपश्चर तपस्विनि । नारायस्य कान्ता त्वं प्रिया जन्मनि जन्मनि ॥
भारावतरणे विष्णुर्वसुधामागमिष्यति । रामो दाशरथिः पूर्णः कर्तुं दस्युविनिग्रहम् ॥
ब्रह्मशापाच्च च्युतयोर्मोक्षणाय च भक्तयोः । अयोध्यायां च त्रेतायामाविर्भावो हरेरपि
त्वमेव मिथिलां गच्छ विधाय शिशुविग्रहम् । त्वामिमां प्राप्य जनकोऽप्ययोनिसंभवां सुताम्
पालयिष्यति यत्नेन सीता त्वं च भविष्यसि । गत्वा रामोऽपि मिथिलां त्वद्विवाहं करिष्यति
नारायणस्य कान्ता त्वं कल्पे कल्पे भविष्यसि । इत्युक्त्वा तां समालिङ्ग्य पार्वती स्वालयं ययौ
गत्वा सा मिथिलां साध्वी शिशुरूपं विधाय च । लाङ्गलस्य च रेखायां सुप्त्वा तस्थौ च मायया
विलोक्य जनकस्तां च नग्नां मुद्रितलोचनाम् । तप्तकाञ्चनवर्णां च रुदन्तीं तेजसाऽन्विताम्

---

१ क. हरिप्रिये । २ ख. सुचारु ।

दृष्ट्वा तां च गृहीत्वा च कृत्वा वक्षसि नारद । गच्छन्तं प्रति तत्रैव वाग्बभूवाशरीरिणी
अयोनिसंभवां कन्यां कमलां ग्रहणं कुरु । नारायणस्ते जामाता भवितेत्येव मे वचः ॥
श्रुत्वा तदा देववाणीं गृहीत्वा कन्यकामृषिः । गत्वा ददौ स्वकान्तायै पालनाय मुदाऽन्वितः
सा कन्यायौवना प्राप रामं दाशरथिं सती । व्रतस्यास्य प्रभावेण कान्तं त्रिजगतां पतिम्
प्रकाशितं वसिष्ठेन पृथिव्यां भक्तिभावतः । राधा कृत्वा व्रतमिदं श्रीकृष्णं प्राप वल्लभम्
गोपाङ्गनाश्च तं प्रापुर्व्रतस्यास्य प्रभावतः । इत्येवं कथिता विप्र कथा गौरीव्रतस्य च ॥
भारते च व्रतमिदं या करोति कुमारिका । स्वामिनं कृष्णतुल्यं च सा प्राप्नोति न संशयः

नारायण उवाच—

एवं व्रतं च चक्रुस्ता यावन्मासं च गोपिकाः । पूर्वस्तोत्रेण तां देवीं तुष्टुवुश्च दिने दिने
समाप्तिदिवसे गोप्यो व्रतं कृत्वा मुदाऽन्विताः । कण्वशाखोक्तस्तोत्रेण तुष्टुवुः परमेश्वरीम्
येन स्तोत्रेण तां स्तुत्वा सीता सत्यपरायणा । सद्यः संप्राप कान्तं च रामं राजीवलोचनम्

जानक्युवाच—

शक्तिस्वरूपे सर्वेषां सर्वाधारे गुणाश्रये । सदा शंकरयुक्ते च पतिं देहि नमोऽस्तु ते ॥
सृष्टिस्थित्यन्तरूपेण सृष्टिस्थित्यन्तकारिणि । सृष्टिस्थित्यन्तबीजानां बीजरूपे न० ॥
हे गौरि पतिमर्मज्ञे पतिव्रतपरायणे । पतिव्रते पतिरते पतिं देहि न० ॥ १७४ ॥
सर्वमङ्गलमाङ्गल्ये सर्वमङ्गलसंयुते । सर्वमङ्गलबीजे च नमस्ते सर्वमङ्गले ॥ १७५ ॥
सर्वप्रिये सर्वबीजे सर्वाशुभविनाशिनि । सर्वेशे सर्वजनके नमस्ते शंकरप्रिये ॥ १७६ ॥
परमात्मस्वरूपे च नित्यरूपे सनातनि । साकारे च निराकारे सर्वरूपे न० ॥ १७७ ॥
क्षुत्तृष्णेच्छा दया श्रद्धा निद्रा तन्द्रा स्मृतिः क्षमा । एतास्तव कलाः सर्वा नारायणि न०
लज्जा मेधा तुष्टिपुष्टी शान्तिसंपत्तिवृद्धयः । एतास्तव कलाः सर्वाः सर्वरूपे न० ॥
दृष्टादृष्टस्वरूपे च तयोर्बीजे फलप्रदे । सर्वानिर्वचनीये च महामाये न० ॥ १८० ॥
शिवे शंकरसौभाग्ययुक्ते सौभाग्यदायिनि । हरिं कान्तं च सौभाग्यं देहि देवि न० १८१
स्तोत्रेणानेन याः स्तुत्वा समाप्तिदिवसे शिवाम् । नमन्ति परया भक्त्या ता लभन्ते हरिं पतिम् ॥ १८२ ॥

इह कान्तसुखं भुक्त्वा पतिं प्राप्य परात्परम् । दिव्यं स्यन्दनमारुह्य यान्त्यन्ते कृष्णसंनिधिम्
समाप्तिदिवसे राधा गोपीभिः सह संयुता । देवीं प्रणम्य स्तुत्वा च व्रतं पूर्णं चकार ह
गोसहस्रं ब्राह्मणेभ्यः सुवर्णशतकं मुदा । विप्राय दक्षिणां दत्त्वा स्वगृहं गन्तुमुद्यता ॥
ब्राह्मणानां सहस्रं च भोजयामास सादरम् । वाद्यानि वादयामास भिक्षुकाय धनं ददौ ॥

एतस्मिन्नन्तरे तत्र दुर्गा दुर्गतिनाशिनी। आविर्बभूव गगनाज्ज्वलन्ती ब्रह्मतेजसा ॥
ईषद्धास्यप्रसन्नास्या योगिनीशतसंयुता। सिंहस्था च दशभुजा रत्नालंकारभूषिता ॥
शातकुम्भमयाद्दिव्याद्रत्नसारपरिच्छदात्। अवरुह्य रथात्तूर्णमालिलिङ्गोरसि राधिकाम्॥
दृष्ट्वा गोपाङ्गना देवीं प्रणेमुश्च मुदाऽन्विताः आशिषं युयुजे दुर्गा वाञ्छितसिद्धिर्भविष्यति॥
गोपिकाभ्यो वरं दत्त्वा ताः संभाष्य च सादरम्। उवाच राधिकां दुर्गा स्मेराननसरोरुहा॥

पार्वत्युवाच—

राधे सर्वेश्वरप्राणादधिके जगदम्बिके। व्रतं ते लोकशिक्षार्थं मायामानुषरूपिणि ॥१९५॥
गोलोकनाथं गोलोकं श्रीशैलं गिरिजातटम्। श्रीरासमण्डलं दिव्यं वृन्दावनमनोहरम् ॥
चरितं रतिचोरस्य स्त्रीणां मानसहारकम्। विदुषः कामशास्त्राणां किं स्विद्विस्मरसि सुन्दरि
श्रीकृष्णार्धाङ्गसंभूता कृष्णतुल्या च तेजसा। तवांशकलया देव्यः कथं त्वं मानुषी सती
भवती च हरेः प्राणा भवत्याश्च हरिः स्वयम्। वेदे नास्ति द्वयोर्भेदः कथं० ॥१९६॥
षष्टिवर्षसहस्राणि ब्रह्मा तप्त्वा तपः पुरा। न ते ददर्श पादाब्जं कथं० ॥ १९७ ॥
कृष्णाज्ञया च त्वं देवि गोपीरूपं विधाय च। आगतासि महीं शान्ते कथं०॥ १९८ ॥
सुयज्ञो हि नृपश्रेष्ठो मनुवंशसमुद्भवः। त्वत्तो जगाम गोलोकं कथं० ॥ १९९ ॥
त्रिःसप्तकृत्वो निर्भूपां चकार पृथिवीं भृगुः। तव मन्त्रेण कवचात्कथं० ॥ २०० ॥
शंकरात्प्राप्य त्वन्मन्त्रं सिद्धं कृत्वा च पुष्करे। जघान कार्तवीर्यं च कथं० ॥२०१॥
बभञ्ज दर्पाद्दन्तं च गणेशस्य महात्मनः। त्वत्तो नाम भयं चक्रे कथं० ॥ २०२ ॥
मय्युद्धतायां कोपेन भस्मसात्कर्तुमीश्वरः। ररक्षाऽऽगत्य मत्प्रीत्या कथं० ॥ २०३ ॥
कल्पे कल्पे तव पतिः कृष्णो जन्मनि जन्मनि। व्रतं लोकहितार्थाय जगन्मातस्त्वया कृतम्
अहो श्रीदामशापेन भारावतरणाय च। भूमौ तवाधिष्ठानं च कथं० ॥ २०५ ॥
अयोनिसंभवा त्वं च जन्ममृत्युजरापहा। कलावतीसुता पुण्या कथं० ॥ २०६ ॥
त्रिषु मासेष्वतीतेषु मधुमासे मनोहरे। निर्जने निर्मले रात्रौ सुयोग्ये रासमण्डले ॥
सर्वाभिर्गोपिकाभिश्च सार्धं वृन्दावने वने। हर्षेण हरिणा सार्धं क्रीडा ते भाविता सति॥
विधात्रा लिखिता क्रीडा कल्पे कल्पे महीतले। तव श्रीहरिणा सार्धं केन राधे निवार्यते
यथा सौभाग्ययुक्ताऽहं हरस्य श्रीहरिप्रिये। तथा सौभाग्ययुक्ता त्वं भव कृष्णस्य सुन्दरि
यथा क्षीरेषु धावल्यं यथा वह्नौ च दाहिका। भुवि गन्धो जले शैत्यं तथा कृष्णे स्थि-
तिस्तव ॥ २११ ॥

१ क. °शिष०। २ क. दम्भ।

दैवी वा मानुषी वाऽपि गान्धर्वी राक्षसी तथा । त्वत्तः परा च सौभाग्यो न भूता न भविष्यति
परात्परो गुणातीतो ब्रह्मादीनां च वन्दितः । स्वयं कृष्णस्तवाधीनो मद्वरेण भविष्यति ॥
ब्रह्मानन्तशिवाराध्यो भविता त्वद्वशः सति । ध्यानासाध्यो दुराराध्यः सर्वेषामपि योगिनाम्
त्वं च भाग्यवती राधे स्त्रीजातिषु न ते परा । कृष्णेन सार्धं पश्चात्त्वं गोलोकं च गमिष्यसि
इत्युक्त्वा पार्वती सद्यस्तत्रैवान्तर्दधे मुने । सार्धं गोपालिकाभिश्च राधिका गन्तुमुद्यता ॥
एतस्मिन्नन्तरे कृष्णो जगाम राधिकापुरः । राधा ददर्श श्रीकृष्णं किशोरं श्यामसुन्दरम्
पीतवस्त्रपरीधानं रत्नालंकारभूषितम् । आजानुमालतीमालावनमालाविभूषितम् ॥२१८॥
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम् । चन्दनोक्षितसर्वाङ्गं शरत्पङ्कजलोचनम् ॥
शरत्पार्वणचन्द्रास्यं सद्रत्नमुकुटोज्ज्वलम् । पक्वदाडिमबीजाभदशनं सुमनोहरम् ॥२२०॥
विनोदमुरलीहस्तन्यस्तलीलासरोरुहम् । कोटिकन्दर्पलावण्यं लीलाधाम मनोहरम् ॥
गुणातीतं स्तूयमानं ब्रह्मानन्तशिवादिभिः । ब्रह्मस्वरूपं ब्रह्मण्यं श्रुतिभिश्चानिरूपितम् ॥
अव्यक्तपरमं व्यक्तं ज्योतीरूपं सनातनम् । माङ्गल्यं मङ्गलाधारं मङ्गलं मङ्गलप्रदम् ॥
दृष्ट्वा तदद्भुतं रूपं संभ्रमात्प्रणनाम तम् । तं दृष्ट्वा मूर्छिता राधा कामबाणप्रपीडिता
ददर्श ददर्श मुखाम्भोजं सस्मिता वक्रलोचना । मुखस्याऽऽच्छादनं चक्रे व्रीडया च पुनः पुनः
दृष्ट्वा हरिस्तामुवाच प्रसन्नवदनेक्षणः । गोपालिकासमूहानां सर्वेषां पुरतः स्थितः ॥

श्रीकृष्ण उवाच—

प्राणाधिके राधिके त्वं वरं वृणु मनीषितम् । भो भो गोपालिकाः सर्वा वरं वृणुत वाञ्छितम्
कृष्णस्य वचनं श्रुत्वा वरं वव्रे च राधिका । गोपालिकाः प्रहृष्टाश्च सर्वसंकटपादपात् ॥

राधिकोवाच—

त्वत्पादाब्जे मन्मनोलिः सततं भ्रमतु प्रभो । पातुं भक्तिरसं पद्मे मधुपश्च यथा मधु ॥
मदीयप्राणनाथस्त्वं भव जन्मनि जन्मनि । त्वदीयचरणाम्भोजे देहि भक्तिं सुदुर्लभाम् ॥
तव स्मृतौ गुणे चित्तं स्वप्ने ज्ञाने दिवानिशम् । भवेदिमन्नं सततमेतन्मम मनीषितम् ॥

गोपालिका ऊचुः—

यथा राधा तथा नश्च प्राणबन्धो दिवानिशम् । भविष्यसि प्राणनाथः पास्यसि प्रतिजन्मनि
आसां च वचनं श्रुत्वा तथास्त्वेवमुवाच ह । प्रसन्नवदनः श्रीमान्यशोदानन्दवर्धनः ॥
क्रीडापद्मं राधिकायै सहस्रदलसंयुतम् । ललितां मालतीमालां ददौ प्रीत्या जगत्पतिः ॥
माल्यसमूहं पुष्पाणि गोपीभ्यो गोपिकापतिः । प्रहस्य परमप्रीत्या प्रददावित्युवाच ह ॥

श्रीकृष्ण उवाच—

त्रिषु मासेष्वतीतेषु यूयं क्रीडां मया सह । रासमण्डलरम्ये च वृन्दारण्ये करिष्यथ ॥

क्रीडनीयैः सुन्दरैश्च सुरतश्रमहारिभिः । शुद्धस्फटिकसंकाशतोयपूर्णैः सुनिर्मलैः ॥१४॥
दधिपूर्णशुक्लधान्यपल्लवजैर्निर्मञ्छनीकृतम् । रम्भास्तम्भसमूहेन सुन्दरेण सुशोभितम् ॥१५॥
आम्रपल्लवयुक्तेन सूत्रबन्धेन चारुणा । भूषितं मङ्गलघटैः सिन्दूरचन्दनान्वितैः ॥१६॥
मालतीमाल्यसंयुक्तैर्नारिकेलफलान्वितैः । स रासमण्डलं दृष्ट्वा जहास मधुसूदनः ॥१७॥
चकार तत्र कुतुकाद्विनोदमुरलीरवम् । गोपीनां कामुकीनां च कामवर्धनकारणम् ॥१८॥
तच्छ्रुत्वा राधिका सद्यो मुमोह मदनातुरा । बभूव स्थाणुवद्देहा ध्यानैकतानमानसा ॥
क्षणेन चेतनां प्राप्य पुनः शुश्राव सा ध्वनिम् । उवास सा समुत्तस्थौ समुद्विग्ना पुनः पुनः
त्यक्त्वा चाऽऽवश्यकं कर्म निःससार द्रुतं गृहात् । ययौ तदनुसारेण प्रसमीक्ष्य चतुर्दिशम्
ध्यायन्ती चरणाम्भोजं श्रीकृष्णस्य महात्मनः । तेजसा च द्योतयन्ती सद्रत्नसारभूषणैः
बहिर्बभूवुस्ताश्रुत्वा रवेण हृतचेतनाः । कुलधर्मं परित्यज्य निःशङ्काः काममोहिताः ॥
त्रयस्त्रिंशद्वयस्याश्च ताः सुशीलादयः स्मृताः । राधिकायाः प्रियतमा गोपीनां प्रवरा ययुः
तासां पश्चाद्ययुर्गोप्यस्तासां संख्यां निबोध मे । समा वेषेण वयसा रूपेण च गुणेन च ॥
ययुः सुशीलासङ्गेन सहस्राणि च षोडश । ययुश्चन्द्रमुखीपश्चात्सहस्राणि च षोडश ॥
एकादश सहस्राणि माधव्याख्यश्च निर्ययुः । जग्मुः कदम्बमालाख्यः सहस्राणि त्रयोदश
ययुः कुन्तीवयस्याश्च सहस्राणि दश स्मृताः । चतुर्दश सहस्राणि ययुस्ता यमुनानुगाः ॥
जाह्नवीसहचारिण्यः सहस्राणि ययुर्नव । ययुर्नव सहस्राणि पद्ममुख्याख्य एव च ॥२९॥
सावित्र्याख्यः पञ्चदश सहस्राणि ययुर्व्रजात् । पारिजातावयस्याश्च सहस्राणि ययुर्दश ॥
स्वयंप्रभानुगाः सप्त सहस्राणि ययुर्व्रजात् । ययुः सुधामुखीगोप्यः सहस्राणि चतुर्दश ॥
शुभानुगा ययुर्गोप्यः सहस्राणि चतुर्दश । पद्मानुगा ययुर्गोप्यः सहस्राणि चतुर्दश ॥
गौरीपश्चा ययुर्गोप्यः सहस्राणि चतुर्दश । ययुः सर्वमङ्गलाख्यः सहस्राणि च षोडश ॥
कालिकाख्यो ययुर्गोप्यः सहस्राणि च षोडश । निर्ययुः कमलाख्यश्च सहस्राणि त्रयोदश
दुर्गानुगा ययुर्गोप्यः सहस्राणि च षोडश । ययुः सरस्वतीपश्चात्सहस्राणि त्रयोदश ॥
प्रजग्मुर्भारतीपश्चात्सहस्राणि दश व्रजात् । अपर्णासहचारिण्यः सहस्राणि चतुर्दश ॥
रतिपश्चाद्वयस्याश्च सहस्राणि चतुर्दश । गङ्गावयस्याः प्रययुः सहस्राणि चतुर्दश ॥
प्रजग्मुरम्बिकापश्चात्सहस्राणि च षोडश । सतीपश्चाद्ययुर्गोप्यः सहस्राणि त्रयोदश ॥
नन्दिनीसहचारिण्यः सहस्राणि ययुर्दश । प्रययुः सुन्दरीपश्चात्सहस्राणि त्रयोदश ॥
ययुः कृष्णप्रियापश्चात्सहस्राणि च षोडश । ययुर्मधुमतीपश्चात्सहस्राणि च षोडश ॥

---

१ ख. 'नलै' । २ क. त्रयोदश । ३ क. चतुर्दश । ४ क. चतुर्दश । ५ क. चतुर्दश ।
६ क. चतुर्दश ।

यथाऽहं च तथा यूयं नाहं(यं) भेदः श्रुतौ श्रुतः। प्राणोऽहं चैव युष्माकं यूयं प्राणा मम प्रभोः
व्रतं वो लोकरक्षार्थं न हि स्वार्थमिदं प्रियाः। सहाऽऽगताश्च गोलोकाद्गमनं च मया सह॥
गच्छत स्वालयं शीघ्रं वोऽहं जनानि जन्मनि। प्राणेभ्योऽपि गरीयस्यो यूयं मे नात्र संशयः
इत्युक्त्वा श्रीहरिस्तत्र तस्थौ सूर्यसुतातटे। तस्थुर्गोपालिकाः सर्वा वीक्ष्य कृष्णं पुनः पुनः
सर्वाः प्रहृष्टवदनाः सस्मिता वक्रलोचनाः। पीत्वा चक्षुश्चकोराभ्यां मुखचन्द्रं परंहरेः॥
ताः शीघ्रं प्रययुर्गेहं जयं दत्त्वा पुनः पुनः। हरिश्च शिशुभिः सार्धं प्रसन्नः स्वालयं ययौ
इत्येवं कथितं सर्वं हरेश्चरितमङ्गलम्। गोपीनां वस्त्रहरणं सर्वलोकसुखावहम्॥२४१॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० गोपिकावस्त्रहरणप्रस्तावो नाम सप्तविंशोऽध्यायः॥ २७॥

अथाष्टाविंशोऽध्यायः।

नारद उवाच—

त्रिषु मासेष्वतीतेषु तासां च हरिणा सह। वद केन प्रकारेण बभूव तनुसंगमः॥१॥
वृन्दावनं किंप्रकारं किंविधं रासमण्डलम्। हरिरेकस्ताश्च बह्व्यः केन क्रीडा बभूव ह
कुतूहलं भवति म इदं श्रोतुं नवं नवम्। कथयस्व महाभाग पुण्यश्रवणकीर्तन॥२॥
कथा पुराणसाराणा रासयात्रा हरेरहो। हरिलीलाः पृथिव्यां तु सर्वाः श्रुतिमनोहराः॥

सूत उवाच—

नारदस्य वचः श्रुत्वा ऋषिर्नारायणः स्वयम्। प्रहस्य सुप्रसन्नास्यः प्रवक्तुमुपचक्रमे॥

नारायण उवाच—

एकदा श्रीहरिर्नक्तं वनं वृंदावनं ययौ। शुभे शुक्लत्रयोदश्यां पूर्णे चन्द्रोदये मुने॥ ६॥
मल्लिकामालतीकुन्दमाधवीपुष्पवायुना। वासितं कल्पादेन मधुभ्रमणां मनोहरम्॥ ७॥
नवपल्लवसंयुक्तं पुंस्कोकिलरुतश्रुतम्। नवलक्षरासवाससंयुक्तं सुमनोहरम्॥ ८॥
चन्दनागुरुकस्तूरीकुङ्कुमेन सुवासितम्। कर्पूरान्वितताम्बूलभोगद्रव्यसमन्वितम्॥ ९॥
प्रसूनैश्चम्पकानां च कस्तूरीचन्दनान्वितैः। रतियोग्यैर्विरचितैर्नानातल्पैः सुशोभितम्॥
दीप्तं रत्नप्रदीपैश्च धूपेन सुरभीकृतम्। नानापुष्पैश्च रचितं मालाजालैर्विराजितम्॥११॥
परितो वर्तुलाकारं तत्रैव रासमण्डलम्। चन्दनागुरुकस्तूरीकुङ्कुमेन सुसंस्कृतम्॥१२॥
पुष्पोद्यानैः पुष्पितैश्च युक्तं क्रीडासरोवरैः। हंसकारण्डवाकीर्णैर्मलकुक्कुटकूजितैः॥

१ एषोऽहं। २ क नवं।

क्रीडनीयैः सुन्दरैश्च सुरतश्रमहारिभिः । शुद्धस्फटिकसंकाशतोयपूर्णैः सुनिर्मलैः ॥१४॥
दधिपूर्णशुक्लधान्यपल्लवैर्निर्मञ्छनीकृतम् । रम्भास्तम्भसमूहेन सुन्दरेण सुशोभितम् ॥१५॥
आम्रपल्लवयुक्तेन सूत्रबन्धेन चारुणा । भूषितं मङ्गलघटैः सिन्दूरचन्दनान्वितैः ॥१६॥
मालतीमाल्यसंयुक्तैर्नारिकेलफलान्वितैः । स रासमण्डलं दृष्ट्वा जहास मधुसूदनः ॥१७॥
चकार तत्र कुतुकाद्विनोदमुरलीरवम् । गोपीनां कामुकीनां च कामवर्धनकारणम् ॥१८॥
तच्छ्रुत्वा राधिका सद्यो मुमोह मदनातुरा । बभूव स्थाणुवद्देहा ध्यानैकतानमानसा ॥
क्षणेन चेतनां प्राप्य पुनः शुश्राव सा ध्वनिम् । उवास सा समुत्तस्थौ समुद्विग्ना पुनः पुनः
त्यक्त्वा चाऽऽवश्यकं कर्म निःससार द्रुतं गृहात् । ययौ तदनुसारेण प्रसमीक्ष्य चतुर्दिशम्
ध्यायन्ती चरणाम्भोजं श्रीकृष्णस्य महात्मनः । तेजसा च द्योतयन्ती सद्रत्नसारभूषणैः
बहिर्बभूवुस्तास्त्रस्ता रवेण हृतचेतनाः । कुलधर्मं परित्यज्य निःशङ्काः काममोहिताः ॥
त्रयस्त्रिंशद्वयस्याश्च ताः सुशीलादयः स्मृताः । राधिकायाः प्रियतमा गोपीनां प्रवरा ययुः
तासां पश्चाद्ययुर्गोप्यस्तासां संख्यां निबोध मे । समा वेषेण वयसा रूपेण च गुणेन च ॥
ययुः सुशीलासङ्गेन सहस्राणि च षोडश । ययुश्चन्द्रमुखीपश्चात्सहस्राणि च षोडश ॥
एकादश सहस्राणि माधव्याख्यश्च निर्ययुः । जग्मुः कदम्बमालाख्यः सहस्राणि त्रयोदश
ययुः कुन्तीवयस्याश्च सहस्राणि दश स्मृताः । चतुर्दश सहस्राणि ययुस्ता यमुनानुगाः ॥
जाह्नवीसहचारिण्यः सहस्राणि ययुर्नव । ययुर्नव सहस्राणि पद्ममुख्याख्य एव च ॥२९॥
सावित्र्याख्यः पञ्चदश सहस्राणि ययुर्व्रजात् । पारिजातवयस्याश्च सहस्राणि ययुर्दश ॥
स्वयंप्रभानुगाः सप्त सहस्राणि ययुर्व्रजात् । ययुः सुधामुखीगोप्यः सहस्राणि चतुर्दश ॥
शुभानुगा ययुर्गोप्यः सहस्राणि चतुर्दश । पद्मानुगा ययुर्गोप्यः सहस्राणि चतुर्दश ॥
गौरीपद्मा ययुर्गोप्यः सहस्राणि चतुर्दश । ययुः सर्वमङ्गलाख्यः सहस्राणि च षोडश ॥
कालिकाख्यो ययुर्गोप्यः सहस्राणि च षोडश । निर्ययुः कमलाख्यश्च सहस्राणि त्रयोदश
दुर्गानुगा ययुर्गोप्यः सहस्राणि च षोडश । ययुः सरस्वतीपश्चात्सहस्राणि त्रयोदश ॥
प्रजग्मुर्भारतीपश्चात्सहस्राणि दश व्रजात् । अपर्णासहचारिण्यः सहस्राणि चतुर्दश ॥
रतिपश्चाद्वयस्याश्च सहस्राणि चतुर्दश । गङ्गावयस्याः प्रययुः सहस्राणि चतुर्दश ॥
प्रजग्मुरम्बिकापश्चात्सहस्राणि च षोडश । सतीपश्चाद्ययुर्गोप्यः सहस्राणि त्रयोदश ॥
नन्दिनीसहचारिण्यः सहस्राणि ययुर्दश । प्रययुः सुन्दरीपश्चात्सहस्राणि त्रयोदश ॥
ययुः कृष्णप्रियापश्चात्सहस्राणि च षोडश । ययुर्मधुमतीपश्चात्सहस्राणि च षोडश ॥

---

१ ख. °मठे° । २ क. त्रयोदश । ३ क. चतुर्दश । ४ क. चतुर्दश° । ५ क. चतुर्दश । ६ क. चतुर्दश ।

ययुश्चम्पानुगा गोप्यः सहस्राणि त्रयोदश । चन्दनाख्यो ययुः पश्चात्सहस्राणि च षोडश
सर्वा बभूवुरेकत्र तत्र तस्थुः पथं मुदा । तत्राऽऽययुर्गोपिकाश्च मालाहस्ताश्च काश्चन ॥
चारुचन्दनहस्ताश्च काश्चित्तत्राऽऽययुर्व्रजात् । श्वेतचामरहस्ताश्च काश्चित्तत्राऽऽययुर्मुदा
तत्राऽऽययुर्गोपकन्याः काश्चित्कस्तूरिकाकराः । तत्राऽऽययुर्गोपकन्याः काश्चित्कुङ्कुम-
वाहिकाः ॥ ४४ ॥
काश्चित्तत्राऽऽययुर्गोप्यस्ताम्बूलपात्रवाहिकाः । यावत्काञ्चनवस्त्राणां वाहिका गोपकन्यकाः
काश्चित्तत्राऽऽययुः शीघ्रं यत्र चन्द्रावली मुदा । सर्वाश्चैकत्र संभूय सस्मिताश्च मुदाऽन्विताः
विधाय राधिकावेषं स्थानाच्च प्रययुर्मुदा । चक्रुः पुनः पुनस्ताश्च हरिशब्दजपं पथि ॥
प्रापुर्वृन्दावनं रम्यं ददृशू रासमण्डलम् । स्वर्गेभ्यः सुन्दरं दृश्यं राकापतिकरान्वितम् ॥
सुनिर्जनं कुसुमितं वासितं पुष्पवायुना । नारीणां कामजननं मुनिमोहनकारणम् ॥
शुश्रुवुस्तत्र ताः सर्वाः पुंस्कोकिलकलध्वनिम् । अतिसूक्ष्मकलं चापि भ्रमराणां मनोहरम् ॥
प्रसूनमधुमत्तानां भ्रमरीसङ्गसङ्गिनाम् । शुभे क्षणे प्रविवेश राधिका रासमण्डलम् ॥५१॥
सर्वाभिरालिभिः सार्धं ध्यात्वा कृष्णपदाम्बुजम् । राधामाराच्च संवीक्ष्य कृष्णस्तत्र मुदाऽ-
न्वितः ॥ ५२ ॥
जगामानुव्रजन्नीत्या सस्मितो मदनातुरः । मध्यस्थां सखिसंघानां रत्नालंकारभूषिताम् ॥
दिव्यवस्त्रपरीधानां सस्मितां वक्रलोचनाम् । गजेन्द्रगामिनीं रम्यां मुनिमानसमोहिनीम् ॥
नवीनेनैव वयसा रूपेणातिमनोहराम् । तद्(स्तन)श्रोणिनितम्बानां भारशोभान्वितां पराम् ॥
चारुचम्पकवर्णाभां शरच्चन्द्रनिभाननाम् । बिभ्रतीं कबरीभारं मालतीमाल्यसंयुतम् ॥५६॥
राधा ददर्श श्रीकृष्णं किशोरं श्यामसुन्दरम् । नवयौवनसंपन्नं रत्नाभरणभूषितम् ॥५७॥
कन्दर्पकोटिलावण्यलीलाधाम मनोहरम् । प्राणाधिका तं पश्यन्तं पश्यन्ती वक्रचक्षुषा ॥
परमाद्भुतरूपं च सर्वत्रानुपमं परम् । शिखिपिच्छ(?)चूडां च बिभ्रतं सस्मितं मुदा ॥५८॥
वक्रलोचनकोणेन दर्शं दर्शं पुनः पुनः । मुखमाच्छादयाञ्चक्रे व्रीडया सस्मिता सती ॥
मूर्छामवाप सा सद्यः कामबाणप्रपीडिता । पुलकाञ्चितसर्वाङ्गी बभूव हतचेतना ॥ ६० ॥
कटाक्षकामबाणैश्च विद्धः क्रीडारसोन्मुखः । मूर्छां प्राप्य न पपात तस्थौ स्थाणुसमो हरिः
पपात मुरली तस्य क्रीडाकमलमुज्ज्वलम् । द्वितीयं पीतवस्त्रं च शिखिपिच्छं शरीरतः ॥
क्षणेन चेतनां प्राप्य ययौ राधान्तिकं मुदा । कृत्वा वक्षसि तां प्रीत्या समाश्लिष्य चुचुम्ब सः
श्रीकृष्णस्पर्शमात्रेण संप्राप्य चेतनां सती । प्राणाधिकं प्राणनाथं समाश्लिष्य चुचुम्ब ह ॥
मनो जहार राधायाः कृष्णस्तस्य च सा मुने । जगाम राधया सार्धं रसिको रतिमन्दिरम्

---

१ क. चतुर्दश ।

रत्नप्रदीपसंयुक्तं रत्नदर्पणसंयुतम् । चारुचम्पकशय्याभिश्चन्दनाक्ताभी राजितम् ॥ ६६ ॥
कर्पूरान्विततांबूलैर्भोगद्रव्यैः समन्वितम् । उवास राधया सार्धं कृष्णस्तत्र मुदाऽन्वितः ॥
राधया दत्ततांबूलं चखाद मधुसूदनः । रासेश्वरी कृष्णदत्तं तांबूलं बुभुजे मुदा ॥
दत्तं चर्विततांबूलं राधायै प्रभुणा मुदा । चखाद भक्त्या सा तूर्णं प्रहस्य मदनातुरा ॥
राधाचर्विततांबूलं ययाचे माधवो मुदा । न ददौ राधिका भीता पपात चरणाम्बुजे ॥
एतस्मिन्नन्तरे तत्र सकामः सुरतोन्मुखः । सुष्वाप राधया सार्धं रतितल्पे मनोहरे ॥
शृङ्गाराष्टप्रकारं च विपरीतादिकं विभुः । नखदन्तकराणां च प्रहारं च यथोचितम् ॥
कामशास्त्रेषु यद्गोप्यं चुम्बनाष्टविधं परम् । कामिनीनां मनोहारि चकार रसिकेश्वरः ॥
अङ्गैरङ्गानि प्रत्यङ्गैः प्रत्यङ्गानि स्मरातुरः । चकाराऽऽश्लेषणं तत्र कामुकीनां सुखावहम् ॥
शृङ्गारकुशलौ तौ तु कामशास्त्रसुपण्डितौ रतियुद्धविरामश्च न बभूव द्वयोरपि ॥७९॥
एवं गृहे गृहे रम्ये नानामूर्तिं विधाय च । रेमे गोपाङ्गनाभिश्च सुरम्ये रासमण्डले ॥
अभ्यन्तरे रतिं कृत्वा बहिः क्रीडां चकार ह । गोपीगोपसमाश्लिष्टः सर्वत्र रासमण्डले ॥
गोपीनां नव लक्षाणि गोपानां च तथैव च । लक्षाण्यष्टादश मुने युक्तानि रासमण्डले ॥
मुक्तकेशानि नग्नानि विच्छिन्नभूषणानि च । वेपोच्छिन्नानि मत्तानि मूर्छितानि स्मरेण च
कङ्कणानां किङ्किणीनां वलयानां च नारद । सद्रत्ननूपुराणां च शब्दयुक्तानि संततम्
एवं कृत्वा स्थलक्रीडां युयुस्तानि जलं मुदा । कृत्वा तत्र चिरं क्रीडां परिश्रान्तानि सांप्रतम्
तूर्णं जलात्समुत्थाय वासांसि परिधाय च । ददृशुर्मुखपद्मानि सद्रत्नदर्पणेषु च ॥८१॥
चन्दनागुरुकस्तूरीद्रव्याणि पुष्पमालिकाः । मुदा परिदधुस्तानि संप्रपुष्पेतनानि च ॥
सकर्पूरं च तांबूलं भुक्त्वा सर्वाणि कौतुकात् । ददृशुर्मुखपद्मानि सद्रत्ने दर्पणेऽमले ॥
काचित्कामातुरा कृष्णं बलादाकृष्य कौतुकात् । हस्ताद्वंशीं निजग्राह वसनं च चकर्ष ह
काचित्कामप्रमत्ता च नग्नं कृत्वा तु माधवम् । निजग्राह पीतवस्त्रं परिहस्य पुनर्ददौ ॥
युक्ति शृण्वित्येवमुक्त्वा काचित्संगृह्य स्वामिनम् । चुचुम्ब गण्डे बिम्बोष्ठे समाश्लिष्य पुनः
॥ पुनः ८६ ॥
सस्मितं सकटाक्षं च मुखचन्द्रं स्तनोन्नतम् । काचिच्छ्रोणीं सुललितां दर्शयामास कामतः
काचित्कान्तं करे कृत्वा संप्राप्य श्रोणिदेशतः । चकार चूडानिर्माणं मालतीमाल्यसंयुतम्
काचिच्चूडां समाकृष्य मयूरपिच्छकं ददौ । गुञ्जामाल्यं च चूडायां वेष्टयामास काचन ॥
प्रददौ स्वामिने कामात्प्रेमवर्धनहेतवे । काचित्काचित्समाकृष्य नग्नां कृत्वा तु कामतः ॥

---

१ क. 'चन्द्राय ।

प्रेषयामास कृष्णस्य क्रोडे चन्दनचर्चिते । ननृतुश्च प्रभुः काश्चित्स्वान्तं कृत्वा तु कामतः ॥
नर्तनं कारयामास तं च काश्चिद्बलेन च । कृष्णश्च वस्त्रं कस्याश्च विचकर्ष कुतूहलात् ॥
कांचित्कृत्वा तु नग्नां च वस्त्रैश्चित्रांशुकं ददौ । कृष्णो राधां समाकृष्य वासयामास वक्षसि
तस्याश्च कबरीं रम्यां सुनिर्माणं चकार ह । सिन्दूरं च ददौ भाले कस्तूरीबिन्दुभिः सह ॥
अतिसूक्ष्मं चन्दनेन्दुं कौतुकात्तदधो ददौ । पत्रावलीं सुललितां सुकपोले चकार ह ॥९६॥
वह्निशुद्धांशुकं चारु परिधार्य प्रयत्नतः । पदोः सद्रत्नमञ्जीरे गृहीत्वा चरणाम्बुजे ॥
नखनिर्माजनं कृत्वा सुन्दरं यावकं ददौ । भूषणैर्भूषितां कृत्वा संप्रक्षिप्यानुलेपनैः ॥९७॥
दत्त्वा च मालतीमालां चुचुम्ब च पुनः पुनः । चारुलोचनपद्मे च चकाराञ्जनसंयुते ॥९८॥
प्रददौ नासिकामध्ये दुर्लभं गजमौक्तिकम् । श्रोणिदेशे च स्तनयोर्नखच्छिद्रं चकार ह ॥
चकार दन्तदलनं पक्वबिम्बाधरे वरे । सरसश्च तटे रम्ये पुष्पोद्याने सुनिर्जने ॥ १००॥
कृत्वा क्रीडां पुनरपि जगाम रासमण्डलम् । रासेश्वरः पूर्णरासं चकार रासमण्डले ॥१०१॥
वहिश्चन्द्रोदये रम्ये पुष्पचन्दनचर्चिते । अगुरुचन्दनाक्तेन वायुना सुरभीकृते ॥ १०२॥
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते । बहुमूर्तीः संविधाय योगिनां परमो गुरुः ॥१०३॥
पुनश्चकार शृङ्गारं गोपीनां चित्तहारकः । किङ्किणीनां कङ्कणानां नूपुराणां च नारद ॥
शृङ्गारोद्रिक्तकस्तत्र बभूव सुन्दरो रवः । मूर्छामवापुस्ताः सर्वा नवसंगममात्रतः ॥१०४॥
बभूवुरचलास्पन्दाः पुलकाञ्चितविग्रहाः । शृङ्गारविरते भूते संप्रापुश्चेतनां पुनः ॥१०५॥
नखदन्तप्रहारं च प्रचकार परस्परम् । कृष्णः कररुहाघातं ददौ तासां कुचोपरि ॥१०६॥
श्रोणिदेशे सुकठिने नखचिह्नं चकार ह । नीवी विस्रंसिता तासां कबरी क्षुद्रघण्टिकाः ॥
दूरीभूतं सुवसनं सुवेषं सुमनोहरम् । आलिङ्गनं नवविधं चुम्बनाष्टविधं मुदा ॥ १०८ ॥
शृङ्गारं षोडशविधं चकार रसिकेश्वरः । अङ्गैरङ्गानि प्रत्यङ्गैः प्रत्यङ्गानि च योषिताम् ॥
चकाराऽऽलिङ्गनं प्रीत्या कामुकीनां च कामुकः । नारीणां षोडश कलाः शृङ्गारस्तत्प्रमाणकः
कलाभेदेन तद्भेदं कामशास्त्रविदो विदुः । प्राकृतं द्वादशविधं चकार रसिकेश्वरः ॥
निरूपितं कामशास्त्रे चक्रे रेशस्ततोऽधिकम् । क्रीडारम्भे च मध्ये च विरतौ कर्म योषिताम्
प्रीत्यर्थमपि कर्तव्यं चकारेशस्ततोऽधिकम् । गोपीकङ्कणरेखाभिः पादालक्तकचिह्नितः ॥
शुशुभे कृष्णदेहश्च यथाऽद्रिर्गैरिकेण च । एवंभूते पूर्णरासे संभूते रासमण्डले ॥ १११ ॥
समाजग्मुः सुराः सर्वे सकलत्राश्च सानुगाः । सुवर्णस्यन्दनस्थाश्च कौतुकात्स्वगणावृताः ॥
पुलकाञ्चितसर्वाङ्गाः कामबाणप्रपीडिताः । ऋषयो मुनयश्चैव सिद्धाश्च पितरस्तथा ॥
विद्याधराश्च गन्धर्वा यक्षराक्षसकिंनराः । सस्त्रीकाश्च समाजग्मुर्ददृशुश्च मुदाऽन्विताः ॥

दिव्यस्यन्दनमारुह्य शातकौम्भविनिर्मितम् । सुशोभितं च मणिना रत्नसारपरिच्छदम् ॥
वह्निशुद्धांशुकेनैव वेष्टितं सुमनोहरम् । श्वेतचामरसंयुक्तं च सद्रत्नचरणाम्बुजम् ॥ ११८॥
शतचक्रं चित्रयुक्तं मनोयायि मनोहरम् । सद्रत्नसारनिर्माणकलशोज्ज्वलशेखरम् ॥
समाजगाम भगवान्पार्वत्या सह शंकरः । वामपार्श्वे महाकालो दक्षिणे नन्दिकेश्वरः ॥
पुरतः कार्तिकेयश्च स्वयं देवो गणेश्वरः । पिङ्गलाक्षादयः सर्वे पार्षदाः परितस्तयोः ॥
क्षेत्रपालादयः सर्वे तथाऽष्टौ भैरवेश्वराः । वक्षःस्थलस्थिता दुर्गा सस्मिता वक्रलोचना ॥
भारत्या सह ब्रह्मा च शातकौम्भरथस्थितः । वामे सप्तर्षयस्तस्य दक्षिणे सनकादयः ॥
सुवर्णस्यन्दनस्थश्च धर्मः साक्षी च कर्मणाम् । वक्षःस्थलस्थिता तस्य मूर्तिः स्मेरानना सती
पश्यन्ती पूर्णरासं च सकामा वक्रलोचना । परितः पार्षदाः सर्वे ज्वलन्तो ब्रह्मतेजसा ॥
शच्या सह महेन्द्रश्च रोहिण्या च कलानिधिः । स्वाहासार्धं स्वयं वह्निः सूर्यश्च संज्ञया सह
समाजगाम कामश्च रतिं कृत्वा च वक्षसि । सर्वे ग्रहाश्च दिक्पाला आजग्मुः सकलत्रकाः
आकाशस्थाश्च ददृशुः सरासं रासमण्डलम् । केचिच्च मुमुहुस्तत्र मूर्छामापुश्च केचन ॥
मुहूर्तं च सुराः सर्वे सस्मिताश्च मुदाऽन्विताः । चन्दनद्रववृष्टिं च पुष्पवृष्टिं च चिक्षिपुः ॥
कस्तूरीयुक्तमाल्यानां वृष्टिं चक्रुर्मुनीश्वराः । रासं दृष्ट्वा देवपत्न्यः कामबाणप्रपीडिताः ॥
स्थले रतिरसं कृत्वा जगाम यमुनाजलम् । राधया सह कृष्णश्च पूर्णब्रह्म सनातनः ॥
गोपीभिः सह जग्मुश्च माया श्रीकृष्णरूपिकाः । प्रपीडिताः कामबाणैः क्रीडां चक्रुर्जले मुदा
जलं ददौ राधिकायै सकामो माधवः स्वयम् । ददौ सा च माधवाय कामार्तायाञ्जलित्रयम्
वस्त्रं जग्राह तस्याश्च सा च नग्ना बभूव ह । मालां चिच्छेद कबरीं चकार शिथिलां हरिः
सिन्दूरपत्रकं लुप्तं वेषं च जलताडनैः । अविचित्रमोष्ठरागं लुप्तं कज्जललोचनम् ॥ १९९॥
तां च नग्नां समाश्लिष्य निममज्ज जले हरिः । प्रकृत्याभ्यन्तरे क्रीडां सुतस्थौ च तया सह
तां च नग्नां दर्शयित्वा गोपिकां क्रीडया नताम् । सस्मितां प्रेरयामास दूरतो यमुनाजले ॥
सा वेगेन समुत्थाय बलाज्जग्राह माधवम् । गृहीत्वा मुरलीं कोपात्प्रेरयामास दूरतः ॥
गृहीत्वा पीतवसनं चकार तं दिगम्बरम् । वनमालां च चिच्छेद ददौ तोयं पुनः पुनः ॥
हरिं पुनः समाकृष्य प्रेरयामास पाथसि । गभीरे स्रोतसि मुने निममज्ज जगत्पतिः ॥
उत्थाय माधवः शीघ्रं तां गृहीत्वा महस्य च । कृत्वा वक्षसि नग्नां च चुचुम्ब च पुनः पुनः
एवं ता मूर्तयः सर्वा गोपीभिः सह कौतुकात् । क्रीडां विचक्रुर्यमुनातीरनीरे मनोहरे ॥
तीरं गत्वा तथा सार्धं हरिर्नग्नश्च नग्नया । सा तं ययाचे वसनं स च तां सस्मितां सतीम् ॥

१ क. °णान्वितम् । २ क. °क्रीडयाऽन्विताम् ।

राधिकायै ददौ वस्त्रं रम्यां मालां च माधवः । प्रददौ हरये वस्त्रं वंशीं राधेश्वरी मुदा ॥
चन्दनागुरुकस्तूरीं सर्वाङ्गे कुङ्कुमान्विताम् । कृष्णस्य परया भक्त्या ददौ श्रोणिस्थितस्य च
निर्माय चूडां ललितां कामिनीं चित्तमोहिनीम् । शोभनैर्मालतीमाल्यैश्चकार वेष्टनं पुनः ॥
श्रीकृष्णो राधिकायाश्च कबरीं सुमनोहराम् । कृत्वा कुण्डलसंस्कारं निर्ममे पत्रकावलीम्
ददौ ललाटे सिन्दूरं कस्तूरीबिन्दुभिः सह । तदधश्चन्दनेन्दुं च सुसूक्ष्मं सुमनोहरम् ॥
नखाङ्कं स्तनयोरूर्वोरुरस्येव घनं मुदा । दत्त्वा तां वासयामास वह्निशुद्धांशुकेन वै ॥
चन्दनागुरुकस्तूरीकुङ्कुमानां द्रवेण सः । कृत्वा वक्षसि संलिप्य चुचुम्ब च मुहुर्मुहुः ॥
पुनराश्लेषणं कृत्वा ददौ मालां गले पुनः । भूषणैर्भूषितां कृत्वा मञ्जीरं चरणे ददौ ॥ १०७ ॥
अलक्तकं चरणयोर्नखेषु च ददौ पुनः । एवं गोपश्च गोपीनां विदधौ च पृथक्पृथक् ॥
पुनः प्रजग्मुस्ता मत्ताः सुन्दरं रासमण्डलम् । पूर्णेन्दुचन्द्रिकायुक्तं रतियोग्यं सुनिर्जनम् ॥
माधवीकेतकीकुन्दमालतीनां मनोहरैः । चम्पयूथीमल्लिकानां पुष्पैश्च सुरभीकृतम् ॥
दृष्ट्वा च स्फुटितं पुष्पं चयनं कर्तुमीश्वरी । गोपीर्नियोजयामास कौतुकेन च राधिका ॥
काश्चिन्नियोजयामास मालानिर्माणकर्मणि । काश्चित्ताम्बूलसज्जेषु काश्चिच्चन्दनघर्षणे ॥
मालाचन्दनताम्बूलं गोपीदत्तं च सुन्दरी । ददौ कृष्णाय संप्रीत्या सस्मिता वक्रलोचना ॥
काश्चिन्नियोजनं चक्रे कृष्णसंगीतकर्मणि । मृदङ्गमुरजादीनां वादनेषु च काश्चन ॥ १०८ ॥
एवं रासे रतिं कृत्वा लीलया हरिणा सह । विजहार च सर्वत्र निर्जनेषु मनोहरम् ॥
पुष्पोद्यानेषु रम्येषु सरसां च तटेषु च । कन्दरे कन्दरे रम्ये नदेषु च नदीषु च ॥ ११० ॥
अतीव निर्जनस्थाने श्मशाने गिरिगह्वरे । वाञ्छितेषु च नारीणां त्रयस्त्रिंशद्वनेषु च ॥
भाण्डीरे श्रीवने रम्ये कदम्बकानने तथा । तुलसीकानने कुन्दवने चम्पककानने ॥ ११२ ॥
निम्बारण्ये मधुवने जम्बीरकानने तथा । नालिकेरवने पूगवने च कदलीवने ॥ ११३ ॥
*बदरीकानने बिल्ववने नारिङ्गकानने । अश्वत्थकानने वंशवने दाडिमकानने ॥ ११४ ॥*
मन्दारकानने तालवने चूतवने तथा । केतकीकाननेऽशोकवने खर्जूरकानने ॥ ११५ ॥
आम्रातकवने जम्बूगहने शालकानने । कण्टके कानने पद्मवने जातिवने मुने ॥ ११६ ॥
न्यग्रोधगहने घोरे श्रीखण्डकानने तथा । प्रकृष्टकेसरवने सर्वतोऽपि विलक्षणे ॥ ११७ ॥
एवं रेमे कौतुकेन कामात्रिंशद्दिवानिशम् । तथाऽपि मानसं पूर्णं न च किंचिद्बभूव ह ॥
न कामिनीनां कामश्च शृङ्गारेण निवर्तते । अधिकं वर्धते शश्वद्यथाऽग्निर्घृतधारया ॥
जग्मुर्देवाः स्वगेहं च देव्यश्च मुनयस्तथा । ते सर्वे प्रशशंसुश्च विस्मयं च ययुर्मुदा ॥

---

१ घ. तथा ।

गेहे गेहे नृपेन्द्राणां लेभिरे जन्म भारते । दग्धाः कामाग्निनाऽऽशेन देव्य. शृङ्गारलालसाः

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० रासक्रीडाप्रस्तावो नामाष्टाविंशोऽध्यायः ॥ २८ ॥

=====

अथैकोनत्रिंशोऽध्यायः ।

---

नारायण उवाच—

अथ गोपाङ्गनाः सर्वाः काममत्ततया मुने । अतिप्रौढाश्च मानिन्यो नेश्वरं मेनिरे पतिम्
काश्चिदूचुरहो कृष्णं सस्मिता वक्रलोचनाः । मालतीपुष्पमुत्तोल्य देहि मे मालिकामिति ।
काश्चिदूचुरये कृष्ण स्वक्रोडेऽस्मांश्च कुर्विति । गृहीत्वा श्रीहरेः स्कन्धमारुरोह च काचन
उवाच काचिद्दर्पेण मम ता प्राणवल्लभम् । स्वकीयपीतवसनं परिधापय मामिति ॥४॥
उवाच काचिदीशं तं सिन्दूरं देहि मामिति । उवाच काचित्प्राणेशं शीघ्रमागत्य साम्प्रतम्
कृत्वा कुन्तलसंस्कारं कुरु मे कबरीमिति । काश्चित्संभेरयामासुः श्रीखण्डं वल्लवाय च ॥
स्वाङ्गवेषविधायिन्यो भूपार्थे श्रुतिमूलयोः । उवाच काचित्कामेन परं संकेतपूर्वकम् ॥
पश्यन्ती तन्मुखाम्भोजं सस्मिता मैथुनाय च ॥ काचिज्जग्राह मुरलीं बलात्कृष्णस्य माधवम्
जहार पीतवसनं कृत्वा नग्नं च कामिनी ।कामिन्यः काश्चिदित्यूचुर्मानिन्यो मधुसूदनम् ॥
अलक्तकद्रवं देहि पादयोर्नखरेषु च । उवाच काचित्प्रेम्णा तं गण्डयोः स्तनयोर्मम ॥
नानाचित्रविचित्राढ्यां कुरु पत्रावलीमिति । कृत्वाऽनुमानं मनसा दृष्ट्वा तासां ममत्वताम्
माधवो राधया सार्धमन्तर्धानं चकार ह । अतीव निर्जने स्थाने मुदा स्वेच्छामयो विभुः
कलामानप्रकारं च शृङ्गारं च चकार ह । पर्वते पर्वते रम्ये द्वीपे द्वीपे सुनिर्जने ॥१३॥
तटे तटे नदीनां च सर्वजन्तुविवर्जिते । श्रीगोष्ठे रत्नशैले च वेलागङ्गातटेऽपि च ॥१४॥
कालिन्दे च पुलिन्दे च मन्दिरे गन्धमादने । मनोहरे कुन्दवने कावेरीतीरनीरजे॥१५॥
पुष्पभद्रापुलिनजे पुष्पोद्याने सुपुष्पिते । सर्वत्र रमणं कृत्वा राधावेषं विधाय च ॥
जगाम मलयद्रोणीं रम्यां चन्दनवायुना । शय्यां पुष्पमयीं कृत्वा तत्र रेमे तया सह ॥
अतीव सुखसंभोगान्मूर्छां संप्राप्य राधिका । कृत्वा वक्षसि गोविन्दं पुलकाञ्चितविग्रहा ॥
दृष्ट्वा तां मूर्छितां कृष्णो घनश्रोणिपयोधराम् । विलुप्तवेषां कामार्तां नग्नां शिथिलकुन्तलाम्
चेतनां कारयामास कृत्वा वक्षसि तन्द्रिताम् ।वासयामास वसनं राधाया मेखलाम्बरम्
कबरीं रचयामास किंचिद्वामेन वक्रताम् । मालतीमाल्यसंयुक्तां कुन्दपुष्पैश्च वेष्टिताम् ॥
तस्याः कपाले सिन्दूरतिलकं सुन्दरं ददौ । गण्डयोः स्तनयोश्चित्रां चकार पत्रिकां मुदा

सालक्तकांश्च नखरांश्चित्रितान्पादपद्मयोः । नखैः कृत्रिमपद्मानि निर्ममे श्रोणिवक्षसोः॥
उत्थायाथ तया सार्धं जगाम ह सरोवरम् । नानाप्रकारपद्मानां राजिभिश्च विराजितम्
निर्मलस्फटिकाकारजलपूर्णं मनोहरम् । हंसकारण्डवाकीर्णं जलकुक्कुटकूजितम् ॥२१॥
मधुलुब्धमधुभ्राणां पद्मस्थानं सुपद्मजम् । चारुणा कलशब्देन शब्दितं शश्वदेव हि ॥
तत्र स्नात्वा जलक्रीडां चकार ह तया सह । जलं ददौ राधिकायै मुदा सा माधवाय च ।
सहस्रदलपद्मे च गृहीत्वा माधवः स्वयम् । एकं ददौ राधिकायै ररक्ष स्वार्थमेककम् ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवमीप्सितम् । स्वाङ्गे दत्त्वा राधिकायै लिलेप राधिकेश्वरः॥
ततो गच्छंस्तया सार्धं ददर्श पुरतो वटम् । अतीवोत्तुङ्गशाखाप्रमतिविस्तृतमेव च ॥
मूले योजनपर्यन्तं छायया परिवेष्टितम् । उवास तत्र गोविन्दः केतकीवनसंनिधौ ॥
पुष्पाक्तेन सुशीतेन वायुना सुरभीकृते । चित्रं रहस्यं सुचिरं पुराणं च पुरातनम् ॥
प्रहर्षितश्च श्रीकृष्णः कथयामास राधिकाम् । एतस्मिन्नन्तरे तत्र ददर्श मुनिपुंगवम् ॥
आगच्छन्तं च तं दृष्ट्वा प्रसन्नवदनेक्षणम् । न दृष्ट्वा हृदये रूपमीशस्य परमात्मनः ॥
ध्यानाद्विरतमग्रे च पश्यन्तं बहिरेव तत् । सर्वावयववक्रं च कृष्णं खर्वं दिगम्बरम् ॥
नाम्नाऽष्टवक्रं जटिलं ज्वलन्तं ब्रह्मतेजसा । मुखतोऽग्निमुद्गिरन्तं तपोराशिमिवोत्थितम्॥
अहो किं वा ब्रह्मतेजो मूर्तिमन्तमिह स्वयम् । नखश्मश्रुसुदीर्घं च शान्तं तेजस्विनं परम्
पुटाञ्जलियुतं भक्त्या भीतं प्रणतकंधरम् । दृष्ट्वा हसन्तीं राधां तां वारयामास माधवः
प्रभावं कथयामास मुनीन्द्रस्य महात्मनः । अथ प्रणम्य गोविन्दं तुष्टाव मुनिपुंगवः[1] ॥
परस्तोत्रं च पुरा दत्तं शंकरेण महात्मना ॥ ३९ ॥

अष्टावक्र उवाच—

गुणातीत गुणाधार गुणबीज गुणात्मक । गुणीश गुणिनां बीज गुणावन नमोऽस्तु ते ।
सिद्धिस्वरूप सिद्धयेश सिद्धबीज परात्पर । सिद्धिसिद्ध गुणाधीश सिद्धानां गुरवे नमः ।
हे वेदबीज वेदज्ञ वेदिन्वेदविदां वर । वेदाज्ञाताऽऽयरूपेश वेदज्ञेश न० ॥ ४२ ॥
ब्रह्मानन्तेश शेषेन्द्रधर्मादीनामधीश्वर । सर्व सर्वेश शर्वेश[2] बीजरूप न० ॥ ४३ ॥
प्रकृते प्राकृत प्रज्ञ प्रकृतीश परात्पर । संसारवृक्ष तद्बीज फलरूप न० ॥ ४४ ॥
सृष्टिस्थित्यन्तबीजेश सृष्टिस्थित्यन्तकारण । महाविराट्तरोर्बीज राधिकेश न० ॥४५॥
अहो यस्य त्रयः स्कन्धा ब्रह्मविष्णुमहेश्वराः । शाखाप्रशाखा वेदाद्यास्तपांसि कुसुमानि च
संसारा विकृता एव प्रकृत्यङ्कुरमेव[3] च । तदाधार निराधार सर्वाधार न० ॥ ४७ ॥
तेजोरूप निराकार प्रत्यक्षानूहमेव[4] च । सर्वाकारातिप्रत्यक्ष स्वेच्छामय न० ॥ ४८ ॥

---

१ क. °वरः । २ क. °शर्वेश । ३ ख. °सारवि° । ४ ख. °मेव च ।

इत्युक्त्वा स मुनिश्रेष्ठो निपत्य चरणाम्बुजे । प्राणांस्तत्याज योगेन तयो. प्रत्यक्ष एव च॥
पपात तत्र तद्देहः पादपद्मसमीपत. । तत्तेजश्च समुत्तस्थौ ज्वलदग्निशिखोपमम् ॥१०॥
सप्ततालप्रमाणं तु चोत्थाय च पपात ह । भ्रामं भ्रामं च परितो लीनं चामूत्पदाम्बुजे ॥
अष्टावक्रकृतं स्तोत्रं प्रातरुत्थाय य. पठेत् । परं निर्वाणमोक्षं च समाप्नोति न संशयः ॥
प्राणाधिको मुमुक्षूणा स्तोत्रराजश्च नारद । हरिणाऽहो पुरा दत्तो वैकुण्ठे शंकराय च ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० मुनिमोक्षणप्रस्ताव
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

अथ त्रिंशोऽध्यायः ।

---

नारद उवाच—

महामुने रहस्यं च श्रुतं ब्रह्मन्किमद्भुतम् ; मृते मुनौ किं चकार श्रीकृष्णो भक्तवत्सलः ॥

नारायण उवाच—

दृष्ट्वा मृतं मुनिं कृष्ण. संस्कारं कर्तुमुद्यतः । कृत्वा वक्षसि तद्देहं रुरोदोच्चैर्यथा नरः ॥
बाहुभ्या च समाश्लिष्य सिषेचोद्रिक्तमोहतः । निर्गतं भस्मनिकरं शवादश्राद्गवर्षणात् ॥
रक्तमांसास्थिहीनं तच्छरीरं च महात्मनः । षष्ठिवर्षसहस्राणि निराहारकृतो मुनेः ॥४॥
दग्धं लोहितमांसास्थि ज्वलता जठराग्निना । बाह्यज्ञानविहीनस्य हरिपादाब्जचेतसः ॥
चिता चन्दनकाष्ठेन निर्माय मधुसूदनः । कृत्वाऽग्निसार्थं तत्रैव स्थापयामास शोकतः ॥
ददौ चितायामग्निं च काष्ठं दत्त्वा शवोपरि । ज्वलिताया चिताया च मूर्छामाप क्षणं विभुः ॥
तद्देहे भस्मसाद्भूते नेदुर्दुन्दुभयो दिवि । बभूव पुष्पवृष्टिश्च तत्क्षणाद्गगनाद्हो ॥ ८ ॥
एतस्मिन्नन्तरे तत्र रत्नसारविनिर्मितम् । स्यन्दनं च मनोयायि वस्त्रमाल्यपरिच्छदम् ॥
पार्षदप्रवरैर्युक्तं श्रीकृष्णसदृशैर्वरैः । आविर्बभूव गोलोकात्सुन्दरं पुरतो हरेः ॥ १० ॥
अवरुह्य रथात्तूर्णं पार्षदप्रवरा हरे. । सर्वे समानरूपास्ते प्रणम्य राधिकेश्वरौ ॥ ११ ॥
धृतवन्तं सूक्ष्मदेहं प्रणमय्य मुनीश्वरम् । रथे कृत्वा तु तं देहं जग्मुर्गोलोकमुत्तमम् ॥१२॥
गते मुनीन्द्रे गोलोकं वृन्दावनविनोदिनी । बभूव विस्मिता साध्वी पप्रच्छ जगदीश्वरम् ॥

राधिकोवाच—

कोऽयं नाथ मुनिश्रेष्ठः सर्वावयववक्रिमः । अतिखर्वजनाकारस्तेजीयानतिकुत्सितः ॥१४॥

कथं वा निर्गतं भस्म देहादस्य किमद्भुतम् । साक्षाद्विलीनं यत्तेजस्त्वत्पादाब्जेऽनलोपमम्
रथस्थः पुण्यवान्सद्यो गोलोकं च जगाम ह । स्वात्मारामस्य यद्धेतो रोदनं ते बभूव ह ॥
त्वया कृतं च सत्कारमश्रुपूर्णेन चक्षुषा । सर्वं विवरणं तूर्णं संव्यस्य कथय प्रभो ॥ १७ ॥
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः । कथां कथितुमारेभे युगान्तरगतामपि ॥ १८ ॥

श्रीकृष्ण उवाच—

रहस्यमष्टावक्रीयं विख्यातं सर्वतः प्रिये । पश्चाच्छ्रोष्यसि कालेन प्रसङ्गे विदुषां मुखात् ॥
अष्टावक्रो मुनीन्द्रोऽपि विख्यातो भुवनत्रये । परिपूर्णं यद्यशसा जगन्मातर्जगत्त्रयम् ॥
कृष्णस्य वचनं श्रुत्वा विमनस्का हरिप्रिया । उवाच मधुरं यत्नाच्छुष्ककण्ठोष्ठतालुका ॥

राधिकोवाच—

यत्तृषालोर्मनः पूर्णं न बभूव सुधाम्बुधौ । स वितृप्तो भवति किं गोष्पदोदकपानतः ॥
वेदानां वेदवक्तृणां विधातुर्जनकस्य च । महाविष्णोरीश्वरस्त्वं कोऽन्यो वक्ताऽस्ति त्वत्परः
राधिकावचनं श्रुत्वा तुष्टः कृष्णो बभूव ह । उवाच गोपनीयं च रहस्यं परमाद्भुतम् ॥

श्रीकृष्ण उवाच—

शृणु कान्ते प्रवक्ष्येऽहमितिहासं पुरातनम् । श्रवणात्कथनाद्यस्य सर्वं पापं प्रणश्यति ॥
महाविष्णोर्नाभिपद्माद्बभूव जगतां विधिः । ममाज्ञया मत्कलया जलार्णवे जगत्त्रये ॥
पुत्रा बभूवुश्चत्वारो ब्रह्मणो मानसात्पुरा । नारायणपराः सर्वे ज्वलन्तो ब्रह्मतेजसा ॥
शिशवः पञ्चवर्षीया नग्ना अज्ञानिनो यथा । बाह्यज्ञानविहीनाश्च ब्रह्मतत्त्वविशारदाः ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः । सनत्कुमारो भगवानेते चत्वार एव च ॥१९॥
तानुवाच जगद्धाता सृष्टिं कुरुत पुत्रकाः । ते न तस्थुः पितुर्वाक्ये प्रययुस्तपसे मम ॥
विधाता विमनस्कश्च तनयेषु गतेषु च । पितुर्दुःखाय प्रभवेत्पुत्रश्चेदपस्करः ॥ २१ ॥
कालेन निर्ममे पुत्रान्स्वाङ्गेषु च तपोधनान् । वेदवेदाङ्गविज्ञांश्च ज्वलतो ब्रह्मतेजसा ॥
अत्रिः पुलस्त्यः पुलहो मरीचिर्भृग्वङ्गिराः । क्रतुर्वसिष्ठो वोढुश्च कपिलश्चासुरिः कविः ॥
शङ्कुः शङ्खः पञ्चशिखः प्रचेताश्च तपोधनाः । बहुकालं तपस्तप्त्वा चक्रुः सृष्टिं तदाज्ञया ॥
बलवन्तस्ते सर्वे संसारं कर्तुमुन्मुखाः । बभूवुः पुत्रपौत्राश्च सर्वेषां च तपस्विनाम् ॥२२॥
तदंशेन च तथा मही मुनिवंशानुवर्तिनी । चार्वी पुण्यस्वरूपा च प्रकृतं शृणु सुन्दरि ॥
प्रचेतसः सुतः श्रीमानसितो मुनिपुंगवः । स चचार तपस्तीव्रं दिव्यं वर्षसहस्रकम् ॥
न बभूव सुतस्तस्य दारांस्त्यक्तुं समुद्यतः । तं संबोद्धुं प्रोवाच सत्या वागशरीरिणी ॥
कृष्णं स्तुहि मुने त्वं च गच्छ शंकरसंनिधिम् । सिद्धं गुरुं गृहीत्वा च मन्त्रं शंकरवक्त्रतः

मन्त्राधिष्ठातृदेवी ते सद्यः साक्षाद्भविष्यति । वरेणाभीष्टदेव्याश्च पुत्रस्ते भविता ध्रुवम् ॥
श्रुत्वैतच्चरितं विप्रो जगाम शिवसंनिधिम् । योगिनामप्यगम्यं च शिवलोकं निरामयम्
सकल्मो यथा योगी तुष्टाव योगिनां गुरुम् । पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकंधरः
असित उवाच—
जगद्गुरो नमस्तुभ्यं शिवाय शिवदाय च । योगीन्द्राणां च योगीन्द्र गुरूणां गुरवे नमः
मृत्योर्मृत्युस्वरूपेण मृत्युसंसारखण्डन । मृत्योरीश मृत्युबीज मृत्युंजय नमोऽस्तु ते ॥
कालरूपं कलयतां कालकालेश कारण । कालादतीत कालस्य कालकाल न० ॥१५॥
गुणातीत गुणाधार गुणबीज गुणात्मक । गुणीश गुणिनां बीज गुणिनां गुरवे नमः ॥
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावे च तत्पर । ब्रह्मबीजस्वरूपेण ब्रह्मबीज न० ॥ १७ ॥
इति स्तुत्वा शिवं नत्वा पुरस्तस्थौ मुनीश्वरः । दीनवत्साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥
असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् । वर्षमेकं हविष्याशी शंकरस्य महात्मनः
स लभेद्वैष्णवं पुत्रं ज्ञानिनं चिरजीविनम् । भवेद्धनाढ्यो दुःखी च मूको भवति पण्डितः
अभार्यो लभते भार्यां सुशीलां च पतिव्रताम् । इह लोके सुखं भुक्त्वा यात्यन्ते शिवसंनिधिम्
इदं स्तोत्रं पुरा दत्तं ब्रह्मणा च प्रचेतसे । प्रचेतसा स्वपुत्रायासिताय दत्तमुत्तमम् ॥
श्रीकृष्ण उवाच—
समाकर्ण्य मुनेः स्तोत्रं भगवाञ्शंकरः स्वयम् । उवाच ब्रह्मणः पुत्रं स्वभक्तं भक्तवत्सलः
शंकर उवाच—
स्थिरो भव मुनिश्रेष्ठ जानामि तव वाञ्छितम् । पुत्रस्ते भविता सत्यं मद्दर्शनेन च मत्समः॥
दास्यामि मन्त्रमतुलं सर्वेषां च सुदुर्लभम् । इत्युक्त्वा च ददौ मन्त्रं तत्रैव षोडशाक्षरम् ॥
स्तोत्रं पूजाविधानं च कवचं परमाद्भुतम् । संसारविजयं नाम पुरश्चरणपूर्वकम् ॥१६॥
वरं दातुमिष्टदेवी प्रत्यक्षा भवितेति च । इत्युक्त्वा विरतो रुद्रः स तं नत्वा जगाम ह
जजाप परमं मन्त्रं सोऽसितः कल्पवत्सरम् । साक्षाद्भूत्वा वरस्तस्मै त्वया दत्तः पुरा सति
पुत्रस्ते भविता सत्यं महाज्ञानी सुतेति च । वरं दत्त्वा स्वभवनं गोलोकं मम संनिधिम्
कालेन च सुतस्तस्य शिवांशेन बभूव ह । ब्रह्मिष्ठो देवलो नाम्ना कन्दर्पसमसुन्दरः ॥
सुयज्ञनृपतेः कन्यां रत्नमालावतीं मुदा । तां सुन्दरीं विवाहेन जगृहे सर्वमोहिनीम् ॥
स्थाने स्थाने च रहसि शतवर्षं तया सह । स रेमे निपुणः श्रेष्ठः स्त्रीणां रमणकर्मणि॥
कालान्तरे स विरतो बभूव मुनिपुंगवः । सुखं सर्वं परित्यज्य धर्मिष्ठः श्रीहरिं स्मरन्॥
उत्थाय रात्रौ शयनाद्विरक्तश्च तपोधनः । स ययौ तपसे कान्ते गन्धमादनगह्वरम् ॥

स्वभार्यां च परित्यज्य यो गृह्णाति परस्त्रियम् । यशोधनायुषां हानिर्भवेज्जीवन्मृतस्य च ॥
भुवि नास्ति यशो यस्य जीवनं तस्य निष्फलम् । सुसंपदा किं राज्येन सुखेन च तपस्विनः
निष्कामेन च वृद्धेन मया किं ते प्रयोजनम् । सुवेशं सुन्दरं मान्ययुवानं पश्य सुन्दरि ॥
इत्येवं वचनं श्रुत्वा चुकोपाप्सरसां वरा । उवाच भूयो वाक्यं तं त्रस्ता प्रस्फुरिताधरा ॥

रम्भोवाच--

चारुचम्पकवर्णाभः कन्दर्पसमसुन्दरः । तपःप्रभावात्सश्रीकः सुवेषः संमतः स्त्रियाः ॥९४॥
त्वया विनाऽन्यं कं यामि को वाऽस्ति त्वत्परः पुमान् । पुंश्चली त्वां परित्यज्य का जीवति स्मरातुरा ॥ ९९ ॥
शीघ्रं मां भज विप्रेन्द्र दग्धां कामाग्निना सदा । कामो नश्यति मां त्वचो यथा रम्भां मतंगजः
न चेच्छापं प्रदास्यामि वद वेदविदां वर । मां वा दारुणशापं वा सत्वरं ग्रहणं कुरु॥९७॥
दग्धाः प्राणा मनो दग्धं स्वात्मा वा इति संततम् । नवशृङ्गारपीयूषपाननिर्वाणतां भजेत् ॥
स्वान्तर्दुःखेन दुःखार्तो यो यं शपति निश्चितम् । तं शापं खण्डितुं शक्तो न विधाता जगत्पतिः
द्विजो रम्भावचः श्रुत्वा बभूव ध्यानतत्परः । नोवाच किंचिन्मौनस्थः सा तं कोपाच्छशाप ह
हे वक्रचित्त ते विप्र सर्वावयववक्रिमम् । शरीरमङ्गनाकारं रूपयौवनवर्जितम् ॥१०१॥
अतीव विकृताकारं त्रिषु लोकेषु गर्हितम् । पुरातनं तपो नष्टं सद्यो भवतु निश्चितम् ॥
इत्युक्त्वा पुंश्चली कामात्कामलोकं जगाम ह । अचिरेण मुनीन्द्रश्च न ददर्श हरेः पदम् ॥
पादारविन्दविरहात्समुद्विग्नो बभूव ह । स्वाङ्गं च दृष्ट्वा विकृतं पूर्वपुण्यविवर्जितम् ॥
कृत्वाऽग्निकुण्डं शोकेन प्राणांस्त्यक्तुं समुद्यतः । मया दृष्टो वरो दत्तो दिव्यज्ञानेन बोधितः
आश्वासश्च कृतः प्रीत्या ततः शान्तो बभूव ह । अङ्गान्यष्टौ च वक्राणि दृष्ट्वा तूर्णं महामुनेः
अष्टावक्रेति तन्नाम कौतुकेन मया कृतम् । मद्वाक्यान्मलयद्रोणीमयमागम्य सत्वरः ॥
षष्टिवर्षसहस्राणि चकार परमं तपः । तपोवसाने मद्भक्तो मया मुक्तः कृतः प्रिये ॥
सर्वस्मिन्प्रलये नष्टे न मद्भक्तः प्रणश्यति । सुचिरेणैव तपसा ज्वलता जठराग्निना ॥
त्यक्ताहारस्यान्तरं च भग्नपूर्णं ततो मुनेः । आगतं मलयद्रोणीं मुनिहेतोर्मया प्रिये ॥
अष्टावक्रश्च मद्भक्तो न भूतो न भविष्यति । एवंभूतस्तपोनिष्ठः प्रपौत्रो ब्रह्मणो मुनिः ॥
निष्कलः पुंश्चलीशापाद्ब्रह्माऽपूज्यो यथा पुरा । इत्येवं कथितं सर्वं रहस्यं च महात्मनः
सुखदं पुण्यदं गूढं किं भूयः श्रोतुमिच्छसि ॥ ११२ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० राधाप्रश्नेऽष्टावक्रं प्रति रम्भाशापो नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

१ क. धनेन च । २ क. तपस्विना ।

## अथैकोनत्रिंशोऽध्यायः ।

राधिकोवाच—

विस्माश्चर्यं श्रुतं नाथ चरितं सुमनोहरम् । अधुना श्रोतुमिच्छामि ब्रह्मणः शापकारणम् ॥
यो विधाता त्रिजगतां तपसां फलदायकः । स कथं कुल्टाशापादपूज्यश्च बभूव ह ॥२॥

श्रीकृष्ण उवाच—

मन्वन्तरे रैवतस्य सुचन्द्रो नृपपुंगवः । तपस्वी वैष्णवः श्रेष्ठो ज्ञानी परमधार्मिकः ॥३॥
स च पूर्वं तपः कुर्वन्नाजगाम मम प्रिये । इमां च मलयद्रोणीं भारतेषु मनोहराम् ॥४॥
तपश्चकार राजेन्द्रो वर्षाणां च सहस्रकम् । जीर्णं तस्य शरीरं च कठोरेण तपस्विनः ॥
वल्मीकच्छादितं देहं दृष्ट्वा धाता कृपानिधिः । आजगाम वरं दातुं तपःस्थानं सुनिर्जनम् ॥
कमण्डलुजलेनैव मम देहोद्भवेन च । सिषेच तं च मन्त्रेण मया दत्तेन योगवित् ॥ ७ ॥
कमण्डलुजलस्पर्शादुत्थाय नृपतिः स्वयम् । ननाम भक्त्या जगतां स्रष्टारं च पुरःस्थितम् ॥
स तं नमन्तं राजानमुवाच कमलोद्भवः । वरं वृणीष्वेति राजेन्द्र यत्ते मनसि वाञ्छितम् ॥
तस्य तद्वचनं श्रुत्वा वरं वव्रे परात्परम् । ममैव चरणे भक्तिं मदीयं दास्यमेव च ॥१०॥
कृपया च वरं ब्रह्मा दत्तवानभिवाञ्छितम् । स च तत्पुरतस्तस्थौ कामदेवसमप्रभः ॥११॥
एतस्मिन्नन्तरे राजा ददर्श रथमुत्तमम् । आकाशान्निपतन्तं वै शतसूर्यसमप्रभम् ॥ १२ ॥
तेजसाऽऽच्छादितं सर्वं सुप्रदीप्तं दिशो दश । रत्नेन्द्रसारनिर्माणं शतचक्रसमन्वितम् ॥
अमूल्यरत्नरचितं विचित्रकलशोज्ज्वलम् । मुक्तामाणिक्यहीराणां मालाजालैश्च राजितम् ॥
सद्रत्नदर्पणैर्दीप्तैरतीव सुमनोहरम् । भूषितं दिव्यवस्त्रैश्च श्वेतचामरकोटिभिः ॥ १६ ॥
पारिजातप्रसूनानां मालाजालैः सुशोभितम् । मनोयायि महाश्चर्यं नानाचित्रेण चित्रितम् ॥
वेष्टितं पार्षदैर्दिव्यै रत्नभूषणभूषितैः । चतुर्भुजैः श्यामलैश्च ज्वलद्भिः स्थिरयौवनैः ॥
पीतवस्त्रपरीधानैश्चन्दनागुरुचर्चितैः । दृष्ट्वा रथस्थान्देवांश्च ननाम नृपतिर्मुदा ॥ १८ ॥
सहसा तस्य शिरसि पुष्पवृष्टिर्बभूव ह । नेदुर्दुन्दुभयः स्वर्गे चाऽऽनकाश्च मनोहराः ॥
ऋषयो मुनयः सिद्धाः प्रकुर्वन्तो मुदाऽऽशिषम् । प्रशशंसुः सुराः सर्वे राजानं हर्षनिर्भराः ॥
राजा च पार्षदान्दृष्ट्वा तद्रूपश्च बभूव ह । पार्षदास्तं रथे कृत्वा नीत्वा जग्मुर्मदालयम् ॥
मदीयः पार्षदो भूत्वा स च तस्थौ ममान्तिके । ततः स्वमन्दिरं यान्तं ददर्श मोहिनी विधिम् ॥
पुष्पोद्याने च रम्ये च पुष्पचन्दनवायुना । सद्यो मुमोह तं दृष्ट्वा प्रदग्धा मदनानलैः ॥
विशेषवसना तन्वी सुगौर स्मितं मुखम् । सिन्दूरबिन्दुं दधती कस्तूरीबिन्दुना सह ॥
च रत्नाभरणशोभा सततं स्थिरयौवना । बृहन्नितम्बयुगुला पीनश्रोणिपयोधरा ॥ २१ ॥
चारुपद्मयुगाङ्गुष्ठानामपाङ्गगमना । सूक्ष्मवस्त्रपरीधाना रत्नालंकारभूषिता ॥ २२ ॥

त्रैलोक्यं मोहितुं शक्ता कटाक्षैरेव लीलया । अतीव कामिनी शश्वद्गजेन्द्रमन्दगामिनी ॥
पुलकाञ्चितसर्वाङ्गी मूर्छां संप्राप वर्त्मनि । संनिरीक्ष्य च तां ब्रह्मा जगाम श्रीहरिं स्मरन् ॥
स विकारं न हि प्राप ह्यात्मारामो जितेन्द्रियः । ब्रह्मलोकं च संप्राप ब्रह्मा च जगतां पतिः ॥
सकामा सा च कुलटा बभूव हतचेतना । दिवानिशं चिन्तयन्ती स्वप्ने ज्ञाने चतुर्मुखम् ॥
सर्वं जारं विसस्मार तत्याज हरिमीश्वरी । उत्तिष्ठन्ती निवसती शयनं कुर्वती क्षणम् ॥
तद्यपात्रे यथा सस्यं भ्रमत्येव तथा पथि । एतस्मिन्नन्तरे रम्भा विदग्धाऽप्सरसां वरा ॥
गच्छन्ती कामलोकं सा सकामा तेन वर्त्मना । दृष्ट्वा सहचरीं तत्र शुष्ककण्ठोष्ठतालुकाम् ॥
अभिप्रायेण बुबुधे पप्रच्छ सस्मिता तदा ॥

रम्भोवाच—

कथमेवंविधा त्वं हि त्रैलोक्यचित्तमोहिनि ।
वद शीघ्रं महाभागे रम्भाऽहं चेतनां कुरु । कमुद्दिश्य सकामा त्वं गच्छ त्वं कान्तमीप्सितम्
कुलटा सर्वसौभाग्या न वयं कुलपालिकाः । सर्वे व्यग्रा इन्द्रियाणां सुखाय भुवनत्रये ॥
यान्ति प्राणा यतः काले का लज्जा तत्र जीविनाम् । न चाऽऽत्मनः परः कश्चित्प्रियोऽस्ति भुवनत्रये ॥ ३७ ॥
कान्तेऽपत्ये स्वबन्धौ च स्नेहो यः स्वात्महेतुकः । संबन्धः स्वात्मनो यावत्तावत्स्नेहोऽस्ति तत्र वै
येषु यन्मानसं शश्वत्तेषां प्राणास्त एव हि । गच्छन्तीं कामलोकं च सकामां पश्य मां प्रिये
सह सख्या समालोच्य मनसा गच्छ तं प्रियम् । निबध्य नीवीं केशांश्च कृत्वा वेषमभीप्सितम्
मुनिमोहनबीजं च तं मोहं कुरु मोहिनि । कथयस्व महाभागे वचनं हृदयंगमम् ॥ ४१ ॥
रसाऽऽत्मानं प्रभावं च स्त्रीजातीनां जगत्त्रये । स्वाभिप्रायश्च सुरतौ न प्रकाश्यः कदाचन ॥
स्वान्तं कान्तं स्वानुरक्तमृज्वीं सहचरीं विना । तस्माद्यत्नेन हृद्वाक्यं प्रकाश्यं च प्रिये प्रिये
अन्यथा चोपहासाय मरणायैव कल्पते । तस्याश्च वचनं श्रुत्वा सस्मिता सा सुलज्जिता ॥
हृद्यं च कथयामास यद्धेतोस्तादृशी गतिः ॥ ४४ ॥

मोहिन्युवाच—

यावद्दृष्टो मया रम्भे निर्जने चतुराननः ।
तावन्मनो मेऽतिदग्धं शश्वन्मनसिजानलैः । न दत्तमात्मने मऽद्यमन्तरे न हि रोचते ॥
जानामि नाहमुदयं यामिनीशदिनेशयोः । अधुना न हि भेदो मे सततं स्वप्नज्ञानयोः ॥
मम प्राणाः प्रतीक्षन्ते तस्याऽऽलिङ्गनमेव च । क्षणं विज्ञाय न चिरं यास्यन्ति नान्यथा प्रिये
कामज्वालाकलापैश्च स्वर्णाकारं कलेवरम् । अनाहारेण चेदानीं बभूव दग्धवल्लवत् ॥

---

१ क. °र्वसंयोग्या । २ क. कान्ते ।

गन्तुं स्थातुं न शक्ताऽहं शयनं वा सुखासनम् । विगतं बुद्धिशीलादि गमितं च विशेषतः
समुपायं करिष्यामि वद रम्भेऽत्र सांप्रतम् । त्यक्ष्यामि वाऽपि शरीरं वा विमृशामि च किं द्वयोः
मोहिनीवचनं श्रुत्वा प्रहस्याप्सरसां वरा । तामुवाच हितं नीतमुपायं शुभकारणम् ॥

रम्भोवाच—

एवमेतद्दृशो भद्रे भद्रस्य कारणं तव । सर्वं स्वप्नयिष्यामि शृणूपायं भयं त्यज ॥५३॥
कृत्वा वेषपूर्वं च पूर्वमाराध्य मन्मथम् । तेन सार्धं स्वयं गत्वा त्वं मोहं कुरु भामिनि ॥
जितेन्द्रियाणां प्रवरं साक्षान्नारायणात्मकम् । विना कामसहायेन का शक्ता नेतुमीश्वरम्
भज कामं तपः कृत्वा पुष्करे मम मोहिनि । सद्यः साक्षात्स भविता दयालुर्योषितां प्रभुः
इत्युक्त्वा तामप्सरसां प्रवरा काममन्तिकम् । जगामेन्द्रियशान्त्यर्थं सा जगाम च पुष्करम्
पुष्करे च तपः कृत्वा कामं संप्राप्य मोहिनी । जगाम तेन सार्धं च ब्रह्मलोकमनामयम् ॥
ददर्श निर्जनस्थं च मोहिनी कमलोद्भवम् । तत्रैव मोहनं कर्तुं समारेभे पुरःस्थिता ॥५९॥
क्षणं ननर्त सुचिरं सुगानेन क्षणं जगौ । संगीतं मम संबन्धि मत्तानां चित्तमोहनम् ॥
विधाता जगतां तस्याः श्रुत्वा संगीतमीप्सितम् । पुलकाञ्चितसर्वाङ्गो मुमोह साश्रुलोचनः
दृष्ट्वा मुग्धं चतुर्वक्त्रं मोहिनी हृष्टमानसा । कलाप्रमाणं भावं च चकार तत्र लीलया ॥
स्वाङ्गं संदर्शयामास स्मेरभ्रूभङ्गपूर्वकम् । का लज्जा तस्य संसारे यः कामहतचेतनः ॥६३॥
विज्ञाय ब्रह्मा तद्भावं नतवक्त्रो बभूव ह । प्रदाय तस्यै दानं च विरतः श्रीहरिं स्मरम् ॥
विज्ञाय ब्रह्मणो भावं शुष्ककण्ठोष्ठतालुका । हतोद्यमा सा तुष्टाव कामं कामप्रदं वरम् ॥

मोहिन्युवाच—

सर्वेन्द्रियाणां प्रवरं विष्णोरंशं च मानसम् । तदेव कर्मणा बीजं तदुद्भव नमोऽस्तु ते [1] ॥
स्वयमात्मा हि भगवाञ्ज्ञानरूपो महेश्वरः । नमो ब्रह्मञ्जगत्स्रष्टस्तदुद्भव न० ॥६७॥
स्थितः सर्वशरीरेषु दृष्टिश्च योगिनामपि । जगत्साध्य दुराराध्य दुर्निवार न० ॥ ६८॥
सर्वाजित जगज्जेतर्जीव जीविमनोहर । रतिबीज रतिस्वामिन्रतिप्रिय न० ॥ ६९ ॥
शश्वद्योषिदधिष्ठान योषित्प्राणाधिकप्रिय । योषिद्वाहन योषास्त्र योषिद्बन्धो न० ॥७०॥
पतिसाध्यकराशेषरूपाधार गुणाश्रय । सुगन्धिवातसचिव मधुमित्र न० ॥ ७१ ॥
शश्वद्योनिकृताधार स्त्रीसंदर्शनवर्धन । विदग्धानां विरहिणां प्राणान्तक न०॥ ७२ ॥
अकृपा येषु तेऽनर्थस्तेषां ज्ञानविनाशनम् । अनुरूप भक्तेषु कृपासिन्धो न०॥७३॥
तपस्विनां च तपसां विघ्नबीजावलीलया । मनः सकामं मुक्तानां कर्तुं शक्त न० ॥
तपःसाध्याश्चाऽऽराध्याश्च सदैवं पाञ्चभौतिकाः । पञ्चेन्द्रियकृताधार पञ्चबाण न० ॥

---

१ क. तद्देव° । २ क. सृष्टिः ।

मोहिनीत्येवमुक्त्वा तु मनसा सा विधेः पुरः । विररामाऽऽनम्रवक्त्रा बभूव ध्यानतत्परा
उक्तं माध्यंदिने कान्ते स्तोत्रमेतन्मनोहरम् । पुरा दुर्वाससा दत्तं मोहिन्यै गन्धमादने
स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत् । अभीष्टं लभते नूनं निष्कलङ्को भवेद्ध्रुवम्
चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम् । भवेदरोगी श्रीयुक्तः कामदेवसमप्रभः ॥
वनिता लभते साध्वीं पत्नीं त्रैलोक्यमोहिनीम् ॥ ७९ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० मोहिनीस्तोत्रवर्णनं
नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## अथ द्वात्रिंशोऽध्यायः ।

---

श्रीकृष्ण उवाच—

मोहिनीस्तवनेनैव कामस्तुष्टो बभूव ह । चकार शरसंधानमन्तरिक्षे स्थितः स्वयम् ॥ १ ॥
मन्त्रपूतं महास्त्रं च चिक्षेप पितरं मुदा । बभूव चञ्चलो ब्रह्मा कामास्त्रेण च कामुकः ॥
क्षणं निरीक्षणं चक्रे मोहिन्यास्ये पुनः पुनः । ज्ञानं प्राप्य तदा धाता विरराम हरिं स्मरन्
बुबुधे मनसा सर्वं चरितं मन्मथस्य च । शशाप तं सुतमपि विधाता क्रोधविह्वलः ॥ २ ॥
हे काम यौवनोन्मत्त मूढैश्वर्येण गर्वित । भविता दर्पभङ्गस्ते गुरोर्मे हेलनादिति ॥ ३ ॥
हतोद्यमो जगामाऽऽशु मन्मथो मधुना सह । ब्रह्मणः शापभीतश्च शुष्ककण्ठोष्ठतालुकः
इत्युवाच जगद्धाता मोहिनीं मदनातुराम् । चतुर्वक्त्रं च पश्यन्तीं सस्मितं वक्रचक्षुषा

ब्रह्मोवाच—

मातर्मोहिनि गच्छ त्वं निष्फलं कर्म चात्र ते । ज्ञातस्तवाभिप्रायश्च नाहं योग्योऽस्य कर्मणः
वेदे जुगुप्सितं कर्म तदेव कर्तुमक्षमः । वेदकर्ता स्वयमहं व्यवस्थाकारको भवे ॥ ६ ॥
अकीर्तिर्वेदवक्तुश्च निन्द्यं च किमतः परम् । उपस्थिता च या योषित्त्याज्या सा गेगिनापि
श्रुतौ श्रुतमिति त्याज्या सर्वेषां नरस्त्रिनाम् । अहो सर्वैः परित्याज्या पुंश्चली च विशेषतः
धनायुःप्राणयशसां नाशिनी दुःखदायिनी । स्वकार्यतत्परा शश्वत्परकार्यविनाशिनी ॥

तवैव कर्म योग्यं च युवानं पश्य सुन्दरि । त्वं विदग्धा च योषित्सु विदग्धान्वेषणं कुरु ॥
विदग्धाया विदग्धेन संगमो गुणवान्भवेत् । जरातुरोऽहं वृद्धश्च तपस्वी वैष्णवो द्विजः ॥
अस्वतन्त्रः पराधीनः का रतिः पुंश्चलीषु मे । अये वत्से गच्छ शीघ्रं विहाय पितरं च माम्
नाम्नाऽहं च जगत्स्रष्टा तस्मात्तव पिता सदा । मन्मथं चन्द्रमित्रं च जयन्तं नलकूबरम् ॥
स्ववैद्यौ चन्द्रतनयं दितिपुत्रांश्च सुन्दरान् । कामशास्त्रेषु निष्णातान्रतिकर्मविशारदान् ॥
या मां यासि हि तांस्त्यक्त्वा सा विदग्धा च कामुकी । सदा संभोगविषये स्त्रियं प्रार्थयते पुमान् ॥ २२ ॥
स्त्री चेत्प्रयाति पुरुषं विपरीतं विडम्बनम् । सर्वेषां चैव रत्नानां स्त्रीरत्नं दुर्लभं परम् ॥
स्वयं प्रार्थयते स्वामी न तु स्वामिनमेव च । योषिज्जातिषु धिक् ताश्च स्वयं याः समुपस्थिताः
भवेद्दूरं स्वल्पमूल्यं रत्नं स्वयमुपस्थितम् । नित्यं पुमान्स्त्रियं याति स्त्री वा याति च न प्रियम्
लोकाचारेषु वेदेषु न स्त्री याति परप्रियम् । स्ववस्तु भुङ्क्ते यः काले शास्त्रोक्तविधिपूर्वकम् ॥ २६ ॥
स पूज्यो न भवेत्पूज्यो यद्गतिः परवस्तुषु । कः कस्य शत्रुरबले निशामय जगत्त्रये ॥
स्वेन्द्रियाः शत्रवः सर्वे शत्रुता यन्निमित्ततः । वेदोक्ताचरणे सर्वं मित्रं च जगतां जगत् ॥
कृते वेदविरुद्धे च मित्रं शत्रुर्भवेद्ध्रुवम् । वेदोक्तं कृतवन्तं च हरिस्तुष्टो दिवानिशम् ॥
हरौ तुष्टे जगत्तुष्टं तस्मिन्रुष्टे भवो रिपुः । कुत्राऽस्ति कुलटाजातिः साध्वीजातिश्च कुत्र वा
स्वकीयाचरणात्सर्वं भवे भवति कर्मणः । स्त्रीजातिः प्रकृतेरंशा नारायणविनिर्मिता ॥
दुःशीला पुंश्चली निन्द्या सुशीला च पतिव्रता । पतिव्रतास्तु त्रिविधाः पुंश्चलीषु च योषितः
तासामेवंविधा नास्ति स्वयं याति परप्रियम् । स्त्रीजातीना च मध्ये च काऽप्येवं कुलकज्जला
भवे रहः स्वयं दृष्ट्वा वेषं कृत्वा प्रयाति तम् । क्षोभिता यदि पश्यन्ती मध्यन्द्रवमसाध्वकम्
भवेत्स्वास्ताहि तासाध्यं सामान्यमेव केवलम् । इत्येवमुक्त्वा जगतां विधाता विरराम च ॥
भक्तुं समुद्यता सा च कोपप्रस्फुरिताधरा ॥ ३१ ॥

मोहिन्युवाच—

ज्ञातं सर्वं जगद्धातश्चरितं तव सांप्रतम् ॥ ३१ ॥
त्वया निषेधिता भीतिर्मनो मे न स्थिरं भवेत् । भूनं त्वयि विशिष्टं च यावद्दृष्टः क्षणे भवान्
मद्गन्दृष्टिमात्रेण सर्वे जाराश्च विस्मृताः । देहं कामाग्निना दग्धं यदा त्यक्तुं समुद्यता ॥
निषिषेध च मां रम्भा प्रददौ मन्त्रमीदृशम् । तदा कामसद्भावेन त्वत्समीपं समागता ॥

---

१ क. मिथि ।

रैभमुक्तव शापेन स जगाम हतोद्यमः । अहो गन्तुमशक्ताऽहं त्वया यद्यपि भर्त्सिता ॥
सर्वाङ्गेष्वेव मे जाड्यं बभूव सांप्रतं विभो । कृपां कुरु कृपासिन्धो न मां हन्तुं त्वमर्हसि
तवाऽऽश्लेषणमात्रेण विज्वराऽहं सुनिश्चितम् । त्वमेव जगतां धाता कुलटाऽहं च कर्मणा
सन्तो गर्वं न कुर्वन्ति कर्मसाध्याश्च जोविनः । कश्चित्प्रयाति यानेन वहन्ति तं च केचन
करं गृह्णाति नृपतिः कर्मणा ददति प्रजाः । कश्चिद्सिंहासनस्थश्च नृपमाश्रश्च कश्चन ॥
केचिद्भूता बहुविधास्तत्र तस्य स्वकर्मणा । यान्ति केचिदश्वपृष्ठैर्गजपृष्ठैश्च केचन ॥४४॥
कर्मणा वाहकाः केचित्केचिद्वाहनपालकाः । सूकरीजठरे कश्चित्संप्रयाति स्वकर्मणा ॥
कश्चिच्छ्वपाश्च जठरं तव पुत्राश्च केचन । केचित्कृत्वा हरेर्भक्तिं कर्मणा तस्य पार्षदाः
केचिद्भवन्ति कृमयो विष्ठायां दैवदोषतः । स्वर्गं प्रयान्ति राजेन्द्राः केचिच्च स्वस्वकर्मणा
केचित्प्रयान्ति नरकं विण्मूत्रे तत्र पच्यते । कर्मणा कश्चिदिन्द्रेन्द्रः सुराणां प्रवरः स्वयम्
केचित्सुरा नराः केचित्केचिच्च क्षुद्रजन्तवः । केचिच्च कर्मणा विप्रा वर्णश्रेष्ठा महीतले ॥
केचिद्भूपा वैश्यशूद्राः केचिच्च म्लेच्छजातयः । केचित्स्वकर्मणा प्राज्ञा ज्ञानेन सर्वदर्शिनः
केचिन्मूर्खाः केचिदन्धाः स्वाङ्गहीनाश्च केचन । केचिच्छास्त्रं बोधयन्ति शिष्यवर्गान्स्वकर्मणा
केचित्पठन्ति सर्वार्थं जानन्ति गुरुवक्त्रतः । भवन्ति कर्मणा केचिद्देहे स्थावरजङ्गमे ॥
तपस्वी नवधाती च त्वं च ब्रह्मा च कर्मणा । काचित्स्वकर्मणा साध्वी पूज्येह च परत्र च
काचिद्वेश्या तदाहारं भुङ्क्ते कृत्वाऽङ्गविक्रयम् । स्ववेश्याऽहं सुरपुरे सुरभोग्या सुपूजिता
येषामालिङ्गनेनैव कर्मणां खण्डनं भवेत् । मनः स्वभावबीजं च स्वभावः कर्मबीजकः ॥
तत्कर्म फलबीजं च सर्वेषां जनको हरिः । फलं ददाति नियतं कर्मद्वारा विभुः स्वयम् ॥
सर्वेभ्यो बलवाञ्छित्यं कर्मरूपी जनार्दनः । कुतो हेतोर्निन्दिताऽहं त्वयैव भर्त्सिता कथम्
जगत्स्रष्टुरीश्वरस्य पादाब्जं द्रष्टुमागता, स्वप्ने यस्य पदद्वंद्वं न हि पश्यन्ति योगिनः ॥
तमीश्वरं पतिं कर्तुमिच्छया स्वयमागता । गत्वा हि कस्यचित्स्थानमस्पृश्येह परत्र च ॥
कस्यचित्पादरजसा यशसा भान्ति योषितः । इत्युक्त्वा मोहिनी शीघ्रं गत्वोवास विधेः पुरः
स्वयं विधाता जगतां चकम्पे कुलटाभयात् । सस्मिता वक्रनयना कामभावं चकार ह ॥
स्वाङ्गं च दर्शयामास कामबाणप्रपीडिता । एतस्मिन्नन्तरे कामः सर्वज्ञः सर्वयोगवित् ॥
आविर्भूय पञ्चबाणान्निचिक्षेप च ब्रह्मणि । सम्मोहनं समुद्वेगं बीजस्तम्भितकारणम् ॥
उन्मत्तबीजं उग्रदं शश्वच्चेतनहारकम् । एतान्प्रक्षिप्य मदनोऽप्यन्तरिक्षस्थितः स्वयम्॥
किंकरान्प्रेषयामास संमोहाय पितुर्मुदा । वसन्तं कोकिलादींश्च गन्धवातं मनोहरम् ॥

१ क. 'यान'।

नियुज्याभ्यन्तरं गत्वा तद्विकारं चकार ह । पुंस्कोकिलः कलं रावमुवाच तत्समीपतः ॥
षट्पदः सुन्दरं सूक्ष्मं जुगुञ्जे पुरतः स्थितः । शश्वद्ववौ गन्धवहो मन्दोऽतिशीतलः प्रिये
सततं मुदितस्तत्र बभ्राम च मधुः स्वयम् । पुलकाञ्चितसर्वाङ्गो बभूव जगतां विधिः ॥
ददर्श मोहिनीभावं प्रहस्य च पुनः पुनः । अतीव वक्रनयना कामास्त्रहतचेतना ॥६९॥
विधाता बुबुधे सर्वं सर्वधर्मनिबन्धनम् । नियन्तुं न मनः शक्तः सस्मार श्रीहरिं भिया ॥
तुष्टाव मनसा कृष्णं शान्तं हृत्पङ्कजस्थितम् । द्विभुजं मुरलीहस्तं हरिं पीताम्बरं परम् ॥
अतीव कमनीयं च किशोरं स्थिरयौवनम् । रत्नालंकारभूषाढ्यं सस्मितं श्यामसुन्दरम् ॥

ब्रह्मोवाच—

रक्ष रक्ष हरे मां च निमग्नं कामसागरे । दुष्कीर्तिजलपूर्णे च दुष्पारे बहुसंकटे ॥ ७३ ॥
भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे । अतीव निर्मलज्ञानचक्षुःप्रच्छन्नकारणे ॥७४॥
जन्मोर्मिसंघसहिते योषिन्नक्रौघसंकुले । रतिस्रोतःसमायुक्ते गम्भीरे घोर एव च ॥७५॥
प्रथमामृतरूपे च परिणामविषालये । यमालयप्रवेशाय मुक्तिद्वारातिविस्मृते ॥ ७६ ॥
बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम् । स्वयं च त्वं कर्णधारः प्रसीद मधुसूदन
मद्विधाः कतिचिन्नाथ नियोज्या भवकर्मणि । सन्ति विश्वेशा विधयो हे विश्वेश्वर माधव॥
न कर्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः । तथाऽपि न स्पृहा कामे त्वद्भक्तिव्यवधायके॥
हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु । त्वं महेश महाज्ञाता दुःस्वप्नं मां न दर्शय
इत्युक्त्वा जगतां धाता विरराम सनातनः । ध्यायं ध्यायं मत्पदाब्जं शश्वत्सस्मार मामिति
ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् । स चैवाऽऽकर्ण्य विषये न निमग्नो भवेद्-
ध्रुवम् ॥ ८२ ॥
मम मायां विनिर्जित्य संज्ञानं लभते ध्रुवम् । इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना०राधाप्रश्ने ब्रह्ममोहिनीसं०
श्रीकृष्णस्तोत्रं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

अथ त्रयस्त्रिंशोऽध्यायः ।

श्रीकृष्ण उवाच—

श्रुत्वा ब्रह्मा हरेः स्तोत्रं तस्थौ तस्याः समीपतः । मनोमत्तगजेन्द्रं च यामास्त्रं निवारयन्
दिव्यज्ञानाद्दृतेनैव मया दत्तेन राधिके । उवाच मोहिनी तं च परिहासपरं वच ॥२॥

---

१ ध. 'दैवमपि' । २ क. 'भेद्भि' । ३ ग. 'वि मः पु' ।

मोहिन्युवाच—

इङ्गितेनैव नारीणां सद्यो भक्तं भवेन्मनः । करोत्याकृष्य संभोगं यः स एवोत्तमो विभो
ज्ञात्वा स्फुटमभिप्रायं नार्या संप्रेषितो हि यः । पश्चात्करोति शृङ्गारं पुरुषः स च मध्यमः
पुनः पुनः प्रेषितश्च स्त्रिया कामार्तया च यः । तथा न लिप्तो रहसि स क्लीबो न पुमानहो
गृही तपस्वी कामी वा स्वमेरिक्षयमुपस्थिताम् । त्रजेत्परत्र नरकमपूज्यश्च भवेदिह ॥६॥
नष्टश्रीर्नष्टरूपश्च भ्रष्टबुद्धिर्भवेद्ध्रुवम् । स सद्यः क्लीबतां याति ब्रह्मञ्शापेन योषितः ॥
उत्तिष्ठ जगतांनाथ पारं कुरु स्मरार्णवे । निमग्नां दुस्तरे घोरे कर्णधार भयानके ॥ ८ ॥
अतीव निर्जनस्थाने सर्वजन्तुविवर्जिते । सुगन्धिवायुना रम्ये पुंस्कोकिलरुतश्रुते ॥ ९ ॥
सततं त्वन्मनस्कां मां दासीं जन्मनि जन्मनि । क्रीणीहि रतिपण्येनामूल्यरत्नेन सत्वरम् ॥
इत्युक्त्वा मोहिनी सद्यो जगत्स्रष्टुश्च ब्रह्मणः । विचकर्ष वैरं वस्त्रं संस्मिता कामविह्वला ॥
विज्ञाय समयं धाता तामुवाच भयातुरः । पीयूषतुल्यं वचनं वरं विनयपूर्वकम् ॥ १२ ॥

ब्रह्मोवाच—

शृणु मोहिनि मद्वाक्यं सत्यसारं हितं स्फुटम् । न कुरु त्वं च नैश्चेष्टे स्त्रीजातीनामनत्रपाम्
त्यज मामम्बिके पुत्रं वृद्धं निष्काममेव च । त्वत्कर्मयोग्य रसिकं युवानं पश्य सुस्मिते ॥
निषेकाद्यमने पत्नी गुरु भर्तुः शुभाशुभम् । मन्त्रशिल्पमपत्यं च सर्वमेतन्न यत्नतः ॥१५॥
त्वया सह मम रतेर्निबन्धो नास्ति सुव्रते । क्षुद्रं महद्वा यत्कर्म सर्वं दैवनिबन्धकम् ॥ १६ ॥
इत्युक्तवन्तं ब्रह्माणं स्मरन्तं मत्पदाम्बुजम् । विचकर्ष पुनर्वेश्या कामेन हतचेतना ॥१७॥
एतस्मिन्नन्तरे शीघ्रं स्थानं तत्सुमनोहरम् । आजग्मुर्मुनयः सर्वे ज्वलन्तो ब्रह्मतेजसा ॥
अत्रिः पुलस्त्यः पुलहो वसिष्ठः क्रतुरङ्गिराः । भृगुर्मरीचिः कपिलो वोढुः पञ्चशिखो रुचिः
आसुरिश्च प्रचेताश्च स्वयं शुक्रो बृहस्पतिः । उतथ्यः कारकः कण्वः कश्यपो गौतमस्तथा
सनकश्च सनन्दश्च कर्दमश्च सनातनः । सनत्कुमारो भगवान्योगिनां परमो गुरुः ॥२१॥
शातातपः पिप्पलश्च शङ्कुः शुकः पराशरः । मार्कण्डेयो लोमशश्च मृकण्डुश्च्यवनस्तथा
दुर्वासाश्च जरत्कारुरास्तीकश्च विभाण्डकः । ऋष्यशृङ्गो भरद्वाजो वामदेवश्च कौशिकः ॥
दृष्ट्वांश्च तपोनिधानागतांश्च मुनीश्वरान् । तत्याज मोहिनी शीघ्रं वेश्या कमलोद्भवम् ॥
तत्रोवास जगद्धाता तद्वामपार्श्वतश्च सा । प्रणेमुर्मुनयस्तं च भक्तिनम्रात्मकंधराः ॥२५॥
आशिषं युयुजे ब्रह्मा वासयामास तान्विभुः । तेषु मध्ये भजन्भाव यथा तारासु चन्द्रमाः
पप्रच्छुर्मुनयो देवं कथमेषा तवान्तिके । स्वर्वेश्यानां च प्रवरा मोहिनीत्येवमेव च ॥२७॥
श्रुत्वा मुनीनां वचनमुवाच तान्स्मरातिः । स्त्रीजातीनां च कथनं लज्जाच्छादनमेव च ॥

ब्रह्मोवाच—
अपूर्वं नृत्यगीतं च चिरं कृत्वा शुभावहम् । उवास सा परिश्रान्ता यथा कन्या पितुः पुरः ॥
इत्युक्त्वा जगतां धाता जहास मुनिसंसदि । जहसुर्मुनयः सर्वे सर्वज्ञास्तत्र राधिके ॥
सर्वं रहस्यं विज्ञाय जगत्स्रष्टुश्च मानसम् । सद्यश्चुकोप कुलटा हास्यव्याजेन संसदि ॥
सर्वाङ्गकम्पमाना सा कुलटा कुटिलानना । रक्तपङ्कजनेत्रा च कोपप्रस्फुरिताधरा ॥३१॥
उत्थाय च सभामध्ये तेषां च पुरतः स्थिता । संबोध्योवाच ब्रह्माणं मृत्युकन्या यथा रुषा
मोहिन्युवाच—
अये ब्रह्मञ्जगन्नाथ वेदकर्ता त्वमेव च ॥ ३२ ॥
किंवा वेदप्रणिहितं कर्म किं तद्विपर्ययम् । विचारं मनसा स्वेन कुरु वेदविदां गुरो ॥
स्वकन्याया दत्तस्पृहः स कथं हससि नर्तकीम् । निर्मिताऽहमीश्वरेण स्ववेश्या सर्वगामिनी
सतां धर्मविरुद्धं यत्तदत्यन्तविडम्बनम् । दासीतुल्यां विनीतां च दैवेन शरणागताम् ॥
यतो हससि गर्वेण ततोऽपूज्यो भवाचिरम् । अचिराद्दर्पभङ्गं ते करिष्यति हरिः स्वयम्
निबोध वचनं ब्रह्मन्वेश्यायाश्च तु सांप्रतम् । तवैव वचनं स्तोत्रं गृह्णाति यो नरः सदा ॥
भविता तस्य विघ्नश्च स चाप्यस्युपहास्यताम् । भविता वार्षिकी पूजा देवतानां युगे युगे ॥
तव माघ्यां च संक्रान्त्यां न भविष्यति सा पुन. । कल्पान्तरेऽत्र कल्पे वा देहे देहान्तरेऽत्र वा
पुनः पूजा न भविता या गता सा गतैव च । इत्युक्त्वा मोहिनी शीघ्रं जगाम मदनालयम् ॥
तेन सार्धं रतिं कृत्वा बभूव विज्वरा पुनः । पश्चात्सा चेतनां प्राप्य विललाप भृशं पुनः ॥
अयं कथं मया शप्तो जगद्विधिरतिप्रियः । स्ववेश्यायां गतायां च मुनयो दुःखिता भृशम् ॥
स्वयं विधाता जगतां चकम्पे नतकंधरः । उपायं मुनयस्तस्मै ददुः कल्याणकारिणः ॥
शरणं व्रज वैकुण्ठमित्युक्त्वा ते गृहान्ययुः । ब्रह्मा जगाम शरणं मम मूर्त्यन्तरं परम् ॥
शान्तं तं कमलाकान्तं श्यामं नारायणाभिधम् । गत्वा विषण्णवदनः प्रणम्य च चतुर्भुजम्॥
तस्थौ वासं जगत्स्रष्टा नातिदूरे समीपतः । रहस्यं कथयामास शुष्ककण्ठोष्ठतालुकः ॥
दीनबन्धुं दयासिन्धुं विपद्वारणकारणम् । श्रुत्वा रहस्यं तत्सर्वं सहस्योवाच तं विभुः ॥
सत्यं सारं हितं वाक्यं जगतां च सुखावहम् ॥ ४८ ॥
नारायण उवाच—
स्वयं त्वं वेदविदुषां विदुषां च गुरोर्गुरुः ॥ ४९ ॥
त्वया कृतं च कामिन्या हेतुना न तत्कृतम् । स्त्रीजातिः प्रकृतेरंशा जगतां बीजरूपिणी
हसिता विडम्बनेनैव प्रकृतेश्च विडम्बनम् । न स्नातस्त्वं च पुण्यस्तोत्रमनुत्तमम् ॥५१॥

क्रीडाक्षेत्रे ब्रह्मलोके कस्तवेन्द्रियनिग्रहः । यदि तद्वारते दैवात्कामिनी समुपस्थिता ॥
स्वयं रहसि कामार्ता न सा त्याज्या जितेन्द्रियैः । त्यक्त्वा परत्र नरकं व्रजेद्गतिविडम्बितः॥
भवेदेव हि दुःखार्ता शापं दद्याच्च तं ध्रुवम् । विहाय स्वकलत्रं च यो गृह्णाति परस्त्रियम्
लोभात्काममुखाद्वाऽपि सोऽधमो नात्र संशयः । पातयित्वा स च पतेद्दश पूर्वान्दशापरान्
त्यक्त्वा स्वस्वामिनं या च परं गच्छति कामतः । न पुमान्न च वेश्या च कुलस्त्री तत्र दुष्यति
उपायेन च या साध्वं करोति परपूरुषम् । तिष्ठत्येवान्धकूपे सा यावच्चन्द्रदिवाकरौ ॥
स्ववेश्या च दिवं याति सततं कुलधर्मतः । ध्रुवं भवेत्सोऽपराधी तस्या अप्यवमानतः ॥
तमुपायं करिष्यामि शापो यत्र विशुद्ध्यति । क्षणं तिष्ठ जगन्नाथ पापिनश्च भवार्णवे ॥
एतस्मिन्नन्तरे कश्चिदाजगाम हरेः पुरः । द्वारपालः शीघ्रगामीत्युवाच नतकंधरः ॥६०॥

द्वारपाल उवाच—

अन्यब्रह्माण्डाधिपतिर्ब्रह्मा दशमुखः स्वयम् । द्वारे तिष्ठन्महाभक्तस्त्वां द्रष्टुं स्वयमागतः ॥
द्वारपालवचः श्रुत्वा स चैवानुमतिं ददौ । द्वारपालाज्ञया ब्रह्मा तुष्टावाऽऽगत्य भक्तितः॥
स्तोत्रैरतिविचित्रैश्च चतुर्वक्त्राश्रुतैरहो । स्तुत्वोवासाऽऽज्ञया विष्णोः कृत्वा पश्चाच्चतुर्मुखम्
नारायणो द्वारपालानित्युवाच चतुर्भुजान् । आगन्तुकं जनमपि प्रवेशयत सादरम् ॥
एतस्मिन्नन्तरे तत्र वृन्दावनविनोदिनि । आजगामातिप्रणतो ब्रह्मा शतमुखः स्वयम् ॥
दिव्यैः स्तोत्रैश्च तुष्टाव निगूढैरतिसुन्दरैः । स्तुत्वोवास वरैः स्तोत्रैः सर्वेषामश्रुतैरहो ॥
तदनन्तरयोरग्रे भक्त्या शतमुखः स्वयम् । जगद्विधी सभायां च तत्र तिष्ठति तत्क्षणे ॥
आजगामान्यब्रह्माण्डाधिपो ब्रह्मा हरेः पुरः । सहस्रवदनः श्रीमान्भक्त्या नम्रात्मकंधरः
स्तुत्वोवास वरैः स्तोत्रैः सर्वेषामश्रुतैरहो । तं च पप्रच्छ सर्वेषां ब्रह्माण्डानां च ब्रह्मणाम् ॥
वार्तां विषयिणां चैव सुराणां च क्रमेण च । चतुर्मुखस्य तान्दृष्ट्वा दर्पभङ्गो बभूव ह ॥
आत्मानं विष्णुसदृशं मन्यमानस्य दर्पतः । अन्यांश्च दर्शयामास ब्रह्माण्डस्थान्विधीन्हरिः
दृष्ट्वा च कृपया तत्र मृततुल्यं चतुर्मुखम् । यावन्ति गात्रलोमानि सन्ति नारायणस्य मे
तत्प्रमाणाश्च ब्रह्माण्डा ब्रह्माणः सन्ति संततम् । नारायणं प्रणम्याऽऽशु जग्मुस्ते स्वालयं प्रति
स मेने विधिरात्मानमत्यल्पविषयाधिपम् । पप्रच्छ प्रणतं विष्णुर्लज्जानम्रचतुर्मुखम् ॥
[1]वद तत्किमिदं दृष्टं स्वप्नवद्भवताऽधुना । नारायणवचः श्रुत्वा विधिरित्युक्तवांस्तदा ॥
भूतं भव्यं भविष्यं च नव मायासमुद्भवम् । इत्येवमुक्त्वा स विधिस्तस्थौ संसदि लज्जया ॥
सर्वान्तर्यामी भगवांस्तद्योपायं विनिर्ममे ॥७९॥

---

१ क. °दंदद वि° ।

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० मोहिनीशापब्रह्मदर्पभङ्गो नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

अथ चतुस्त्रिंशोऽध्यायः ।

---

श्रीकृष्ण उवाच—

एतस्मिन्नन्तरे तत्र शंकरः समुपस्थितः । सस्मितो वृषभेन्द्रस्थो विभूतिभूषणः स्वयम् ॥
व्याघ्रचर्माम्बरधरो नागयज्ञोपवीतकः । स्वर्णाकारजटाभारमर्धचन्द्रं च संदधत् ॥ २ ॥
त्रिशूलपट्टिशकरो बिभ्रत्खट्वाङ्गमुत्तमम् । सद्रत्नसाररचितस्वरयन्त्रकरो मुदा ॥ ३ ॥
वाहनादवरुह्याऽऽशु भक्तिनम्रात्मकंधरः । प्रणम्य कमलाकान्तं वामे चोवास भक्तितः ॥
आजग्मुर्मुनयः सर्वे सुराः शक्रादयस्तथा । आदित्या वसवो रुद्रा मनवः सिद्धचारणाः
पुलकाञ्चितसर्वाङ्गास्तुष्टुवुः पुरुषोत्तमम् । प्रणम्य तं शिवं सर्वे सुराश्चाऽऽनम्रकंधराः ॥ ६ ॥
एतस्मिन्नन्तरे तत्र संगीतं शंकरो जगौ । कृत्वाऽतीव सुतालं च स्वरयन्त्रसमन्वितः ॥
आवयोश्च गुणाख्यानं राससंबन्धि सुन्दरम् । समयोचितरागेण मनोमोहनकारिणा ॥
यन्त्रकण्ठैकतानेन चैकमानेन चारुणा । पदभेदविरामेण गुरुणा लघुना क्रमात् ॥ ९ ॥
गमकेनातिदीर्घेण मन्दे(न्द्रे)ण मधुरेण च । मयेति दुर्लभं सृष्टं प्रीत्या स्वेन विनिर्मितम् ॥
पुलकाञ्चितसर्वाङ्गः साश्रुनेत्रः पुनः पुनः । तदेव श्रुतिमात्रेण मूर्छां प्रापुर्विचेतनाः ॥
बभूवू रुद्ररूपाश्च मुनयः पुरतः प्रिये । रुद्ररूपाः सुराः सर्वे विधातृहरिपार्षदाः ॥ १२ ॥
नारायणश्च लक्ष्मीश्च गायकश्च शिवः स्वयम् । जलपूर्णं च वैकुण्ठं दृष्ट्वा त्रस्तोऽहमीश्वरि
गत्वा मूर्तीर्विनिर्माय सर्वांश्च तादृशीरिति । तत्स्वरूपास्तद्रसाश्च तत्स्ववाहनभूषणाः ॥
तत्स्वभावास्तन्मनस्कास्तत्तद्विषयमानसाः । स्थानं निर्माय परितो वैकुण्ठस्य चतुर्दिशि ॥
तदधिष्ठातृदेवी च आजगाम स्वमालयम् । शरीरजा सुराणां सा बभूव सुरनिम्नगा ॥
मुक्तिदा च मुमुक्षूणां भक्तानां हरिभक्तिदा । कोटिजन्मार्जितं पापं विविधं पापिनामहो ॥
यस्याश्च स्पर्शवायोश्च संपर्केण विनश्यति । किंवा न जाने प्राणेशि स्पर्शदर्शनयोः फलम्
विष्णुस्नानजन्यं च कथयामि निरूपणम् । सर्वतीर्थान्तरं पृष्ट्वा पुष्करं परिकीर्तितम्
वेदोक्तं च तदेवास्याः कला नार्हति षोडशीम् । भगीरथेन चाऽऽनीता तेन भागीरथी स्मृता
गां गता स्रोतसोऽस्माद्गङ्गा तेन प्रकीर्तिता । जानुद्वारा पुरा दत्ता जह्नुनाऽऽपीय धीमता ॥

---

१ क. दर्पिता । २ क. 'आप्य वि' ।

तस्य कन्यास्वरूपा सा जाह्नवी तेन कीर्तिता । भीष्मः स्वयं वसुर्जातस्तस्यांशात्तेन भीष्मसूः
धाराभिरितसृमिः स्वर्गे पृथिवीमतले तथा । ममाऽऽज्ञया च गच्छन्ती तेन त्रिपथगामिनी
प्रधानधारया स्वर्गे सा च मन्दाकिनी स्मृता । योजनायुतविस्तीर्णा प्रस्थे च योजना स्मृता
क्षीरतुल्यमला शश्वदत्युत्तुङ्गतरङ्गिणी । वैकुण्ठाद्ब्रह्मलोकं च ततः स्वर्गं समागता ॥
स्वर्गाद्धिमाद्रिमार्गेण पृथिवीमागता मुदा । सा धाराऽलकनन्दाख्या लवणोदेन मिश्रिता
शुद्धस्फटिकसंकाशा बहुवेगवती सती । पापिनां पापशुष्केन्धं दग्धुं पावकरूपिणी ॥
अहो सागरवंशेभ्यो निर्वाणमुक्तिदायिनी । वैकुण्ठगामिनी सा च सोपानरूपिणी वरा ॥
अतोऽपि मृत्युसमये सतां पुण्यस्वरूपिणाम् । आर्द्रौ पादौ च संन्यस्य मुखे तोयं प्रदीयते
गङ्गासोपानमारुह्य सन्तो यान्ति निरामयम् । आब्रह्मलोकं संलङ्घ्य रथस्थाश्च निरापदः
दैवात्पुरा प्राक्तनेन मग्नं चेत्कृतपातकैः । लोमप्रमाणवर्षं च मोदन्ते हरिमन्दिरे ॥ ६१ ॥
ततो भोगो भवेत्तेषां निश्चितं पापपुण्ययोः । अतिस्वल्पेन कालेन कालव्यूहं च बिभ्रताम्
ततः पुण्यवतां गेहे लब्ध्वा जन्म च भारते । संप्राप्य निश्चलां भक्तिं भवन्ति हरिरूपिणः
मृतद्विजाना देहाश्च दैवाच्छूद्रा वहन्ति चेत् । पदप्रमाणवर्षं च तेषां च नरके स्थितिः ।
ततस्तेषां च साहाय्यं करोति हरिरूपिणी । ददाति मुक्तिं तेभ्योऽपि क्रमेण च क्रमागती
जन्म पुण्यवतां गेहे कारयित्वा च भारते । स्थलं ददाति वैकुण्ठे निश्चितं जन्मभिस्त्रिभिः
यात्रां कृत्वा तु यः शुद्धो स्नातुं याति सुरेश्वरीम् । पदप्रमाणवर्षं च वैकुण्ठे मोदते ध्रुवम्
गङ्गां प्राप्यानुषङ्गेण स्नाति चेत्पमलो नरः । मुच्यते सर्वपापेभ्यः पुनर्यदि न लिप्यते ॥
कलौ पञ्चसहस्राब्दं स्थितिस्तस्याश्च भारते । तस्यां च विद्यमानायां कः प्रभावः कलेरहो
कलौ दशसहस्राणि वर्षाणि प्रतिमा मम । तिष्ठन्ति च पुराणानि प्रभावस्तत्र कः कलेः ॥
अतलं याति या धारा सा च भोगवती स्मृता । पयःफेननिभा शश्वदतिवेगवती सदा
आकराऽमूल्यरत्नानां मणीन्द्राणां च संततम् । नागकन्याश्च यत्तीरे क्रीडन्ति स्थिरयौवनाः
स्वयं देवी च वैकुण्ठं वेष्टयित्वा च संततम् । सहस्रयोजना प्रस्थे दैर्घ्ये च लक्षयोजना
अस्या विनाशः कल्पे नास्त्येव दुहितुर्मम । नानारत्नाकरं दिव्यं तत्तीरं सुमनोहरम् ॥
इत्येवं कथितं सर्वं जाह्नवीजन्म पुण्यदम् । ब्राह्मणस्य प्रतीकारो मोहिनीशापतः शृणु ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० जाह्नवीजन्मप्रस्तावो
नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

१ क. मम पार्षदाः । २ क. देव्मौल्लं न° ।

अथ पञ्चत्रिंशोऽध्यायः ।

---

श्रीकृष्ण उवाच—

नारायणश्च ब्रह्माणमुवाच कृपया पुनः । दृष्ट्वा गङ्गां च सर्वे तां मम मायां च मेनिरे ॥

नारायण उवाच—

उत्तिष्ठ गच्छ भद्रं ते भविष्यति चतुर्मुख । अत्र स्नात्वाऽभिशप्तस्त्वं पूतो भव ममाऽऽज्ञया
देवं चेत्सत्यं स्वयं पूतः स्पर्शं वाञ्छन्ति तानि ते । वैष्णवेशस्य तीर्थानि सर्वाणि सततं मुने
तथाऽपि शापमुक्तस्त्वमत्र प्रकृतिहेलनात् । अहंकारश्च सर्वेषां पापबीजममङ्गलम् ॥४॥
शीघ्रं त्वं गच्छ गोलोकं ममाऽऽलयं परात्परम् । प्रकृत्यंशा मङ्गलदा तत्र प्राप्स्यसि भारतीम्
प्रकृतिं भज कल्याण सृष्टिबीजस्वरूपिणीम् । अहो कल्पान्तपर्यन्तं तपस्तप्तं त्वयाऽधुना
तव मन्त्रं न गृह्णन्ति केऽपि वेश्याभिशापतः । यदन्यदेवपूजायां तव पूजा भविष्यति
त्वमेव जगतां धाता स्वात्मारामश्च योषितः । सर्वरूपी च पूजा च सर्वदेहेषु सर्वतः ॥
तदा ममाऽऽज्ञया ब्रह्मा स्नात्वा च जाह्नवीजले । शीघ्रं जगाम गोलोकं मां प्रणम्य जगद्गुरुः
ते देवा मुनयः सर्वे प्रजग्मुः स्वालयं मुदा । सुनिर्मलं मम यशो गायन्तश्च पुनः पुनः
विधिरागत्य गोलोकं संप्राप्य भारतीं सतीम् । सर्वविद्याधिदेवीं तां मद्वक्त्राच्च विनिर्गताम्[1] ॥
वागीश्वरीं च संप्राप्य ब्रह्मा प्रमुदितः स्वयम् । कामात्मा गां च व्यापारमनुमेने स्वयं विभुः
तत आगत्य मां नत्वा प्राप्य त्रैलोक्यमोहिनीम् । क्रीडां चकार भगवान्स्थाने स्थानेऽतिनिर्जने
रतिं निरतरं कृत्वा विरराम स्वयं विधिः । वागीश्वरीमुवाचेदं त्वं वै ब्रह्मा च कर्मणा ॥
काचित्स्वकर्मणा साध्वी पूज्या च स्थिरयौवना । तवैव कर्मयोगं च युवानं पश्य सुन्दरि ॥
विदग्धाया विदग्धेन संगमो गुणवान्भवेत् । जरातुरोऽहं वृद्धश्च तपस्वी वैष्णवो द्विजः ॥
अस्वतन्त्रः पराधीनः का रतिः पुंश्चलीषु मे । आजगाम ब्रह्मलोकं पुनरेव निजालयम् ॥
ददृशुर्ब्रह्मलोकस्थास्तां देवीं कौतुकान्विताः । अतीव सुन्दरीं रम्यां शुभ्रवर्णां च सस्मिताम्
शरच्छीतांशुवदनां शरत्पङ्कजलोचनाम् । पक्वबिम्बप्रभामुष्टदीप्तोष्ठाधरपल्लवाम् ॥१९॥
मुक्तापङ्क्तिविनिन्द्येकदन्तपङ्क्तिमनोहराम् । रत्नकेयूरवलयरत्ननूपुरशोभिताम् ॥२०॥
रत्नकुण्डलयुग्मेन कर्णमूलविराजिताम् । रत्नेन्द्रसारहारेण वक्षःस्थलसमुज्ज्वलाम् ॥२१॥
वह्निशुद्धांशुकं सूक्ष्मं बिभ्रतीं नवयौवनाम् । अतीव कमनीयां च पीनश्रोणिपयोधराम् ॥
वीणापुस्तकहस्तां च व्याख्यामुद्राकरां वराम् । ते च निर्मञ्छनं कृत्वा चक्रुः परममङ्गलम्

---

[1] ध. 'पद्मास्यविनिर्गताम् ।

पुरीं प्रवेशयामासुर्ब्रह्माणं भारतीं मुदा । ब्रह्मा तया सह क्रीडां चकार स दिवानिशम् ॥
अतीव सुखसंभोगे निमग्नः सततं मुदा । गूढं सर्वपुराणेषु किं पुनः श्रोतुमिच्छसि ॥२६॥

नारायण उवाच—

प्राणेशवचनं श्रुत्वा प्रहस्य परमेश्वरी । भूयोऽपि परिपप्रच्छ कौतुकान्मानसं पुरा ॥२७॥

राधिकोवाच—

ब्रह्मा कथं न जग्राह वेश्यां स्वयमुपस्थिताम् । न कर्मसेवे रहसि फलदाता च कर्मणाम्
उपस्थितायास्त्यागे च महान्दोषो हि योषितः । ज्ञात्वा देवो विधाता स कथं तत्याज मोहिनीम् ॥ २८ ॥

नारायण उवाच—

राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः । पाद्मकल्पस्य वृत्तान्तमुवाच परमेश्वरीम् ॥ २९ ॥

श्रीकृष्ण उवाच—

शृणु कान्ते प्रवक्ष्यामि पुरावृत्तान्तमीप्सितम् । अकथ्यं गोपनीयं च महतामभिनिन्दितम्
एकदा च प्रजाः स्रष्टुं विधाता प्रेरितो मया । ससर्ज मनसा पुत्रान्ज्वलतो ब्रह्मतेजसा ॥
सनकं च सनन्दं च सनातनमनुत्तमम् । सनत्कुमारं वोढुं च कविं पञ्चशिखं विभुम् ॥
असितं कपिलं सिद्धं सिद्धान्मम कलोद्भवान् । तान्पञ्चवर्षीयान्पिता स्रष्टुं जगाद ह ॥
प्रजाः स्रष्टुं प्रेरकं च जनकं तेऽवमन्य च । प्रजग्मुस्तपसे तूर्णं ममार्चनपरायणाः ॥३४॥
तदा रुष्टो जगद्धाता पुनः पुत्रान्विनिर्ममे । रुद्रानेकादश वरान्रुदतो भीमविग्रहान् ॥३५॥
तस्मिन्प्रयुज्य तरसा पुनः पुत्रान्विनिर्ममे । योगी योगेन मां ध्यात्वा स्वात्मारामः स्वविग्रहे
वसिष्ठं पुलहं चैव क्रतुमङ्गिरसं तथा । भृगुमत्रिं पुलस्त्यं च दक्षं कर्दममेव च ॥ ३७ ॥
मरीचिं च विनिर्माय प्रजाः स्रष्टुं नियुज्य च । प्रहृष्टमानसः पुत्रं कन्यैकां च ससर्ज ह ॥
कृष्णस्य कामिनः पुत्रः कामदेवो बभूव ह । कन्या षोडशवर्षीया रत्नभूषणभूषिता ॥
उवाच पुत्रं स विधिः सुदीप्तं पुरतः स्थितम् । दुर्निवार्यं मत्कलांशं स्वात्मारामं मनोहरम्

ब्रह्मोवाच—

स्त्रीपुंसोः क्रीडनार्थाय मुदा त्वं च विनिर्मितः । हृदि योगेन सर्वेषामधिष्ठानं करिष्यसि ॥
संमोहनं समुद्वेगं जम्भनं स्मितकारणम् । उन्मत्तबीजं ज्वलदं शश्वच्चेतनहारकम् ॥ ४२ ॥
प्रगृहीतान्मया दत्तान्सर्वान्संमोहनं कुरु । दुर्निवार्यो मम वराद्भव वत्स भवेषु च ॥ ४३ ॥
बाणान्दत्त्वैवमुक्त्वा च प्रहृष्टश्च जगद्विधिः । दृष्ट्वोवाच दुहितरं वरं दातुं समुद्यतः ॥४४॥

---

१ क. °स्य वेदवि° ।

एतस्मिन्नन्तरे कामो मनसाऽऽलोच्य मन्त्रणाम् । कर्तुं शस्त्रपरीक्षां च बाणांश्चिक्षेप ब्रह्मणि
स त्रपूतैश्च बाणैश्च दुर्वार्यै स्मरणेन च । अतिविद्धो महायोगी मूर्छितो हतचेतन ॥४६॥
क्षणेन चेतना प्राप्य ददर्शाग्रे च कन्यकाम् । ता सभोक्तुं मनश्चक्रे सा दुद्राव भिया सती ॥
दृष्ट्वा पश्चाच्च पितर धावन्त हतचेतनम् । जगाम शरण शीघ्र भ्रातृणा च तपस्विनाम् ॥
ते ता समीपे संस्थाप्य तमूचु पितर क्रुधा । हित तथ्यं च वेदोक्त नीतिसार पर वच. ॥

ऋषय ऊचु —

अहो किमेतज्जनक कर्म तेऽतिविगर्हितम् । नीचाना चरित यत्तत्करोषि त्वं जगद्विधे ॥
पश्यन्ति सतत सन्त प्रसूमिव परस्त्रियम् । ये ते सर्वत्र पूज्याश्च परत्रेह जितेन्द्रिया ॥
त्व स्वय वेदकर्ता च कन्या सभोक्तुमिच्छसि । कन्या च मातृवर्गेषु प्रविष्टा च श्रुतौ श्रुता
गुरो पत्नी राजपत्नी विप्रपत्नी च या सती । पत्नी च भ्रातृसुतयोर्मित्रपत्नी च तत्प्रसू ॥
प्रसू पित्रोस्तथा भ्रातु पत्नी श्वश्रू: स्वकन्यका । जननी तत्सपत्नी च भगिनी सुरभी तथा
स्वाभीष्टसुरपत्नी च धात्रिकाऽन्नप्रदायिका । गर्भधात्री स्वनाम्ना च भयात्त्रातुश्च कामिनी
एता वेदप्रणीताश्च सर्वेषा मातर स्मृता । एतास्वपि च सर्वासु न्यूनता नास्ति कासु च
कन्यादाताऽन्नदाता च ज्ञानदाताऽभयप्रद । जन्मदो मन्त्रदो ज्येष्ठभ्राता च पितर स्मृता
एता वहन्ति ये मूढा य एताञ्जनकानपि । पच्यन्ते नरके ते च यावद्वै ब्रह्मणो वयः ॥
तानन्धकूपे संस्थाप्य दूरतो यमकिंकराः । कुर्वन्ति ताडन शश्वत्पुरीष पाययन्ति च ॥
त्वमेव विश्वकर्ता च शास्ता वै शमनस्य च । स्वय विधाता जगता तेन गृह्णासि कन्यकाम्
अस्माक पुरतो दूर गच्छ कामार्तमानस । न कुर्मो भस्मसात्कर्तुं शक्ताश्च जनक वयम् ॥
गुरोर्दोषसहस्राणि क्षन्तुमर्हन्ति पण्डिता । सर्वघ्न त विनिघ्नन्ति नीतिज्ञा स्वगुरु विना ॥
गृह्णन्त यदि सर्वस्व शपन्त निष्ठुर गुरुम् । साधवस्त न निन्दन्ति प्रणमन्ति स्वभक्तित
ये द्विषन्ति च निन्दन्ति गुरमिष्ट सुरात्परम् । पच्यन्ते तेऽन्धकूपे च यावच्चन्द्रदिवाकरौ
पुरीष भुञ्जते नित्यं क्षुधिता यमताडने । सर्पप्रमाणकीटैश्च दशिताश्च दिवानिशम् ॥
इत्येवमुक्त्वा मुनय प्रणेमुस्तत्पदाम्बुजम् । सर्व भवति दैवेन प्रशान्तमनसा ध्रुवम् ॥
उन्मुखा मुनय सर्वे बभूवुश्च स्वकर्मणि । ब्रह्मा शरीर संत्यक्तुं व्रीडया च समुद्यत ॥
योगेन भित्त्वा षट्चक्र सर्वान्प्राणान्निरुध्य च । ब्रह्मरन्ध्र समानीय तत्याज स्वेन वर्त्मना
मनसा श्रीहरिं स्मृत्वा नमस्कार चकार ह । न मे मन परद्रव्ये भाविता लोलपीश्वर ॥
प्राणत्यागात्पर तु तपसश्च यशस्विनाम् । बभूव हृदि शल्यैकं ब्रह्मा लीनश्च ब्रह्मणि ॥

१ क नीचानाऽऽच°। २ क. छाद्य°। ख ३ स्त्रीकामी°।

कन्या तातं मृतं दृष्ट्वा विलप्य च भृशं मुहुः । योगेन देहं तत्याज सा प्रलीना च ब्रह्मणि
मृतं तातं च भगिनीं दृष्ट्वा च मुनिपुंगवाः । सस्मरुः श्रीहरिं कोपात्स्वात्मारामं विलप्य च
नारायणो महेशश्च कृपयाऽऽगत्य सत्वरम् । ब्रह्माणं जीवयामास ब्रह्मज्ञानात्सुतां च ताम्
ब्रह्मा पुरो हरिं दृष्ट्वा वरं वव्रे स्म वाञ्छितम् । भक्तिं त्वच्चरणे शश्वन्निश्चलामनपायिनीम्
ब्रह्माणं विरसं दृष्ट्वा तमुवाच कृपानिधिः । प्रबोधवचनं सत्यं नीतिसारं मनोहरम् ॥७५॥

नारायण उवाच--

शृणु ब्रह्मन्प्रवक्ष्येऽहं सुखमुच्चोत्य सांप्रतम् । त्यज लज्जां जगन्नाथ हृदयज्वररूपिणीम् ॥
सत्कीर्तिरपकीर्तिर्वा सुप्रतिष्ठाऽप्युपद्रवः । क्षुद्राणां चैव महतां भवत्येव स्वकर्मणा ॥
सर्वेषामपि सर्वेभ्यः स्वकर्म बलवत्तरम् । तस्मात्सन्तः प्रकुर्वन्ति नित्यं सत्कर्म संततम् ॥
केचित्कुर्वन्ति निर्मूलं सर्वेषामपि कर्मणाम् । कृतं कर्म परं मुक्त्वा हरिपादाब्जचेतसः ॥
कुकर्मणश्चापकीर्तिस्ततो लज्जा भवेद्ध्रुवम् । सुकर्मः सुप्रतिष्ठा सर्वत्र निर्मलं यशः ॥८०॥
कालेन जरसा देहो बलं रूपं शुभाशुभम् । कीर्तिर्वा त्रिगुणा चैव मोहश्चापयशो विधे ॥
ऋणव्रणापवादाश्च जन्तूनां यान्ति कालतः । महतां तौ च पूर्वोक्तौ नेतरश्च कदाचन ॥
सदाऽपकीर्तिर्वसति परस्त्रीषु च वस्तुषु । तस्मात्ते नैव गृह्णन्ति सन्तः स्वक्लेशकारणे ॥
स्मर मामन्तरे ब्राह्मे मदीयं विषयं कुरु । अतस्ते न मनो लोलं भविता परवस्तुषु ॥८४॥
योषिद्रूपा च मे माया सर्वेषां मोहकारिणी । लीलया कुरुते मोहं स्वात्मारामस्य संततम्
नानामुद्राश्रये देहे रागिणां संततं रतिः । स्तनाभिधे मांसपिण्डेऽधरे लालाल्पेऽशुचौ
श्रोणिवक्त्रस्तनं तासां कामदेवालयं सदा । तस्मात्ते न हि पश्यन्ति सन्तो हि धर्मभीरवः
को धर्मः किं यशस्तेषां का प्रतिष्ठा च किं तपः । किं बुद्धिर्विद्या दानं च परस्त्रीषु च यन्मनः
इहाप्यपयशो दुःखं नरकेषु परत्र च । त्रासः प्रहारास्तेषां च ताडनैः कृमिभक्षणैः ॥
दुःखबीजं सुखं मत्वा मूढाश्च दैवदोषतः । परस्त्रीसेवनं प्रीत्या कुर्वन्ति संततं मुदा ॥
उत्तमा मत्पदाम्भोजं सत्कर्म मध्यमा सदा । स्मरन्ति शश्वदधमाः परस्त्रीसेवनं मुदा ॥
विपत्तिः संततं तस्य परवस्तुषु यन्मनः । विशेषतः परस्त्रीषु सुवर्णेषु च भूमिषु ॥९२॥
दैवात्परस्त्रियं दृष्ट्वा विरमेद्यो हरिं स्मरन् । दृष्ट्वा परसुवर्णं च हस्तप्रक्षालनाच्छुचिः ॥
सततं नैव संसक्ताः सन्तः स्वस्त्रीषु कामतः । यक्ष्मव्याधिज्ञानहानिलोकनिन्दाभयेन च ॥
तपस्विनस्तपस्यायां शास्त्रचिन्तासु पण्डिताः । योगिनो योगचिन्तासु वेदार्थेषु च वैदिकाः
साध्व्यश्च पतिसेवासु गृहस्था गृहकर्मसु । विषयेषु विषयिणो मद्भक्ता मम सेवने॥९६॥

१ क. °स्नात्ता न ।

कथयस्व प्राणनाथ सर्वेषां दर्पभञ्जन । दर्पदाभयद प्राणदानैककारणेश्वर ॥ १३ ॥

श्रीकृष्ण उवाच—

येन भूतं गर्वचूर्णं श्रुतं त्रिजगतां विधेः । अन्येषां श्रूयतां राधे व्यासेन कथयामि ते ॥
स्वयं शिवो मदंशश्च संहर्ता जगतां च यः । तेजसा मत्समः पूर्णो ज्ञानेन च गुणेन च
ध्यायन्ति योगिनो यं स योगीन्द्राणां गुरोर्गुरुः । ज्ञानानन्दस्वरूपोऽयं तस्याख्यानं शृणु प्रिये
युगषष्टिसहस्राणि तपस्तप्त्वा दिवानिशम् । भूत्वा च मत्कलापूर्णो बभूव मत्समो विभुः
तपसा तेजसा शश्वत्तेजोराशिर्बभूव ह । सूर्यकोटिप्रभावश्च भक्तानां कल्पपादपः ॥ १८ ॥
ध्यायं ध्यायं च योगीन्द्रास्तत्तेजो बहुकालतः । तदन्तरे च पश्यन्ति स्वरूपमतिसुन्दरम्
शुद्धस्फटिकसंकाशं पञ्चवक्त्रं त्रिलोचनम् । त्रिशूलपट्टिशकरं व्याघ्रचर्माम्बरं वरम् ॥
जपन्तं स्वात्मनाऽऽत्मानं श्वेताब्जबीजमालया । ईषद्धास्यप्रसन्नास्यं चन्द्रचूडं परात्परम्
स्वर्णाकारं जटाभारं दधतं शिरसा मुदा । शान्तं कान्तं त्रिजगतां भक्तानुग्रहकारकम् ॥
अथ स्वमीश्वरं मत्वा प्रदाता सर्वसंपदाम् । ददाति सर्वं सर्वेभ्यो वाञ्छितं कल्पपादपः ॥
यो यं वाञ्छति तं तस्मै वरं दत्त्वा वरेश्वरः । बभूव गर्वसंयुक्तः स्वात्मारामः स्वलीलया
एकदा च वृको दैत्यस्तपस्तेपे शिवस्य च । केदारे च कठोरेण वर्षमेकं दिवानिशम् ॥
नित्यं याति तत्समीपं कृपया च कृपानिधिः । वरं दातुं यथाभीष्टं न जग्राहासुरो वरम्
तपान्ते शंकरः शश्वत्तस्थौ तत्पुरतः स्वयम् । वरदो भक्तिपाशेन क्षणं गन्तुं न स क्षमः ॥
सर्वैश्वर्यं सर्वसिद्धिं भुक्तिं मुक्तिं हरेः पदम् । दैत्यः किंचिन्न गृह्णाति प्रेरितः शूलपाणिना ॥
ध्यायमानं तत्पदाब्जं दृष्ट्वा भक्तो महेश्वरः । अयाचितारं निश्चेष्टं रुरोद प्रेमविह्वलः ॥
अतीव रोदनात्तस्य ध्यानभङ्गो बभूव ह । ददर्श पुरतः साक्षाद्दातारं सर्वसंपदाम् ॥
मन्मायया वरं वव्रे दैत्येन्द्रो भक्तिपूर्वकम् । हस्तं दधे च यन्मूर्ध्नि स भस्म भवितेति च
ओमित्युक्त्वा प्रयान्तं तं दुद्राव दैत्यपुंगवः । मृत्युंजयो मृत्युभयाद्दुद्राव त्रासविह्वलः
पपात डमरुस्तस्य व्याघ्रचर्म मनोहरम् । दिगम्बरो दश दिशो भेने दानवभीतये ॥
न हन्ति तं च कृपया भक्तं च भक्तवत्सलः । दुष्टानुसारं साधुश्च न करोति कदाचन ॥
साधवो घ्नन्ति घ्नन्तं च भृत्यं पुत्रं प्रियां विना । स्वबोधितुं न शक्तश्च स्वात्मानं कृपया समम्
शिवः स्वमृत्युं मत्वा च भीतश्च निरहंकृतः । स्मारं स्मारं च मां भद्रे मामेव शरणं ययौ ॥
दृष्ट्वा स्वाश्रममायान्तं शुष्ककण्ठोष्ठतालुकम् । हे हरे रक्ष रक्षेति जपन्तं भयविह्वलम् ॥
संस्थाप्य तत्समीपे च स दैत्यो बोधितो मया । पृष्टश्च सर्ववृत्तान्तमुवाच मां क्रमेण च ॥
तदा ममाऽऽज्ञया तूर्णं बोधितो माययाऽसुरः । दत्त्वा स्वमूर्ध्नि हस्तं च सद्यो भस्म बभूव ह

एते नियुक्ता एतेषु समासु च प्रशंसिताः । वेदोक्ताचरणेनैव तद्विरुद्धेन निन्दिताः ॥
सर्वे नित्यं प्रशंसन्ति शश्वत्सन्मार्गगामिनम् । शाठ्यश्च अपि निन्दन्ति कुवर्त्मगामिनं विधे
भविता न परस्त्रीषु परवस्तुषु ते मनः । अद्यप्रभृति जीवान्तं विनिष्टं मद्वरेण च ॥
मदीयविषये वत्स्ये मया दत्तं कुरु प्रियम् । अन्तरा मत्पदाम्भोजचिन्तां विघ्नविनाशिनीम् ॥
कन्या भवतु ते ब्रह्मन्कामदेवस्य कामिनी । रतिर्नाम परित्याज्या रत्यधिष्ठातृदेवता ॥
इत्येवमुक्त्वा ब्रह्माणमाश्वास्य कमलापतिः । जगाम नित्यं वैकुण्ठं वृन्दावनविनोदनः॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० राधाकृष्णसं०
ब्रह्मणः प्रसंगो नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

अथ षट्त्रिंशोऽध्यायः ।

राधिकोवाच—

एतेन नियमेनैव ब्रह्मा तत्याज मोहिनीम् । कथं स कुलटाशापादपूज्यः संबभूव ह ॥१॥
कथं तस्य दर्पभङ्गं चकार कमलापतिः । कथयस्व सर्वबीजं सर्वेषामीश्वरः स्वयम् ॥२॥

नारायण उवाच—

रासेश्वरीवचः श्रुत्वा प्रहस्य रसिकेश्वरः । निगूढमितिहासं च तां वक्तुमुपचक्रमे ॥३॥

श्रीकृष्ण उवाच—

ब्रह्मा चिरं तपस्तप्त्वा मत्तो लब्ध्वा वरं वरम् । सृष्टिं नानाविधां कृत्वा विधाता स बभूव ह
तपसां फलदाता च सर्वेषां शान्तिकृत्प्रभुः । आत्मानमीश्वरं ज्ञात्वा महागर्वो बभूव ह ॥
ब्रह्माण्डेषु च सर्वेषु गर्वपर्यन्तमुन्नतिः । इति मत्वा ब्रह्मणश्च दर्पभङ्गः कृतो मया ॥
देवा येषां भवेद्दर्पो ब्रह्माण्डेषु परात्परः । विज्ञाय सर्वं सर्वात्मा तेषां शास्ताऽहमेव च॥
प्रथमे ब्रह्मणो गर्वो मया चूर्णीकृतः श्रुतः । शंकरस्य च पार्वत्याश्चन्द्रस्य च रवेस्तथा॥
वह्नेर्दुर्वाससश्चैव तथा धन्वन्तरेः प्रिये । क्रमेण दर्पभङ्गं च कथयामि निशामय ॥९॥
क्षुद्राणां महतां चैव येषां गर्वो भवेत्प्रिये । एवंविधमहं तेषां चूर्णीभूतं करोमि च ॥

नारायण उवाच—

श्रीकृष्णस्य वचः श्रुत्वा शुष्ककण्ठोष्ठतालुका प्रपच्छ राधा यत्नेन संत्रस्ता भयविह्वला॥

राधिकोवाच—

कस्य केन प्रभावेण महादर्पो बभूव ह । त्वया केन प्रभावेण तस्य भङ्गः कृतः पुरा॥

कथयस्व प्राणनाथ सर्वेषां दर्पभञ्जन । दर्पदाभयद प्राणदानैककारणेश्वर ॥ १३ ॥

श्रीकृष्ण उवाच—

येन भूतं गर्वचूर्णं श्रुतं त्रिजगतां विधेः । अन्येषां श्रूयतां राधे व्यासेन कथयामि ते ॥
स्वयं शिवो मदंशश्च संहर्ता जगतां च यः । तेजसा मत्समः पूर्णो ज्ञानेन च गुणेन च
ध्यायन्ति योगिनो यं स योगीन्द्राणां गुरोर्गुरुः । ज्ञानानन्दस्वरूपोऽयं तस्याख्यानं शृणु प्रिये
युगषष्टिसहस्राणि तपस्तप्त्वा दिवानिशम् । भूत्वा च मत्कलापूर्णो बभूव मत्समो विभुः
तपसा तेजसा,शश्वत्तेजोराशिर्बभूव ह । सूर्यकोटिप्रभाषश्च भक्तानां कल्पपादपः ॥१८॥
ध्यायं ध्यायं च योगीन्द्रास्तत्तेजो बहुकालतः । तदन्तरे च पश्यन्ति स्वरूपमतिसुन्दरम्
शुद्धस्फटिकसंकाशं पञ्चवक्त्रं त्रिलोचनम् । त्रिशूलपट्टिशकरं व्याघ्रचर्माम्बरं वरम् ॥
जपन्तं स्वात्मनाऽऽत्मानं श्वेताब्जबीजमालया । ईषद्धास्यप्रसन्नास्यं चन्द्रचूडं परात्परम्
स्वर्णाकारं जटाभारं दधतं शिरसा मुदा । शान्तं कान्तं त्रिजगतां भक्तानुग्रहकारकम् ॥
अथ स्वमीश्वरं मत्वा प्रदाता सर्वसंपदाम् । ददाति सर्वं सर्वेभ्यो वाञ्छितं कल्पपादपः ॥
यो यं वाञ्छति तं तस्मै वरं दत्त्वा वरेश्वरः । बभूव गर्वसंयुक्तः स्वात्मारामः स्वलीलया
एकदा च वृको दैत्यस्तपस्तेपे शिवस्य च । केदारे च कठोरेण वर्षमेकं दिवानिशम् ॥
नित्यं याति तत्समीपं कृपया च कृपानिधिः । वरं दातुं यथाभीष्टं न जग्राहासुरो वरम्
तपान्ते शंकरः शश्वत्तस्थौ तत्पुरतः स्वयम् । वरदो भक्तिपाशेन क्षणं गन्तुं न स क्षमः ॥
सर्वैश्वर्यं सर्वसिद्धिं भुक्तिं मुक्तिं हरेः पदम् । दैत्यः किंचिन्न गृह्णाति प्रेरितः शूलपाणिना ॥
ध्यायमानं तत्पदाब्जं दृष्ट्वा त्रस्तो महेश्वरः । अयाचितारं निश्चेष्टं रुरोद प्रेमविह्वलः ॥
अतीव रोदनात्तस्य ध्यानभङ्गो बभूव ह । ददर्श पुरतः साक्षाद्दातारं सर्वसंपदाम् ॥
मन्मायया वरं वव्रे दैत्येन्द्रो भक्तिपूर्वकम् । हस्तं दधे च यन्मूर्ध्नि स भस्म भवितेति च
ओमित्युक्त्वा प्रयान्तं तं दुद्राव दैत्यपुंगवः । मृत्युंजयो मृत्युभयाद्दुद्राव त्रासविह्वलः
पपात डमरुस्तस्य व्याघ्रचर्म मनोहरम् । दिगम्बरो दश दिशो मेने दानवभीतये ॥
न हन्ति तं च कृपया भक्तं च भक्तवत्सलः । दुष्टानुसारं साधुश्च न करोति कदाचन ॥
साधवो घ्नन्ति घ्नन्तं च मृत्युं पुत्रं प्रियां विना । स्वबोधितुं न शक्तश्च स्वात्मानं कृपया समम्
शिवः स्वमृत्युं मत्वा च भीतश्च निरहंकृतः । स्मारं स्मारं च मां भद्रे मामेव शरणं ययौ ॥
दृष्ट्वा स्वाश्रममायान्तं शुष्ककण्ठोष्ठतालुकम् । हे हरे रक्ष रक्षेति जपन्तं भयविह्वलम् ॥
संस्थाप्य तत्समीपे च स दैत्यो बोधितो मया । पृष्टश्च सर्ववृत्तान्तमुवाच मां क्रमेण च ॥
तदा ममाऽऽज्ञया तूर्णं बाधितो माययाऽसुरः । दत्त्वा स्वमूर्ध्नि हस्तं च सद्यो भस्म बभूव ह

तदा सिद्धाः सुरेन्द्राश्च मनीन्द्रा मनवो मुदा । तुष्टुवुर्मां सुभक्त्या च लज्जया लज्जितः शिवः
बभूव चूर्णस्तद्गर्वो जगाम बोधितो मया । वरं ददाति वरदस्ततो बोध्यो ह्यहं शिवः ॥४१॥
अथ गर्वान्वितो रुद्रो हन्तुं त्रिपुरमुल्बणम् । मत्वा मनसि संहर्ता सर्वेषां जगतामिति ॥
कोऽयं पतङ्गवद्दैत्य इति मत्वा ययौ रणम् । विहाय शूलं मद्दत्तं मदीयकवचं परम् ॥
चिरं बभूव समरं वर्षमेकं दिवानिशम् । न कोऽपि जेतुं कं शक्तो द्वौ समौ समरे तदा ॥
पृथिव्यां च रणं कृत्वा दैत्येन्द्रो मायया प्रिये । अत्यूर्ध्वं च समुत्तस्थौ पञ्चाशत्कोटियोजनम्
उत्तस्थौ शंकरस्तूर्णं हन्तुं दैत्यं जगत्प्रभुः । बभूव तत्र युद्धं च मासमेकं निराश्रये ॥
अस्त्राणि चापं चिच्छेद शंकरस्यासुरो बली । रथं बभञ्ज दैत्येन्द्रश्चापमस्त्राणि शंकरात् ॥
जघान मुष्टिना रुद्रो दानवेन्द्रं प्रकोपतः । वज्रमुष्टिप्रहारेण सद्यो मूर्छामवाप सः ॥४८॥
क्षणेन चेतनां प्राप्य कोपाद्दानवपुंगवः । शिवं शयानमुत्तोल्य पातयामास भूतले ॥
सरथे पातिते रुद्रे देवा देवर्षयो भिया । तुष्टुवुर्मां परित्राहि कृष्णेत्युक्त्वा पुनः पुनः ॥
हरः सस्मार मामेव निर्भयो भयकारणम् । तुष्टाव भक्त्या स्तोत्रेण मया दत्तेन संकटे ॥
तदाऽहं कलया शीघ्रं वृषरूपं विधाय च । शयानं शंकरं धृत्वा विषाणाभ्यामुरुक्रमम् ॥
ददौ तस्मै स्वकवचं स्वशूलमरिमर्दनम् । प्राप्य तद्दानवस्थानमत्यूर्ध्वं च निराश्रयम् ॥
मया दत्तेन शूलेन जघान त्रिपुरं हरः । मामेव दर्पहन्तारं तुष्टाव व्रीडितः पुनः ॥५४॥
सद्यः पपात दैत्येन्द्रश्चूर्णीभूतश्च भूतले । देवता मुनयः सर्वे तुष्टुवुः शंकरं मुदा ॥५५॥
तत्याज शंकरो दर्पं विघ्नबीजं ततो विभुः । ज्ञानानन्दस्वरूपश्च निर्लिप्तः सर्वकर्मसु ॥
ततोऽहं वृषरूपेण वहामि तेन तं प्रियम् । मम प्रियतमो नास्ति त्रैलोक्येषु शिवात्परः
मनःस्वरूपो ब्रह्मा मे ज्ञानरूपो महेश्वरः । बुद्धिर्भगवती दुर्गा मूलप्रकृतिरीश्वरी ॥
निद्रादयः शक्तयो यास्ता, सर्वाः प्रकृतेः कलाः । वागधिष्ठातृदेवी या सा स्वयं च सरस्वती
मम कल्याणाधिदेवो हर्षरूपो गणेश्वरः । परमार्थः स्वयं धर्मो मम भक्तो हुताशनः ॥
सर्वैश्वर्याधिदेवी मे सर्वगोलोकवासिनः । प्राणाधिष्ठातृदेवी त्वं सदा प्राणाधिका मम[1] ॥
गोपाङ्गनास्तव कला अत एव मम प्रियाः । मल्लोमकूपजा गोपाः सर्वे गोलोकवासिनः ॥
तेजःस्वरूपः सूर्यश्च प्राणा मे वायवः स्मृताः । जलाधिदेवो वरुणः पृथिवी मे मलोद्भवा ॥
मम शून्यो महाकाशो मदनो मानसोद्भवः । इन्द्रादयः सुराः सर्वे मत्कलांशांशसंभवाः
एतानि सृष्टिबीजानि महदादीनि चैव हि । सर्वेषां बीजरूपोऽहं स्वयमात्मा निराश्रयः ॥
जीवो मे प्रतिबिम्बश्च कर्मभोगाधिकारवः । अहं साक्षी निरीहश्च न भोगी सर्वकर्मसु ॥

१ क. भ्यो श्र॰ ।

भक्तध्यानार्थदेहोऽयं मम स्वेच्छामयस्य च । प्रकृतिः पुरुषोऽहं च एक एव परात्परः ॥
इत्येवं कथितं राधे शिवदर्पविमोचनम् । सृष्टिबीजं च शृणु मे पार्वतीदर्पमोचनम् ॥

नारायण उवाच—

इत्युक्तवन्तं श्रीकृष्णं परमात्मानमीश्वरम् । पप्रच्छ राधिका देवी निगूढमभिवाञ्छितम् ॥

राधिकोवाच—

मम वन्सर्वतत्त्वज्ञ सर्वबीज सनातन । वद मे वाञ्छितं प्रश्नं सर्वसंदेहभञ्जनम् ॥८०॥
सर्वज्ञानाधिदेवश्च शंकरः सर्वतत्त्ववित् । मृत्युंजयः कालकालो भगवांस्त्वत्समो महान् ॥
कथं विभूतिगात्रश्च पञ्चवक्त्रस्त्रिलोचनः । दिगम्बरो जटाधारी नागसंघातभूषणः ॥
वृषेणाटति देवेन्द्रो विहाय वरवाहनम् । न बिभर्ति कथं रत्नं सारनिर्माणभूषणम् ॥
वह्निशुद्धांशुकं त्यक्त्वा धत्ते शार्दूलचर्मकम् । धत्ते धत्तूरकुसुमं पारिजातं विहाय च ॥
नास्ति रत्नकिरीटेच्छा जटाया प्रीतिरुत्तमा । दिव्यलोकं परित्यज्य स्मशानेषु स्पृहा विभोः
चन्दनागुरुकस्तूरीसुगन्धिकुसुमानि च । त्यक्त्वा स्पृहा बिल्वपत्रे बिल्वकाष्ठानुलेपने ॥
एतद्वेदितुमिच्छामि व्यासेन कथय प्रभो । श्रोतुं कौतूहलं नाथ वर्धते मे मनःस्पृहा ॥
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः । कथां कथितुमारेभे कृत्वा राधां स्ववक्षसि ॥

श्रीकृष्ण उवाच—

युगषष्टिसहस्राणि तपः कृत्वा महेश्वरः । विरराम पूर्णतमो ध्यात्वा मां मनसा मुदा ॥
एतस्मिन्नन्तरे मां च ददर्श पुरतः स्थितम् । अतीव कमनीयाङ्गं किशोरं श्यामसुन्दरम्
अहोऽनिर्वचनीयं च दृष्ट्वा रूपमनुत्तमम् । न बभूव वितृष्णश्च लोचनाभ्यां त्रिलोचनः
पश्यन्निमेषरहित इति मत्वा स्वमानसे । भवत्सुद्रेकान्महाभक्तो रुरोद प्रेमविह्वलः ॥
सहस्रवदनोऽनन्तो भाग्यवांश्च चतुर्मुखः । बहुभिर्लोचनैर्दृष्ट्वा तुष्टाव बहुभिर्मुखैः ॥
पश्यामि किंवा किं स्तौमि संप्राप्य नाथमीदृशम् । आस्यैकेन लोचनाभ्यां चतुर्थो स पुनः पुनः
स्वमानसे कुर्वतीदं शंकरे च तपस्विनि । तद्बभूव चतुर्वक्त्रं पूर्वेण सह पञ्चमम् ॥८५॥
एकैकवक्त्रं शुशुभे लोचनैश्च त्रिभिस्त्रिभिः । बभूव तेन तन्नाम पञ्चवक्त्रस्त्रिलोचनः ॥
स्तवनादधिकप्रीतिः शिवस्य दर्शने मम । तेनाधिकानि तस्यैवं बभूवुर्लोचनानि च ॥
बभूवुः गुणरूपाणि तस्य ब्रह्मस्वरूपिणः । सत्त्वं रजस्तम इति तस्य हेतुं निशामय ॥
सत्त्वांशेन दृशा शंभुः पश्यन्याति च स त्विकान् । राजसेन राजसिकांस्तामसेन च तामसान् ।
चक्षुषस्तामसात्स्याद्दशस्थाद्रस्य च । संहारकाले संहर्तुरशिराभिर्भवेत्क्रुधा ॥ ९० ॥
कोटितालप्रमाणश्च सूर्यकोटिसमप्रभः । लेलिहानो दीर्घशिखस्त्रैलोक्यं दग्धुमीश्वरः ॥

विभूतिगात्रः स विभुः सतीसंस्कारभस्मना । धत्ते तस्या अस्थिमालां प्रेमभावेन मस्म च
स्वात्मारामो यद्यपीशस्तथाऽपि पूर्णमङ्गलम् । सतीशवं गृहीत्वा च भ्रामं भ्रामं रुरोद ह ॥
प्रत्यङ्गं चापि तस्याश्च पपात यत्र यत्र ह । सिद्धपीठस्तत्र तत्र बभूव मन्त्रसिद्धिकृत्
त(य)दा शवावशेषं च कृत्वा वक्षसि शंकरः । पपात मूर्छितो भूत्वा सिद्धिक्षेत्रे च राधिके
तदा गत्वा महेशं तं कृत्वा क्रोडे प्रबोध्य च । अददां दिव्यतत्त्वं च तस्मै शोकहरं परम्
तदा शिवश्च संतुष्टः स्वं लोकं च जगाम ह । मूर्त्यन्तरेण कालेन तां संप्राप प्रियां सतीम्
दिव्यस्रग्धारियोगेन नेच्छा नित्ये परे विभोः । जटां तपस्याकालीनां धत्तेऽद्यापि विवेकतः
न चेच्छा केशसंस्कारे स्वाङ्गे वेषे च योगिनः । समता चन्दने पङ्के लोष्टे रत्ने मणीश्वरे ॥
गरुडद्वेषिणो नागाः शंकरं शरणं ययुः । बिभर्ति कृपया स्वाङ्गे तानेव शरणागतान् ॥
वाहनं वृषरूपोऽहमन्यस्तं वोढुमक्षमः । त्रिपुरस्य वधे पूर्वं मत्कलांशसमुद्भवः ॥ १ ॥
पारिजातादिकं पुष्पं सुगन्धिचन्दनादिकम् । मयि संन्यस्य तेष्वेवं प्रीतिर्नास्ति कदाचन
धत्तूरे तत्समा प्रीतिर्बिल्वपत्रानुलेपने । गन्धहीने सुगन्धे च योगीष्टे व्याघ्रचर्मणि ॥२॥
दिव्यलोके दिव्यतल्पे जनतायां न तन्मनः । श्मशानेऽतीव रहसि ध्यायते मामहर्निशम् ॥
आब्रह्मस्तम्बपर्यन्तं समं च मन्यते शिवः । ममानिर्वचनीयेऽत्र रूपे तन्मनमानसम् ॥
ब्रह्मणः पतनेनापि शूलपाणेः क्षणो भवेत् । तस्याऽऽयुषः प्रमाणं च नाहं जानामि का श्रुतिः
ज्ञानं मृत्युंजय शूलं धत्ते मत्तेजसा समम् । विना मया न कश्चित्तं शंकरं जेतुमीश्वरः
शंकरः परमात्मा मे प्राणेभ्योऽपि परः शिवः । त्र्यम्बके मन्मनः शश्वत्प्रियो मे भवात्परः
ब्रह्माण्डनिकरं छन्नं मया मन्मायया सदा । सा कम्पति हरं शश्वच्च तं मोहितुं क्षमा
न संवसामि गोलोके वैकुण्ठे तव वक्षसि । सदा शिवस्य हृदये निबद्धः प्रेमपाशतः ॥
स्वरसिद्धं सुगानेन पञ्चवक्त्रेण शंकरः । शश्वद्गायति मद्गाथां तेनाहं तत्समीपतः ॥
स्रष्टुं शक्तो हि नष्टुं च भ्रूभङ्गलीलयाऽपि यः । ब्रह्माण्डनिकरं योगान्न योगी शंकरात्परः ॥
दिव्यज्ञानेन यः स्रष्टुं नष्टुं भ्रूभङ्गलीलया । मृत्युं कालादिकं शक्तो न ज्ञानी शं० ॥
मम भक्तिं च दास्यं च मुक्तिं च सर्वसंपदः । सर्वसिद्धिं दातुमीशो न दाता शं० ॥
पञ्चवक्त्रेण मन्नाम यो हि गायत्यहर्निशम् । मद्रूपं ध्यायते शश्वन्न भक्तः शं० ॥१९॥
अहं सुदर्शनं धंमुस्तेजसा च वयं समाः । ब्रह्मा स्रष्टा च योगेन नास्माभिस्तेजसा समः

१ क. दिग्वस्त्रधारी यो° । २ क. पदे । ३ ग. स्वाङ्गवेषेण यो° । ४ क. योगीष्टे । ५ क. °ब्रह्मं मरम् । ६ ग. च । ७ क. समा ।

इत्येवं कथितं सर्वं शंकरस्य यशोऽमलम् । तथाऽप्यस्य दर्पभङ्गं किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० श्रीकृष्णकृतशंकर-
प्रशंसा नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

अथ सप्तत्रिंशोऽध्यायः ।

राधिकोवाच—

एवंभूतस्य च विभोः सर्वेशस्य महात्मनः । न शप्तं कथमुच्छिष्टं ब्रूहि संदेहभञ्जन ॥

श्रीकृष्ण उवाच—

शृणु देवि प्रवक्ष्येऽहमितिहासं पुरातनम् । पापेन्धनानां दहने ज्वलदग्निशिखोपमम् ॥
सनत्कुमारो वैकुण्ठमेकदा च जगाम ह । ददर्श भुक्तवन्तं च नाथं नारायणं द्विजः ॥
तुष्टाव गूढैः स्तोत्रैश्च प्रणम्य भक्तितो मुदा । अवशेषं ददौ तस्मै संतुष्टो भक्तवत्सलः ॥
प्राप्तमात्रेण तत्रैव भुक्तं तेनैव किंचन । किंचिद्रक्षां बन्धूनां भक्षणाय च दुर्लभम् ॥
सिद्धाश्रमे च यद्दत्तं गुरवे शूलपाणिने । भवत्युदेकाश्च तत्सर्वं भुक्तं च प्राप्तिमात्रतः ॥
भुक्त्वा सुदुर्लभं वस्तु ननर्त प्रेमविह्वलः । पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रो मुदाऽन्वितः ॥
गायन्मम गुणान्भक्त्या सुकण्ठः पञ्चवक्त्रतः । रागमेकैकतानेन तालमानेन सुन्दरम् ॥
पपात डमरुर्हस्ताच्छृङ्गं च व्याघ्रचर्म च । स्वयं निपत्य पश्चाच्च रुद्रन्मूर्छामवाप ह ॥९॥
अतीव कमनीयं तद्रूपं ध्यात्वैकमानसः । सहस्रदलमध्यस्थं मा पश्यन्हृत्सरोरुहे ॥१०॥
एतस्मिन्नन्तरे देवी दुर्गा दुर्गतिनाशिनी । मुदाऽऽजगाम शीघ्रं तत्प्रसन्नवदनेक्षणा ॥
रुदन्तं मूर्छितं दृष्ट्वा निपतन्तं च भक्तितः । प्रहस्य वार्तां पप्रच्छ कुमारं शूलपाणिनः ॥
सर्वं तां कथयामास कुमारः संपुटाञ्जलिः । श्रुत्वा चुकोप सा देवी शिवं प्रस्फुरिताधरा ॥
तां शप्तुमुद्यतां देवीमुत्थाय च त्रिलोचनः । बोधयामास विविधं तुष्टाव संपुटाञ्जलिः ॥
श्रुत्वा मनोहरं स्तोत्रं न शशाप शिवं शिवा । दुष्टे चक्रे तदुच्छिष्टमभक्ष्यं विदुषामपि ॥
न लोकानां प्रभावश्च तपःसौभाग्यतेजसाम् । ब्रह्माण्डे सर्वसंहर्ता चकम्पे पार्वतीभये ॥
उवाच तं जगन्माता नीतिसारं परं वचः । गणप्रसूः सकोपा च रक्तपङ्कजलोचना ॥
अहो तपःप्रभावश्च तेजसश्च न जीविनाम् । स ब्रह्माण्डस्य संहर्ता चकम्पे शैलकन्यया ॥

पार्वत्युवाच—

त्वं पोष्टा जगतां पाता ममैव च विशेषतः । वक्ता चतुर्णां वेदानां जनकैश्च स्वयं विभुः ॥

१ क. 'द्रुरुपनेक' ।

मुक्तिप्रदाता भक्तानां दाता च सर्वसंपदाम्। त्वं चेत्करोषि दुर्नीतिं को वा धर्मं च पाति वै,
सदा ते परिपाल्याऽहं पोष्या भक्त्या च किंकरी। वञ्चिता कर्मदोषेण हरनिर्माल्यभक्षणे
किंचिच्छुद्धं हिरण्येन किंचिद्वस्तु च वायुना। किंचित्प्रक्षालनेनैव सर्वं विष्णोर्निवेदनात्
विष्णोर्निवेदितान्नेन यष्टव्याः सर्वदेवताः। पितरोऽतिथयश्चैवमिति वेदेषु निश्चितम्॥
अनिवेद्यमभक्ष्यं च नैवेद्यमुदरे हरेः। त्यक्त्वा करोति यो भक्त्या पार्षदप्रवरो भवेत्॥
अमृतं सर्ववस्तूनामिष्टं सारं सुदुर्लभम्। विष्णोर्निवेदितान्नस्य कलां नार्हति षोडशीम्॥
हन्त्यकालिकमृत्युं तदमृतं मृदरञ्जनम्। नैवेद्यं च हरेरेव हरितुल्यं करोत्यहो॥२१॥
यदृच्छया तन्नैवेद्यं यो भुङ्क्ते साधुसङ्गतः। षष्टिवर्षसहस्राणां प्राप्नोति तपसः फलम्॥
यो निवेद्य हरिं भुङ्क्ते भक्त्या भक्तश्च नित्यशः। किंवा तपस्यां कर्ता च स हरेस्तेजसा समः
श्रुतं पुरा त्वन्मुखतः पुष्करे मुनिसंसदि। अहं वेदविधाता न किमहं वक्तुमीश्वरी॥
सुचिरं च तपस्तप्त्वा मया लब्धस्त्वमीश्वरः। त्वया विष्णोः प्रसादेन वञ्चिताऽहं कथं प्रभो
ऽतो न दत्तं नैवेद्यं विष्णोर्मह्यं त्वयाऽधुना। अतो मत्तो गृहाणैतत्फलमेव महेश्वर॥
अद्यप्रभृति ये लोका नैवेद्यं भुञ्जते तव। ते जन्मैकं सारमेया भविष्यन्त्येव भारते॥२२॥
इत्युक्त्वा पार्वतीमाता रुरोद पुरतो विभोः। दृष्टिः पपात तत्कण्ठे नीलकण्ठो बभूव ह॥
तदा शिवः शिवां भक्त्या कृत्वा वक्षसि सादरम्। तन्मानभङ्गं स्तोत्रेण विनयेन चकार ह
करेण चक्षुषोर्नीरं संमृज्य च पुनः पुनः। बोधयामास विविधैर्नीतिवाक्यैर्मनोहरैः॥
परितुष्टा च सा देवी भर्तारं समुवाच ह। कलेवरं च त्यक्ष्यामि नैवद्येन विना हरेः॥
बिभर्ति(र्मि) देहं सततं तव सौभाग्यवर्धनम्। कथं वहामि सौभाग्यरहितं च कलेवरम्॥
अपूर्वं तव नैवेद्यं जन्ममृत्युजराहरम्। कृतं दुष्टं च यत्तस्मात्पश्य देहं त्यजामि च॥
लिङ्गोपरि च यद्दत्तं तदेवाग्राह्यमीश्वर। सुपवित्रं भवेच्चैतत् विष्णोर्नैवेद्यमिश्रितम्॥२३॥
इत्येवमुक्त्वा सा देवी देहं त्यक्तुं समुद्यता। त्रस्तो हरस्तत्पुरतः स्तुत्वा च स्वीचकार ह

शंकर उवाच—

स्थिरा भव महादेवि चण्डिके जगदम्बिके। ममापराधमखिलं क्षन्तुमर्हसि सुन्दरि॥
मां भृत्यं तपसा क्रीतं कृपां कुरु ममोपरि। ब्रह्मविष्णुमहेशानां बीजभूते सनातनि॥
अहो गोलोकनाथस्य गुणातीतस्य निर्गुणे। सर्वशक्तिस्वरूपे च सदैव॥
साकारे च निराकारे नित्ये स्वेच्छामये प्रिये। कृपया तद्वि ॥
सर्वबीजस्वरूपे च महामाये मनोहरे। सर्वसिद्धिप्रदे दे

इच्छेवं श्रीहरेः साक्षान्नाहं दातुमपि क्षमः । तदा देहं परित्यज्य निर्गुणं व्रज निर्गुणे ॥
इत्येवमुक्त्वा पुरतस्तस्थौ च चन्द्रशेखरः । बभूव सुप्रसन्ना सा प्रणनाम हरं परम् ॥४७॥
इत्येवं पार्वतीस्तोत्रं शंकरेण कृतं पुरा । यः पठेद्विपदा मत्तः स भयादेव मुच्यते ॥
मित्रभेदो भवेद्दूरं तत्संप्रीतिर्भवेत्पुरा । पार्वती परितुष्टा च न त्यजेत्तस्य मन्दिरम् ॥

श्रीकृष्ण उवाच—

श्रुत्वा प्रतिज्ञां नाथस्य परितुष्टा बभूव सा । जगाम स्वर्णदीं तूर्णं स्नानार्थं शंकराज्ञया
स्नात्वा संपूज्य भक्त्या च सुरमिष्टं च निर्गुणम् । चकार प्रस्तुतं शीघ्रं मिष्टान्नं व्यञ्जनानि च
शिवः स्नात्वा च संपूज्य ब्रह्मज्योतिः सनातनम् । तुष्टाव परया भक्त्या मामेव हृदयस्थितम्
गत्वा सर्वमहं भुक्त्वा तस्मै दत्त्वाऽभिवाञ्छितम् । नैवेद्यं पार्वती लेभे तव मूर्ध्ने समागता
भुक्त्वाऽवशेषं सा देवी सह भर्त्रा मुदाऽन्विता । तुष्टाव शंकरं भक्त्या प्रणनाम मुहुर्मुहुः ॥
इत्येवं कथितं सर्वं त्वया पृष्टं सुरेश्वरि । अभिशापं शंकरस्य निर्माल्यं येन हेतुना ॥५१॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० हरिनिर्माल्यशाप-
प्रसङ्गो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

अथाष्टात्रिंशोऽध्यायः ।

श्रीकृष्ण उवाच—

दर्पभङ्गः श्रुतो देवि शंकरस्य जगद्गुरोः । अधुना श्रूयतां मत्तो दुर्गादर्पविमोचनम् ॥१॥
तेजसा सर्वदेवानामाविर्भूय जगत्प्रसूः । दधार कामिनीरूपं कमनीयं मनोहरम् ॥२॥
निहत्य दानवेन्द्रांश्च ररक्ष देवताकुलम् । लेभे जन्म ततो देवी जठरे दक्षयोषितः ॥३॥
पिनाकपाणिं जग्राह सा देवी सुरसाधनम् । शश्वत्परमभक्त्या च सिषेवे स्वामिनं सती
दक्षेण सार्धं देवेन बभूव विषयश्रुता । निरर्थकं दैवयोगात्पुरा वै सुरसंसदि ॥५॥
दक्षश्चकार यज्ञं च तत आगत्य कोपतः । सर्वान्निमन्त्रयामास तत्रैव शंकरं विना ॥
सस्त्रीका देवताः सर्वा आजग्मुर्दक्षमन्दिरम् । सगणः शंकरः कोपान्नाऽऽजगामाभिमानतः
सती पतिं च मोहेन बोधयामास यत्नतः । न तं चालयितुं शक्ता बभूव पश्यता स्वयम्
आजगाम पितुर्गेहं दर्पात्तस्य विनाऽऽज्ञया । तस्य शापेन तस्याश्च दर्पभङ्गो बभूव ह ॥
न हि संभाषणं चक्रे वाङ्मात्रेण पिता च ताम् । श्रुत्वा च निन्दां भर्तुश्च देहं तत्याज मानतः
एवं प्रिये निगदितं सतीदर्पविमोचनम् । तस्या जन्मान्तरं नित्यं दर्पभङ्गश्च श्रूयताम् ॥
लेभे जन्म सती शीघ्रं जठरे शैलयोषितः । शिवस्तस्यास्थितामस्म चास्थि जग्राह भक्तितः
चकार माल्यामस्थ्नां च भस्मना तनुलेपनम् । स्मारं स्मारं सतीं प्रेम्णा भ्रामं भ्रामं पुनःपुनः

सुषाव मेना तां देवीमतीव सुमनोहराम्। सृष्टौ विधातुस्तस्याश्च सुषमा नास्ति कुत्र च॥
गुणप्रसूर्गुणान्सर्वान्सर्वरूपाणि मार्ति सा। सर्वाश्च देवपत्न्यस्तत्कलां नार्हन्ति षोडशीम्॥
बभूव वर्धमाना सा शुक्ले चन्द्रकला यथा। अतीव यौवनस्था च शैलगेहे दिने दिने ॥
बभूवाऽऽकाशवाणी च तां संबोध्य जगत्प्रसूम्। शिवे शिवं च तपसा कठोरेण लभेति च॥
विनेश्वरं न तपसा प्राप्या हि गर्भसंभवम्। प्रहस्य तस्थौ श्रुत्वेति सा च यौवनगर्विता॥
मम जन्मान्तरीयं च भस्मापि च बिभर्ति यः। स मां प्रौढां कथं दृष्ट्वा न गृह्णात्यत्र जन्मनि॥
यो विदग्धश्च ब्रह्माण्डं बभ्राम मम शोकतः। स कथं मां न गृह्णाति दृष्ट्वा परमसुन्दरीम्॥
दक्षयज्ञं यो बभञ्ज मम हेतोः कृपानिधिः। स कथं मां न गृह्णाति पत्नीं जन्मनि जन्मनि॥
या यस्य पत्नी यो यस्या भर्ता प्राक्तनतः पुरा। कुतो विश्व तयोर्भेदो नियेको नान्यथा भवेत्॥
सर्वरूपगुणाधारं मत्वा स्वमतिमानतः। न चकार तपः साध्वी न विज्ञाय तमीश्वरम्॥
सुन्दरीषु च सर्वासु मत्तो नास्त्येव सुन्दरी। इतीति मत्वा गर्वेण न चकार तपः शिवा
रूपयौवनवेषाणां पुमान्ग्राही स्वयोषिताम्। शिवो मच्छ्रुतिमात्रेण मां गृह्णाति विना तपः
इतीति मत्वा गिरिजा तस्थौ हिमगिरेर्गृहे। शश्वत्सहचरीमध्ये क्रीडोन्मत्ता दिवानिशम्॥
एतस्मिन्नन्तरे तूर्णं दूतः शैलेन्द्रसंसदि। उवाचाऽऽगत्य मधुरं तत्पुरः संपुटाञ्जलिः॥

दूत उवाच—

उत्तिष्ठोत्तिष्ठ शैलेन्द्र गच्छाक्षयवटान्तिकम्। आजगाम महादेवः सगणो वृषवाहनः॥
मधुपर्कादिकं दत्त्वा भक्तिनम्रात्मकंधरः। पूजनं कुरु शैलेन्द्र देवेन्द्रं तमतीन्द्रियम्॥
सिद्धिस्वरूपं सिद्धेशं योगीन्द्राणां गुरोर्गुरुम्। मृत्युंजयं कालकालं ब्रह्मज्योतिः सनातनम्॥
परमात्मस्वरूपं च सगुणं निर्गुणं विभुम्। भक्तध्यानार्थममलं दधानं देहमीश्वरम्॥
शैलो दूतवचः श्रुत्वा समुत्तस्थौ मुदाऽन्वितम्। मधुपर्कादिकं नीत्वा जगाम शंकरान्तिकम्॥
देवी दूतवचः श्रुत्वा प्रसन्नवदनेक्षणा। इतीति मेने मद्धेतोराजगाम महेश्वरः॥२३॥
चकार वेषमतुलं दधार वस्त्रमुत्तमम्। रत्नेन्द्रसारालंकारान्रत्नमालां मनोहराम्॥२४॥
पारिजातप्रसूनानां मालां चन्दनसंयुताम्। चकार शंकरार्थं च मत्वा मालां मनोहराम्॥
रत्नसिंहासनस्था सा ददर्श दर्पणे मुखम्। कस्तूरीबिन्दुना सार्धं सिन्दूरबिन्दुभूषितम्॥
आरक्तनेत्रयुगुलं निर्मलाञ्जनसंयुतम्। शरन्मध्याह्नममलं यथाऽलिपङ्क्तिवेष्टितम्॥२७॥
सुकोमलोष्ठयुगुलं ताम्बूलरागसंयुतम्। अतीव सुन्दरं रम्यपक्वबिम्बफलं यथा॥२८॥
रत्नकुण्डलदीप्त्या च गण्डस्थलविराजितम्। सूर्योदयेन ज्वलितं सुमेरुशिखरं यथा॥
अदृश्यनिर्वचनीयं च दन्तपङ्क्तिमनोहरम्। यथा मुक्तासमूहं च सजलं जलदागमे॥

गर्भमुक्तासमायुक्तं सुचारुनासिकोत्तमम् । सुशोभितं यथा मेरुं स्वर्णदीजलधारया ॥ ४१ ॥
मालतीमाल्यसंयुक्तकबरीभारसंयुतम् । बकपङ्क्तिसुशोभाढ्यं नवीनं जलदं यथा ॥ ४२ ॥
तप्तकाञ्चनवर्णाभं चारुवक्षःस्थलोज्ज्वलम् । रत्नेन्द्रसारहाराक्तं कस्तूरीकुङ्कुमान्वितम् ॥
चारुचम्पकवर्णाभं स्तनयुग्मं मनोहरम् । बदरीफलतुल्यं च चारुपत्रकशोभितम् ॥ ४४ ॥
मध्यं मनोहरं क्षीणं निम्ननाभिस्थलोज्ज्वलम् । अतीव सुन्दरं रम्यमुदरं वर्तुलाकृति ॥
रम्भास्तम्भविनिन्द्यैकमुरुयुग्मं मनोहरम् । श्रोणीयुग्मं सुकठिनं निगूढं मंशुकेन च ॥ ४६ ॥
स्थलपद्मप्रभामुष्टपदयुग्मं मनोहरम् । रत्नपाशकसंयुक्तं सिद्धालक्तकभूषितम् ॥ ४७ ॥
दधतं रत्नमञ्जीरं राजहंसानुकारि च । रत्नेन्द्रसाराभरणं निर्मितं विश्वकर्मणा ॥ ४८ ॥
करं सुकोमलतरं सुन्दरं कनकप्रभम् । रत्नकङ्कणकेयूरशङ्खभूषणभूषितम् ॥ ४९ ॥
बिभ्रत्सद्रत्नमुकुरं लीलाकमलमुज्ज्वलम् । रत्नाङ्गुलीयमतुलं दधतं सुमनोहरम् ॥ ५० ॥
दृष्ट्वा स्वरूपमतुलं दध्यौ शंकरमीश्वरम् । विशिष्य मनसा शश्वत्तच्चरणपङ्कजम् ॥ ५१ ॥
पितरं मातरं बन्धुं साध्वीवर्गं सहोदरम् । अन्तरे सा न सस्मार किंचिदेव शिवं विना ॥
अथ शैलेश्वरस्तत्र ददर्श चन्द्रशेखरम् । स्वर्णदीपुलिनाद्रम्यादुत्पतन्तं च सस्मितम् ॥
दधतं संस्कृतां मालां जपन्तं मम नामकम् । तप्तस्वर्णप्रभाजुष्टजटाराशिविराजितम् ॥
वृषभस्थं शूलपाणिं सर्वभूषणराजितम् । नागयज्ञोपवीतं च सर्पभूषणभूषितम् ॥ ५५ ॥
शुद्धस्फटिकसंकाशं व्याघ्रचर्मवरं परम् । विभूतिभूषिताङ्गं तमस्थिमालं दिगम्बरम् ॥
पञ्चवक्त्रं त्रिनयनं सूर्यकोटिसमप्रभम् । ददर्श रुद्रान्परितो ज्वलतो ब्रह्मतेजसा ॥ ५७ ॥
शिववामे महाकालं दक्षिणे नन्दिकेश्वरम् । भूतप्रेतपिशाचांश्च कूष्माण्डान्ब्रह्मराक्षसान् ॥
वेतालान्क्षेत्रपालांश्च भैरवान्भीमविक्रमान् । सनकं च सनन्दं च कुमारं च सनातनम् ॥
जैगीषव्यं देवलं च कणादं गौतमं तथा । पिप्पलादं कणखनं वोढुं पञ्चशिखं कठम् ॥
जाबालिं करखं कर्णं लोमशं सूर्यवर्चसम् । कात्यायनं पाणिनिं च शङ्खं दुर्वाससं ततः ॥
शातातपं पारिभद्रमष्टावक्रं मरुद्वम् । एतान्सुरोगमान्दृत्वा प्रणनाम शिवं गिरिः ॥ ६२ ॥
मूर्ध्ना निपत्य भूमौ स दण्डवत्संपुटाञ्जलिः । अथो अनश्वरया भक्त्या धृत्वा तच्चरणाम्बुजम् ।
ननाम चाश्रुनेत्रः स पुलकाञ्चितविग्रहः ॥ ६३ ॥
धर्मदत्तेन स्तोत्रेण तुष्टाव परमेश्वरम् । तुष्टे माले दिनेऽतीते पुष्करे सूर्यपर्वणि ॥ ६४ ॥

हिमालय उवाच—

त्वं ब्रह्मा सृष्टिकर्ता च त्वं विष्णुः परिपालकः । त्वं शिवः शिवदोऽनन्तः सर्वसंहारकारकः

---

१ स मुकुन्दम् । २ ख. कचम् । ३ म. जाबालिम् । ४ ख. करथं कणम् ।

त्वमीश्वरो गुणातीतो ज्योतीरूपः सनातनः । प्रकृतः प्रकृतीशश्च प्राकृतः प्रकृतेः परः ॥
नानारूपविधाता त्वं भक्तानां ध्यानहेतवे । येषु रूपेषु यत्प्रीतिस्तत्तद्रूपं बिभर्षि च ॥
सूर्यस्त्वं सृष्टिजनक आधारः सर्वतेजसाम् । सोमस्त्वं सस्यपाता च सततं शीतरश्मिना
वायुस्त्वं वरुणस्त्वं च त्वमग्निः सर्वदाहक. । इन्द्रस्त्वं देवराजश्च कालो मृत्युर्यमस्तथा
मृत्युंजयो मृत्युमृत्युः कालकालो यमान्तकः । वेदस्त्वं वेदकर्ता च वेदवेदाङ्गपारगः ॥
विदुषां जनकस्त्वं च विद्वांश्च विदुषां गुरुः । मन्त्रस्त्वं हि जपस्त्वं हि तपस्त्वं तत्फलप्रदः ॥
वाक् त्वं वागधिदेवी त्वं तत्कर्ता तद्गुरुः स्वयम् । अहो सरस्वतीबीजं कस्त्वां स्तोतुमिहेश्वरः
इत्येवमुक्त्वा शैलेन्द्रस्तस्थौ धृत्वा पदाम्बुजम् । तत्रोवास तमाबोध्य चावरुह्य वृषाच्छिवः
स्तोत्रमेतन्महापुण्यं त्रिसंध्यं यः पठेन्नरः । मुच्यते सर्वपापेभ्यो भयेभ्यश्च भवार्णवे ॥
अपुत्रो लभते पुत्रं मासमेकं पठेद्यदि । भार्याहीनो लभेद्भार्यां सुशीलां सुमनोहराम् ॥
चिरकालगतं वस्तु लभते सहसा ध्रुवम् । राज्यभ्रष्टो लभेद्राज्यं शंकरस्य प्रसादतः ॥
कारागारे श्मशाने च शत्रुग्रस्तेऽतिसंकटे । गभीरेऽतिजलाकीर्णे भग्नपोते विषादने ॥
रणमध्ये महाभीते हिंस्रजन्तुसमन्विते । सर्वतो मुच्यते स्तुत्वा शंकरस्य प्रसादतः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० पार्वतीगर्वभङ्गप्रस्तावेऽ-
ष्टात्रिंशोऽध्यायः ॥ ३८ ॥

अथैकोनचत्वारिंशोऽध्यायः ।

श्रीकृष्ण उवाच—

इति स्तुत्वा हिमगिरिर्वसतः शंकरस्य च । उवास पुरतो दूरे लब्धाज्ञः सर्वसंमतः ॥
मधुपर्कादिकं तस्मै प्रददौ भक्तिपूर्वकम् । मुनीन्संपूजयामास ततः शंकरपार्षदान् ॥
तदा तत्र समागत्य मेनका स्त्रीगणैः सह । ददर्श वटमूलस्थं शंकरं चन्द्रशेखरम् ॥
ईषद्धास्यप्रसन्नास्यं वसन्तं व्याघ्रचर्मणि । मध्ये मुनिगणानां च ज्वलन्तं ब्रह्मतेजसा ॥
यथाऽऽकाशे तारकाणां द्विजराजं विराजितम् । परमाह्लादकं रूपं कन्दर्पकोटिसंनिभम्
विहाय वार्द्धकावस्थां दधतं नवयौवनम् । अतीव सुन्दरं रम्यं चित्तचोरं च योषिताम् ॥
कामं कामातुराणां च सतीनां च सुतं यथा । वैष्णवानां महाविष्णुं शैवानां च सदाशिवम्
शक्तिस्वरूपं शाक्तानां सौराणां सूर्यरूपिणम् । कालरूपं दुष्टानां शिष्टानां परिपालकम्
कालकालसमं मृत्योर्मृत्युमृत्युं भयानकम् । व्याघ्रचर्मचारुवस्त्रं बभूव भस्मचन्दनम् ॥९॥
सर्पाः सुन्दरमाल्यानि कस्तूरी या विषप्रभा । जटा सुललिता चूडा चन्द्रस्तिलकचन्दनम्

सुधार्द्रां मालतीमाला गङ्गाधारा मनोहरा। अस्थिमाला रत्नमाला धत्तूरं चारुचम्पकम्॥
एकीभूतं पञ्चवक्त्रं नेत्रयुग्माब्जशोभितम् । शरत्पार्वणचन्द्राभं प्रच्छाद्य दीप्तमुत्तमम् ॥
बन्धुजीवविनिन्द्यैकमोष्ठाधरमनोहरम् । श्वेतश्चान्द्रो वृषेन्द्रश्च भूताद्या नर्तका इव ॥
सद्यो व्यतिक्रमं सर्वं महेशस्य महेश्वरि । दृष्ट्वैवं शिवरूपं च मेना हृष्टा बभूव ह ॥
काश्चिन्निमेषरहिताः कामेन पुलकाञ्चिताः । अतिकामातुराः सत्यः प्रापुर्मूर्छां च काश्चन॥
काश्चिद्विनिन्द्य कान्तांश्च प्रशशंसुर्महेश्वरम् । मनोरथेन मनसा समाश्लिष्यन्ति काश्चन॥
काचिन्मानसिकं कामात्कुर्वन्ती चुम्बनं मुदा । ध्रुवं कामं करिष्यामो वयं च कामसागरे
अस्माकमेवं भर्ता चेत्परत्र च यतो भवेत् । इहैवं किं करिष्यामो वयं कान्तै रतैरलम् ॥
दृष्ट्वा तमेवं सुचिरमिति जल्पन्ति काश्चन ॥ १९ ॥
काश्चिद्दृष्ट्वा शिवं किंचिन्मुखमाच्छाद्य वाससा । सस्मिता वक्रनयनाः पश्यन्त्येवं पुनः पुनः
वयं गृहं न यास्यामो यास्यामः शिवसंनिधिम् । शरत्सुधांशुवदनं द्रक्ष्यामोऽहर्निशं मुदा
संसारं न करिष्यामः प्रविशामो हुताशनम् भविता नः शिवः स्वामीत्येवं जल्पन्ति काश्चन
अहो पुण्यवती दुर्गा श्लाघ्यते जन्म भारते । यस्या अयं शिवः स्वामीत्येवं जल्पन्ति काश्चन
मुदा मेना शिवं दृष्ट्वा गृहं ताभिर्जगाम ह । शिवं संपूज्य शैलेन्द्रः प्रणम्य स्वगृहं ययौ
कृत्वाऽनुमानं रहसि गिरिशो मेनया सह । दुर्गां प्रस्थापयामास शिवाय शिवसंनिधिम्
पार्वती सखिभिः सार्धं वेषं कृत्वा मनोहरम् । मातानुरक्ता हर्षेण जगाम शिवसंनिधिम्
दृष्ट्वा शिवा शिवं शान्तं प्रसन्नवदनेक्षणम् । सप्तप्रदक्षिणं कृत्वा सस्मिता प्रणनाम सा
अनन्यभावं गुणिनमपरं ज्ञानिनां वरम् । सुन्दरं रूप भर्तारं सुन्दरीत्याशिषं ददौ ॥
भविता तव सौभाग्यं शुभे स्वामिनि संततम् । पुत्रस्ते भविता साध्वि नारायणसमो गुणैः
भविता ते परा पूजा त्रैलोक्ये जगदम्बिके । ब्रह्माण्डेषु च सर्वेषु सर्वेषां च परा भव ॥
सप्त प्रदक्षिणाः कृत्वा यतो भक्त्या त्वया नतम् । सप्तजन्मनि तुष्टोऽहं तत्कुरुष्व सुन्दरि
तीर्थे कान्तेऽभीष्टदेवे गुरौ मन्त्रे तथौषधे । आस्था च यादृशी यस्य सिद्धिर्भवति तादृशी
इत्युक्त्वा शंकरस्तूर्णं ब्रह्मज्योतिः परं च माम् । दध्यौ योगासनं कृत्वा योगीशो ध्यानवर्त्मनि
प्रक्षाल्य चरणौ देवी पपौ तच्चरणोदकम् । चकार मार्जनं भक्त्या वह्निशौचेन वाससा
रत्नसिंहासनं रम्यं विश्वकर्मविनिर्मितम् । अपूर्वं स्वर्णपात्रस्थं नैवेद्यं प्रददौ किल ॥
अर्घ्यं मन्दाकिनीतोयसंयुक्तं चरणे ददौ । सुगन्धिचन्दनं चारु कस्तूरीकुङ्कुमान्वितम् ॥
प्रददौ मालतीमालां गले गात्रसुन्दरे ॥ २० ॥

१ ख. °रेव यतो भ°। २ क. इहैवं करिष्यामो वयं कान्तं रतो रतम् । ३ क. स्वात्मं ते भ°।

भक्त्या पूजां चकाराथ पुष्पवृष्टिं च तुष्टये । पीयूषं स्वर्णपात्रस्थं प्रददौ मधुरं मधु ॥
रत्नप्रदीपशतकं समन्ताद्धूपमुत्तमम् । त्रैलोक्यदुर्लभं वस्त्रं स्वर्णयज्ञोपवीतकम् ॥३८॥
सुगन्धिशीततोयं च पानार्थं पार्वती ददौ । अतीव सुन्दरं रम्यं रत्नसारेन्द्रभूषणम् ॥
दुर्लभां कामधेनुं च स्वर्णशृङ्गसमन्विताम् । स्नानीयं तीर्थतोयं च ताम्बूलं च मनोहरम्
दत्त्वा षोडशोपचारं प्रणनाम पुनः पुनः । संपूज्य शूलिनं भक्त्या ययौ नित्यं पितुर्गृहम्
शुश्रावाप्सरसो वक्त्राद्देवीमिन्द्रो महेश्वरः । श्रुत्वा वार्तां शुनासीरो ननर्त हर्षसंयुतः ॥
दूतद्वारा कामदेवमानिनाय त्वरान्वितः । इन्द्राज्ञया कामदेवः प्रजगामामरावतीम् ॥
तूर्णं प्रस्थापयामास तं च यत्र शिवः शिवा । पञ्चसायकसंयुक्तो जगाम पञ्चसायकः
प्रसन्नवदनः श्रीमान्यत्र शक्तियुतः शिवः । गत्वा ददर्श मदनः शिवायुक्तं शिवं विभुम्
शान्तं त्रैलोक्यकान्तं च प्रसन्नवदनेक्षणम् । कामः स्थितोऽन्तरिक्षे च धृत्वा च सशरं धनुः
चिक्षेपास्त्रं दुर्निवार्यममोघं शंकरे मुदा । बभूवामोघमस्त्रं च मोघं तत्परमात्मनि ॥४७॥
आकाश इव निर्लिप्ते निर्लिप्ते परमात्मनि । मोघीभूते च शस्त्रे च भयमाप च मन्मथः ॥
चकम्प पुरतः स्थित्वा दृष्ट्वा मृत्युंजयं विभुम् । सस्मार त्रिदशान्कामः शक्रादीन्भयविह्वलः
आययुर्देवताः सर्वाः शंभुकोपेन कोपिताः । चक्रुः स्तुतिं च स्तोत्रेण शंकरं त्रिदशेश्वरम्
कोपाग्निमुद्गिरन्तं तं कपाललोचनादहो । स्तुतिं कुर्वत्सु देवेषु स वह्निः शंभुसंभवः ॥
जज्वालोर्ध्वशिखो दीप्तः प्रलयाग्निशिखोपमः । उत्पत्य गगने घूर्णन्निपत्य धरणीतले ॥
भ्रामं भ्रामं च परितः पपात मदनोपरि । बभूव भस्मसात्कामः क्षणेन हरकोपतः ॥
विषण्णा देवताः सर्वा नतवक्त्रा च पार्वती । विललाप बहुतरं हरस्य पुरतो रतिः ॥
तुष्टुवुर्देवताः सर्वाः कम्पिताश्चन्द्रशेखरम् । रतिमूचुः सुराः सर्वे रुरुदुश्च मुहुर्मुहुः ॥
किंचिद्भस्म गृहीत्वा च रक्ष मातर्भयं त्यज । वयं तं जीवयिष्यामो लभिष्यसि प्रियं पुनः
हरकोपावसाने सुप्रसन्ने दिने तथा । दृष्ट्वा रतेर्विलापं च मूर्छां संप्राप पार्वती ॥
अतीन्द्रियं गुणातीतं तुष्टाव चन्द्रशेखरम् । रुदन्तीं पार्वतीं त्यक्त्वा स्वस्थानं प्रययौ शिवः
साध्वी बभूव तत्रैव पार्वतीदर्पमेक्षणम् । रूपयौवनयोर्गर्वं तत्याज शैलकन्यका ॥५९॥
मुखं दर्शयितुं लज्जा तद्बभूव सखीगणे । सुराश्च रतिवाक्याच्च सर्वे जग्मुः स्वमन्दिरम्
प्रणम्य दण्डवद्दुर्गां शोकदुःखितमानसाः । श्रुत्वा रतिस्तथा शोकेन भयेन कामकामिनी ॥
घोररूपेक्षणं रुद्रं राधिरे स्वाश्रयं ययौ । न ननाम शिवार्तं पार्वती सा [illegible] त्रपा ॥

रतिः संप्राप मदनं शंकरस्य वरेण च । इत्येवं कथितं सर्वं पार्वतीदर्पमोक्षणम्॥६४॥
निगूढचरितं राधे किं भूयः श्रोतुमिच्छसि ॥ ६५ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० राधाकृष्णसं०
पार्वतीदर्पभङ्गो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

अथ चत्वारिंशोऽध्यायः ।

राधिकोवाच—

अहो विचित्रं चरितमपूर्वं किं श्रुतं विभो । सुन्दरं श्रुतिपीयूषं निगूढं ज्ञानकारणम् ॥
न विशेषं समासं च श्रुतं न व्यासमीप्सितम् । अधुना श्रोतुमिच्छामि विस्तीर्णं कथय प्रभो
किं किं तपः कठोरं च चकार पार्वती स्वयम् । कं कं वरं वा संप्राप कथमाप महेश्वरम् ॥
रतिः केन प्रकारेण जीवयामास मन्मथम् । पार्वतीशिवयोः कृष्ण विवाहं वर्णय प्रभो
तयो रहसि संभोगं पापिनां पापमोचनम् । कथ्यतां करुणासिन्धो दुःखिनां दुःखमोचनम्
दम्पतीविरहोक्तिश्च कर्णज्वाला च योषितः । श्रोतुं कौतूहलं कृष्ण पुनः संमेलनं तयोः
अग्निज्वाला विषज्वाला क्षमा सोढुं च योषितः । दम्पतीविरहज्वाला न श्रोतुं च क्षणं क्षमा
राधिकावचनं श्रुत्वा विस्मितश्चकिताननः । विस्तीर्णं वक्तुमारेभे हृदयेन विदूयता ॥
दम्पतीविरहोक्तिं च या राधा श्रोतुमक्षमा । विच्छेदे शतवर्षीये किमस्या भविता मम ॥
इत्येवं मानसे कृत्वा मायेशो माययाऽन्वितः । कृपासिन्धुश्च कृपया कथां कथितुमुद्यतः

श्रीकृष्ण उवाच—

प्राणाधिके राधिके त्वं श्रूयतां प्राणवल्लभे । प्राणाधिदेवि प्राणेशि प्राणाधारे मनोहरे ॥
वटमूलाद्गते रुद्रे पार्वती तपसे ययौ । पुनः पुनः स्वमात्रा च पित्रा च विनिवारिता ॥
गत्वा सा स्वर्णदीतीरं स्नात्वा त्रिषवणं मुदा । संदेशे च मया दत्तं जजाप तं मनुं मुदा
दर्पमेकं च संपूर्णमनाहारा स्वभक्तितः । तप्त्वा तपः कठोरं च चकार जगदम्बिका ॥
ग्रीष्मे च परितो वह्निं प्रज्वलन्तं दिवानिशम् । कृत्वा ततस्थौ तन्मध्ये संततं जपती मनुम्
शश्वत्स्मशाने वर्षासु कृत्वा योगासनं शिवा । शिवां दृष्ट्वा च संसिक्तां बभूव जलधारया
शीते जलान्तरे शश्वत्तस्थौ भक्तिपूर्वकम् । अनाहारा शारदीदनीहारासु निशासु च ॥
एवं कृत्वा परं दर्पमप्राप्य शंकरं सती । शुचा कृत्वाऽग्निकुण्डं च प्रवेष्टुं सा समुद्यता ॥

१ क. पार्वतीपा° । २ स. 'दिशा' ।

तामग्निकुण्ड विशती तपसाऽतिष्ठ शा सतीम् । दृष्ट्वा शिव कृपासिन्धु कृपया ता जगाम ह
अतीव वामनो बालो विप्ररूपी स्वतेजसा । प्रज्वलन्मनसा हृष्टो दण्डी छत्री जटाधर ॥
शुक्लयज्ञोपवीती च शुक्लवासाश्च सस्मित । श्वेताब्जबीजमालो च बिभ्रत्तिलकमुज्ज्वलम्
निर्मने बालक दृष्ट्वा स्निग्धा साऽपि जगाद ह । तत्तेजसाऽति प्रेच्छन्ना तत्याज च तप स्वयम्
को भवानिति पप्रच्छ त शिशु पुरत स्थितम् । मनसाऽऽश्लिष्य कर्तुमिच्छन्ती परमादरम्
श्रुत्वा शैलसुताप्रश्न प्रहस्य परमेश्वर । उवाचातीव मधुर कर्णपीयूषमीश्वरीम् ॥ २४ ॥

शंकर उवाच—

इच्छागामी बटुरह तपस्वी विप्रबालक । का त्व क न्ताऽतिकान्तारे तपश्चरसि सुन्दरि ॥
वद कस्य कुले जाता कस्य कन्या च काऽमिधा । तपस फलदात्री त्व कस्माद्धोतोस्तपस्तव
अहो वा तपसा राशि स्वय मूर्तिमती सती । तपो वा लोकशिक्षार्थं करोपि कमलेक्षणे ॥
स्वय तेज स्वरूपा वा मूलप्रकृतिरीश्वरी । विप्र य भक्तध्यानार्थं विग्रहं भारते जनु ॥
किंवा त्रिलोके लक्ष्मीस्त्व सपद्रूपा सनातनी रक्षा विधातु जगतामागता च तुरन्तिके ॥
किंवाऽम्बिका त्व देवाना स्वय मूर्तिमती सती । सावित्री भारते जन्म स्वेच्छया लब्धुमागता
रागाधिष्ठातृदेवी वा स्वय साक्षात्सरस्वती । सर्वविद्या प्रकटितु स्वेच्छया जन्म भारते ॥
एतासु मध्ये का वा त्व नाह तर्कितुमीश्वर । या सा भवति कल्याणि परितुष्टा च मा भव
सति त्वयि प्रसन्नाया प्रसन्न परमेश्वरः पतिव्रताया तुष्टाया तुष्टो नारायण स्वयम् ॥ ३३ ॥
तुष्टे नारायणे देवे शश्वत्तुष्ट जगत्त्रयम् । तरुमूलेषु सिक्तेषु शाखा सिक्ता यथा प्रिये ॥
शिशोस्तद्वचन श्रुत्वा प्रहस्य परमेश्वरी । उवाच वचन चारु कर्णपीयूषमीश्वरी ॥ ३५ ॥

पार्वत्युवाच—

नाह वेदप्रसूर्लक्ष्मीर्वागधिष्ठातृदेवता । जन्म मे भारते वर्षे साप्रत शैलकन्यका ॥ ३६ ॥
पूर्वं जन्म दक्षगेहे सती शकरकामिनी । योगेन त्यक्तदेह ऽह तातभर्तृविनिन्दया ॥ ३७ ॥
अत्र जन्मनि पुण्येन सप्राप्ते शकरे द्विज । मा त्यक्त्वा भस्मसात्कृत्वा मन्मथ स जगाम ह
प्रयाते शकरे तापाह्रीडयाऽह पितुर्गृहात् । आगमत्तपसे चित्त ममेद स्वर्णदीतटे ॥ ३९ ॥
तप कृत्वा कठोर च सुचिर प्राणवल्लभम् । अप्राप्याग्निं प्रवेष्टु च त्वा च दृष्ट्वा क्षण स्थिता
गच्छ त्व प्रविशाम्यग्नौ प्रलयाग्निशिखोपमे । कृत्वा स्वकामना विप्र हरपादिमनीषिताम्
यत्र यत्र जनुर्लब्ध्वा लभिष्यामि शिव परम् । प्राणाधिक प्रिय कान्त विभु जन्मनि जन्मनि
सर्वा हि स्वप्रिय लब्धु लभन्ति जन्म वाञ्छितम् । तज्ज म पतिलाभार्थं सर्वासा च श्रुतौ श्रुतम्

१ क प्रसन्ना ।

प्राक्तनीयो हि यो भर्ता स तासां प्रतिजन्मनि । या स्त्री येषां सुनियता सा तेषां जन्मजन्मनि
तद्देहमिह न प्राप्य कृत्वा घोरतरं तपः । कृत्वाऽग्निकुण्डे काम्यं च लभिष्यामि परत्र तम्
इत्युक्त्वा पार्वती तत्र तत्पुरः प्रविवेश ह । निषिध्यमाना पुरतो ब्राह्मणेन पुनः पुनः ॥
वह्निप्रवेशं कुर्वन्त्याः पार्वत्याः परमेश्वरि । बभूव तपसा सद्यो वह्निश्चन्दनवद्ध्रुवम् ॥४७॥
क्षणं तदन्तरे स्थित्वा चोत्पतन्तीं शिवां शिवः । पुनः प्रपच्छ सहसा वृन्दावनविनोदिनि

महादेव उवाच—

अहो तपस्ते किं भद्रे न बुद्धं किंचिदेव हि । न दग्धो वह्निना देहो न च प्राप्तो मनोर्पितः
शिवं कल्याणरूपं च भर्तारं कर्तुमिच्छसि अविग्रहं पतिं कृत्वा किं वा ते वाञ्छितं भवेत्
संहर्तारं च भर्तारं यदीच्छसि शुचिस्मिते । कान्तमिच्छति का वा स्त्री सर्वसंहारकारणम्
मोक्षं वाञ्छसि चेद्देवि कृत्वा कान्तं स्वरूपिणम् । सर्वमुक्तिप्रदा त्वं च तपस्या विफला तव
शिवश्च मङ्गले मोक्षे संहर्ता न च दृश्यते शिवशब्दस्य चान्योऽर्थो न हि वेदे निरूपितः
तं च संहारकर्तारं यदि वाञ्छसि सुन्दरि ; लभिष्यसे रतं रुद्रं सर्वलोकभयंकरम् ॥
न भविष्यति मोक्षस्ते स्वाभीष्टं देवसेवनम् । हरिस्मृतिरमोघा च सर्वमङ्गलदा सदा॥५१॥
इमं पितुर्गृहं गच्छ तत्र द्रक्ष्यसि शंकरम् । ममाऽऽशिषा स्वतपसां फलेन च सुदुर्लभम् ॥
इत्युक्त्वा पार्वतीं विप्रस्तत्रैवान्तरधीयत । दुर्गा ययौ पितुर्गेहं महादेवेति वादिनी ॥
पार्वत्यागमनं श्रुत्वा मेनका च हिमालयः । दिव्यं यानं पुरस्कृत्य प्रययौ हर्षविह्वलः
संस्थाप्य मङ्गलघटान्राजवर्त्मनि राधिके । चन्दनागुरुकस्तूरीफलशाखासमन्वितान् ॥
पट्टसूत्रसंनिबद्धरसालपल्लवान्वितैः । परितः परितो रम्भास्तम्भवृन्दसमन्विते ॥६०॥
पतिपुत्रवतीयोषित्समूहैर्दीपहस्तकैः । पूर्णैर्लाजाधान्यदूर्वाफलपुष्पसमन्वितैः ॥ ६१ ॥
सुपुण्यैर्ब्राह्मणैश्चापि मुनिभिर्ब्रह्मचारिभिः । नटीभिर्नर्तकीभिश्च गजेन्द्रैः परिशोभिते ॥
पुरोहितैश्च संयुक्तैः कुर्वद्भिर्मङ्गलध्वनिम् । सुचारमालतीमालाहस्तैः शस्तैः प्रशंसितैः ॥
नानाप्रकारवाद्यैश्च शङ्खध्वनिसुनादितैः । सिन्दूररेणुमिश्रारचन्दनद्रवपङ्किलम् ॥ ६४ ॥
प्रविश्य नगरं दुर्गा ददर्श पितरौ पुरः । सुप्रसन्नौ प्रधावन्तौ हर्षाश्रुपुलकान्वितौ ॥
प्रसन्नवदना देवी चाऽऽशिभिः प्रणनाम तौ । संयुज्याऽऽशिषं तौ च चक्रतुस्तां च वक्षसि
हे वत्से वत्सेत्युच्चार्य रुदन्तौ प्रेमविह्वलौ । तदा तां च रथे कृत्वा जग्मतुर्निजमन्दिरम्
स्त्रियो निर्मञ्छनं चक्रुर्विप्रा युयुजुराशिषम् । ब्राह्मणेभ्यश्च वन्दिभ्यः पर्वतेन्द्रो धनं ददौ ॥
मङ्गलं कारयामास पाठयामास चान्दसम् । एवं स्वकन्यया सार्धं तस्थतुस्तौ स्वमन्दिरे
सुखेन वसतौ तौ हि हर्षनिर्भरमानसौ । एकदा च तपः कर्तुं जगाम स्वर्णदीं गिरिः ॥

मेनका कन्यया सार्धमुवास प्राङ्गणे मुदा । एतस्मिन्नन्तरे भिक्षुर्नर्तकश्च सुगायनः ॥
सहसैक आजगाम मेनकासंनिधिं मुदा । शृङ्गवाद्यं वामहस्ते डमरुं दक्षिणे तथा ॥
कृत्वा विभूतिगात्रोऽतिवृद्धोऽतीव जरातुरः । पृष्ठकन्थो रक्तवासाः सुकण्ठोऽतिमनोहरः ॥
जगौ मम गुणाख्यानं कृत्वा नृत्यं मनोहरम् । वादयामास शृङ्गं च क्षणं डमरुकं तथा
आजग्मुर्नागरा बाला बालिका हर्षविह्वलाः । वृद्धा युवानो युवतीसमूहो वृद्धयोषितः ॥
श्रुत्वा तु सुन्दरं गीतं सुतानस्वरसंयुतम् । सहसा मुमुहुः सर्वे तेन मूर्छामवाप्नुवन् ॥
मूर्छां संप्राप सा दुर्गा ददर्श हृदि शंकरम् । त्रिशूलपट्टिशकरं व्याघ्रचर्मधरं परम् ॥
विभूतिभूषणं रम्यमस्थिमालं सुनिर्मलम् । ईषद्धास्यप्रसन्नास्यं सुप्रसन्नं त्रिलोचनम् ॥
मालाहस्तं पञ्चवक्त्रं नागयज्ञोपवीतकम् । वरं वृणीष्वेत्युक्तवन्तं सुन्दरं चन्द्रशेखरम् ॥
हृदयस्थं हरं दृष्ट्वा मनसा तं ननाम सा । वरं वव्रे मानसे सा त्वं पतिर्मे भवेति च ॥
एवं दत्त्वा शिवस्तस्यै चान्तर्धानं चकार सः । न दृष्ट्वा हृदि तं दुर्गा संप्राप्य चेतनां पुनः ॥
ददर्श चक्षुरुन्मील्य भिक्षुकं गायकं पुरः । नृत्यसंगीततः सा तु भिक्षुकस्य च मेनका ॥
दातुं ययौ सा रत्नानि स्वर्णपात्रस्थितानि च । भिक्षां ययाचे भिक्षुस्तां दुर्गां नान्यां गृहीतवान्
पुनश्च नर्तनं कर्तुमुद्यतः कौतुकेन च । मेना तद्वचनं श्रुत्वा चुकोप विस्मयं ययौ ॥
भिक्षुकं भर्त्सयामास बहिः कर्तुमुवाच तम् । पत्नी त्रिलोकनाथस्य शिवस्य परमात्मनः
याच्ञामिमां प्रकुर्वन्तं दूरं कुरु कुमापिगम् । एतस्मिन्नन्तरे तत्त्वा गिरिः स्वालयमाययौ
ददर्श पुरतो भिक्षुं प्राङ्गणस्थं मनोहरम् । कृत्वा नारायणार्चां च गङ्गातीरे मनोहरे ॥
तन्मूर्तिध्यानविश्लेषशोकादुद्विग्नमानसः । श्रुत्वा मेनामुखाद्वार्तां जहास च चुकोप सः ॥
आज्ञां चकार स्वचरं बहिः कर्तुं च भिक्षुकम् । आकाशमिव दुःस्पर्शं प्रज्वलन्तं स्वतेजसा
न शशाक बहिः कर्तुं समीपं गन्तुमक्षमः । ददर्श भिक्षुकं शैलः क्षणं चारुचतुर्भुजम् ॥
किरीटिनं कुण्डलिनं पीताम्बरधरं परम् । सुवेषं सुन्दरं श्याममीषद्धास्यं मनोहरम् ॥
चन्दनोक्षितसर्वाङ्गं भक्तानुग्रहकारकम् । यद्यत्पुष्पं प्रदत्तं च पूजाकाले गदाभृते ॥
गात्रे शिरसि तत्सर्वं भिक्षुकस्य ददर्श ह । धूपः प्रदीपो यो दत्तो नैवेद्यं वा मनोहरम् ॥
ददर्श शैलस्तत्सर्वं भिक्षुकस्य पुरः स्थितम् । क्षणं ददर्श द्विभुजं विनोदमुरलीकरम् ॥
गोपवेषं किशोरं च सस्मितं श्यामसुन्दरम् । मयूरपिच्छचूडं च रत्नालंकारभूषितम् ॥
चन्दनोक्षितसर्वाङ्गं वनमालाविभूषितम् । क्षणं ददर्श स्वच्छं च शंकरं चन्द्रशेखरम् ॥
त्रिशूलपट्टिशकरं व्याघ्रचर्माम्बरं परम् । विभूतिगात्रमनलमस्थिमालाविभूषितम् ॥९७॥
नागयज्ञोपवीतं च तप्तस्वर्णजटाधरम् । डमरुशृङ्गहस्तं च सुप्रशान्तं मनोहरम् ॥९८॥
जपन्तं हरेर्नाम श्रीनाथजपमालया । ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम् ॥९९॥

स्वतेजसा प्रज्वलन्तं पञ्चवक्त्रं त्रिलोचनम् क्षणं ददर्श जगतां स्रष्टारं च चतुर्मुखम् ॥
जपन्तं श्रीहरेर्नाम स्वच्छस्फटिकमालया । क्षणं सूर्यस्वरूपं च ददर्श त्रिगुणात्मकम् ॥
ददर्श तमतीवं तु ज्वलन्तं ब्रह्मतेजसा । क्षणमग्निस्वरूपं च ज्वलन्तमतितेजसा ॥ २ ॥
क्षणमाह्लादजनकं चन्द्ररूपं ददर्श ह । क्षणं तेजःस्वरूपं च निराकारं निरञ्जनम्॥३॥
निर्लिप्तं च निरीहं च परमात्मस्वरूपिणम् । एवं स्वेच्छामयं दृष्ट्वा नानारूपधरं परम्॥
हर्षाश्रुपुलकः शैलो दण्डवत्प्रणनाम तम् । भक्त्या प्रदक्षिणीकृत्य प्रणम्य च पुनः पुनः॥
समुत्पत्य हर्षयुक्तो ददर्श पुनरेव तम् । वास्तवं भिक्षुकं दृष्ट्वा शैलेन्द्रो विष्णुमायया॥
विसस्मार च तत्सर्वं नानारूपधरं परम् । भिक्षां ययाचे भिक्षुस्तं भिक्षास्थालीस्वपार्श्वकः ॥
रक्ताम्बरः शृङ्गवाद्यविचित्रडमरुः करे । आदातुमुत्सुको दुर्गां नान्यां भिक्षुः कदाचन॥
न स्वी चकार शैलेन्द्रो मोहितो विष्णुमायया । भिक्षुः किंचिन्न जग्राह तत्रैवान्तरधीयत
तदा बभूव ज्ञानं च मेनकाशैलयोः प्रिये । अहो दृष्टो जगन्नाथ आवाभ्यां स्वभवद्गृहे ॥
कावां शिवो वञ्चयित्वा स्वस्थानं गतवान्विभुः ; तयोर्भक्ति शिवे दृष्ट्वा सर्वे देवाश्च चिन्तिताः
चक्रुः शक्रादयो युक्तिं सुमेरो रक्षणे भरात् । एकान्तभक्त्या[1] शैलश्चेत्कन्यां तस्मै प्रदास्यति
ध्रुवं निर्वाणतां सद्यः संप्राप्नोत्येव भारते । अनन्तरत्नाधारश्चेत्पृथ्वीं त्यक्त्वा प्रयास्यति
रत्नगर्भाभिधा भूमेर्मिथ्यैव भविता ध्रुवम् । स्थावरत्वं परित्यज्य दिव्यरूपं विधाय सः
कन्यां शूलभृते दत्त्वा विष्णुलोकं गमिष्यति । नारायणस्य सारूप्यं भविष्यत्येव लीलया
संप्राप्य पार्षदत्वं च हरिदासो भविष्यति । दशवार्षीममां कन्यां दीयते ब्राह्मणाय ताम्
वेदज्ञाय पवित्राय चाप्रतिग्रहशालिने । संध्यायज्ञवेदपाठकारिणे सत्यवादिने ॥ १७॥
अस्मै प्रदत्ता कन्या च दशवार्षीफलप्रदा । त्रिसंध्यं कारिणे सत्यवादिने गृहशालिने ॥
वेदज्ञाय सुविप्राय दत्त्वा सुफलदायिनी । प्रतिग्रहगृहीताय संध्याहीनाय नित्यशः ॥
मूर्खाय दत्ता कन्या सा स्वर्धांशफलदायिनी । परदारगृहीताय याजकाय द्विजातये ॥
शठाय संध्याहीनाय वार्ध्यंशफलदा सुता । सर्वसंध्यास्वगायत्रीविहीनाय शठाय च ॥
वैद्योद्भवाय दत्ता या वाप्यंशफलदा स्मृता । पापिने शूद्रजाताय विप्रशूद्रोद्भवाय च॥
दत्त्वा चाण्डालतुल्याय कन्या सा नरकप्रदा । विष्णुभक्ताय विदुषे विप्राय सत्यवादिने ॥
जितेन्द्रियाय दत्ता या विशद्वर्षफलप्रदा । षष्टिवर्षसहस्राणि दिव्यरूपं विधाय च ॥
एवंभूताय दत्ता चेन्मोदते विष्णुमन्दिरे । दत्त्वा कन्यां सुशीलां च हराय हरयेऽथवा ॥
नारायणस्वरूपं च भवेदेव श्रुतौ श्रुतम् । विष्णुभक्तो यदा कन्यां ददाति विष्णुप्रीयते ॥

१ क. 'पद्मदर्शनम् । २ ख. 'कन्' । ३ क. विप्रोद्भ' ।

स लभेद्धरिदास्यं च ध्रुवं विप्रोद्भवाय च । इत्यालोच्य सुराः सर्वे कृत्वा च मन्त्रणां प्रिये
गुरुं प्रस्थापितुं जग्मुर्हिमालयगृहं प्रति । गत्वा प्रणम्य च गुरुं सर्वे चक्रुर्निवेदनम् ॥
हिमालयगृहं गत्वा कुरु निन्दां च शूलिनः । पिनाकिनं विना दुर्गा वरं नान्यं वरिष्यति ॥
अनिच्छया सुतां दत्त्वा फलं तूर्णं लभिष्यति । कालेन यातु शैलेन्द्रश्चेदानीं भुवि तिष्ठतु ॥
अनन्तरत्नाधारं च त्वमेव रक्ष भारते । देवानां वचनं श्रुत्वा प्रददौ कर्णयोः करौ ॥
न स्वीचकार स्वगुरुः स्मरन्नारायणेति च । उवाच देववर्गांश्च संभर्त्स्य च पुनः पुनः ॥
वेदवेदाङ्गविज्ञाता महाभक्तो हरौ हरे ॥

बृहस्पतिरुवाच—

श्रूयतां मद्वचः सत्यं हे देवाः स्वार्थसाधकाः ॥ ३२ ॥
नीतिसारं च वेदोक्तं परिणामसुखावहम् । हरकेशवयोर्भक्तं ये च निन्दन्ति पापिनः ॥
भूदेवान्ब्राह्मणांश्चैव स्वगुरुं च पतिव्रताः । पतिभिक्षुब्रह्मचारिसृष्टिबीजान्सुरांस्तथा ॥
पच्यन्ते कालसूत्रे ते यावच्चन्द्रदिवाकरौ । श्लेष्ममूत्रपुरीषेषु शेरते ते दिवानिशम् ॥
भक्षिताः कीटनिकरैः शब्दं कुर्वन्ति कातराः । ये निन्दन्ति च ब्रह्माणं स्रष्टारं जगतां गुरुम्
शिवं सुराणां प्रवरं दुर्गां लक्ष्मीं सरस्वतीम् । गीतां च तुलसीं गङ्गां वेदांश्च वेदमातरम् ॥
व्रतं तपस्यां पूजां च मन्त्रं मन्त्रप्रदं गुरुम् । ते पच्यन्तेऽन्धकूपे वै चाऽऽयुषोऽर्धं विधेरहो
भक्षिताः सर्पसंघैश्च शब्दं कुर्वन्ति संततम् । ये निन्दन्ति हृषीकेशं देवसाम्यं विधाय च
विष्णुभक्तिप्रदं चैव पुराणं च श्रुतेः परम् । गाथा तदङ्गजा गोपीर्ब्राह्मणांश्च सदार्चितान् ॥
ते पच्यन्तेऽवटे देवा विधातुरायुषः समम् । अधोमुखा ऊर्ध्वजङ्घाः सर्पसंघैश्च वेष्टिताः
भक्षिता विकृताकारैः कीटैः सर्पसमाकृतैः । अतीव कातरा भीताः शब्दं कुर्वन्ति संततम्
श्लेष्ममूत्रपुरीषाणि ध्रुवं भक्षन्ति क्षोभिताः । उल्कां ददति रुष्टाश्च तन्मुखे यमकिराः ॥
शिरःस्थं कर्तनं कृत्वा कुर्वन्ति दण्डताडनम् । कुर्वन्ति घूर्णनं ते च प्रहारैस्तूपिता मिथः ॥
तदा कल्पान्तरे स्रष्टुं सृष्टिं च प्रथमे पुनः । तेषां भवेत्प्रतीकार इत्याह कमलोद्भवः ॥
कृत्वा हि शिवनिन्दां च यास्यन्ति नरकं सुराः । इममेवोपकारं च कर्तुमिच्छथ पुत्रकाः ॥
ब्रह्मणा प्रेरितो दक्षो दत्त्वा शूलभृते सुताम् । न पापं परमैश्वर्यं संप्राप हरनिन्दकः ॥
अनिच्छया सुतां दत्त्वा तुर्यपुण्यं ललाभ सः । अहो विहाय सारूप्यं तुच्छं स्वर्गं ललाभ सः
पश्चिन्मध्ये च युष्माकं गत्वा शैलगृहं सुराः । संपादयत्वभिमतं शैलेन्द्रस्य प्रयत्नतः ॥
अनिच्छया सुतां दत्त्वा सुखं तिष्ठतु भारते । तस्मै भक्त्या सुतां दत्त्वा मोक्षं प्राप्स्यति निश्चितम्

१ ख. 'दान्तवि' ।

पश्चात्सप्तर्षयः सर्वे गृहीत्वा तामरुन्धतीम् । ध्रुवं तस्य गृहं गत्वा बोधयिष्यन्ति पर्वतम् ॥
विना पिनाकिनं दुर्गा वरं नान्यं वरिष्यति । अनिच्छया सुतां तस्मै प्रदास्यति सुताज्ञया
इत्येवं कथितं सर्वं देवा गच्छन्तु मन्दिरम् । इत्युक्त्वा वाक्पतिः शीघ्रं तपसे स्वर्णदीं ययौ
इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० चत्वारिंशोऽध्यायः ॥ ४० ॥

अथैकचत्वारिंशोऽध्यायः ।

श्रीकृष्ण उवाच—

तदा देवाः समालोच्य जग्मुस्ते ब्रह्मणोऽन्तिकम् । सर्वे निवेदनं चक्रुर्ब्रह्माणं जगतां पतिम् ॥

देवा ऊचुः—

तव सृष्टौ जगत्स्रष्टा रत्नाधारो हिमालयः, स चेत्प्राप्स्यति मोक्षं च रत्नगर्भा कुतो मही ॥
सुतां शूलभृते दत्त्वा भक्त्या शैलेश्वरः स्वयम् । नारायणस्य सारूप्यं संप्राप्स्यति न संशयः
त्वं तस्य निन्दनं कृत्वा विमतिं प्रतिपादय । त्वया विना क्षमो नान्यो गच्छ शैलगृहे प्रभो
देवानां वचनं श्रुत्वा तानुवाच विधिः स्वयम् । वचनं नीतिसारं च कर्णपीयूषमुत्तमम् ॥

ब्रह्मोवाच—

नाहं कर्तुं क्षमो वत्साः शिवनिन्दां सुदुष्कराम् । संपद्विनाशरूपा च विपदो बीजरूपिणीम्
भूतेशं प्रस्थापयत स्वात्मनिन्दां करोतु सः । परनिन्दा विनाशाय स्वनिन्दा यशसे परम् ॥
ब्रह्मणो वचनं श्रुत्वा तं प्रणम्य सुराः प्रिये । शीघ्रं ययुस्ते कैलासं गत्वा च तुष्टुवुः शिवम्
सर्वे निवेदनं चक्रुः शंकरं करुणालयम् । स ययौ शैलमूलं न तावाश्वास्य महस्य च ॥
देवा मुमुदिरे सर्वे शीघ्रं गत्वा स्वमन्दिरम् । इष्टसिद्धिर्मुदे शश्वदतिसिद्धिर्दुःखवर्धिनी ॥
अथ शैलः सभामध्ये समुवास मुदाऽन्वितः । बन्धुवर्गैः परिवृतः पार्वतीसहितः स्वयम् ॥
एतस्मिन्नन्तरे तत्र विप्ररूपी शिवः स्वयम् । समाजगाम सहसा प्रसन्नवदनेक्षणः ॥१२॥
दण्डी छत्री दीर्घवासा बिभ्रत्तिलकमुत्तमम् । करे स्फाटिकमालां च शालग्रामं गले दधत् ॥
तं च दृष्ट्वा समुत्तस्थौ सगणश्च हिमालयः । ननाम दण्डवद्भूमौ भक्त्याऽतिथिमपूर्वकम् ॥
ननाम पार्वती भक्त्या प्राणेशं विप्ररूपिणम् । आशिषं युयुजे विप्रः सर्वेषां प्रीतिपूर्वकम् ।
शैलदत्तासने शीघ्रमुवास ब्राह्मणः स्वयम् । मधुपर्कादिकं सर्वं जग्राह प्रीतिपूर्वकम् ॥
पप्रच्छ कुशलं शैलो ब्राह्मणं को भवानिति । उवाच सर्वं विप्रेन्द्रो गिरीन्द्रं सादरेण च ॥

ब्राह्मण उवाच—

घाटिका वृत्तिमाश्रित्य भ्रमामि धरणीतले । मनोयायी सर्वगामी सर्वतोऽहं गुणैर्वरान् ॥

मया ज्ञातं शंकराय सुतां दातुं त्वमिच्छसि। इमां पद्मासमां दिव्यामज्ञातकुलशीलिने ॥
निराश्रयायासङ्गायारूपाय निर्गुणाय च। श्मशानगामिने सर्वभूतनाथाय योगिने ॥
दिग्वाससेऽहिगात्राय विभूतिभूषणाय च। व्यालग्राहिस्वरूपाय कालव्यालादनाय च ॥
अज्ञातमृत्यवेऽज्ञायानाथायाबन्धवे भवे। तप्तस्वर्णजटाभारधारिणे निर्धनाय च ॥
अज्ञातवयसेऽतीव वृद्धाय चाविकारिणे। सर्वाश्रयाय भ्रमिणे नागहाराय भिक्षवे ॥
निबोध ज्ञानिना श्रेष्ठं नारायणं कुलोद्भवम्। स ते पात्रानुरूपश्च पार्वतीदौतृकर्मणि ॥
महाजनः स्मेरमुखः श्रुतिमात्राद्भविष्यति। त्वच्छैलाधिपस्त्वं च न तस्यैकोऽस्ति बान्धवः
बान्धवान्मेनकां प्रश्नं कुरु शीघ्रं प्रयत्नतः। सर्वान्पृच्छ प्रयत्नेन हे बन्धो पार्वतीं विना
रोगिणे नौषधं शश्वत्कुपथ्यं रोचते सदा॥ इत्युक्त्वा ब्राह्मणः शीघ्रं स्नात्वा भुक्त्वा मुदाऽन्वितः
जगाम स्वालयं शान्तो वृन्दावनविनोदिनि। ब्राह्मणस्य वचः श्रुत्वा मेनोवाच हिमालयम्
शोकेन साश्रुनयना हृदयेन विदूयता॥ २८ ॥

मेनकोवाच—

शृणु शैलेन्द्र मद्वाक्यं परिणामसुखावहम्। पृच्छ शैलवरानस्मै न दास्यामि सुतामहम् ॥
त्यक्ष्यामि सर्वान्विषयान्भक्ष्यामि विषमेव च। गले बद्ध्वाऽम्बिकां पश्य यास्यामि घोरकाननम्
गृहीत्वा पार्वतीं मेना गत्वा कोपालयं रुषा। त्यक्त्वाऽऽहारं रुदन्ती च चकार शयनं भुवि ॥
एतस्मिन्नन्तरे तत्र वसिष्ठो भ्रातृभिः सह। आजगाम पुनस्तैश्च युक्ता पश्चादरुन्धती ॥
प्रणम्य शैलस्तान्सर्वान्स्वर्णसिंहासनं ददौ। दत्त्वा षोडशोपचारान्पूजयामास भक्तितः॥
ऋषयश्च सभामध्ये सुखमूपुः सुखासने। जगामारुन्धती तूर्णं यत्र मेना च पार्वती ॥
गत्वा ददर्श मेनां च शयानां शोकमूर्छिताम्। उवाच मधुरं साध्वी सावधाना हितं वचः ॥

अरुन्धत्युवाच—

उत्तिष्ठ मेनके साध्वि त्वद्गृहेऽहमरुन्धती। पितॄणां मानसी कन्या मां जानीहि विधेर्वधूम् ॥
अरुन्धत्याः स्वरं श्रुत्वा शीघ्रमुत्थाय मेनका। उवाच शिरसा नत्वा तां पद्मामिव तेजसा

मेनकोवाच—

अहोऽद्य किमिदं पुण्यमस्माकं पुण्यजन्मनाम्। वधूर्नगद्विधेः पत्नी वसिष्ठस्य ममाऽऽलये ॥
संभ्रमेणेदमेवोक्तं गृहं तेऽहं च किंकरी। ईश्वरी जगतां द्रष्टुमागता बहुपुण्यतः ॥ २९ ॥
पाद्यं दत्त्वा स्वर्णपीठे वासयामास तां सतीम्। भोजयामास मिष्टान्नं बुभुजे कन्यया सह

---

१ क. 'दानक'।

शिवस्य हेतोर्नीतिं च बोधयामास मेनकाम् । अरुन्धती प्रसङ्गेन संबन्धयोजनानि च ॥
अथ शैलमृषीन्द्राश्च नीतिसारं परं वचः । बोधयामासुः संबन्धयोजनानि प्रसङ्गतः ॥

ऋषय ऊचुः—

शैलेन्द्र श्रूयतां वाक्यमस्माकं शुभकारकम् । शिवाय पार्वतीं देहि संहर्तुः श्वशुरो भव
अयाचितारं देवेशं बोधयाऽऽशु प्रयत्नतः । तव शङ्काविनाशाय ब्रह्मसंबन्धकर्मणि ॥४३॥
नेच्छको दारसंयोगे शंकरो योगिनां वरः । विधेः प्रार्थनया देवस्तव कन्यां ग्रहीष्यति ॥
दुहितुस्ते तपस्यान्ते प्रतिज्ञानं चकार सः । हेतुद्वयेन योगीन्द्रो विवाहं च करिष्यति
ऋषीणां वचनं श्रुत्वा प्रहस्य च हिमालयः । उवाच किंचिद्भीतश्च परं विनयपूर्वकम्

हिमालय उवाच—

शिवस्य राजसामग्रीं न हि पश्यामि कांचन । किंचिदाश्रमैश्वर्यं किंवा स्वजनबान्धवम्
न कन्यामतिनिर्लिप्तयोगिने दातुमर्हति । यूयं विधातुः पुत्राश्च सत्यं वदत निश्चितम् ।
नानुरूपाय पुत्राय पिता कन्यां ददाति चेत् । कामाल्लोभाद्भयान्मोहाच्छताब्दं नरकं व्रजेत्
न हि दास्याम्यहं कन्यामिच्छया शूलपाणिने । यद्विधानं भवेद्योग्यमृषयस्तद्विधीयताम्
हिमालयवचः श्रुत्वा वसिष्ठो विधिनन्दनः । वेदवेदाङ्गविज्ञाता वेदोक्तं वक्तुमुद्यतः ॥

वसिष्ठ उवाच—

वचनं त्रिविधं शैल लौकिके वैदिके तथा । सर्वं जानाति शास्त्रज्ञो निर्मलज्ञानचक्षुषा ॥
असत्यमहितं पश्चात्सांप्रतं श्रुतिसुन्दरम् । सुबुद्धं शत्रुर्वदति न हितं च कदाचन ॥
आपातप्रीतिजनकं परिणामसुखावहम् । दयालुर्धर्मशीलश्च बोधयत्येव बान्धवम् ॥५१॥
श्रुतिमात्रात्सुधातुल्यं सर्वकाले सुखावहम् । सत्यसारं हितकरं वचसां श्रेष्ठमीप्सितम् ॥
एवं च त्रिविधं शैल नीतिशास्त्रनिरूपितम् । कथ्यतां त्रिषु मध्ये किं वदामि वाक्यमीप्सितम्
बाह्यसंपद्विहीनश्च शंकरस्त्रिदशेश्वरः । तत्त्वज्ञानसमुद्रेषु संनिमग्नैकमानसः ॥ १८ ॥
आपातभ्रमसंपत्तिर्विद्युच्छ्रीरिव नाशिनी । सदानन्दस्येश्वरस्य स्वात्मारामस्य का स्पृहा ॥
गृही ददाति स्वसुतां राज्यसंपत्तिशालिने । कन्यां विद्वेषिणे दत्त्वा कन्याघाती भवेत्पिता
को वदेच्छंकरो दुःखी कुबेरो यस्य किंकरः । भ्रूभङ्गलीलया सृष्टिं स्रष्टुं नष्टुं क्षमो हि यः ॥
निर्गुणः परमात्मा च यं ईशः प्रकृतेः परः । सर्वेशः स च निर्लिप्तो लिप्तश्च सर्वजन्तुषु
स एकः सृष्टिसंहारे स सर्वः सृष्टिकर्मणि । निराकारश्च साकारो विभुः स्वेच्छामयः स्वयम्
य ईशस्त्रिविधां मूर्तिं विधत्ते सृष्टिकर्मणि । सृष्टिस्थित्यन्तजननीं ब्रह्मविष्णुशिवाभिधाम्

---

१ क. °नाय । २ क. राज्यसा° । ३ ख. द्वाद° । ४ अ. विवि° । ५ क. °परेनः ।

ब्रह्मा च ब्रह्मलोकस्थो विष्णुः क्षीरोदवासकृत्। शिवः कैलासवासी च सर्वाः कृष्णाविभूतयः
श्रीकृष्णश्च द्विधाभूतो द्विभुजश्च चतुर्भुजः। चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम्॥
तस्य देवस्य तेंऽशाश्च ब्रह्मविष्णुमहेश्वराः। केचिद्देवाः कलास्तस्य कलांशाश्चैव केचन॥
कृष्णः सृष्ट्युन्मुखश्चापि प्रकृतिं तत्र निर्ममे। निर्माय तां च तयोर्नौ वीर्याधानं चकार ह
ततो डिम्भः समुद्भूतस्तन्मध्ये च महाविराट्। महाविष्णुः स विज्ञेयो श्रीकृष्णषोडशांशकः
नाभिपद्मोद्भवो ब्रह्मा तस्यैव जलशायिनः। भालोद्भवस्तस्य रुद्रः शंकरश्चन्द्रशेखरः॥
महाविष्णु(ष्णो)र्नामपार्श्वात्संभूतो विष्णुरेव च। सर्वे प्राकृतिकाः शैल ब्रह्मविष्णुशिवादयः
धत्ते चतुर्विधां मूर्तिं प्रकृतिः कृष्णसंभवा। अंशेन लीलया सृष्टौ कलया बहुधा तथा॥
कृष्णवामाङ्गसंभूता राधा रासेश्वरी स्वयम्। मुखोद्भवा स्वयं वाणी रागाधिष्ठातृदेवता॥
वक्षःस्थलोद्भवा लक्ष्मीः सर्वसंपत्स्वरूपिणी। शिवा तेजःसु देवानामाविर्भावं चकार सा॥
निहत्य दानवान्सर्वान्देवेभ्यश्च श्रियं ददौ। प्राप्य कल्पान्तरे जन्म जठरे दक्षयोषितः॥
नाम्ना सती शिवं प्राप दक्षस्तस्मै ददौ च ताम्। योगेन देहं तत्याज श्रुत्वा सा भर्तृनिन्दनम्
पितॄणां मानसी कन्या मेनका तव गेहिनी। लभाम तस्या जठरे जन्म सा जगदम्बिका॥
शिवा शिवस्य पत्नीयं शैल जन्मनि जन्मनि। कल्पे कल्पे बुद्धिरूपा ज्ञानिनां जननी परा
जातिस्मरा च सर्वज्ञा सिद्धिदा सिद्धिरूपिणी। अस्या अस्थि चिताभस्म भक्त्या धत्ते शिवः स्वयम्॥ ७९॥

ददासि स्वेच्छया कन्यां देहि भद्र शिवाय च। अथवा सा स्वयं कान्तस्थानं यास्यति द्रक्ष्यसि
प्राक्तनाद्यस्य या कान्ता सा तं प्राप्नोति वल्लभम्। प्रजापतेर्निबन्धं च न कोऽपि खण्डितुं क्षमः
विवाहे नोत्सुकः शंभुः स्वात्मारामश्च तत्त्ववित्। तुष्टुवुस्तं सुराः सर्वे तारकाख्येन पीडिताः
देवानां पीडनं दृष्ट्वा ब्रह्मणा प्रार्थितो विभुः। कृपया स्वी चकाराऽऽशु कृपालुर्देवसंसदि॥
कृत्वा प्रतिज्ञां योगीन्द्रो दृष्ट्वा क्लेशमसंख्यकम्, दुहितुस्ते तपःस्थानमाजगाम द्विजात्मकः
तामाश्वस्य वरं दत्त्वा जगाम निजमन्दिरम्। तच्छ्रुत्वैवाऽऽययुः सर्वे सुराः शक्रादयो मुदा
नारायणश्च भगवान्ब्रह्मा धर्मश्च सांप्रतम्। ऋषयो मनवः सर्वे गन्धर्वा यक्षराक्षसाः॥
तत्र सर्वे मुदा युक्ताः समालोचनकर्तृभिः। प्रस्थापिता वयं शीघ्रमनूणा सा अरुन्धती॥
तव प्रबोधने प्रीतिर्वर्धते महती सदा। संप्राप्तं शुभकार्यं च सर्वकालसुखावहम्॥८८॥
शिवां शिवाय शैलेन्द्र स्वेच्छया चेन्न दास्यसि। भविता वा विवाहश्च भवितव्यबलेन च॥
आगमिष्यति देवो यो नारायणसहायवान्। रत्नसारस्थे कृत्वा देवानां प्रवरं वरम्॥
योगीन्द्राणां वरेण्यं तं ज्ञानिनां च गुरोर्गुरुम्। आदिमध्यान्तरहितमविकारमनं परम्॥

येदं ददौ शिवायै स शिवश्च तपसः स्थले । न हीश्वरप्रतिज्ञानं दुर्लभं विफलं भवेत् ॥
ब्रह्मादिस्तम्बपर्यन्तं सर्वं नश्वरमस्थिरम् । अहो प्रतिज्ञा दुर्लङ्घ्या साधूनामविनाशिनी ॥
एको महेन्द्रः शैलानां पक्षांश्चिच्छेद लीलया । पवनो लीलया मेरोः शृङ्गभङ्गं चकार ह ॥
के वा शैलेषु योद्धारः सुरैः सह हिमालय । पतिष्यन्ति समुद्रेषु पवनैः प्रेरिता क्षणात् ॥
एकार्थे यदि शैलेन्द्र सर्वसंपद्विनश्यति । सर्वान्रक्षति तद्दत्त्वा विना च शरणागतम् ॥
शरणागतरक्षार्थं प्राणांश्च दातुमर्हति । पुत्रदारधनं सर्वानिति नीतिविदो विदुः ॥९७॥
दत्त्वा विप्राय स्वसुतामनरण्यो नृपेश्वरः । ब्रह्मशापाद्विमुक्तश्च ररक्ष सर्वसंपदम् ॥९८॥
तमाशु बोधयामासुर्नीतिशास्त्रविदो जनाः । ब्रह्मशापनिमग्नं च ब्रह्मण्यमतिकातरम् ॥
त्वमेवं शैलराजेन्द्र सुतां दत्त्वा शिवाय च । रक्ष सर्वान्बन्धुवर्गान्वशे कुरु सुरानपि ॥
वसिष्ठस्य वचः श्रुत्वा प्रहस्य पर्वतेश्वरः । पप्रच्छ नृपवृत्तान्तं हृदयेन विदूयता ॥१०१॥

हिमालय उवाच—

कस्य वंशोद्भवो ब्रह्मन्ननरण्यो नृपेश्वरः । सुतां दत्त्वा स च कथमरक्षत्सर्वसंपदम् ॥१०२॥

वसिष्ठ उवाच—

मनुवंशोद्भवो राजा सोऽनरण्यो नृपेश्वरः । चिरंजीवी धर्मशीलो वैष्णवो विजितेन्द्रियः ॥
स्वायंभुवो मनुः पूर्वं ब्रह्मपुत्रोऽतिधार्मिकः । राज्यं चकार धर्मेण युगानामेकसप्ततिम् ॥
ततो जगाम वैकुण्ठं सहितः शतरूपया । संप्राप्य दास्यं सांनिध्यं हरेर्दासो बभूव ह ॥
मनुर्बभूव तत्पश्चात्स्वयं स्वारोचिषो महान् । स्वारोचिषे गते शैल बभूव मनुरुत्तमः ॥
उत्तमे निर्गते धर्मी तामसो मनुरेव च । ततो मनुर्बभूवात्र रैवतो ज्ञानिनां वरः ॥ ॥
चाक्षुषश्च ततो ज्ञेयः श्राद्धदेवश्च सप्तम. । सावर्णिरष्टमो ज्ञेयः श्रीसूर्यतनयो महान् ॥
चैत्रवंशोद्भवो राजा पुराऽऽसीत्सुरथो भुवि । नवमो दक्षसावर्णिर्ब्रह्मसावर्णिको दशः ॥९॥
एकादशो मनुश्रेष्ठो धर्मसावर्णिरुच्यते । ततश्च रुद्रसावर्णिर्विष्णुभक्तो जितेन्द्रियः ॥
तत्परो देवसावर्णिरिन्द्रसावर्णिकस्ततः । इत्येवं कथिता ब्रह्मन्मनवश्च चतुर्दश ॥११॥
एतेषु समतीतेषु बभूव ब्रह्मणो दिनम् । इन्द्रसावर्णिवृत्तान्तं सर्वं मत्तो निशामय ॥१२॥
मनूनां प्रवरो धर्मी शुद्धभक्तो गदाभृतः । चकार राज्यं धर्मेण युगानामेकसप्ततिम् ॥
राज्यं दत्त्वा सुरेन्द्राय[1] जगाम तपसे वनम् । सुरेन्द्रस्य[2] सुतः श्रीमाञ्छौनिकेतुर्महाबलः ॥
तस्य पुत्रो महायोगी धुरीपतरुरेव च । तस्य पुत्रोऽति तेजस्वी गोत्रामुख इति स्मृतः ॥
वृद्धश्रवाः सुतस्तस्य तत्पुत्रो भानुरेव च । पुण्डरीकः सुतस्तस्य तत्पुत्रो निह्नुलस्तथा ॥

१ क. सुचन्द्रा° । २ क. सुचन्द्र° ।

जिह्वलस्य सुतः शृङ्गी तत्पुत्रो भीम एव च । तत्पुत्रोऽपि यशश्चन्द्रो यशसा च शशी जितः
यत्कीर्तिं निर्मलां सन्तो गायन्ति संततं सुराः । तस्य पुत्रो वेरण्यश्च पुरारण्यश्च तत्सुतः
तत्पुत्रो धार्मिकः श्रीमान्वरारण्यश्च एव च । तत्पुत्रो मङ्गलारण्यस्तपस्वी ज्ञानिनां वरः
अपुत्रको नृपश्रेष्ठस्तपसे पुष्करं गतः । सुचिरं च तपस्तप्त्वा वरं लब्ध्वा महेश्वरात् ॥
संप्राप्य वैष्णवं पुत्रमनरण्यं जितेन्द्रियम् । दत्त्वा तस्मै च राज्यं च जगाम तपसे वनम्
अनरण्यो नृपश्रेष्ठः सप्तद्वीपमहीपतिः । चकार यज्ञशतकं भृगुणा च पुरोधसा ॥२२॥
तुच्छं मत्वाऽऽशु शक्रत्वं न लेभे नश्वरं सुधीः । लीलया च जितः शक्रो लीलया च जितो बलिः
जिताश्च दानवेन्द्रा वै ज्वलता स्वेन तेजसा । बभूवुः शतपुत्राश्च राज्ञस्तस्य हिमालय ॥
कन्यैका सुन्दरी रम्या पद्मा पद्मालयासमा । सा कन्या यौवनस्था च बभूव पितृमन्दिरे
चारं प्रस्थापयामास वराय नृपतीश्वरः । एकदा पिप्पलादश्च गन्तुं स्वाश्रममुत्सुकः ॥
तपःस्थाने निर्जने च गन्धर्वं स ददर्श ह । स्त्रीषु निमग्नचित्तं च शृङ्गाररससागरे ॥२७॥
कामादतीव मत्तं च न जानन्तं दिवानिशम् । दृष्ट्वा तं मुनिशार्दूलः सकामश्च बभूव ह ॥
ततः सुभग्नचित्तः संश्रितदारसंग्रहम् । एकदा पुष्पभद्रायां स्नातुं गच्छन्मुनीश्वरः ॥
ददर्श पद्मां युवतीं पद्मामिव मनोरमाम् । केयं कस्येति पप्रच्छ समीपस्थाञ्जनान्मुनिः ॥
जना निवेदनं चक्रुः पद्माऽनरण्यकन्यका । मुनिः स्नात्वाऽभीष्टदेवं संपूज्य राधिकेश्वरम्
जगाम कामी भिक्षार्थमनरण्यसभाजिरे । राजा शीघ्रं मुनिं दृष्ट्वा प्रणनाम भयाकुलः ॥
मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः । कामात्सर्वं गृहीत्वा च ययाचे कन्यकां मुनिः
मौनी बभूव नृपतिः किंचिद्वक्तुमक्षमः । मुनिः पुनर्ययाचे तं कन्यां देहीति मे नृप ॥
अथवा भस्मसात्सर्वं करिष्यामि क्षणेन च । सर्वे बभूवुराच्छन्ना गणाश्च तेजसा मुनेः ॥
रुरोद राजा सगणो दृष्ट्वा वृद्धं जरातुरम् । महिष्यो रुरुदुः सर्वा इतिकर्तव्यमक्षमाः
मूर्छां प्राप महाराज्ञी कन्यामाता शुचाऽऽकुला । पण्डितो नीतिशास्त्रज्ञो बोधयामास भूमिपम्
महिषीं च नृपसुतान्कन्यकां नीतिमुत्तमाम् । अद्य वाऽपि दिनान्ते वा दानरूपा कन्यका नृप
पराय विप्रादन्यस्मै कस्मै वा दातुमर्हसि । सत्पात्रं ब्राह्मणादन्यं न पश्यामि जगत्त्रये ॥
सुतां दत्त्वा च मुनये रक्षस्व सर्वसंपदम् । राजन्कन्यानिमित्तेन सर्वसंपत्प्रणश्यति ॥४०॥
सर्वं रक्षति तत्पश्चात् विना तं शरणागतम् । राजा भाङ्गवचः श्रुत्वा विलप्य च मुहुर्मुहुः
कन्यां सालंकृतां कृत्वा मुनीन्द्राय ददौ किल । कान्तां गृहीत्वा स मुनिर्मुदितः स्वालयं ययौ
राजा सर्वान्परित्यज्य जगाम तपसे शुचा । भर्तुश्च दुहितुः शोकात्प्राणांस्तत्याज सुन्दरी

१ क. मर्ग । ३ क. तपःसु मग्नचित्तश्च चि° ।

पुत्राः पौत्राश्च भृत्याश्च मूर्छां प्रापुर्नृपं विना । अनरण्यस्तपस्तप्त्वा चिन्तयन्राधिकेश्वरम्
गोलोकनाथं संसेव्य गोलोकं च जगाम ह । बभूव कीर्तिमान्राजा ज्येष्ठपुत्रो नृपस्य च
पुत्रवत्पालयामास प्रजाः सर्वा महीतले ॥ १४५ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० राधाकृष्णसं०
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## अथ द्विचत्वारिंशोऽध्यायः ।

वसिष्ठ उवाच—

अथानरण्यस्य कन्या सिषेवे भक्तितो मुनिम् । कर्मणा मनसा वाचा लक्ष्मीर्नारायणं यथा
एकदा स्वर्णदीं स्नातुं गच्छन्तीं पस्मिता सतीम् । ददर्श पथि धर्मश्च मायया नृपलिङ्गकः
चारुरत्नरथस्थश्च रत्नालंकारभूषितः । नवीनयौवनश्रीमान्कामदेवसमप्रभः ॥ ३ ॥
दृष्ट्वा तां सुन्दरीं रम्यामुवाच मायया विभुः । विज्ञातुमन्तस्तत्त्वं च तस्याश्च मुनियोषितः

धर्म उवाच—

अयि सुन्दरि लक्ष्मीव राजयोग्ये मनोहरे । अतीव यौवनस्थे च कामिनि स्थिरयौवने ॥
जरातुरस्य वृद्धस्य समीपे त्वं न राजसे । चन्दनागुरुसंलिप्ता राजसे राजवक्षसि ॥६॥
विप्रं तपःसु निरतं सत्यक्तं मरणोन्मुखम् । विहाय पश्य राजेन्द्रं रतिशूरं स्मरातुरम् ॥
प्राप्नोति सुन्दरी पुण्यात्सौन्दर्यं पूर्वजन्मनः । सफलं तद्भवेत्सर्वं रसिकालिङ्गनेन च ॥
सहस्रसुन्दरीकान्तं कामशास्त्रविशारदम् । किंकरं कुरु मां कान्ते परित्यक्ष्यामि ता अपि
निर्मले निर्जने रम्ये शैले शैले नदे नदे । पुष्पोद्याने पुष्पिते च सुगन्धिपुष्पवायुना ॥
मलये चन्दनारण्ये चारुचन्दनवायुना । विहरिष्यामि कामेन कामिन्या च त्वया सह ॥
कामज्वरेण दग्धायाः शान्तिं कर्तुमहं क्षमः । विहरस्व मया सार्धं जन्मेदं सफलं कुरु ॥
इत्येवमुक्तवन्तं तं रथादवरुह्य च । गृहीतुमुत्सुकं हस्ते तमुवाच पतिव्रता ॥ ११ ॥

पद्मोवाच—

दूरं गच्छ गच्छ दूरं पापिष्ठ भूमिपाधम । मां चेत्पश्यसि कामेन सद्यो भस्म भविष्यसि ॥
पिप्पलादं मुनिश्रेष्ठं तपसा पूतविग्रहम् । विहाय त्वां भजिष्यामि स्त्रीजितं रतिलम्पटम् ॥
स्त्रीजितस्पर्शमात्रेण सर्वं पुण्यं प्रणश्यति । न भूमौ पातकी पापात्पापिना स्त्रीजितात्परः

---

१ क. राजसे ज्ये॰ ।

मां मातरं च स्त्रीभावं कृत्वा येन ब्रवीषि च । भविष्यति क्षयस्तेन कालेन मम शापतः ॥
श्रुत्वा धर्मः सतीशापं नृपमूर्तिं विहाय च । धृत्वा स्वमूर्तिं देवेश. कम्पमान उवाच ताम्

धर्म उवाच—

मातर्जानीहि मा धर्मं धर्मज्ञानां गुरोर्गुरुम् । परस्त्रीमातृबुद्धिं च कुर्वन्तं सन्ततं सति ॥
अहं तवान्तर्विज्ञातुमागतस्तव संनिधिम् । युष्माकं च मनो जाने तथाऽपि दैवबोधितः॥
कृतं मे दमनं साध्वि न विरुद्धं यथोचितम् । शास्तिः समुत्पथस्थानामीश्वरेण विनिर्मिता
धर्मं स्वधर्मं विज्ञातुं कालं कलयितुं क्षमः । विधातारं संविधातुं तस्मै कृष्णाय ते नमः॥
संहर्तुं यः क्षमः काले संहर्तारं भवं विभुः । स्रष्टारं लीलया स्रष्टुं तस्मै० ॥ २३ ॥
शत्रुं विधातुं मित्रं च सुप्रीतिं कलहं क्षमः । स्रष्टुं नष्टुं तदेवं च त० ॥ २४ ॥
शापं प्रदातुं सर्वांश्च सुखदुःखवरान्क्षमः । संपदं विपदं यो हि त० ॥ २५ ॥
प्रकृतिर्निर्मिता येन महाविष्णुश्च निर्मितः । ब्रह्मविष्णुमहेशाद्यास्त० ॥ २६ ॥
येन शुक्लीकृतं क्षीरं जलं शीतं कृतं पुरा । दाहीकृतो हुताशश्च त० ॥ २७ ॥
अतितेजःसमुत्थाय तेजोरूपाय मूर्तये । गुणश्रेष्ठनिर्गुणाय त० ॥ २८ ॥
सर्वस्मै सर्वबीजाय सर्वेषामन्तरात्मने । सर्वबन्धुस्वरूपाय त० ॥ २९ ॥
इत्युक्त्वा पुरतस्तस्यास्तस्थौ धर्मो जगद्गुरुः । सा साध्वी तं च विज्ञाय सहसोवाच पर्वत

पद्मोवाच—

त्वमेव धर्म सर्वेषां साक्षी च सर्वकर्मणाम् । सर्वान्तरेषु सर्वात्मा सर्वज्ञः सर्वतत्त्ववित् ॥
कथं मनो मे विज्ञातुं विडम्बयसि किंकरीम् । यत्कृतं त्वत्कृते ब्रह्मन्नपराधे बभूव मे ॥
त्वं च शप्तो मयाऽज्ञानात्स्त्रीस्वभावात्कृपा विभो । का व्यवस्था भवेत्तस्य चिन्तयामीति
सांप्रतम् ॥ ३३ ॥
आकाशोऽसौ दिशः सर्वा यदि नश्यन्ति वायवः । तथाऽपि साध्वीशापस्तु न नश्यति कदाचन
त्वं च नष्टो भवसि चेत्सृष्टिनाशो भवेत्तदा । इतिकर्तव्यतामूढा तथाऽपि त्वां वदाम्यहम् ॥
सत्ये पूर्णश्चतुष्पादैः पौर्णमास्यां यथा शशी । विराजसे देवराज सर्वकालं दिवानिशम् ॥
पादस्तवश्च त्रेतायां भगवन्भविता तव । पादौ परौ द्वापरे च तृतीयश्च कलौ विभो ॥
कलिशेषे शेष¹पादस्तवाऽऽच्छन्नो भविष्यति । पुनः सत्ये समायाते परिपूर्णो भविष्यसि
सत्ये सर्वव्यापकस्त्वं तदन्येषु च कुत्रचित् । यत्र स्थानं तवाऽऽचारो वदामि श्रूयतां विभो
वैष्णवेषु च सर्वेषु यतिषु ब्रह्मचारिषु । पतिव्रतासु प्राज्ञेषु वानप्रस्थेषु भिक्षुषु ॥ ४० ॥

---
१ क. पादो ।

नृपेषु धर्मशीलेषु सत्सु सद्वैश्यजातिषु । द्विजसेविषु शूद्रेषु सततंसर्गस्थितेषु च ॥ ४१ ॥
एषु त्वं सततं पूर्णो धर्मराज विराजसे । युगे युगे तवाऽऽधारा यत्र पुण्यतमा जनाः ॥
अश्वत्थवटबिल्वेषु तुलसीचन्दनेषु च । दीक्षापरीक्षाशपथगोष्ठगोष्पदभूमिषु ॥ ४३ ॥
देवार्हेषु च पुण्येषु विद्यमानोऽसि शालिषु । देवालयेषु तीर्थेषु सतां शश्वद्गृहेषु च ॥
वेदवेदाङ्गश्रवणे जलेषु च समासु च । श्रीकृष्णगुणनामोक्तश्रुतिगीतस्थलेषु च ॥४५॥
व्रतपूजातपोन्यायधर्मसाक्ष्यस्थलेषु च । गवां गृहेषु गोष्ठेव विद्यमानो हि पश्यसि ॥४६॥
कृशता ते न भविता धर्म तेषु स्थलेषु च । एतदन्येषु कृशता यदगम्यं च तच्छृणु ॥
पुंश्चलीषु च सर्वासु गृहेषु नरघातिनाम् । नरघातिषु नीचेषु मूर्खेषु च खलेषु च ॥
देवतागुरुविप्रेष्टपाल्यानां धनहारिषु । असत्तरेषु धूर्तेषु चौरेषु रतिभूमिषु ॥ ४९ ॥
दुरोदरसुरापानकलहानां स्थलेषु च । शालग्रामसाधुगर्भिपुरागरहितेषु च ॥ ५० ॥
दस्युस्नेहेषु वादेषु तालच्छायासु गर्विषु । असीमोविषपीजीविदेवलग्रामयाजिषु ॥५१॥
वृषवाहस्वर्णकारजीवहिंसोपजीविषु । भर्तृनिन्दितनारीषु स्त्रीजितेषु च पुंसु च ॥५२॥
दीक्षासंध्याविष्णुभक्तिविहीनेषु द्विजेषु च । स्वाङ्गकन्याविक्रयिषु स्वयोपिद्विक्रयेष्वथ ॥
शालग्रामसुरमन्त्रमुनिविक्रयिषु प्रभो । मित्रद्रोहिकृतघ्नेषु सत्यविश्वासघातिषु ॥ ५४ ॥
शरणागतहीनेषु चाश्रितघ्नेषु नृष्वपि । शश्वन्मिथ्योक्तिशीलेषु तथा सीमापहारिषु ॥
कामक्रोधास्तथा लोभान्मिथ्यासाक्ष्यप्रवादिषु । पुण्यकर्मविहीनेषु पुण्यकर्मविरोधिषु ॥
स्थानेष्वेतेषु निन्द्येषु नाधिकारस्तव प्रभो । ममापि वचनं सत्यं बभूव च क्षणं तव ॥ ५७ ॥
यास्यामि पतिसेवार्थं गच्छ तात स्वमन्दिरम् । इत्येवंवादिनीं साध्वीमुवाच विधिनन्दनः
प्रसन्नवदनः श्रीमानतीव विनयं वचः ॥ ५८ ॥

*धर्म उवाच—*

धन्याऽसि पतिभक्ताऽसि स्वस्ति तेऽस्तु च संततम् ॥ ५९ ॥
वरं गृहाण दास्यामि मत्परित्राणकारिणि । युवा भवतु भर्ता ते रतिशूरश्च कन्यके ॥
रूपवान्गुणवांस्साध्वि संततं स्थिरयौवनः । परमैश्वर्यसंयुक्ता त्वं भव स्थिरयौवना ॥
चिरजीवी भवतु स मार्कण्डेयात्परः सुते । कुबेराद्धनवांश्चैव शक्रादैश्वर्यवानपि ॥६२॥
विष्णुभक्तः शिवसमः सिद्धस्तु कपिलात्परः । स्वामिसौभाग्यसंयुक्ता भव त्वं जीवन वाचे
गृहा भवन्तु ते साध्वि कुबेरभवनाधिकाः । माता त्वं दशपुत्राणां गुणिनां चिरजीविनाम्
स्वभर्तुरधिकानां च भविष्यसि न संशयः । इत्येवमुक्त्वा संतस्थौ धर्मराजश्च पर्वत ॥

१ घ. विवादेषु । २ ङ. "दीने" । ३ क. "वान्तात्मी पे" ।

सा तं प्रदक्षिणीकृत्य प्रणम्य स्वगृहं ययौ । धर्मस्तामाशिषं युक्त्वा जगाम निजमन्दिरम्
पतिव्रतां प्रशशंस प्रतिसंसदि संसदि । सा रेमे स्वामिना सार्धं यूना रहसि संततम् ॥
पश्चाद्बभूव. सद्भ्रा तद्भर्तुरधिका गुणैः । शैलेन्द्र कथितं सर्वमितिहासं पुरातनम् ॥
दत्त्वाऽनरण्यः स्वसुतां ररक्ष सर्वसंपदम् । त्वमेव कन्यका दत्त्वा सर्वेषामीश्वराय च ॥
रक्ष सर्वबन्धुवर्गानात्मन. सर्वसंपदम् । सप्ताहे समतीते च दुर्लभेऽतिशुभे क्षणे ॥ ७० ॥
लग्नाधिपे च लग्नस्थे चन्द्रे स्वतनयान्विते । मोदते रोहिणीयुक्ते विशुद्धे चन्द्रतारके ॥
मार्गशीर्षे चन्द्रवारे सर्वदोषविवर्जिते । सर्वसद्ग्रहसंदृष्टे ह्यसद्ग्रहविवर्जिते ॥ ७२ ॥
सदपत्यप्रदेऽतीव पतिसौभाग्यदायिनि । अवैधव्यप्रदे सौख्यप्रदे जन्मनि जन्मनि ॥
अत्यन्तप्रेमाविच्छेदप्रदायिनि परात्परे । कन्या प्रदाय देवाय त्वं कृती भव पर्वत ॥
जगदम्बा जगत्पित्रे मूलप्रकृतिमीश्वरीम् । तेजःस्वरूपा सर्वेषां देवानां देवपूजिताम् ॥
आविर्भूता पुरा कल्पे देवानां रक्षणाय च । तेजोराशिः सुरौघाणां प्रज्वलन्ती दिशो दश ॥
अस्याः स्वतेजसा दैत्याः केचिद्दग्धा. पलायिनः । केचिद्बभूवु. शैलेन्द्र भस्मीभूताश्च भूतले
बिलं प्रविविशुः केचिन्मूर्छां प्रापुश्च केचन । केचिद्दन्ते तृणं कृत्वा जग्मुः शरणमीश्वरीम्
केचित्चिक्षिपुरस्त्राणि स्तम्भिता अपि केचन । केचिच्चिरं रणं कृत्वा ययुः स्वर्गमनामयम्
निःशत्रवो बभूवुस्ते सुरा अस्याः प्रसादतः । कृष्णाज्ञया सा कल्पान्ते दक्षकन्या बभूव ह
दक्षश्च विधिवद्देवीं प्रददौ शूलपाणये । देवेन मनिस्तुर्यज्ञे सहसा सुरसंसदि ॥ ८१ ॥
बभूव कलहः शैल तेन शूलभृता महान् । ब्रह्माणं च नमस्कृत्य ययौ रुष्टस्त्रिलोचनः ॥
दक्षश्च सगणो रुष्टः प्रययौ स्वालयं तदा । कोपात्संभृतसंभारो दक्षो यज्ञं चकार ह ॥
न ददौ यज्ञभागं च मात्सर्याच्छूलपाणये । दृष्ट्वा सती प्रकुपिता जनकं रक्तलोचना ॥
निर्भर्त्स्य च बहुतरं हृदयेन विदूयता । यज्ञस्थानात्समुत्थाय जगाम मातुरन्तिकम् ॥
भविष्यं कथयामास त्रिकालज्ञा परात्परा । यज्ञभङ्गादिकं सर्वं स्वपितुश्च पराभवम् ॥
पलायनं च देवानां यज्ञस्थानाद्गिरीश्वरम् । मुनीनामृत्विजां चैव पर्वतानां तथैव च ॥
जयं शंकरसैन्यानां स्वात्मनो मृत्युमेव च । शोकात्पर्यटनं भर्तुर्विरहातुरचेतसा ॥ ८८ ॥
निर्वाणं नेत्रसरस. प्रबोधं च जनार्दनात् । मूर्तिभद्रान्तुन. प्राप्तिं विहारं तस्य तत्समम्
अपरं भवितव्यं च सर्वमुक्त्वा जगाम सा । स्वमात्रा भगिनीभिश्च प्रतिषिद्धा च दुःखिता
प्रभुवीदर्शना योगात्सर्वासां सिद्धियोगिनी । गत्वा सा जाह्नवीनीरं स्मृत्वा संपूज्य शंकरम्
स्मृत्वा तच्चरणाम्भोजं देहं तत्याज सुन्दरी । गन्धमादनशैलीयं शरीरं प्रविवेश ह ॥
कृतं द्वार पुरा येन दैत्यानामखिलं कुलम् । हाहाकारं प्रचक्रुश्च सुराः सर्वेऽतिविस्मिताः ॥

प्रभुः शंकरसेनाश्च दक्षयज्ञं विनश्य च । परामर्शं च सर्वेषां कृत्वा शोकातुराः पराः ॥
सत्वरं सर्ववृत्तान्तं कथयामासुरीश्वरम् । श्रुत्वा प्रवृत्तिं संहर्ता सर्वरुद्रगणैर्वृतः ॥ ९६॥
मूर्छां संप्राप शोकेन ज्ञानानन्दः परात्परः । क्षणेन चेतनां प्राप्य समुत्थाय त्रिलोचनः ॥
जगाम स्वर्णदीतीरं यत्र देवीकलेवरम् ॥ ९७ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० सतीदेहत्यागो नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

अथ त्रिचत्वारिंशोऽध्यायः ।

नारायण उवाच—

अथ दुर्गां महादेवः सतीमूर्तिं मनोहराम् । अम्लानपद्मवक्त्रां तां शयानां जाह्नवीतटे ॥
दधतीमक्षमालां च प्रतप्तकाञ्चनप्रभाम् । तेजसा प्रज्वलन्तीं च दधानां शुक्लवाससम् ॥
दृष्ट्वा सतीशरीरं च प्रदग्धो विरहाग्निना । तत्त्वराशिर्मूर्तिमांश्च मूर्छां प्राप तथाऽपि च ॥
कलत्रशोको बलवानात्मारामं परात्परम् । बाधते वेदबीजं तं योगीन्द्राणां गुरोर्गुरुम् ॥
क्षणेन चेतना प्राप्य तामुवाच त्रिलोचनः । निरीक्ष्य वदनाम्भोजं स्थाणुः स्थाणुरिवापरः
साश्रुनेत्रोऽतिदीनश्च दीनानां शरणप्रदः । दीनदैन्यापहारी च विलाप परं वचः ॥६॥

शंकर उवाच—

उत्तिष्ठोत्तिष्ठ सुभगे सति प्राणेश्वरि प्रिये । शंकरोऽहं तव स्वामी पश्य मां निकटागतम्
शिवं शिवप्रदं सर्वसंपद्रूपं च सिद्धिदम् । सर्वात्मानं च सर्वेशं शवतुल्यं त्वया विना ॥
शक्तोऽहं च त्वया सार्धं सर्वशक्तिस्वरूपया । शक्तिहीनः शवसमो निश्चेष्टः सर्वकर्मसु ॥
यश्च शक्तिं न जानाति ज्ञानहीनश्च निन्दति । तं त्यक्तुमुचितं विज्ञे कथं मां त्यजसि प्रिये
स्वयं ब्रह्मा स्वयं विष्णुः साध्वभूता वयं तव । सस्मितं सकटाक्षं च वद किंचित्सुधोपमम्
मधुराभासदृष्ट्या च मां दग्धं सेचनं कुरु । मां दृष्ट्वा दूरतः शीघ्रं स्निग्धं वदसि सस्मितम्
कथमद्यापि रुष्टेव विलपन्तं न भाषसे । प्राणाधिके समुत्तिष्ठ रुदन्तं मां न पश्यसि ॥
परित्यज्य च नः प्राणान्गन्तुं नार्हसि सुन्दरि । जगदम्बे समुत्तिष्ठ प्राणाधारे परात्परे ॥
पतिप्रिये समुत्तिष्ठ कथं मां नाद्य सेवसे । कथं करोषि विज्ञाय प्रतिभङ्गं श्रुतिभ्रमः ॥
इत्युक्त्वा मृतदेहं च प्रियाया विरहातुरः । निधायोरसि संश्लिष्य चुचुम्ब च पुनः पुनः
अधरे चाधरं दत्त्वा वक्षो वक्षसि शंकरः । पुनः पुनः समाश्लिष्य पुनर्मूर्छामवाप सः ॥
पुनः स चेतनां प्राप्य वेगादुत्थाय शोकतः । दुद्राव च यथोन्मत्तो ज्ञानिनां च गुरोर्गुरुः

सप्तद्वीपं सप्तसिन्धुं लोकालोकं च काञ्चनम् । बभ्राम भ्रान्तवज्ज्ञानी सतीं कृत्वा स्ववक्षसि
शतशृङ्गगिरेः पार्श्वे जम्बुद्वीपे च भारते । मुनिर्जनेऽक्षयवटे गङ्गातीरे सरित्तटे ।।२०।।
करोदोद्चैः स्वयं कृत्वा सति साध्वीत्युदीर्य च । त्रिनेत्रनेत्रनीरेण संबभूव सरोवरम् ।।
तत्रेशं च सरो नाम मुनीनां तपसः स्थलम् योजनद्वयविस्तीर्णं पुण्यतीर्थं मनोहरम् ।।
यत्र स्नात्वा पुनर्जन्म नराणां न भवेद्ध्रुवम् । शतजन्मकृतं पापं स्नानमात्रेण नश्यति ।।
त्यक्त्वा तां मानवीं मूर्तिं नरा यान्ति हरेः पदम् । तत्र स रोदनं त्यक्त्वा पुनर्बभ्राम मेदिनीम्
पूर्णमब्दं महायोगी विरहातुरमानसः सतीगालितप्रत्यङ्गैरङ्गैश्च पर्वतेश्वर ।। २१ ।।
बभूव सिद्धपीठानां समूहो वाञ्छितप्रदः । शेषाङ्गानां महादेवः संस्कारं वै विधाय च ।।
अस्थिमालां विनिर्माय चकार कण्ठभूषणम् । नित्यं तद्भस्म भक्त्या च चकार गात्रलेपनम्
सति प्राणेश्वरीत्युक्त्वा पुनर्मूर्छामवाप सः । विसस्मार ब्रह्म परमात्मानमात्मसंभवः ।।
स्वात्मारामः पूर्णकामो निश्चेष्टो विरहज्वरात् । तं शयानं गिरिवरस्याभ्याशे वटमूलके ।।
दृष्ट्वा देवाः समाजग्मुर्विस्मिताः शिवसंनिधिम् । नारायणश्च भगवानीश्वरः सह पार्षदैः ।।
रत्नयानेनाऽऽजगाम पद्मार्चितपदाम्बुजः । रत्नालंकारशोभाढ्यः पीतवासाश्चतुर्भुजः ।।
ईषद्धास्यप्रसन्नास्यो वनमालाविभूषितः । ब्रह्मा शेषश्च धर्मश्च सुराः सर्वे महर्षयः ।।
समूपुर्गासदासि लक्ष्मीकान्तं प्रणम्य ते । श्रीहरिः शंकरमहो कृत्वा वक्षसि मूर्छितम् ।।
रुदन्तं बोधयामास ज्ञानीशो ज्ञानिनां गुरुम् ।। २३ ।।

श्रीभगवानुवाच—

स्वात्माराम निबोधेदं मदीयं वचनं शृणु । हितमध्यात्मसारं च दुःखशोकनिकृन्तनम् ।।
सर्वाध्यात्मविद्यामानवर्जिं ज्ञाननिधिं विधिम् । तथाऽपि बोधयामि त्वां सर्वज्ञं वेधसां विधिम्
बुधं बोधयितुं शक्तोऽबुधोऽपि प्राणसंकटे । व्यवहारोऽस्ति लोकेषु सर्वः सर्वपरस्परम् ।।
मायाश्रिता गुणाः सर्वे हेतवः सुखदुःखयोः । विष्णुमाया बलवती गुणयुक्तं प्रबाधते ।।
दुःखं शोकं भयं धर्मो दुर्दिने भवतीश्वर । तत्रातीते कुतस्तानि सुदिने च समागते ।।
हर्षं ऐश्वर्यदर्पश्च संततं तत्र वर्धते । सर्वाण्येतानि गण्यन्ते स्वप्नानीव विपश्चितः ।।
ज्ञानं त्वम महादेव ज्ञानबीज सनातन । चेतनां कुरु मद्रं ते सती प्राप्स्यसि निश्चितम् ।।
न तोयं शीतता नित्यं नाग्निं मुञ्चति दाहिका । तेजः सूर्यं मही गन्धो तथा त्वां च सती शिव
इत्येवं समाकर्ण्य हरिं किंचिदुवाच ह । नेत्राण्युन्मीलनं कृत्वा त्रिनेत्रः श्रूयतामिति

त्रिनेत्र उवाच—

कस्त्वं नेत्रस्वरूपोऽसि क इमे तव संनिधौ । विज्ञाम भवन्त्येषां कानि नामानि का सती ।।

कोऽहं को मे भवान्ब्रूते किंकराः कुत आगताः । क यास्यासि क यास्यामि क गच्छन्त इमे वद
हरिरित्येवमाकर्ण्य रुरोद सगणो गिरे । नेत्रनीरैस्त्रिनेत्रं तं रुदन्तं प्रसिषेच सः ॥४६॥
हरिस्त्रिनेत्रयोर्नेत्रनीरपातेन तत्र वै । बभूव सरसां श्रेष्ठं तीर्थं भुवनपावनम् ॥ ४७ ॥
भारतेऽस्तगिरेः पश्चात्तत्राक्षयवटान्तिके । स्थलं बभूव तपसां मुक्तिबीजं तपस्विनाम् ॥
अथोवाच पुनः शीघ्रमाध्यात्मं च हरं हरिः । शृण्वतां सर्वदेवानां मुनीनामूर्ध्वरेतसाम्॥

**श्रीभगवानुवाच—**

शृणु शंकर वक्ष्यामि ज्ञानानन्द सनातन ॥ ४९ ॥
ज्ञानं ज्ञाननिधे शोकाद्विस्मृतोऽसि परात्पर । सुदिनं दुर्दिनं शश्वद्भवत्येव भवे भव ॥५०॥
सर्वेषां प्राकृतानां च ते बीजे सुखदुःखयोः । सुखाद्भवति हर्षश्च दर्पः शौर्यं प्रमत्तता ॥
राग ऐश्वर्यकामश्च विद्वेषश्च निरन्तरम् । दुःखाच्छोकात्समुद्वेगाद्भयं नित्यं प्रवर्तते ॥५२॥
हतान्येतानि सर्वाणि हते बीजे महेश्वर । सुदिनं दुर्दिनं चैव सर्वं कर्मोद्भवं भव ॥ ५३ ॥
तत्कर्म तपसां साध्यं कर्मणां च शुभाशुभम् । तपः स्वभावसाध्यं च स्वभावोऽभ्यासतो भवेत्
संसर्गसाध्योऽभ्यासश्च संसर्गः पुण्यतो भवेत् । पुण्यबीजं मनश्चैव पापबीजं च चञ्चलम् ॥
मनः शंभो ममांशश्च सर्वेन्द्रियपुरःसरम् । सर्वेषां जनकोऽहं च विस्त्वं ब्रह्मा पतिस्त्वयम्
ब्रह्मैकं मूर्तिभेदस्तु गुणभेदेन संततम् । तद्ब्रह्म विविधं वस्तु सगुणं निर्गुणं शिवे ॥ ५७ ॥
मायाश्रितो यः सगुणो मायातीतश्च निर्गुणः । स्वेच्छामयश्च भगवानिच्छया विकरोति च
इच्छाशक्तिश्च प्रकृतिर्नित्या सर्वप्रसूः सदा । केचिदेकं वदन्त्येव ब्रह्मज्योतिः सनातनम्
येचिद्वदन्ति द्विविधं ब्रह्म प्रकृतिपूर्वकम् । शृणु ये च वदन्त्येकं मायापुरुषयोः परम् ॥
तस्माद्भवति तौ द्वौ च तद्ब्रह्म सर्वकारणम् । अथ चैकं परं ब्रह्म द्विविधं भवतीच्छया ॥
इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा । तत्राऽऽसक्तश्च सगुणः शरीरी प्राकृतस्तथा ॥
निर्गुणस्तत्र निर्लिप्तोऽशरीरी च निरङ्कुशः । सर्वात्मा भगवान्नित्यः सर्वाधारः सनातनः
सर्वेश्वरः सर्वसाक्षी सर्वत्राऽस्ति फलप्रदः । शरीरं द्विविधं शंभो नित्यं प्राकृतमेव च ॥
नित्यं विनाशरहितं नश्वरं प्राकृतं सदा । अहं त्वं चापि भगवानाऽऽवयोर्नित्यविग्रहः ॥
आवयोरंशभूता ये प्राकृता नश्वविग्रहाः । रुद्रादयस्त्वदंशाश्च मदंशा विष्णुरूपिणः ॥
ममाप्येवं द्विधा रूपं द्विभुजं च चतुर्भुजम् । चतुर्भुजोऽहं वैकुण्ठे पद्मया पार्षदैः सह ॥
गोलोके द्विभुजोऽहं च गोपीभिः सह राधया । द्विविधं ये वदन्त्येवं द्वौ प्रधानौ तु सन्मते ॥

---

१ क. भवे । २ क शिवम् ।

पुरुषश्च सदा नित्यो नित्या प्रकृतिरीश्वरी । सदा तौ द्वौ च संश्लिष्टौ सर्वेषां पितरौ शिव
सशरीरौ निःशरीरौ स्वेच्छया सर्वरूपिणौ । प्राधान्यं च यथा पुंसः प्रकृतेश्च सदा तथा
सतीमिच्छसि चेच्छंभो प्रकृतेः स्तवनं कुरु । यत्स्तोत्रं च त्वया दत्तं पुरा दुर्वाससे मुदा
तद्दिव्यं कण्वशाखोक्तं भग तेन जगत्प्रसूम् । शोकनाशो भवतु ते शिवं शिव ममाऽऽशिषा
दूरं विघ्नहेतुश्च यातु स्त्रीविरहज्वरः । इत्येवमुक्त्वा लक्ष्मीशो विरराम गिरीश्वरम् ॥
स्तवनं कर्तुमारेभे प्रकृतेश्च महेश्वरः । स्नात्वा नत्वा च श्रीकृष्णं ब्रह्माणं भक्तिसंयुतः ॥
पुटाञ्जलियुतो भूत्वा पुलकाञ्चितविग्रहः ॥ ७३ ॥

महेश्वर उवाच—ओं नमः प्रकृत्यै । मन्त्रः ।

ब्रह्माणि ब्रह्मस्वरूपे त्वं मां प्रसीद सनातनि । परमात्मस्वरूपे च परमानन्दरूपिणि ॥
भद्रे भद्रप्रदे दुर्गे दुर्गघ्ने दुर्गनाशिनि । पोतस्वरूपे जीर्णे त्वं मां प्रसीद भवार्णवे ॥७५॥
सर्वस्वरूपे सर्वेशि सर्वबीजस्वरूपिणि । सर्वाधारे सर्वविद्ये मां प्रसीद जयप्रदे ॥ ७६ ॥
सर्वमङ्गलरूपे च सर्वमङ्गलदायिनि । समस्तमङ्गलाधारे प्रसीद सर्वमङ्गले ॥ ७७ ॥
निद्रे तन्द्रे क्षमे श्रद्धे तुष्टिपुष्टिस्वरूपिणि । लज्जे मेधे बुद्धिरूपे प्रसीद भक्तवत्सले ॥
वेदस्वरूपे वेदानां कारणे वेददायिनि । सर्ववेदाङ्गरूपे च वेदमातः प्रसीद मे ॥ ७९ ॥
दये जये महामाये प्रसीद जगदम्बिके । क्षान्ते शान्ते च सर्वान्ते क्षुत्पिपासास्वरूपिणि ॥
लक्ष्मिनारायणक्रोडे स्रष्टुर्वक्षसि भारति । मम क्रोडे महामाये विष्णुमाये प्रसीद मे ॥
कलाकाष्ठास्वरूपे च दिवारात्रिस्वरूपिणि । परिणामप्रदे देवि प्रसीद दीनवत्सले ॥८२॥
कारणे सर्वशक्तीनां कृष्णस्योरसि राधिके । कृष्णप्राणाधिके भद्रे प्रसीद कृष्णपूजिते ॥
यशःस्वरूपे यशसां कारणे च यशःप्रदे । सर्वदेवीस्वरूपे च नारीरूपविधायिनि ॥८४॥
समस्तकामिनीरूपे कलांशेन प्रसीद मे । सर्वसंपत्स्वरूपे च सर्वसंपत्प्रदे शुभे ॥८५॥
प्रसीद परमानन्दे कारणे सर्वसंपदाम् । यशस्विनां पूजिते च प्रसीद यशसां निधे ॥
आधारे सर्वजगतां रत्नाधारे वसुंधरे । चराचरस्वरूपे च प्रसीद मम मा चिरम् ॥८७॥
योगस्वरूपे योगीशे योगदे योगकारणे । योगाधिष्ठात्रि देवीशे प्रसीद सिद्धयोगिनि ॥
सर्वसिद्धिस्वरूपे च सर्वसिद्धिप्रदायिनि[1] । कारणे सर्वसिद्धीनां सिद्धेश्वरि प्रसीद मे ॥
व्याख्यानं सर्वशास्त्राणां मतभेदे महेश्वरि । ज्ञाने[2] यदुक्तं तत्सर्वं क्षमस्व परमेश्वरि ॥
केचिद्वदन्ति प्रकृतेः प्राधान्यं पुरुषस्य च । केचित्तत्र मतद्वैधे व्याख्याभेदं विदुर्बुधाः ॥
महाविष्णोर्नाभिदेशे स्थितं तं कमलोद्भवम् । मधुकैटभौ महादैत्यौ लीलया हन्तुमुद्यतौ

१ क. 'प्रदे'। २ क. 'ज्ञाने यदुक्तं तत्स'।

दृष्ट्वा स्तुतिं प्रकुर्वन्तं ब्रह्माणं रक्षितुं पुरा । बोधयामास गोविन्दं विनाशहेतवे तयोः
नारायणस्त्वया शक्त्या जघान तौ महासुरौ । सर्वेश्वरस्त्वया सार्धमनीशोऽयं त्वया विना
पुरा त्रिपुरसंग्रामे गगनात्पतिते मयि । त्वया च विष्णुना सार्धं रक्षितोऽहं सुरेश्वरि ॥
अधुना रक्ष मामीशे प्रदग्धं विरहाग्निना । स्वात्मदर्शनपुण्येन क्षीणांहि परमेश्वरि ॥
इत्युक्त्वा विरतः शंभुर्ददर्श गगनस्थिताम् । रत्नसाररथस्थां तां देवीं शतभुजां मुदा ॥
तप्तकाञ्चनवर्णाभां रत्नाभरणभूषिताम् । ईषद्धास्यप्रसन्नास्यां जगतां मातरं सतीम् ॥
दृष्ट्वा तां विरहासक्तः पुनस्तुष्टाव सत्वरम् । दुःखं निवेदयामास प्ररुदन्विरहोद्भवम् ॥
दर्शयामासास्थिमालां स्वाङ्गस्थं भस्मभूषणम् । कृत्वा बहुपरीहारं तोषयामास सुन्दरीम्
नारायणश्च ब्रह्मा च धर्मः शेषः सुरर्षयः । शिवं रक्षेश्वरीत्युक्त्वा तुष्टुवुस्ते सनातनीम्
बभूव परितुष्टा सा तेषां स्तोत्रेण तत्क्षणम् । उवाच कृपया शंभुं प्राणेशं प्राणवल्लभा

प्रकृतिरुवाच—

स्थिरो भव महादेव मम प्राणाधिक प्रभो । भवानात्मा च योगीशः स्वामी जन्मनि जन्मनि
अहं शैलेन्द्रकामिन्यां लब्ध्वा जन्म महेश्वर । तव पत्नी भविष्यामि मुञ्च त्वं विरहज्वरम्
इत्युक्त्वा शिवमाश्वास्य चान्तर्धानं चकार सा । सुरा जग्मुस्तमाश्वास्य लब्ध्वाऽऽत्मकंधरम्
हर्षान्तरात्मा गिरिशः कैलासं तु जगाम ह । ननर्त सगणस्तूर्णं संत्यज्य विरहज्वरम्
इदं शिवकृतं स्तोत्रं प्रकृत्या यः पठेन्नरः । न भवेत्कामिनीभेदस्तस्य जन्मनि जन्मनि
इह लोके सुखं भुक्त्वा स याति शिवमन्दिरम् । धर्मार्थकाममोक्षांश्च लभते नात्र संशयः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० शंकरशोका-
पनोदनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## अथ चतुश्चत्वारिंशोऽध्यायः ।

---

श्रीकृष्ण उवाच—

वसिष्ठस्य वचः श्रुत्वा सगणोऽपि हिमालयः । विस्मितो भार्यया सार्धं जहास पार्वती स्वयम्
अरुन्धती च तां मेनां बोधयामास कातराम् । निराहारां च रुदतीं जहौ शोकं मुदा च सा
अरुन्धती भोजयित्वा बुभुजे भोगमुत्तमम् । सर्वे प्रहृष्टमनसा मङ्गलं च चकार ह ॥ १ ॥
शैलः संभृतसंभारो वसिष्ठस्याऽऽज्ञया प्रिये । पत्रं प्रस्थापयामास नानास्थानं त्वरान्वितः

---

१ घ. 'दुग्धे' ।

पुरुषश्च सदा नित्यो नित्या प्रकृतिरीश्वरी । सदा तौ द्वौ च संश्लिष्टौ सर्वेषां पितरौ शि
सशरीरौ नि.शरीरौ स्वेच्छया सर्वरूपिणौ । प्राधान्यं च यथा पुंसः प्रकृतेश्च सदा तथा
सतीमिच्छसि चेच्छंभो प्रकृतेः स्तवनं कुरु । यत्स्तोत्रं च त्वया दत्तं पुरा दुर्वाससे मुदा
तद्दिव्यं कण्वशाखोक्तं भज तेन जगत्प्रभुम् । शोकनाशो भवतु ते शिवं शिव महाऽऽशिषा
दूरं विप्लवहेतुश्च यातु स्त्रीविरहज्वरः । इत्येवमुक्त्वा लक्ष्मीशो विरराम गिरीश्वरम् ॥
स्तवनं कर्तुमारेभे प्रकृतेश्च महेश्वरः । स्नात्वा नत्वा च श्रीकृष्णं ब्रह्माणं भक्तिसंयुतः ॥
पुटाञ्जलियुतो भूत्वा पुलकाञ्चितविग्रहः ॥ ७३ ॥

महेश्वर उवाच—ओं नमः प्रकृत्यै । मन्त्रः ।

त्राहि ब्रह्मस्वरूपे त्वं मां प्रसीद सनातनि । परमात्मस्वरूपे च परमानन्दरूपिणि ॥
भद्रे भद्रप्रदे दुर्गे दुर्गघ्ने दुर्गनाशिनि । पोतस्वरूपे जीर्णे त्वं मा प्रसीद भवार्णवे ॥७५॥
सर्वस्वरूपे सर्वेशि सर्वबीजस्वरूपिणि । सर्वाधारे सर्वविद्ये मां प्रसीद जयप्रदे ॥ ७६ ॥
सर्वमङ्गलरूपे च सर्वमङ्गलदायिनि । समस्तमङ्गलाधारे प्रसीद सर्वमङ्गले ॥ ७७ ॥
निद्रे तन्द्रे क्षमे श्रद्धे तुष्टिपुष्टिस्वरूपिणि । लज्जे मेधे बुद्धिरूपे प्रसीद भक्तवत्सले ॥
वेदस्वरूपे वेदानां कारणे वेददायिनि । सर्ववेदाङ्गरूपे च वेदमातः प्रसीद मे ॥ ७९ ॥
दये जये महामाये प्रसीद जगदम्बिके । क्षान्ते शान्ते च सर्वान्ते क्षुत्पिपासास्वरूपिणि ॥
लक्ष्मिनारायणक्रोडे स्रष्टुर्वक्षसि भारति । मम क्रोडे महामाये विष्णुमाये प्रसीद मे ॥
कलाकाष्ठास्वरूपे च दिवारात्रिस्वरूपिणि । परिणामप्रदे देवि प्रसीद दीनवत्सले ॥८२॥
कारणे सर्वशक्तीनां कृष्णस्योरसि राधिके । कृष्णप्राणाधिके भद्रे प्रसीद कृष्णपूजिते ॥
यशःस्वरूपे यशसां कारणे च यशःप्रदे । सर्वदेवीस्वरूपे च नारीरूपविधायिनि ॥८४॥
समस्तकामिनीरूपे कलांशेन प्रसीद मे । सर्वसंपत्स्वरूपे च सर्वसंपत्प्रदे शुभे ॥८५॥
प्रसीद परमानन्दे कारणे सर्वसंपदाम् । यशस्विना पूजिते च प्रसीद यशसां निधे ॥
आधारे सर्वजगतां रत्नाधारे वसुंधरे । चराचरस्वरूपे च प्रसीद मम मा चिरम् ॥८७॥
योगस्वरूपे योगीशे योगदे योगकारणे । योगाधिष्ठात्रि देवीशे प्रसीद सिद्धयोगिनि ॥
सर्वसिद्धिस्वरूपे च सर्वसिद्धिप्रदायिनि । कारणे सर्वसिद्धीनां सिद्धेश्वरि प्रसीद मे ॥
व्याख्यानं सर्वशास्त्राणां मतभेदे महेश्वरि । ज्ञाने यदुक्तं तत्सर्वं क्षमस्व परमेश्वरि ॥
केचिद्वदन्ति प्रकृतेः प्राधान्यं पुरुषस्य च । केचित्तत्र मतद्वैधे व्याख्यामेदं विदुर्बुधाः ॥
महाविष्णोर्नाभिदेशे स्थितं तं कमलोद्भवम् । मधुकैटभौ महादैत्यौ लीलया हन्तुमुद्यतौ

१ क. 'शानदे'। २ क. 'ने ज्ञाने यदुक्तं तत्स'।

चन्दनागुरुकस्तूरीचारुकुङ्कुमभूषितम् । मालतीमाल्यसंयुक्तं सद्रत्नमुकुटोज्ज्वलम् ॥
वह्निशौचेनातुलेन चातिसूक्ष्मेण चारुणा । अमूल्यवस्त्रयुग्मेन विचित्रेणातिभूषितम् ॥३३॥
रत्नदर्पणहस्तं च कज्जलोज्ज्वललोचनम् । सर्वया प्रभयाऽऽच्छन्नमतीव सुमनोहरम् ॥
अतीव तरुणं रम्यैर्भूषिताङ्गैश्च भूषितम् । बिभ्रतं रूपमतुलं परं नारायणाज्ञया ॥३५॥
योगस्वरूपं योगेशं योगीन्द्राणां गुरोर्गुरुम् । स्वेच्छामयं गुणातीतं ब्रह्मज्योतिः सनातनम्
गुणभेदाद्रूपभेदं धत्तेऽनन्तमरूपकम् । तारणं तं भवस्यानां सृष्टिस्थित्यन्तकारणम् ॥
सर्वाधारं सर्वबीजं सर्वेशं सर्वजीवनम् । साक्षिरूपं निरीहं च परमानन्दमक्षरम् ॥३८॥
आद्यन्तमध्यरहितं सर्वाद्यं सर्वरूपकम् । दृष्ट्वा जामातरं मेना जहौ शोकं मुदाऽन्विता ॥
प्रशशंसुर्युवत्यश्च धन्या धन्या सतीति ताः । दुर्गा भाग्यवतीत्येवमूचुः काश्चन कन्यकाः
कामेन काश्चित्कामिन्यो मौनीभूताश्च स्तम्भिताः । न दृष्टो वर इत्येवमस्माभिर्ज्ञानगोचरे
काश्चिन्निमेषरहिता मूर्छामापुश्च काश्चन । निनिन्दुः स्वपतिं काश्चित्स्वेच्छा चक्रुश्च काश्चन
काश्चिद्भावेन रुरुदुः पुलकाञ्चितविग्रहाः । जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥४२॥
दृष्ट्वा शंकररूपं च महृष्टाः सर्वदेवताः । नानाप्रकारवाद्यानि चारूणि मधुराणि च ॥४४॥
वादका वादयामासुर्नानाशिल्पेन तत्र वै । एतस्मिन्नन्तरे दुर्गा शैलान्तःपुरचारिका ॥
बहिश्चकार सद्रत्नासनस्था वस्त्रवेष्टिताम् । कस्तूरीबिन्दुभिः सान्द्रसिन्दूरबिन्दुभूषिताम् ॥
चारुचन्दनचन्द्राभा नम्रभालस्थलोज्ज्वलाम् । रत्नेन्द्रसारहारेण वक्षःस्थलविभूषिताम् ॥
त्रिनेत्रदत्तनेत्रां तामन्यवारितलोचनाम् । अतीवदृष्ट्याम्यगुक्तास्या सकटाक्षां मनोहराम् ॥
रत्नकेयूरवलयरत्नकङ्कणमण्डिताम् । रत्नपाशकर्मसक्ता क्वणन्मञ्जीररञ्जिताम् ॥४९॥
अमूल्यातुल्यचित्राढ्यवस्त्रयुग्मसुशोभिताम् । सद्रत्नकुण्डलाभ्यां च चारुगण्डस्थलोज्ज्व-
लाम् ॥ ५० ॥
मणिसारप्रभामुष्टदन्तराजिविराजिताम् । रत्नदर्पणहस्तां च क्रीडापद्मं बिभ्रतीम् ॥
चन्दनागुरुकस्तूरीकुङ्कुमेनाङ्गचर्चिताम् । मुदिता ददृशुः सर्वे जगदाद्यां जगत्प्रसूम् ॥
त्रिनेत्रो नेत्रकोणेन तां ददर्श मुदाऽन्वितः । सतीं सत्याकृतिं दृष्ट्वा विजहौ विरहज्वरम्
शिवः सर्वं विसस्मार दुर्गासंन्यस्तमानसः । पुलकाञ्चितसर्वाङ्गो हर्षाश्रुपूर्णलोचनः ॥
एतस्मिन्नन्तरे शैलः प्रहृष्टः सपुरोहितः । तं वरं वरयामास वस्त्रचन्दनभूषणैः ॥५५॥
भक्त्या पाद्यादिभिर्माल्यैर्दिव्यगन्धमनोहरैः । ततः शम्भिं वेदमन्त्रैः संप्रदाने चकार ताम्

---

१ घ. रत्नवेदिका° ।

ततः प्रस्थापयामास शिवं मङ्गलपत्रिकाम् । नानाप्रकारद्रव्याणि वाद्यानि च चकार ह ॥
तन्दुलानां च शैलान्वै पृथुकानां च सुन्दरि । तैलानां च घृतानां च दध्नां वापीश्चकार ह
गुडानामासवानां च क्षीराणां च तथैव च । अथो हैयङ्गवीनानां लवणानां परं मुदा ॥
लड्डुकानां शर्कराणां स्वस्तिकानां तथैव च । यवचूर्णादिपिष्टानां घृतपक्वानि तानि च
नानाप्रकारवस्त्राणि वह्निशौचानि यानि च । महारत्नप्रवालानि सुवर्णरजतानि च ॥
द्रव्याण्येतानि शैलेन्द्रः कृत्वा तु विधिपूर्वकम् । मङ्गलं कर्तुमारेभे तत्रैव मङ्गले दिने ॥
संस्कारं कारयामासुः पार्वतीं पर्वतस्त्रियः । स्नापयित्वा वस्त्रयुगं धारयामासुराशु ताः ॥
कारयित्वा सुवेषां च रत्नभूषणभूषिताम् । दर्पणं धारयामासुर्दूर्वाक्षतसमन्वितम् ॥१२॥
ददुश्चालक्तकं चारु पादाङ्गुलिषु पादयोः । गण्डे पत्त्रावलीं रम्यां नेत्रे कज्जलमुज्ज्वलम्
कबरीं कारयामासुर्मालतीमाल्यवेष्टिताम् । पट्टसूत्रविनद्धा ता वामवक्त्रा मनोहराम् ॥
एतस्मिन्नन्तरे राधे समाजग्मुः सुरेश्वराः । नीत्वा त्रिनेत्रं तत्रैव रत्नयानस्थमीश्वरम् ॥
शैलः संभृतसंभारान्संभाषयितुमीश्वरान् । शैलान्प्रस्थापयामास ब्राह्मणानपि पूजितान् ॥
प्राङ्गणं कारयामास रम्भास्तम्भैः समन्वितम् । पट्टसूत्रसंनिबद्धरसालपल्लवान्वितैः ॥१७॥
फलपल्लवसंयुक्तैः कलशैर्जलसंयुतैः । चन्दनागुरुकस्तूरीसुचारुकुसुमान्वितैः ॥ १८ ॥
मालतीमाल्यसंयुक्तैः संयुक्तं सुमनोहरम् । देवेश्वरानुगे दृष्ट्वा प्रणनाम हिमालयः ॥
रत्नसिंहासनं दातुं प्रेरयामास किंकरान् । नारायणो हि भगवानुवास पार्षदैः सह ॥
विनतानन्दनात्तूर्णमवरुह्य चतुर्भुजः । चतुर्भुजैः पार्षदैश्च रत्नभूषणभूषितैः ॥ २१ ॥
रत्नमुष्टिनिबद्धैश्च सेवितः श्वेतचामरैः । ऋषिश्रेष्ठैः सुरश्रेष्ठैः स्तूयमानश्च संसदि ॥
ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकारकः । उवास च तदभ्याशे ब्रह्मा देवगणैः सह ॥
ऋषयो मुनयश्चैव समूपुर्मङ्गले स्थले । एतस्मिन्नन्तरे शंभुरवरुह्य रथाद्रहो ॥ २४ ॥
रत्नासने समुत्तिष्ठन्ददर्श पर्वतालयम् । समाजग्मुः शिवं द्रष्टुं शैलेन्द्रनगरस्त्रियः ॥२५॥
वृद्धा बाला युवत्यश्च वस्त्राभरणभूषिताः । काश्चित्कज्जलहस्ताश्च वस्त्रहस्ताश्च काश्चन
काश्चित्सिन्दूरहस्ताश्च काश्चित्कङ्कतिकाकराः । वेषार्धभूषिताः काश्चित्काश्चिन्नैवार्धभूषिताः
काश्चित्त्रिभूषिताः काश्चित्सर्वाभरणभूषिताः । सर्वा आगत्य संतस्थुः सस्मिताः पर्वतालये
ऋषिकन्या देवकन्या नागकन्या मनोहराः । गन्धर्वशैलकन्याश्च राजकन्याः समागताः
सर्वा अप्सरसो दिव्या रम्भाद्याः समुपस्थिताः । मेना कन्यागणैः सार्धं ददर्श शंकरं वरम्
चारुचम्पकवर्णाभमेकवक्त्रं त्रिलोचनम् । ईषद्धास्यप्रसन्नास्यं रत्नाभरणभूषितम् ॥३१॥

---

१ ध. मुने ।

चन्दनागुरुकस्तूरीचारुकुङ्कुमभूषितम् । मालतीमाल्यसंयुक्तं सद्रत्नमुकुटोज्ज्वलम् ॥
वह्निशौचेनातुलेन चातिसूक्ष्मेण चारुणा । अमूल्यवस्त्रयुग्मेन विचित्रेणातिभूषितम् ॥३३॥
रत्नदर्पणहस्तं च कज्जलोज्ज्वललोचनम् । सर्वया प्रभयाऽऽच्छन्नमतीव सुमनोहरम् ॥
अतीव तरुणं रम्यैर्भूषिताङ्गैश्च भूषितम् । बिभ्रतं रूपमतुलं परं नारायणाज्ञया ॥३५॥
योगस्वरूपं योगेशं योगीन्द्राणां गुरोर्गुरुम् । स्वेच्छामयं गुणातीतं ब्रह्मज्योतिः सनातनम्
गुणभेदाद्रूपभेदं धत्तेऽनन्तमरूपकम् । तारणं तं भवस्थानां सृष्टिस्थित्यन्तकारणम् ॥
सर्वाधारं सर्वबीजं सर्वेशं सर्वजीवनम् । साक्षिरूपं निरीहं च परमानन्दमक्षरम् ॥३८॥
आद्यन्तमध्यरहितं सर्वाद्यं सर्वरूपकम् । दृष्ट्वा जामातरं मेना जहौ शोकं मुदाऽन्विता ॥
प्रशशंसुर्युवत्यश्च धन्या धन्या सतीति ताः । दुर्गा भाग्यवतीत्येवमूचुः काश्चन कन्यकाः
कामेन काश्चित्कामिन्यो मौनीभूताश्च स्तम्भिताः । न दृष्टो वर इत्येवमस्माभिर्नगोचरे
काश्चिन्निमेषरहिता मूर्छामापुश्च काश्चन । निनिन्दुः स्वपतिं काश्चित्स्वेच्छां चक्रुश्च काश्चन
काश्चिद्भावेन रुरुदुः पुलकाञ्चितविग्रहाः । जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥४२॥
दृष्ट्वा शंकररूपं च प्रहृष्टाः सर्वदेवताः । नानाप्रकारवाद्यानि चारूणि मधुराणि च ॥४४॥
वादका वादयामासुर्नानाशिल्पेन तत्र वै । एतस्मिन्नन्तरे दुर्गा शैलान्तःपुरचारिका ॥
बहिश्चकार सद्रत्नासनस्थां वेष्टिताम्[1] । कस्तूरीबिन्दुभिः सान्द्रसिन्दूरबिन्दुभूषिताम् ॥
चारुचन्दनचन्द्राभां नम्रभालस्थलोज्ज्वलाम् । रत्नेन्द्रसारहारेण वक्षःस्थलविभूषिताम् ॥
त्रिनेत्रदत्तनेत्रां तामन्यवारितलोचनाम् । अतीवहास्ययुक्तास्यां सकटाक्षां मनोहराम् ॥
रत्नकेयूरवलयरत्नकङ्कणमण्डिताम् । रत्नपाशकसंसक्तां क्वणन्मञ्जीररञ्जिताम् ॥४९॥
अमूल्यातुल्यचित्राढ्यवस्त्रयुग्मसुशोभिताम् । सद्रत्नकुण्डलाभ्यां च चारुगण्डस्थलोज्ज्व-
लाम् ॥ ५० ॥
मणिसारप्रभामुष्टदन्तराजिविराजिताम् । रत्नदर्पणहस्तां च क्रीडापद्मं विघूर्णतीम् ॥
चन्दनागुरुकस्तूरीकुङ्कुमेनाङ्गचर्चिताम् । मुदिता ददृशुः सर्वे जगद्धात्रीं जगत्प्रसूम् ॥
त्रिनेत्रो नेत्रकोणेन तां ददर्श मुदाऽन्वितः । सतीं सत्याकृतिं दृष्ट्वा विजहौ विरहज्वरम्
शिवः सर्वं विसस्मार दुर्गासंन्यस्तमानसः । पुलकाञ्चितसर्वाङ्गो हर्षाश्रुपूर्णलोचनः ॥
एतस्मिन्नन्तरे शैलः प्रहृष्टः सपुरोहितः । तं वरं वरयामास वस्त्रचन्दनभूषणैः ॥५५॥
भक्त्या पाद्यादिभिर्माल्यैर्दिव्यगन्धमनोहरैः । ततः शम्भुं वेदमन्त्रैः संप्रदानं चकार ताम्

[1] घ. रत्नवेदिका° ।

पौतुकानि ददौ तस्मै रत्नानि विविधानि च । चारुरत्नविकाराणि पात्राणि सुन्दराणि च
गवां लक्षं गजेन्द्राणां सहस्राणि च राधिके । रत्नकम्बलयुक्तानि साङ्कुशानि मुदाऽन्वितः
त्रिशल्लक्षं हयानां च सज्जितानामकातरः । दासीनामनुरक्तानां लक्षं सद्रत्नभूषितम् ॥
शतं द्विजवटूनां च पार्वतीभ्रातृतुल्यकम् । रथानां च शतं रम्यं रत्नेन्द्रसारनिर्मितम् ॥
पार्वतीं वस्तुसहितां स्वस्तीत्युच्चार्य शंकरः । जग्राहाऽऽनन्दमनसा यत्नाच्छैलसमर्पिताम्
हिमालयः सुतां दत्त्वा परिहारं चकार तम् । माध्यंदिनोक्तस्तोत्रेण तुष्टाव संपुटाञ्जलिः ॥

हिमालय उवाच—

प्रसीद दक्षयज्ञघ्न नरकार्णवतारक । सर्वात्मरूप सर्वेश परमानन्दविग्रह ॥ १३ ॥
गुणार्णव गुणातीत गुणयुक्त गुणेश्वर । गुणबीज महाभाग प्रसीद गुणिनां वर ॥ १४ ॥
योगाधार योगरूप योगज्ञ योगकारण । योगीश योगिनां बीज प्रसीद योगिनां गुरो॥
प्रलय प्रलयाधीश भवप्रलयकारण । प्रलयान्ते सृष्टिबीज प्रसीद परिपालक ॥ १६ ॥
संहारकाले घोरे च सृष्टिसंहारकारण । दुर्निवार्य दुराराध्य चाऽऽशुतोष प्रसीद मे ॥
कालस्वरूप कालेश काले च फलदायक । कालबीजैक कालघ्न प्रसीद कालपालक ॥
शिवस्वरूप शिवद शिवबीज शिवाश्रय । शिवभूत शिवप्राण प्रसीद परमाश्रय ॥१९॥
इत्येवं स्तवनं कृत्वा विरराम हिमालयः । प्रशशंसुः सुराः सर्वे मुनयश्च गिरीश्वरम् ॥
हिमालयकृतं स्तोत्रं संयतो यः पठेन्नरः । प्रददाति शिवस्तस्मै वाञ्छितं राधिके ध्रुवम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० पार्वतीसंप्रदाने
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

अथ पञ्चचत्वारिंशोऽध्यायः ।

---

श्रीकृष्ण उवाच—

अथ वेदविधानेन संस्थाप्य वह्निमीश्वरः । यज्ञं चकार तत्रैव वामे संस्थाप्य पार्वतीम्॥
निवृत्ते विधिवद्यज्ञे विप्रेभ्यो दक्षिणां ददौ । शिवः शतसुवर्णानि वृन्दावनविनोदिनि ॥
अथ प्रदीपमानीय शैलेन्द्रनगरस्त्रियः । निर्वर्त्य मङ्गलं कर्म गृहं संप्राप्य दम्पती॥३॥
कृत्वा जयध्वनिं प्रीत्या शुभनिर्मञ्छनादिकम् । सस्मिताः सकटाक्षाश्च पुलकाञ्चितविग्रहाः
वासगेहं संप्रविश्य ददृशुः कामिनीगणाः । शंकरं रूपवेषाढ्यं रत्नभूषणभूषितम् ॥५॥

---

१ ख. गणे ।

चन्दनागुरुकस्तूरीकुङ्कुमाञ्चितविग्रहम् । ईषद्धास्यप्रसन्नास्यं सकटाक्षं मनोहरम् ॥ ६ ॥
अपूर्वसूक्ष्मवेषाढ्यं सिन्दूरबिन्दुभूषितम् । चारुचम्पकवर्णाभं सर्वावयवसुन्दरम् ॥ ७ ॥
नवीनयौवनस्थं च मुनीन्द्रचित्तमोहनम् । सरस्वतीं च लक्ष्मीं च सावित्रीं जाह्नवीं रतिम्
अदितिं च शचीं चैव लोपामुद्रामरुन्धतीम् । अहल्यां तुलसीं स्वाहां रोहिणीं च वसुंधराम्
शतरूपां च संज्ञां च सतीस्त्रीणां च षोडश । देवकन्या नागकन्या मुनिकन्या मनोहराः॥
या याः स्थितास्तत्र तासां संख्यां कर्तुं च कः क्षमः । तामी रत्नासने दत्ते तत्रोवास शिवो मुदा
तमूचुः क्रमशो देव्यो मधुरोक्तिं सुधामिव ॥ ११ ॥

सरस्वत्युवाच—

प्राप्ता सती महादेवाधुना प्राणाधिका मुदा । दृष्ट्वा प्रियास्यं चन्द्राभं संतापं त्यज कामुक
कालं गमय कल्पेश सदा संश्लेषपूर्वकम् । विश्लेषस्ते न भविता सर्वकालं ममाऽऽशिषा

लक्ष्मीरुवाच—

लज्जां विहाय देवेश सतीं कृत्वा स्ववक्षसि । तिष्ठ संप्रति का लज्जा प्राणा यान्ति यया विना

साविञ्युवाच—

भोजयित्वा सतीं शंभो शीघ्रं भोजय मा खिदः । तदाचम्य सकर्पूरं ताम्बूलं देहि भक्तितः

जाह्नव्युवाच—

स्वर्णकङ्कतिकां धृत्वा केशान्मार्जय योषितः । कामिन्याः स्वामिसौभाग्यं सुखं नातः परं भवेत्

रतिरुवाच—

गृहीत्वा पार्वतीं देव सुभगामतिदुर्लभाम् । कथं मम प्राणनाथो निःस्वार्थं भस्मसात्कृतः॥
जीवयसि विभो कामं कामव्यापारमात्मनि । कुरु दूरं च संतापं मम विश्लेषहेतुकम्॥ १८॥
दम्पतीविरहक्लेशं सर्वं ज्ञात्वा दयानिधे । तथाऽपि मम कान्तश्च कोपेन भस्मसात्कृतः॥
इत्युक्त्वा कामभस्माथ ददौ सा ग्रन्थिबन्धितम् । रुरोद पुरतः शंभोर्नाथ नाथेत्युदीर्य च
हरिस्तद्रोदनं श्रुत्वा करुणामयसागरः । ब्रह्मा धर्मादिदेवाश्च ययुर्वासगृहं शिवम् ॥
दृष्ट्वा नारायणं धर्मं ब्रह्माणं च सुरानपि । जवेन पीठादुत्थाय स्वाङ्गं कुर्वित्युवाच ह
शंकरस्य वचः श्रुत्वा तमुवाच हरिः स्वयम् । कामं जीवय हे रुद्रेत्युक्त्वा शनैर्जगाम सः
उच्चुर्देव्यो बहुतरं यत्नं विनयपूर्वकम् । सुधादृष्ट्या शूलभृतो भस्मतो निर्गतः स्मरः॥
दृष्ट्वा कामं रतिस्तं च प्रणनाम महेश्वरम् । तद्रूपं च तदाकारं सस्मितं सधनुःशरम् ॥
प्रणम्य शंकरं कामः स्तुतिं कृत्वा यथागमम् । बहिर्गता हरिं देवान्प्रणम्य समुवाच ह ॥

कामं समाप्य देवाश्च युयुजुश्च तमाशिवम्। काले रक्षा विनाशश्च निषेध(कः) केन पार्यते
अथ शैलः सुरान्सर्वान्नारायणपुरोगमान्। भोजयामास भक्त्या च शाययामास यत्नतः
अथ शंभुर्वासगृहे वामे संस्थाप्य पार्वतीम्। मिष्टान्नं भोजयामास तया सह मुदाऽन्वितः
भुक्तवन्तं शिवं तत्र देवमाताऽदितिः स्वयम्। उवाच सस्मितं राधे संप्रीत्या सरसं वचः

आदितिरुवाच—

भोजनान्ते शचि शंभोः शौचार्थं जलमर्पय। देहि शीघ्रं मम प्रीत्या दम्पत्योः प्रीतिपूर्वकम्

शच्युवाच—

कृत्वा विलापं यद्धेतोः शवं कृत्वा स्ववक्षसि। यो बभ्राम भुवं मोहात्कालेन प्राप तां सतीम्

अरुन्धत्युवाच—

मया दत्ता सती तुभ्यं मेना दातुमनीप्सिता। विविधं बोधयित्वेमां रतिं च कर्तुमर्हसि ॥

अहल्योवाच—

वृद्धावस्थां परित्यज्य ह्यतीव तरुणोऽधुना। तेन मेना तु मेने त्वां सुतामर्पितुमीश्वर ॥

तुलस्युवाच—

सती त्वया परित्यक्ता कामो दग्धः पुरा कृतः। कथं तदा वसिष्ठश्च प्रभो प्रस्थापितोऽधुना

स्वाहोवाच—

स्थिरो भव महादेव स्त्रीणां वचसि सांप्रतम्। विवाहे व्यवहारोऽस्ति पुरंध्रीणां प्रगल्भता ॥

रोहिण्युवाच—

कामं पूरय पार्वत्याः कामशास्त्रविशारद। कुरु पारं स्वयं कामी कामिनीकामसागरम् ॥

वसुंधरोवाच—

भोगद्रव्यं विना भोगी न हि तुष्टः क्षुधातुरः। येन तुष्टिर्भवेच्छंभो तत्कर्तुमुचितं स्त्रिया

संज्ञोवाच—

जानासि भावं सर्वज्ञ कामार्तानां च योषिताम्। न च त्वं स्वामिनं शंभो सती जानाति संग-
तम् ॥ ३९ ॥

शतरूपोवाच—

तूर्णं प्रस्थापय प्रीत्या पार्वत्या सह शंकरम्। रत्नप्रदीपं ताम्बूलं तल्पं निर्माय निर्जने ॥

श्रीकृष्ण उवाच—

स्त्रीणां तद्वचनं श्रुत्वा ता उवाच शिवः स्वयम्। निर्विकारी च भगवान्योगीन्द्राणां गुरोर्गुरुः

---

१ क. काम र°। २ ख. पुरस्त्रीणा। ३ ख. °मिनां का°।

शंकर उवाच—

देव्यो मा वदतोक्तिं च हीदृग्भूतां ममान्तिके । जगतां मातरः साध्व्यः पुत्रे चाच्छना क
शंकरस्य वचः श्रुत्वा लज्जिताः सुरयोषितः । बभूवुः संभ्रमात्तूर्णीं चित्रपुत्तलिका यथा ॥
भुक्त्वा मिष्टानि भगवानाचम्य च मुदाऽन्वितः । सकर्पूरं च ताम्बूलं बुभुजे भार्यया सह
रत्नसिंहासने शंभुर्मेनादत्ते मनोहरे । संनिवाय मुदा युक्तो ददर्श वासमन्दिरम् ॥ ३९ ॥
रत्नप्रदीपशतकैर्ज्वलद्भिर्ज्वलितं श्रिया । रत्नपात्रघटाकीर्णं मुक्तामाणिक्यभूषितम् ॥
रत्नदर्पणशोभाढ्यं मण्डितं श्वेतचामरैः । चन्दनागुरुसंयुक्तं पुष्पशय्यासमन्वितम् ॥
नानाचित्रविचित्राढ्यं निर्मितं विश्वकर्मणा । रत्नसारेण खचितं रचितं हीरकैर्वरैः ॥
कुत्रचित्सुरनिर्माणवैकुण्ठसुमनोहरम् । वृन्दावनं कुञ्जवनं कुत्रचिद्रासमण्डलम् ॥ ४९ ॥
कैलासं च कुत्रचन कुत्रचिदिन्द्रमन्दिरम् । दृष्ट्वाऽऽश्चर्यं महादेवः परितुष्टो बभूव ह ॥
अथ प्रभातकालश्च बभूव प्राणवल्लभे । नानाप्रकारवाद्यानि वादयांचक्रिरे जनाः ॥ ५२ ॥
सर्वे सुराः समुत्तस्थुः सज्जीभूताः ससंभ्रमाः । स्ववाहनान्समारुह्य कैलासं गन्तुमुद्यताः
वासगेहं समागत्य धर्मो नारायणाज्ञया । उवाच शंकरं योगी योगीशं समयोचितम् ॥

धर्म उवाच—

उत्तिष्ठोत्तिष्ठ भद्रं ते भवतु प्रमथाधिप । पार्वत्या सह माहेन्द्रे यात्रां कुरु हरिं स्मरन् ॥
इत्थं धर्मवचः श्रुत्वा पार्वत्या सह शंकरः । यात्रां चकार माहेन्द्रे वृन्दावनविनोदिनि
यात्रां कुर्वति देवेशे पार्वत्या सह शंकरे । उच्चै रुदित्वा सा मेना तमुवाच कृपानिधिम्

मेनोवाच—

कृपानिधे कृपां कृत्वा मद्वत्सां पालयिष्यसि । सहस्रदोषान्भगवानाशुतोषः क्षमिष्यसि ॥
त्वत्पदाम्बुजभक्तैषा मद्वत्सा जन्मजन्मनि । स्वप्ने ज्ञाने स्मृतिर्नास्ति महादेवप्रभुं विना ॥
त्वद्भक्तिश्रुतिमात्रेण हर्षाश्रुपुलकान्विता । त्वन्निन्दया भवेन्मौना मृत्युंजय मृता इव ॥
इत्युक्त्वा मेनका शीघ्रं तत्राऽऽगत्य हिमालयः । उच्चै रुरोद च तदा वत्सां कृत्वा स्ववक्षसि
क्व यासि वत्सेत्युच्चार्य शून्यं कृत्वा हिमालयम् । स्मारं स्मारं तद्गुणौघं विदार्य मन्मनः
स्फुटम् ॥ ६१ ॥
इत्येवमुक्त्वा शैलेन्द्रः समर्प्य च शिवां शिवे । स शैलः सहपुत्रश्च रुरोदोच्चैर्मुहुर्मुहुः ॥
नारायणश्च भगवानध्यात्मविद्यया स्वयम् । सर्वांश्च बोधयामास कृपया स कृपानिधिः ॥
ननाम पार्वती भक्त्या मातरं पितरं गुरून् । मायया च महामाया रुरोदोच्चैर्मुहुर्मुहुः ॥
पार्वतीरोदनेनैव रुरुदुः सर्वयोषितः । मुनयश्च सुराः सर्वे सर्वाकिः सगणा भुवम् ॥ ६५ ॥

शीघ्रं ययुस्ते कैलासं देवा मानसयायिनः। मुहूर्तार्धेन मुदिताः संप्रापुः शंकरालयम् ॥
दृष्ट्वाऽऽगतं देवपत्न्यो मुनिपत्न्यश्च सत्वरम्। आययुर्दीपमानीय मुदा मङ्गलकर्मणि ॥
वायुपत्नी कुबेरस्य कामिनी शुक्रकामिनी। तारा सुरगुरोः पत्नी पत्नी दुर्वाससस्तथा ॥
अत्रिभार्याऽनसूया च चन्द्रपत्न्यस्तथैव च। देवकन्या नागकन्या मुनिकन्याः सहस्रशः ॥
असंख्यकामिनीसंघः संख्यां कर्तुं च कः क्षमः। ताश्च प्रवेशयामासुर्दम्पती वासमन्दिरम् ॥
रत्नसिंहासने रम्ये वासयामासुरीश्वरीम्। सतीं तां दर्शयामास शिवः पूर्वालयं मुदा ॥
सति स्मरस्यतो गेहाद्गता तातमन्दिरम्। अधुना शैलकन्या त्वं तत्र दक्षसुता पुरा ॥
जातिस्मरां स्मारयामि नित्यं स्मरसि चेद्वद। शंकरस्य वचः श्रुत्वा सस्मितोवाच सा सती ॥
सर्वं स्मरामि प्राणेश मौनीभूतो भवेति तम्। शिवः संभृतसंभारो नानावस्तुमनोहरम् ॥
भोजयामास देवांश्च नारायणपुरोगमान्। भुक्त्वा देवाः प्रजग्मुस्ते नानारत्नविभूषिताः ॥
सस्त्रीकाः सगणाः सर्वे प्रणम्य चन्द्रशेखरम्। नारायणं च ब्रह्माणं ननाम शंकरः स्वयम् ॥
तौ च तं च समाश्लिष्याऽऽशिषं कृत्वा प्रजग्मतुः। अथ शैलश्च मेना च मैनाकमाजुहाव ह
शीघ्रमानय भद्रं ते पार्वतीं शंकरं सुत। तयोः स वचनं श्रुत्वा शीघ्रं गत्वा शिवालयम् ॥
आजगाम समानीय पार्वतीपरमेश्वरौ। पार्वत्यागमनं श्रुत्वा बालाश्च बालिकास्तथा ॥
वृद्धा युवत्यो याश्च शैलाश्च दुद्रुवुर्मुदा। मेना सुताभ्यां वध्वा च सह दुद्राव सस्मिता
हिमालयश्च मुदितो दुद्रावानुव्रजन्सुताम्। अवरुह्य रथाद्देवी मातरं पितरं गुरून् ॥
प्रणनाम प्रमुदिता निमग्नाऽऽनन्दसागरे। पार्वतीं च समाश्लिष्य मेनका हर्षविह्वला ॥
हिमालयश्च मुदितो गताः प्राणा इवाऽऽगताः। सुतां निधाय गेहे स्वे रत्नसिंहासनं ददौ
शूलभृते गणेभ्यश्च मधुपर्कादिकं मुदा। तस्थौ श्वशुरगेहे च सगणश्चन्द्रशेखरः ॥
नित्यं षोडशोपचारैः पूजितः सह भार्यया। इत्येवं कथितं राधे शंकरोद्वाहमङ्गलम् ॥
शोकघ्नं हर्षजनकं किं भूयः श्रोतुमिच्छसि ॥ ८९ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० राधाकृष्णसं० शंकरविवाहो नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

अथ षट्चत्वारिंशोऽध्यायः।

राधिकोवाच—

सुचिरं च मृतं कामं शंकरेण च जीवितम्। रतिः पुनः प्रियं प्राप्य किं चकार मुदाऽन्विता

१ ख. रातिं।

स्त्रीणां स्वस्वामिविच्छेदो मरणादतिदुष्करः । पुनः संमेलनं भर्तुः सुखं परमदुर्लभम् ॥
शिवः सतीं तां संप्राप्य सङ्गे मङ्गलकर्मणि । चिरं प्रनष्टविरहः किं चकार मुदाऽन्वितः
कलत्रविरहः पुंसां सर्वशोकात्सुदुष्करः । पुनः संमीलनं तस्याः प्राणदानाधिकं सुखम्
रतिः पुंसो विरहिणी शिवः स्त्रीविरही चिरम् । द्वयोर्द्वयोश्च संप्राप्तौ किं बभूव द्वयोः सुखम्
तदेवं श्रोतुमिच्छामि परं कौतूहलं मम । कृपया विदुषां श्रेष्ठ सत्यासं कथय प्रभो ॥
मेलनं शक्तिशिवयो रतिमन्मथयोस्ततः । शोकापहं श्रुतवता सर्वमङ्गलकारणम् ॥ ७ ॥

नारायण उवाच—

इत्युक्त्वा राधिका देवी सस्मिता विरराम ह । कृष्णस्तद्वचनं श्रुत्वा सस्मितस्तामुवाच ह

श्रीकृष्ण उवाच—

मृतं कामं पुनः प्राप्य कामार्ता कामकामिनी । स्वालयं तं समानीय हरोद्वाहगृहाद्द्रौ ॥
भर्तुः सुवेषं विविधं स्वात्मनः स्वालिभिर्मुदा । कारयामास यत्नेन सा रती रमणोत्सुका
ज्ञात्वा कामस्तु तद्भावं कामशास्त्रविधायकः । रत्नयानं समारुह्य जगाम स्वालयाद्वनम्
शैले शैलेऽतिरम्ये च नद्यां नद्यां नदे नदे । द्वीपे द्वीपे सिन्धुतटे पुष्पोद्याने मनोहरे ॥
काञ्चने भूमिनिर्करे वटमूलेऽतिनिर्जने । नदीपुलिनभूम्यां च पुष्पिते पुष्पकानने ॥ १३॥
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते । सुगन्धिवायुनाऽऽकीर्णे दधति जलशीकरम् ॥
चित्तेषु चेतनानां च हरणं योषितामहो । कलामानप्रकारेण शृङ्गारं च चकार सा ॥
पूर्णमब्दशतं दिव्यं स रेमे वामया सह । दिवानिशं न बुबुधे संसक्तः सततं मुदा ॥
सम्प्रसुप्तौ च तत्रैव संसक्तौ सततं मुदा । सुरतौ च न विरतौ रतिशास्त्रविशारदौ ॥
पतिविच्छेदसंतापं विजहौ सा रतिर्मुदा । प्राप्य रत्नमपहृतं कः क्षणं त्यक्तुमुत्सहेत् ॥
इत्येवं कथितं सर्वं रतिसंतापकारणम् । शृङ्गारं शक्तिशिवयोरतुलं शृणु राधिके ॥
शृण्वतां कर्णपीयूषं परमाश्चर्यमीप्सितम् । सर्वसंतापहरणं सुखदं पुण्यदं शुभम् ॥ २० ॥
पेसञ्छ्वशुरगेहे स पार्वत्या सह शंकरः । तदनुज्ञां समादाय क्रीडार्थं प्रययौ वनम् ॥
रत्नस्यन्दनमारुह्य रत्नसारपरिच्छदम् । रत्नसारेण खचितं रचितं विश्वकर्मणा ॥
प्रातशृङ्गे सुवसने मलये गन्धमादने । नन्दने पुष्पभद्रे च पारिभद्रे च भद्रके ॥ २३ ॥
पुलिन्दे च कलिन्दे च पुण्ड्रे विण्ढारकेऽन्धके । वने वनेऽतिरम्ये च सागराणां तटे तटे ॥
निकटेऽस्तगिरेः पार्श्वेवटमूले मनोहरे । चकार करणां यत्र परित्यज्य सतीं शिवम् ॥
नानास्थानेषु रहसि पशुपक्षिविवर्जिते । यथामनोरथंगामी स रेमे वामया सह ॥ २६ ॥

१ क. "कटे व" ।

यत्र यत्र शवं नीत्वा बभ्राम धरणीतलम् । तत्सर्वं दर्शयामास सतीं शंभुर्मुदाऽन्वितः ॥
कृत्वा विहारं सुचिरं न पूर्णं मानसं तयोः । महाशृङ्गारमारेभे सहस्राब्दं जगत्पिता ॥
मायातीतोऽतिमायेशो मायासक्तः स्वमायया । न कालं बुबुधे योगी सुखेन कालकारकः
शक्तिशक्तिमतोस्तत्र न बभूव परिश्रमः । जहतोः सर्वसंतापमन्योन्यविरहोद्भवम् ॥३०॥
सुखसंसक्तमनसोः पुलकाञ्चितगात्रयोः । कामबाणमूर्छितयोः पुष्पशय्याशयानयोः ॥
नग्नयोः सुखसंभोगाद्रतिशास्त्रविचित्रयोः । नखदन्तप्रहारैश्च क्षतविक्षतदेहयोः ॥३२॥
चन्दनागुरुकस्तूरीसिन्दूरबिन्दुलिप्तयोः । निबद्धकेशकबरीश्लथयोश्छिन्नमाल्ययोः ॥३३॥
वसनानां नूपुराणां कङ्कणानां च सुन्दरि । वलयानां कुण्डलानां शब्दैः क्रीडां प्रकुर्वतोः
पुष्पतल्पं दलितयोर्बाष्पोत्कर्षं च बिभ्रतोः । तेजसा समयोः शश्वत्क्रीडया कौतुकेन च
भारेण विश्वंभरयोर्भाराक्रान्ता वसुंधरा । सा विदीर्णा चकम्पे च सशैलवनसागरा ॥
तयोर्भरभराक्रान्तधरायाश्च भरेण च । भाराक्रान्तो हि शेषश्च तद्भारार्तोऽपि कच्छपः ॥
कच्छपस्य भरेणैव सर्वाधाराः समीरणाः । महाविक्लवयुक्ताश्च सर्वप्राणाश्च स्तम्भिताः
स्तम्भितेषु समीरेषु त्रिलोका भयविह्वलाः । ब्रह्मादयः सुराः सर्वे वैकुण्ठं शरणं ययुः
सर्वं निवेदनं चक्रुर्नारायणपदाम्बुजे । नारायणश्च भगवानुवाच कमलोद्भवम् ॥४०॥

नारायण उवाच—

शृङ्गारभङ्गसमयो भविता नाधुना विधे । कालप्रयुक्तं कार्यं च सिद्धं तत्समयोचितम् ॥
पूर्णे वर्षसहस्रे च स्वेच्छया विरमिष्यति । शंभोः संभोगमिष्टं च को भेदं कर्तुमीश्वरः
स्त्रीपुंसो रतिविच्छेदमुपायेन करोति यः । तस्य स्त्रीपुंसयोर्भेदो भवेज्जन्मनि जन्मनि ॥
पात्यन्ते कालसूत्रे च वर्षलक्षं स पातकी । भ्रष्टज्ञानो नष्टकीर्तिरलक्ष्मीको भवेदिह ॥
रम्भायुक्तं शक्रमिमं चकार विरतं रतौ । महामुनीन्द्रो दुर्वासास्तत्स्त्रीभेदो बभूव ह ॥
पुनरन्यां स संप्राप्य निषेव्य शूलपाणिनम् । दिव्यवर्षसहस्रं च विजहौ विरहज्वरम् ॥
रोहिणीसहितं चन्द्रं चकार विरतं रतौ । महर्षिर्गौतमस्तस्य स्त्रीविच्छेदो बभूव ह ॥
पुनः शिवं समाराध्य प्राप्याहल्यां च पुष्करे । दिव्यवर्षसहस्रं च विजहौ विरहज्वरम्
मुनिः स्वभार्यासंसक्तं दिवसे निर्जने वने । ब्रह्माण्डकसुतं नीत्वा चकार विरतं रुषा ॥
बभूव पुत्रविच्छेदस्तस्य कल्पान्तरे पुनः । शिवं निषेव्य संप्राप्य पुत्रं तत्याज विह्वलम्
हरिश्चन्द्रो हालिकं च वृषल्या सह संयुतम् । वारयामास निश्चेष्टं निर्जने तत्फलं शृणु
भ्रष्टं श्रीराज्यवित्तेभ्यस्तं चकारावलीलया । विश्वामित्रो महर्षिश्च ताडयामास तं पुरा,

१ क. 'नदत्तटे' । २ क. पुत्राप्त्या सह संस्थितं कामं वारितवान्मुदा । पश्चाद्वाक्यन्तरे पु' ।

ततः शिवं समाराध्य दातारं सर्वसंपदाम् । ययौ जगाम वैकुण्ठं सगणो मम मन्दिरम्
अजामिलं द्विजश्रेष्ठं वृषल्या सह संयुतम् । न मिथो वारयामासुः सुरास्तं चापि केचन
निरन्तरं कर्मभोगे च स मद्भक्तो मुमोच ह । मन्नामस्मृतिमात्रेण चाऽऽजगाम ममाऽऽश्रयम्
सर्वं निषेकसाध्यं च निषेको बलवान्विधे । निषेकफलदाताऽहं निषेकः केन वार्यते ॥
दिव्यं वर्षसहस्रं च शंभोः संभोगकर्म तत् । निषेकफलदातुस्तु निषेकफलसंचयम् ॥
पूर्णे वर्षसहस्रे च गत्वा तत्र महेश्वरः । येन वीर्यं पतेद्भूमौ तत्करिष्यति निश्चितम् ॥
तत्र वीर्ये च भविता स्कन्दको भक्तनारकः । सदा मद्रूपरूपोऽहं मयं किं वो मयि स्थिते
अधुना त्वं गृहे गच्छ भगवन्स्वगणैः सह । करोतु शंभुः संभोगं पार्वत्या सह निर्जने
इत्युक्त्वा कमलाकान्तः शीघ्रं स्वान्तःपुरं ययौ । स्वालयं ययुर्देवाः शिवः स्वस्थो रतौ रतः

नारायण उवाच—

इत्युक्त्वा राधिकां कृष्णः सकटाक्षां च सस्मिताम् । जगाम चन्दनवनं निर्जने च तया सह
अतीव निर्जनं रम्यं वायुना सुरभीकृतम् । पुष्पोद्यानैः समाकीर्णं तत्र क्रीडां चकार ह
पुष्पतल्पसमाकीर्णे परपुष्टहतश्रुते । भ्रमरध्वनिसंयुक्ते कामिनीनां मनोहरे ॥ ६४ ॥
कृष्णसंभोगमात्रेण सुखसंमूर्छिता च सा । अतीव मूर्छितः कृष्णो राधाङ्गस्पर्शमात्रतः
तस्थतुस्तत्र संयुक्तौ राधारासेश्वरौ मुने । अतीव रतिनिविष्टौ किं भूयः श्रोतुमिच्छसि
इत्येवं मङ्गलं कर्म यः शृणोति समाहितः । कदाचिद्बन्धुविच्छेदो न भवेत्तस्य नारद॥
महाशोकार्णवे मग्नो भेदे पुत्रकलत्रयोः । मङ्गलाख्यानां च बन्धूनां मासं श्रुत्वा लभेद्ध्रुवम्

सूत उवाच—

इत्युक्त्वा धर्मपुत्रश्च विरराम महामुनिः । पुनः संप्रष्टुमारेभे देवर्षिः कौतुकान्वितः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० मङ्गलवर्णनं
नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

अथ सप्तचत्वारिंशोऽध्यायः ।

नारद उवाच—

अथ क्रीडान्तरे राधा किं पप्रच्छ हरिं विभुम् । वा कथां कथयामास कथ्यतां करुणानिधे

१ ङ. 'पुष्प' ।

नारायण उवाच—

उत्थाय सुखसंभोगाद्राधां कृत्वा पुरो हरिः। उवास मलयद्रोण्यां वटमूले मनोहरे ॥ २॥
राधा तं परिपप्रच्छ सस्मितं सुमनोहरम्। दर्पभङ्गं वज्रभृतो निगूढं श्रुतिसुन्दरम् ॥ ३॥

राधिकोवाच—

श्रुतं यशः शूलभृतो दर्पभङ्गश्च दैवतः। पार्वत्या दर्पभङ्गश्च विवाहश्च तयोरहो ॥ ४ ॥
अधुना श्रोतुमिच्छामि दर्पभङ्गं हरेर्हरे। शेषाणां च क्रमेणैव वद व्यस्य जगद्गुरो ॥ ५ ॥

श्रीकृष्ण उवाच—

दर्पभङ्गं सुरपतेस्त्रिषु लोकेषु विश्रुतम्। कर्णपीयूषमतुलं सुन्दरं शृणु सुन्दरि ॥ ६ ॥
पुरा शतमखो दर्पात्कृत्वा शतमखान्मुदा। बभूव सर्वदेवानामध्यक्षः संपदा युतः ॥ ७ ॥
दिने दिने तदैश्वर्यं वर्धते तपसां फलात्। दीक्षां तं कारयामास सिद्धमन्त्रं बृहस्पतिः ॥
स जजाप महामन्त्रं पुष्करे शतवत्सरम्। बभूव मन्त्रसिद्धश्च परिपूर्णमनोरथः ॥ ९ ॥
ब्रह्मस्वरूपां प्रकृतिं संपन्मूढो न मन्यते। सा तं शशाप स्वगुरोः शापं लेभेऽतिकोपतः ॥
एकदा प्रकृतेः शापाद्धतबुद्धिः स्वसंसदि। गुरुं दृष्ट्वा समुत्थाय न ननाम मदान्वितः ॥
बृहस्पतिस्ततः कोपात्तोवास गृहमाययौ। न तस्थौ तारकाभ्यासे तपसे काननं ययौ ॥
उवाच मनसा दीनो यातु संपद्धरेरिति। अथ शक्रो मतिं प्राप्य क्व गतोऽसौ मदीश्वरः ॥
इत्युक्त्वा वेगतः पीठाज्जगाम तारकान्तिकम्। प्रणम्य मातरं भक्त्या नतस्कन्धः पुटाञ्जलिः
सर्वं निवेदनं कृत्वा रुरोदोच्चैर्मुहुर्मुहुः। पुत्रस्य रोदनं दृष्ट्वा रुरोद तारका भृशम् ॥१५॥
वत्स गच्छ गृहं नैव गुरुं द्रक्ष्यसि सांप्रतम्। दुर्दिनान्ते गुरुं प्राप्य पुनर्लक्ष्मीमवाप्स्यसि॥
अधुना कर्मणां भोगं भुङ्क्ष्व मूढ दुराशय। दुर्दिने स्वगुरो रोषः सुदिने परितोषणम् ॥
सुदिनं दुर्दिनं शक्र कारणं सुखदुःखयोः। इत्युक्त्वा तारका देवी विरराम पतिव्रता ॥
जगाम शक्रः स्नानार्थं स्वर्णदीं सुमनोहराम्। ददर्श तत्र रुचिरां मार्जन्तीं च नितम्बिनीम्
सस्मितां सकटाक्षां तामहल्यां गौतमप्रियाम्। दृष्ट्वा च विपुलश्रोणीं स्तनयुग्मं मनोहरम्
स तस्याः शक्रः संपश्यन्मुमोह काममोहितः। पुनः स चेतनां प्राप्य विहाय स्नानमीश्वरि
मूर्तिं विधाय तद्भर्तुस्तत्समीपं जगाम ह। गत्वा तु स्निग्धवस्त्रां तां समाकृष्य स्मरातुरः
चकार विविधं तत्र शृङ्गारं सुमनोहरम्। मूर्छां संप्राप कामेन तन्द्रां च मुनिकामिनी ॥
निश्चेष्टा सुखसंभोगात्स्निग्धेष्टस्त्रिदशाधिपः। एतस्मिन्नन्तरे तप्त्वा समागत्य मुनीश्वरः ॥
ददर्श गेहे मिथुनं मैथुने च रतं प्रिये। दृष्ट्वा चुकोप स मुनिर्ज्वलन्निव हुताशनः ॥२५॥

१ ख. पुरो दीप.।

विज्ञानेनातिरोषेण बभञ्ज सुरतिक्षणम् । शक्रः स चेतनां प्राप्य दृष्ट्वा च मुनिपुंगवम् ॥
कालस्वरूपं त्रासेन दधार चरणाम्बुजम् । कोपरक्तास्यनयनो देवं पादानतं भिया ॥
उवाच नीतिवचनं गौतमः शरणागतम् ॥ २७ ॥

गौतम उवाच--

धिक् त्वामिन्द्र सुरश्रेष्ठ कश्यपात्मज पण्डित ॥ २८ ॥
प्रपौत्र जगतां स्रष्टुर्बुद्धिस्ते कथमीदृशी । मातामहः स्वयं दक्षोऽप्यदितिर्माता पतिव्रता ॥
कर्मसाध्यः स्वभावश्च कुलधर्मं प्रबाधते । वेदं विज्ञाय ज्ञानी त्वं योनिलुब्धोऽसि कर्मणा ॥
योनीनां च सहस्रं च तव गात्रे भवत्विह । पूर्णवर्षं च सततं योनिगन्धं त्वमाप्नुहि ॥३१॥
ततः सूर्यं समाराध्य योनिश्चक्षुर्भविष्यति । मम प्राणेश्वरी दुष्टा येन मूढ त्वया कृता ॥
मच्छापेन गुरोः कोपाद्भ्रष्टश्रीर्भव सांप्रतम् । गुरोरपेक्षया मूढ प्राणा नापहृतास्तव ॥
तेजस्विनोऽतिवन्द्योऽसि बन्धुभेदभिया सुर । उत्तिष्ठोत्तिष्ठ देवेन्द्र गच्छ वत्स स्वमन्दिरम् ॥
शुभाशुभं च यत्किंचित्तत्सर्वं कर्मोद्भवं भवेत् । महामुनीन्द्रवचनाद्गतः शक्रश्च पुष्करम् ॥
चकाराऽऽराधनं भक्त्या नैष्कृत्यं च चकार ह । पादानतामहल्यां तामुवाच मुनिपुंगवः
वनं गत्वा चिरं तिष्ठ विधाय मूर्तिमश्मनः । अकामां चकमे शक्रः सर्वं जानाम्यहं प्रिये ॥
तथा च[ऽपि] परभोग्या मे न च भोग्या भवाधमे । परवीर्यं यदुदरे कामतोऽकामतोऽपि या
अहल्ये याति दैवेन तदुपायं निशामय । अकामतो न दुष्टा सा प्रायश्चित्तेन शुध्यति ॥
कामभोगेन त्याज्या सा कर्मभोगेन शुध्यति । पितृपाके दैवपाके पूजायां नाधिकारिणी
षष्टिवर्षसहस्राणि काष्ठतुल्यं प्रयाति सा । षष्टिवर्षसहस्राणि क्षयं कृत्वा स्वकर्मणः ॥
स्वामिनो वचनात्सा तु प्रणम्य स्वामिनं भिया । नाथ नाथेति कुर्वन्ती रुदन्ती वनमाप सा
षष्टिवर्षसहस्राणि भुक्त्वा भोगं मुनिप्रिया । श्रीरामचरणस्पर्शात्सद्यः शुद्धा बभूव ह ॥
त्रैलोक्यमोहनं रूपं विधाय मुनिकामिनी । जगाम गौतमाभ्याशं मुनिः संप्राप्य[प] सुन्दरीम्
अथ शक्रस्य वृत्तान्तं परमं शृणु सुन्दरि । पापघ्नं पुण्यदमिमं तत्संन्यस्य कथयामि ते॥४९॥
एकदा च गुरोः कोपात्प्रकृतेरवहेलनात् । ब्रह्महत्या वज्रभृतो बभूव हतचेतसः ॥ ४१ ॥
शक्रस्यकगुरुर्दैवग्रस्तो दैत्यनिपीडितः । जगाम शरणं भीतो ब्रह्माणं जगतां गुरुम् ॥
तदाज्ञया विश्वरूपं चकार च पुरोहितम् । बभूव तत्र विश्वस्तो दैवाद्बुद्धिहतो हरिः ॥
दैत्यदौहित्रस्य भावं विज्ञाय च विचक्षणः । प्रचिच्छेद शिरस्तस्य तीक्ष्णबाणेन लीलया
विश्वरूपपिता त्वष्टा श्रुत्वा सद्यश्चुकोप ह । इन्द्रशत्रो विवर्धस्वेत्युक्त्वा यज्ञं चकार ह-

१ क. नैरुज्यं च । २ क. 'रामुपर्यधस्तादिन्दु'।

यज्ञकुण्डात्समुत्तस्थौ वृत्रो नाम महासुरः। चकार निग्रहं कोपाद्देवानामवलीलया ॥
शक्रो महामुनेरस्त्वनां वज्रं कृत्वा सुदारुणम्। जघान वृत्रं देवानां कण्टकं दैत्यमर्दनः ॥
ब्रह्महत्या शुनासीरं दुद्राव हतचेतनम्। रक्तवस्त्रपरीधाना वृद्धस्त्रीवेषधारिणी ॥ ४३ ॥
सप्ततालप्रमाणा सा शुष्ककण्ठोष्ठतालुका। ईषाप्रमाणदशना महाभीतं चकार तम् ॥
धावन्तं परि[मनु]धावन्ती बलिष्ठा हतचेतनम्। खड्गहस्ता दयाहीना वेगेन परिधावति
इन्द्रो दृष्ट्वा च तां घोरां स्मारं स्मारं गुरोः पदम्। विवेश मानससरो मृणालसूक्ष्मसूत्रतः ॥
तत्र गन्तुं न शक्ता सा ब्रह्मणः शापकारणात्। सा तस्थौ वटशाखायां सरसस्तटसंनिधौ
अथात्र नहुषो भूपस्त्रिलोकेशो बभूव ह। स ययाचे शचीं देवान्बलिष्ठो दुर्बलानपि ॥
शची श्रुत्वा महाभीता तारकां शरणं ययौ। तारा निर्भर्त्स्य स्वपतिं मृत्यपत्नीं ररक्ष च
शचीमाश्वास्य स गुरुर्जगाम तत्सरो मुदा। आजुहाव शुनासीरं कातरं हतचेतनम् ॥

बृहस्पतिरुवाच—

उत्तिष्ठोत्तिष्ठ हे वत्स मयं किं ते मयि स्थिते। त्वदीश्वरं स्वरेणैव निशामय भयं त्यज
स्वरं बृहस्पतेर्ज्ञात्वा सर्वसिद्धीश्वरो हरिः। सूक्ष्मरूपं परित्यज्य स्वरूपं च दधार सः ॥
उत्थाय सद्यः संभ्रान्तो गुरुं तं सूर्यवर्चसम्। दृष्ट्वा ननाम संप्रीत्या संप्रीतं त्यक्तकोपकम् ॥
पादाम्बुजे निपतितं रुदन्तं भयविह्वलम्। निधाय वक्षसि प्रेम्णा रुरोद प्रेमविह्वलः ॥
रुदन्तं वाक्पतिं तुष्टं तुष्टाव त्रिदशेश्वरः। पुटाञ्जलिः पुलकितो भक्तिनम्रात्मकंधरः ॥

इन्द्र उवाच—

क्षमस्व भगवन्दोषं कृपां कुरु कृपानिधे। भृत्यापराधं सततं न गृह्णाति सदीश्वरः ॥
स्वभार्यासु स्वशिष्येषु स्वभृत्येषु सुतेषु च। दुर्बलः सबलो वाऽपि को दण्डं कर्तुमक्षमः ॥
त्रिषु कोटिषु देवेषु देवकोऽहमपण्डितः। त्वत्प्रसादात्सुरश्रेष्ठ कृपया वर्धितस्त्वया ॥
संहर्तुमीशस्त्वं सर्वमहं को वाऽपि कीटवत्। स्वयं विधातुः पौत्रश्च पुनः स्रष्टुं स्वयं क्षमः ॥
इति तस्य स्तवं श्रुत्वा परितुष्टो गुरुः स्वयम्। उवाच वचनं प्रीत्या प्रसन्नवदनेक्षणः ॥

गुरुरुवाच—

स्थिरो भव महाभाग निश्चलां कमलां लभ। संप्राप्य परमैश्वर्यं पूर्वस्माच्च चतुर्गुणम् ॥
गच्छामरावतीं वत्स राज्यं कुरु पुरंदर। हतशत्रुर्मत्प्रसादाद्गत्वा पश्य शचीं सतीम् ॥
इत्येवमुक्त्वा स गुरुः सशिष्यो गन्तुमुद्यतः। ददर्श पुरतो घोरां ब्रह्महत्यां सुदुःसहाम् ॥
दृष्ट्वा शक्रो महाभीतस्तं गुरुं शरणं ययौ। बृहस्पतिर्महाभीतः सस्मार मधुसूदनम् ॥

एतस्मिन्नन्तरे तत्र वाग्बभूवाशरीरिणी । स्वल्पाक्षरा च बह्वर्था तां शुश्राव बृहस्पतिः ॥
संसारविजयं नाम सर्वाशुभविनाशनम् । राधिकाकवचं दत्त्वा शिष्यं रक्षाधुनेति च ॥
तदा स्वत्कवचं दत्त्वा शिष्याय शिष्यवत्सलः । चकार भस्मसात्तां च हुंकारेणैव लीलया ॥
तदा शिष्यं गृहीत्वा च गत्वाताममरावतीम् । ददर्श च्छिन्नमग्नां च शत्रुणा वचनाद्गुरोः ॥
भर्तुरागमनं श्रुत्वा शची संहृष्टमानसा । प्रणम्य च गुरुं भक्त्या स्वकान्तं प्रणनाम सा ॥
श्रुत्वाऽऽगमनमिन्द्रस्य समाजग्मुः सुराः प्रिये । ऋषयो मुनयश्चैव हर्षगद्गदमानसाः ॥
योजयामास सत्कारुं निर्मातुममरावतीम् । पूर्णमब्दशतं शिल्पी निर्ममे रुचिरां पुरीम् ॥
नानारत्नविचित्राढ्यां मणिरत्नेन्द्रनिर्मिताम् । मनोहरां निरुपमां न हि तुष्टो यया हरिः
विश्वकर्मा गृहं गन्तुं न शशाक विनाऽऽज्ञया । परमोद्विग्नचित्तश्च ब्रह्माणं शरणं ययौ ॥
विज्ञाय तदभिप्रायं तमुवाच विधिः स्वयम् । तव कर्मक्षयादेव तावच्छो भवितेति च ॥
श्रुत्वा तद्वचनं कारुः शीघ्रं प्रापामरावतीम् । ब्रह्मा जगाम वैकुण्ठं प्रणम्योवाच मातरम्
हरिर्ब्रह्माणमाश्वास्य प्रस्थाप्य स्वगृहं च तम् । विप्ररूपं समास्थाय चाऽऽजगामामरावतीम्
दण्डी छत्री शुक्लवासा बिभ्रत्तिलकमुज्ज्वलम् । अतिखर्वः शुक्लदन्तः सस्मितः सुमनोहरः ॥
वयसाऽतिशिशुर्बुद्ध्या ज्ञानवृद्धाद्विचक्षणः । स्वयं विधातुर्धाता च दाता च सर्वसंपदाम् ॥
इन्द्रद्वारे समुत्तिष्ठन्द्वारपालमुवाच ह । ब्रूहीदं ब्राह्मणो द्वारे शीघ्रं त्वां द्रष्टुमागतः ॥
इत्येवं वचनं श्रुत्वा द्वारि ज्ञानं चकार तम् । स च शीघ्रं समागम्य ददर्श ब्राह्मणार्भकम् ॥
बालकानां बालिकानां समूहैः परिवेष्टितम् । हसद्भिश्च महोत्साहात्सस्मितं तेजसाऽन्वितम्
प्रणनाम हरिर्भक्त्या तं हरिं शिशुरूपिणम् । आशिषं युयुजे प्रीत्या तं हरिर्भक्तवत्सलः ॥
मधुपर्कादिकं दत्त्वा शक्रः पूजां चकार तम् । पप्रच्छाऽऽगमनं कस्माद्वदेति विप्रबालकम् ॥
इन्द्रस्य वचनं श्रुत्वा तमुवाच द्विजार्भकः । मेघगम्भीरया वाचा बृहस्पतिगुरोर्गुरुः ॥ ९३ ॥

ब्राह्मण उवाच—

समागतोऽहं त्वां द्रष्टुं प्रष्टुं वचनमीप्सितम् । चित्रं नगरनिर्माणं समाकर्ण्याद्भुतं हरे ॥
कतिवर्षं च निर्माणे भवान्संकल्पितो यथा । कतिचित्तां विश्वकर्मा निर्माणं वा करिष्यति ॥
एवंभूतं च निर्माणं न चेन्द्रेण निर्मितम् । नैवंविधसुनिर्माणे विश्वकर्मा परः क्षमः ॥
बालकस्य वचः श्रुत्वा जहास स सुरेश्वरः । संपन्मदातिमत्तश्च पुनः पप्रच्छ बालकम् ॥
कतीन्द्राणां समूहश्च त्वया दृष्टः श्रुतोऽथवा । विश्वकर्मा कतिविधस्तं मे ब्रूहि शिशोऽधुना ॥
शक्रस्य वचनं श्रुत्वा प्रहस्य विप्रबालकः । तमुवाच श्रुतिसुखं पीयूषसदृशं वचः ॥

ब्राह्मण उवाच—

जानामि कश्यपं तात तव तातं प्रजापतिम् । मुनिं मरीचिनामानं तत्तातं च तपोनिधिम्

नाभिपद्मोद्भवं विष्णोः स्तुत्वा तं विधिमीश्वरम् । रक्षितारं च तं विष्णुं परं सत्त्वगुणान्वितम्
एकार्णवं च प्रलयं सत्त्वशून्यं भयानकम् । सृष्टिं कतिविधां शक्र कल्पं कतिविधं ध्रुवम् ॥
ब्रह्माण्डं च कतिविधं ब्रह्मविष्णुमहेश्वरान् । ब्रह्माण्डेषु कतिविधानिन्द्रान्को गन्तुमीश्वरः ॥
यदि संख्याऽस्ति रेणूनां धराया च सुराधिप । तथाऽपि संख्या शक्राणां नास्त्येवेति विदुर्बुधाः
शक्रस्याऽऽयुश्चाधिकारो युगानामेकसप्ततिः । अष्टाविंशतिशक्राणां पतनेऽहर्निशं विधे ॥
विधेरष्टोत्तरशतमायुरेवं प्रमाणतः । सुरेन्द्राणां च का संख्या नास्ति संख्या विधेरपि ॥
ब्रह्माण्डसंख्या यत्र क्व ब्रह्मविष्णुमहेश्वराः । महाविष्णोर्लोमकूपोद्भवे तोये सुनिर्मले ॥
ब्रह्माण्डेऽस्ति यथा नौका भवतोये च कृत्रिमा । एवं लोम्नः प्रमाणेन ब्रह्माण्डाः सन्त्य-
संख्यकाः ॥ ८ ॥

ब्रह्माण्डे च कतिविधाः सुराः सन्त्येव त्वत्समाः । एतस्मिन्नन्तरे तत्र ददर्श पुरुषोत्तमः ॥
पिपीलिकासमूहं च व्यायतं धनुषा शतम् । क्रमशस्तान्संनिरीक्ष्य जहासोच्चैर्द्विजार्भकः ॥
नोवाच किंचिन्मौनी च गम्भीरः सागरो यथा । दृष्ट्वा हास्यं विप्रबटोर्गाथां श्रुत्वाऽतिविस्मितः
पप्रच्छ च पुनर्विप्रं शुष्ककण्ठोष्ठतालुकः ॥ ११ ॥

इन्द्र उवाच—

कथं हससि विप्रेन्द्र मा शीघ्रं कारणं वद । त्वं वा को मायया च्छन्नः शिशुरूपी गुणार्णवः
इन्द्रस्य वचनं श्रुत्वा तमुवाच द्विजार्भकः । आध्यात्मिकं नीतिसारं ज्ञानबीजं परं वचः ॥

ब्राह्मण उवाच—

दृष्टः पिपीलिकासंघो हेतुरस्य निगूढकः । मा मा पृच्छ शोकबीजं तव चाज्ञानकारणम् ॥
सांसारिकाणां संसारवृक्षमूलनिकृन्तनम् । अज्ञानतमसि च्छन्नं ज्ञानदीपमनुत्तमम् ॥ १४ ॥
निगूढं सर्ववेदेषु सिद्धानामपि दुर्लभम् । योगिनां प्राणतुल्यं च मूढाहंकारभञ्जनम् ॥
इत्युक्त्वा तत्र संतस्थौ सस्मितो द्विजपुंगवः । पुनः पप्रच्छ शक्रस्तं शुष्ककण्ठोष्ठतालुकः ॥

शक्र उवाच—

ब्रूहि विप्रबटो शीघ्रं ज्ञानदीपं पुरातनम् । न जानामि शिशुः कस्त्वं ज्ञानराशिः स्वमूर्तिमान्
इन्द्रस्य वचनं श्रुत्वा विप्ररूपी जनार्दनः । ज्ञानं भाषितुमारेभे योगीन्द्राणां सुदुर्लभम् ॥

ब्राह्मण उवाच—

दृष्टः पिपीलिकासंघ एकैकः क्रमशो मया । सर्वे स्वकर्मणा शक्र शक्रीभूताः सुरालये ॥
अधुना कर्मणा सर्वे क्रमशो भूतजन्मनाम् । अतीतकाले संप्राप्ता भूतजातिं पिपीलिकाम् ॥

---

१ क. 'रेणूप्र' । २ क. 'धेर्क्र' ।

कर्मणा जीविनो यान्ति वैकुण्ठं च निरामयम्। कर्मणा ब्रह्मलोकं च शिवलोकं च कर्मणा ॥
स्वर्गं स्वर्गसमास्थानं पातालं च स्वकर्मणा। कर्मणा नरकं घोरं स्वात्मदुःखैककारणम् ॥
कर्मणा सूकरीगर्भं कर्मणा क्षुद्रजीवनम्। कर्मणा पशुपत्नीनां कर्मणा पक्षियोषिताम् ॥
कर्मणा कीटयोनिं च वृक्षत्वं च स्वकर्मणा। स्वकर्मणा सुखी दुःखी सेव्यः सेवक एव च ॥
कर्मणा ब्राह्मणत्वं च देवं चापि स्वकर्मणा। स्वकर्मणा च प्रेतत्वं ब्रह्मत्वं च स्वकर्मणा ॥
कर्मणा शिबिकारोही राजेन्द्रश्च स्वकर्मणा। कर्मणा व्याधियुक्तश्च कर्मणैवातिसुन्दरः ॥
कर्मणा स्वाङ्गहीनश्च स्वाङ्गवृद्धश्च कर्मणा। विधाता कर्मसूत्रेण फलदाता च जीविनाम् ॥
कर्म स्वभावसाध्यं च स्वभावोऽभ्यासजीवकः। इत्येवं कथितं सर्वमाध्यात्मिकपरं वचः ॥
सुखदं पुण्यदं सारं नरकार्णवतारकम्। संसारं स्वप्नवत्सर्वं देवेन्द्र सचराचरम् ॥ १३० ॥
मृत्युश्च मस्तकस्थायी सर्वेषां कालयोगतः। जलबुद्बुदवत्सर्वं जीविनां च शुभाशुभम् ॥
शक्र शश्वद्भ्रमत्येव नाऽऽविष्टस्तत्र पण्डितः। इत्येवमुक्त्वा विप्रश्च तत्र तस्थौ च सस्मितः ॥
विस्मितस्त्रिदशाध्यक्षो नाऽऽत्मानं बहु मन्यते। एतस्मिन्नन्तरे शीघ्रमाजगाम मुनीश्वरः ॥
अतिवृद्धो महायोगी ज्ञानेन वयसा महान्। कृष्णाजिनी जटाधारी बिभ्रत्तिलकमुज्ज्वलम् ॥
वक्षःस्थले रोमचक्रं बिभर्ति मस्तके कटम्। स्थितं सर्वं मध्यदेशे किंचिदुत्पाटितं स्फुटम् ॥
समागत्य द्वयोर्मध्ये तस्थौ स्थाणुवदेव सः। महेन्द्रो ब्राह्मणं दृष्ट्वा प्रणनाम मुदाऽन्वितः ॥
मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः। प्रपच्छ कुशलं विप्रं चकार विनयं परम् ॥
तुष्टावातिथिभावेन मुदा सादरपूर्वकम्। विप्रार्भकस्तेन सार्धं संभाषां च चकार सः ॥
स्ववाञ्छितं परं प्राह सर्वं विनयपूर्वकम् ॥ ३८ ॥

बालक उवाच--

कुतस्त्वमागतो विप्र किंनाम भवतो वद। को वाऽत्राऽऽगमने हेतुर्निवासः कुत्र तेऽधुना ॥
कटं कथं मस्तके ते लोमचक्रं च वक्षसि। अत्युन्नतं मध्यदेशे किंचिदुत्पाटितं मुने ॥
मां चेत्कृपाऽस्ति ते विप्र सर्वं संन्यस्य कथ्यताम्। अत्यद्भुतमिदं सर्वं श्रोतुं कौतूहलं मम ॥
स शिशोर्वचनं श्रुत्वा तमुवाच महामुनिः। सर्वं स्वकीयवृत्तान्तं शक्रस्य पुरतो मुदा ॥

मुनिरुवाच--

अल्पायुषा मया विप्र कुत्रापि न कृता गृहाः। न विवाहश्चोपजीव्यं भिक्षोपजीविनाऽधुना ॥
लोमशेति च मन्नाम हेतुर्विप्रस्य दर्शनम्। वर्षातपशान्त्यर्थं मस्तकस्थं कटं मम ॥ ४४ ॥
वक्षःस्थलस्थितं रोमचक्रं तत्कारणं शृणु। सांसारिकाणां भयदं विवेकजननं परम् ॥

१ क. 'दिवाः। २ ग. 'सारः स्व'।

आयुःसंख्याप्रमाणं मे लोमचक्रं च वक्षसि । शक्रैकपतने विप्र लोमैकोत्पाटनं मम ॥
उत्पाटितानि लोमानि तेन मध्ये स्थितानि च । ब्रह्मणो द्विपरार्धे च मम मृत्युर्निरूपितः
असंख्यविषयो ब्रह्मन्मरिष्यन्ति मृता अपि । कलत्रेण च पुत्रेण गृहेण किं प्रयोजनम् ॥
ब्रह्मणः पतने चक्षुर्निमेषश्च हरेर्भवेत् । तत्पादपद्ममतुलं चिन्तयामि निरन्तरम् ॥ ४९ ॥
दुर्लभं श्रीहरेर्दास्यं भक्तिर्मुक्तेर्गरीयसी । स्वप्नवत्सर्वमैश्वर्यं तद्भक्तिव्यवधायकम् ॥५० ॥
इदं मद्गुरुणा दत्तं शंभुना ज्ञानमुत्तमम् । विना भक्तिं न गृह्णामि सालोक्यादिचतुष्टयम् ॥
इत्येवमुक्त्वा स मुनिर्जगाम शिवसंनिधिम् । शिशुरूपी हरिस्तत्रैवान्तर्धानं चकार ह ॥
इन्द्रस्तु स्वप्नवद्दृष्ट्वा बभूव तत्र विस्मितः । तृष्णामात्रं च संपत्तौ नास्त्येव परमेश्वरे ॥
विश्वकर्माणमानीय प्रियमुक्त्वा शतक्रतुः । दत्त्वा रत्नानि संपूज्य तं प्रस्थापितवान्गृहम् ॥
सर्वं विन्यस्य पुत्रे च शरणं गन्तुमुद्यतः । शचीं राज्यश्रियं त्यक्त्वा विवेकी क्षयकामुकः
दृष्ट्वा विवेकिनं कान्तं हृदयेन विदूयता । शची जगाम शोकार्ता संत्रस्ता शरणं गुरोः ॥
सर्वं निवेदनं कृत्वा समानीय बृहस्पतिम् । बोधयामास शक्रं तं नीतिसारेण कामिनी ॥
गुरुः शास्त्रविशेषं च दम्पतीरससंयुतम् । विधाय च स्वयं प्रीत्या पाठयामास तं मुदा ॥
नीतिशास्त्रं बहुविधं बोधयामास वाक्पतिः । स चकार तदा राज्यं वृन्दावनविनोदिनि ॥
इत्येवं कथितं सर्वं शक्रदर्पविमोचनम् । साक्षाद्दृष्टो दर्पभङ्गो नन्दयज्ञे सुरेश्वरि ॥ ६०॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० श्रीकृष्णराधासं०
शक्रदर्पभङ्गो नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

अथाष्टचत्वारिंशोऽध्यायः ।

---

राधिकोवाच—

कथितो भवता मह्यं दर्पभङ्गः श्रुतो हरेः । दर्पभङ्गं रवेश्चापि श्रोतुमिच्छामि तत्त्वतः ॥

श्रीकृष्ण उवाच—

एकदैवोदयं कृत्वा रविरस्तं जगाम ह । माली सुमाली दैत्येन्द्रौ दीप्तिं कर्तुं समुद्यतौ ॥
महासंपन्मदोन्मत्तौ शंकरस्य वरेण च । तयोश्च प्रभया रात्रिर्न भवेदिति सुन्दरि ॥
रुष्टः सूर्यः स्वशूलेन तौ जघानावलीलया । पतितौ सूर्यशूलेन मूर्छितौ धरणीतले ॥४॥
भक्तापायं च विज्ञाय शंकरो भक्तवत्सलः । आगत्य जीवयामास महाज्ञानेन तौ विभुः
तौ च नत्वा शिवं भक्त्या जग्मतुर्निजमन्दिरम् । दुद्राव च महादेवः सूर्यं हन्तुं रुषा ज्वलन्
दृष्ट्वा संहारकर्तारं जिघांसन्तं हरं रविः । भिया पलायमानश्च ब्रह्माणं शरणं ययौ ॥

तुष्टाव च महादेवो ब्रह्मणो निलयं रुषा । शूलमत्यर्थमुद्यम्य कालकालो विधेर्विधिः ॥
दृष्ट्वा ब्रह्मा हरं रुष्टं तुष्टाव परमेश्वरम् । चतुर्वक्त्रेण वेदोक्तस्तोत्रेण जगतां पतिः ॥ ९ ॥

ब्रह्मोवाच—

प्रसीद दक्षयज्ञघ्न सूर्यं मच्छरणागतम् । त्वयैव सृष्टः सृष्टेश्च समारम्भे जगद्गुरो ॥१०॥
आशुतोष महाभाग प्रसीद भक्तवत्सल । कृपया च कृपासिन्धो रक्ष रक्ष दिवाकरम् ॥
ब्रह्मस्वरूप भगवन्सृष्टिस्थित्यन्तकारण । स्वयं रविं विनिर्माय स्वयं संहर्तुमिच्छसि ॥
स्वयं ब्रह्मा स्वयं शेषो धर्मः सूर्यो हुताशनः । इन्द्रचन्द्रादयो देवास्त्वत्तो भीताः परात्पर
ऋषयो मुनयश्चैव त्वां निषेव्य तपोधनाः । तपसां फलदाता त्वं तपस्त्वं तपसां फलम् ॥
इत्येवमुक्त्वा ब्रह्मा तं सूर्यमानीय भक्तितः । भीत्या समर्पयामास शंकरे दीनवत्सले ॥
शंभुस्तमाशिषं कृत्वा विधिं नत्वा जगद्विधिः । प्रसन्नवदनः श्रीमानालयं प्रययौ मुदा ॥
इति धातृकृतं स्तोत्रं संकटे यः पठेन्नरः । भयात्प्रमुच्यते भीतो बद्धो मुच्येत बन्धनात् ॥
राजद्वारे श्मशाने च मग्नपोते महार्णवे । स्तोत्रस्मरणमात्रेण मुच्यते नात्र संशयः ॥१८॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख०नारदन[1]० श्रीकृष्णराधासं० सूर्यदर्पभङ्गो नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

अथैकोनपञ्चाशत्तमोऽध्यायः ।

---

श्रीकृष्ण उवाच—

सूर्यः प्रणम्य ब्रह्माणं मुदा युक्तस्तदाज्ञया । चकार विनयं भीत्या तेजस्वी त्रिगुणात्मकः ॥
अथ वह्नेरुपाख्यानं सावधानं निशामय । गोपनीयं पुराणेषु कर्णपीयूषमुत्तमम् ॥ २ ॥
त्रैलोक्यं भस्मसात्कर्तुमेकदाग्निः समुद्यतः । शततालप्रमाणां तां शिखां कृत्वा भयानकाम् ॥
क्षुभितः कुपितश्चैव भृगोः शापस्य कारणात् । स्वं च तेजस्विनं मत्वा तुच्छं मत्वाऽन्यमात्मनः
एतस्मिन्नन्तरे विष्णुराजगाम वलीलया । वह्नेस्तां दाहिकीं शक्तिं तां जहार पुरः स्थितः
मायया शिशुरूपी च तमुवाच जनार्दनः । सस्मितो विनयं कृत्वा भक्तिनम्रात्मकंधरः ॥

शिशुरुवाच—

कथं रुष्टोऽसि भगवन्भवान्मां कारणं वद । त्रैलोक्यं भस्मसात्कर्तुमुद्यतोऽसि निरर्थकम् ॥
त्वमेव भृगुणा शप्तो भृगोश्च दमनं कुरु । एकापराधात्त्रैलोक्यं भस्मीकर्तुं न चार्हसि ॥

---

[1] क. °पञ्चः परः ।

विश्वं च ब्रह्मणा सृष्टं तस्य पाता स्वयं हरिः। संहर्ता भगवान्रुद्र एवमेव क्रमो भवेत् ॥
तत्कथं भस्मसात्कर्तुमीश्वरे शंकरे स्थिते। रक्षितारं हरिं जित्वा संहारं कुरु सत्वरम् ॥
इत्युक्त्वा ब्राह्मणबटुः शरपत्रं पुरःस्थितम्। अतिशुष्कं करे धृत्वा दग्धं कर्तुं ददौ मुदा
दृष्ट्वा शुष्केन्धनं वह्निर्लेलिहानो भयानकः। स बभे शिखया विप्रं मेघेन शशिनं यथा ॥
न च दग्धं शुष्कपत्रं लोमैकं च शिशोस्तथा। दृष्ट्वा व्रीडायुतो वह्निर्विस्मितश्चापि हि शिशोः पुरः
कृत्वा वह्नेर्दर्पभङ्गमन्तर्धानं चकार सः। वह्निः स्वमूर्तिं संहृत्य स्वस्थानं भीतवद्ययौ ॥
उक्तो वह्नेर्दर्पभङ्गः परं वै श्रोतुमिच्छसि। नित्यनूतनमाख्यानं देवानां दर्पमोचनम् ॥

राधिकोवाच—

शेषाणां दर्पभङ्गं च क्रमेण कथय प्रभो। कथापीयूषधारां ते श्रुत्वा तृप्येत को भुवि ॥

नारायण उवाच—

राधिकावचनं श्रुत्वा सस्मितो भगवान्प्रभुः। कथां कथितुमारेभे श्रुत्वा रम्यां पुरातनीम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० अग्निदर्पमोचनं नामै-
कोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

अथ पञ्चाशत्तमोऽध्यायः।

श्रीकृष्ण उवाच—

दुर्वाससो दर्पभङ्गं कथयामि शृणु प्रिये। महामुनेर्योगिनश्च रुद्रांशस्यातितेजसः ॥१॥
एकदा चाम्बरीषश्च कृत्वा च द्वादशीव्रतम्। पारणं कर्तुमारेभे भोजयित्वा द्विजान्बहून्
एतस्मिन्नन्तरे तत्र चाऽऽजगाम मुनिः स्वयम्। क्षुधार्तश्च तृषार्तश्च विष्णुव्रतपरायणः ॥
मां भोजय महाभागेत्येवं स नृपमुक्तवान्। राजा भक्त्या ददौ तस्मै परमान्नं सुधोपमम्
सकेशं पायसं दृष्ट्वा राजानं शप्तुमुद्यतः। जटां निकृत्य शिरसः स्थापयामास भूतले ॥
जटामध्यात्समुद्भूतो ज्वलदग्निशिखोपमः। सप्ततालप्रमाणश्च पुरुषः प्रलयान्तकः ॥
नृपश्रेष्ठं स राजानं कोपेन हन्तुमुद्यतः। भयेन कम्पिताः सर्वे शुष्ककण्ठोष्ठतालुकाः ॥
सस्मार च महाभीतो राजा मम पदाम्बुजम्। सर्वविघ्नस्यो नाशः स्मृतिमात्राद्बभूव ह ॥
एतस्मिन्नन्तरे चक्रं दुर्निवार्यं सुदर्शनम्। तेजसा मम तुल्यं च कोटिसूर्यप्रभोपमम् ॥
आविर्बभूव सहसा सभामध्ये च घूर्णितम्। निकृत्य कृत्यापुरुषं दुद्राव मुनिपुंगवम् ॥
ससैसागरां पृथ्वीं काञ्चनीं भूमिमुत्तमाम्। भ्रामयित्वा महीं सर्वां पुनर्दुद्राव तं मुनिम्
धावन्तं मुक्तकेशं तं भीतं कातरमातुरम्। तेजसाऽऽच्छाद्य सूर्यं तं दीप्तिं कुर्वन्तमुत्तमाम्

कैलासं सप्तस्वर्गं च ब्रह्मलोकमनामयम्। विप्रेन्द्रो भ्रमणं कृत्वा वैकुण्ठं शरणं ययौ ॥
पादपद्मे पतन्तं च ददर्श विप्रपुंगवम्। कृपया च कृपासिन्धुर्ददौ विप्राय निर्भयम् ॥
नारायणवरेणैव बभूव विज्वरो द्विजः। पुनर्ययौ हरिं स्तुत्वा नृपगेहं तदाज्ञया ॥१५॥
राजा मुनीन्द्रं संप्राप्य भोजयामास पायसम्। स्वयं च पारणां चक्रे सस्त्रीकः सहबान्धवः
राजानमाशिषं कृत्वा भुक्त्वा विप्रो गृहं ययौ। मया नियोजितं चक्रं भक्तानां रक्षणाय च
नश्यन्ति सर्वे प्रलये न मे भक्तः प्रणश्यति। सर्वे देवा मम प्राणा भक्ताः प्राणाधिका मम॥
त्वं च लक्ष्मीर्महामाया सावित्री वा सरस्वती। ब्रह्मा शंभुरनन्तश्च धर्मश्च ब्राह्मणास्तथा॥
गोपाङ्गनाश्च गोपाश्च सर्वे प्रियतमा मम। तेभ्यः प्रियाः परा भक्ताः प्रियो भक्तान्न कश्चन
दत्त्वा सुदर्शनं चक्रं भक्तानां रक्षणाय च। तथाऽपि न प्रतीतिर्मे स्वयं द्रष्टुं प्रयामि तान्
दुर्वाससो दर्पभङ्गः श्रुतो मत्तः सुरेश्वरि। आज्ञापय महाभागे किं भूयः श्रोतुमिच्छसि ॥

राधिकोवाच—

धन्वन्तरेर्दर्पभङ्गं कथयस्व जगद्गुरो। पुराणे गोपनीयं च श्रोतुं कौतूहलं मम ॥२३॥

नारायण उवाच—

राधिकावचनं श्रुत्वा जहास मधुसूदनः। कथां कथितुमारेभे श्रुतिरम्यां पुरातनीम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० दुर्वाससो दर्पभङ्गो नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

अथैकपञ्चाशत्तमोऽध्यायः।

श्रीकृष्ण उवाच—

नारायणांशो भगवान्स्वयं धन्वन्तरिर्महान्। पुरा समुद्रमथने समुत्तस्थौ महोदधेः ॥१॥
सर्ववेदेषु निष्णातो मन्त्रतन्त्रविशारदः। शिष्यो हि वैनतेयस्य शंकरस्योपशिष्यकः॥
शिष्याणां च सहस्रेण गतः कैलासमीश्वरि। ददर्श तक्षकं मार्गे लेलिहानं भयानकम्॥
लक्षनागैः परिवृतं शैलतुल्यं विषोल्बणम्। भोक्तुं कोपात्समायान्तमेवं दृष्ट्वा जहास च॥
दम्भी धन्वन्तरेः शिष्यो धृत्वा तक्षकमुल्बणम्। मन्त्रेण जृम्भितं कृत्वा निर्विषं तं चकार ह
अमूल्यं मणिरत्नं च जहार मस्तकस्थितम्। करेण भ्रामयित्वा च प्रेरयामास दूरतः
निश्चेष्टस्तक्षकस्तूर्णं तत्र मार्गे यथा मृतः। गणा निवेदनं चक्रुर्गत्वा वासुकिसंनिधिम्॥
वासुकिस्तत्समाकर्ण्य प्रजज्वाल तिकोपतः। सर्वान्नस्थापयामास सामन्त्यांश्चैव विषोल्बणान्॥
सर्वसेनाप्रणीनां च मुख्यान्विघ्नविशारदान्। द्रोणकालीयकर्कोटपुण्डरीकधनंजयान्॥९॥

सर्वे नागाः समाजग्मुर्यत्र धन्वन्तरिः स्वयम्। भयमापुः शिष्यगणा दृष्ट्वा नागानसंख्यकान्
नागनिःश्वासवातेन सर्वे शिष्या मृता इव। निश्चेष्टा ज्ञानरहिताः शेरते धरणीतले॥ ११॥
धन्वन्तरिश्च भगवान्पीयूषवर्षणेन च। जीवयामास शिष्यांश्च मन्त्रेण च गुरुं स्मरन् ॥
चेतनां कारयित्वा च शिष्याणां च जगद्गुरुः। चकार जृम्भितं मन्त्रैः सर्पसंघं विषोल्बणम्॥
सर्वे बभूवुर्निश्चेष्टा जृम्भितास्ते मृता इव। कोऽपि नाल ततो देवि वार्तां दातुं गणेषु च॥
वासुकिर्बुबुधे सर्वं सर्वज्ञः सर्वसंकटम्। आजुहाव जगद्गौरीं भगिनीं ज्ञानरूपिणीम् ॥

वासुकिरुवाच—

मनसे त्वं समागच्छ नागानरक्षातिसंकटात्। जगत्त्रये महाभागे पूजा तव भविष्यति ॥
वासुकेर्वचनं श्रुत्वा प्रहस्योवाच कन्यका। वाक्यं पीयूषतुल्यं च विनयावनतस्थिता॥१७॥

मनसोवाच—

नागेन्द्र शृणु मद्वाक्यं यास्यामि समरं प्रति। भद्राभद्रं दैवसाध्यं करिष्यामि यथोचितम्
तं शत्रुं संहरिष्यामि दृष्ट्या समरस्थले। अहं यं निहनिष्यामि तं को रक्षितुमीश्वरः॥
यदि ब्रह्मादयो देवाः समायान्ति रणस्थले। तथाऽपि तत्र शत्रुं च प्रजेष्यामि न संशयः
गुरुर्मे भगवाञ्छेषः सिद्धमन्त्रं च दत्तवान्। नारायणस्य जगतामीशस्य परमाद्भुतम् ॥
बिभर्मि कवचं कण्ठे परं त्रैलोक्यमङ्गलम्। संसारं भस्मसात्कृत्वा पुनः स्रष्टुमहं क्षमा ॥
शिष्याऽहं मन्त्रशास्त्रेषु शंभोर्भगवतः पुरा। महाज्ञानं दत्तवान्स मह्यं च कृपया विभुः ॥
शंभोश्च शिष्यो गरुडो गणयामि न तं ध्रुवम्। धन्वन्तरिस्तच्छिष्याणामेकः किं गणयामि तम्
इत्युक्त्वा सा जगामैका स्वकस्था नागगणान्यथा। प्रणम्य श्रीहरिं शंभुं शेषं च हृष्टमानसा
यत्र धन्वन्तरिर्देवः प्रसन्नवदनेक्षण। तत्राऽऽजगाम सा देवी कोपरक्तेक्षणा रुषा ॥
दृष्टिमात्रेण सर्पांश्च जीवयामास सुन्दरी। विषदृष्ट्या शत्रुशिष्यांस्तिष्ठेऽश्च चकार ह ॥
धन्वन्तरिस्तु भगवान्मन्त्रशास्त्रविशारदः। मन्त्रेण यानं कृतवाञ्शिष्याणां जीवितुमीश्वरः ॥
दृष्ट्वा धन्वन्तरिं देवी प्रहस्योवाच सत्वरम्। वेदविधिमर्यादां च सादरं सा सुरेश्वरी ॥

मनसोवाच—

मन्त्रार्थं मन्त्रसिद्धं च मन्त्रभेदं महौषधम्। वद जानासि किं सिद्ध शिष्योऽसि गरुडस्य च
अहं च वैनतेयश्च शिष्यौ शंभोश्च विश्रुतौ। युद्धस्थलं त्वं मुनिमहं धन्वन्तरे शृणु॥ २१॥
इत्युक्त्वा नागाः सर्वं समानीय ज्ञानस्तु। मन्त्रसंयुक्तं कृत्वा प्रेरयामास यौवनः ॥
दृष्ट्वाऽऽगतं समुद्धं त्वं ज्वलदग्निशिखोपमम्। धन्वन्तरिश्च निवारयामास ॥ २९॥

तच्च धन्वन्तरिर्दृष्ट्वा समन्त्रेणुमुष्टिना । चकार निष्फलं भस्म तां महस्यावलीलया ॥
देवी जग्राह शक्तिं च ग्रीष्मसूर्यसमप्रभाम् । मन्त्रसंवलितां कृत्वा प्रेरयामास तं रिपुम् ॥
दृष्ट्वा जाज्वल्यमानां तां शक्तिं धन्वन्तरिः स्वयम् । विष्णुदत्तेन शूलेन समुच्चिच्छेद लीलया
तां च शक्तिं वृथा दृष्ट्वा प्रजज्वालेश्वरी रुषा । जग्राह नागपाशं च घोरमव्यर्थमुल्बणम् ॥
नागलक्षसमायुक्तं सिद्धमन्त्रेण मन्त्रितम् । प्रेरयामास कोपेन कालान्तकसमप्रभम् ॥३८॥
धन्वन्तरिर्नागपाशं दृष्ट्वा च सस्मितो मुदा । सस्मार गरुडं तूर्णमाजगाम खगेश्वरः ॥३८॥
सर्पास्त्रमागतं दृष्ट्वा गरुडो हरिवाहनः । निधाय चञ्चुना शीघ्रं बुभुजे क्षुधिताश्चिरम् ॥
नागास्त्रं निष्फलं दृष्ट्वा कोपरक्तेक्षणा भृशम् । जग्राह भस्ममुष्टिं च शिवदत्तां पुरा प्रिये ॥
भस्ममुष्टिं मन्त्रपूतां दृष्ट्वा च प्रेरितां यया । पक्षवातेन चिक्षेप शिष्यं पश्चान्निधाय च ॥
निरस्तां भस्ममुष्टिं च दृष्ट्वा देवी चुकोप ह । जग्राह शूलमव्यर्थं हन्तुं धन्वन्तरिं स्वयम् ॥
शिवदत्तं च शूलं च शतसूर्यसमप्रभम् । अव्यर्थशूलं लोकेषु प्रलयाग्निसमप्रभम् ॥४४॥
अथ ब्रह्मा तथा शंभुराजगाम रणाजिरम् । धन्वन्तरेश्च रक्षार्थं शमनार्थं खगस्य च ॥
दृष्ट्वा शंभुं जगद्गौरी विधिं च जगतां पतिम् । भक्त्या ननाम तत्रैव निःशङ्का शूलधारिणी
धन्वन्तरिश्च गरुडः प्रणनाम सुरेश्वरौ । तुष्टाव परया भक्त्या तौ च चक्रतुराशिषम् ॥
उवाच ब्रह्मा मधुरं हितं धन्वन्तरिं मुदा । पूजार्थं मनसायाश्च लोकानां हितकाम्यया ॥

ब्रह्मोवाच—

धन्वन्तरे महाभाग सर्वशास्त्रविशारद । रणं ते मनसा सार्धं न हि साम्यं च मे मतम् ॥
शिवदत्तेन शूलेन दुर्निवार्येण सर्वतः । त्रैलोक्यं भस्मसात्कर्तुं क्षमेयं त्रिदशेश्वरी ॥५०॥
ध्यानं कौथुमशाखोक्तं कृत्वा भक्त्या समाहितः । दत्त्वा षोडशोपचारं देव्याश्च कुरु पूजनम्
आरतीकोक्तेन स्तोत्रेण स्तवनं कर्तुमर्हसि । परितुष्टा च मनसा वरं तुभ्यं प्रदास्यति ॥
ब्रह्मणो वचनं श्रुत्वा चकारानुमतिं शिवः । वैनतेयश्च संप्रीत्या बोधयामास यत्नतः ॥
एषां च वचनं श्रुत्वा स्नात्वा शुचिरलंकृतः । विधिं पुरोहितं कृत्वा पूजां कर्तुं समुद्यतः

धन्वन्तरिरुवाच—

इहाऽऽगच्छ जगद्गौरि गृहाण मम पूजनम् । पूज्या त्वं त्रिषु लोकेषु पुरा वदयकल्पके ॥
त्वया जितं जगत्सर्वं देवि विष्णुस्वरूपया । तेन तेऽस्त्रप्रयोगश्च न कृतो रणभूमिषु ॥
इत्युक्त्वा संयतो भूत्वा भक्तिनम्रात्मकंधरः । गृहीत्वा पुष्पकुसुमं ध्यानं कर्तुं समुद्यतः ॥
चारुचम्पकवर्णाभां सर्वाङ्गसुमनोहराम् । ईषद्धास्यप्रसन्नास्यां शोभितां सूक्ष्मवाससा ॥

१ घ. प्रिया॰ ।

सुचारुकबरीशोभां रत्नाभरणभूषिताम् । सर्वाभयप्रदां देवीं भक्तानुग्रहकारकाम् ॥९९॥
सर्वविद्याप्रदां शान्तां सर्वविद्याविशारदाम् । नागेन्द्रवाहिनीं देवीं भजे नागेश्वरीं पराम्॥
ध्यात्वैवं कुसुमं दत्त्वा नानाद्रव्यसमन्वितम् । दत्त्वा षोडशोपचारं पूजयामास तां विधे॥
स्तोत्रं चकार यत्नाच्च पुलकाञ्चितविग्रहः । पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकंधरः॥

धन्वन्तरिरुवाच—

नमः सिद्धिस्वरूपायै सिद्धिदायै नमो नमः । नमः कश्यपकन्यायै वरदायै न० ॥१३॥
नमः शंकरकन्यायै शंकरायै न० । नमस्ते नागवाहिन्यै नागेश्वर्यै न० ॥ १४ ॥
नम आस्तीकजनन्यै जनन्यै जगतां मम । नमो जगत्कारणायै जरत्कारुस्त्रियै न० ॥
नमो नागभगिन्यै च योगिन्यै च न० । नमश्चिरं तपस्विन्यै सुखदायै न० ॥ १६ ॥
नमस्तपस्यारूपायै फलदायै न० । सुशीलायै च साध्व्यै च शान्तायै च न० ॥ १७ ॥
इत्येवमुक्त्वा भक्त्या च प्रणनाम प्रयत्नतः । तुष्टा देवी वरं दत्त्वा सत्वरं स्वालयं ययौ
ब्रह्मरुद्रवैनतेयाः समाजग्मुर्निजालयम् । धन्वन्तरिश्च भगवाञ्जगाम निजमन्दिरम्॥१९॥
जग्मुर्नागाः प्रहृष्टाश्च फणाराजिविराजिताः । इत्येवं कथितं सर्वं स्तवराजं मया तव ॥
विधिना मातरं भक्तिमास्तीकश्च चकार ह । तदा दृष्टा जगद्गौरी पुत्रं सं मुनिपुंगवम् ॥
इदं स्तोत्रं महापुण्यं भक्तियुक्तश्च यः पठेत् । वंशजानां नागभयं नास्ति तस्य न संशयः॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० राधाकृष्णसं० धन्वन्तरिदर्पमङ्गमनसाविजयो नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

अथ द्विपञ्चाशत्तमोऽध्यायः ।

श्रीकृष्ण उवाच—

सर्वेषां दर्पभङ्गश्च कथितश्च श्रुतस्त्वया । क्षुद्राणां महतां चैव कृत एव न संशयः ॥ १ ॥
अधुना च समुत्तिष्ठ गच्छ वृन्दावनं वनम् । गोपिका विरहार्ताश्च शीघ्रं पश्यामि सुन्दरि ॥

नारायण उवाच—

इत्येवं वचनं श्रुत्वा मानिनी रसिकेश्वरी । उवाच कृष्णं नय मां न शक्ता गन्तुमीश्वर ॥
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः । मामारुहेत्येवमुक्त्वा सोऽन्तर्धानं चकार ह ॥
सा मनोदाहिनी राधा दृष्ट्वा च रोदनं क्षणम् । इतस्ततश्चान्वेष्य वृन्दारण्यं जगाम सा ॥
विवेश चन्दनवनं रुदती शोककातरा । ददर्श गोपिकाः सर्वाः शोकार्ता भयविह्वलाः ॥
ताः सर्वाः पूर्णनयना भ्रमन्तीः सर्वकाननम् । नाथ नाथेति कर्वन्तीर्निराहारा स्वाऽऽविलाः

ता दृष्ट्वा राधिका सा च प्रेमविच्छेदकातरा। कथयामास वृत्तान्तं मलयभ्रमणादिकम् ॥
ताभिः सार्धं च सा राधा रुरोद विरहातुरा। हा नाथ नाथेत्युच्चार्य विलप्य च मुहुर्मुहुः॥
विनिन्द्य कृष्णं कोपेन तर्जयामास च क्षणम्। क्षणं शरीरमुत्स्रष्टुं कोपात्सर्वाः समुद्यताः॥
एतस्मिन्नन्तरे कृष्णस्तत्र चन्दनकानने। स्वात्मानं दर्शयामास राधिकां गोपिकागणम्॥
राधा गोपाङ्गनाभिश्च दृष्ट्वा प्राणेश्वरं मुदा। सस्मिता च प्रदुद्राव पुलकाञ्चितविग्रहा॥
तूर्णं कृष्णं समाश्लिष्य जहार मुरलीं रुषा। मालां च पीतवसनं नग्नं कृत्वा च मानिनी॥
पुनः संधारयामास वस्त्रं मालां मनोहराम्। विनोदमुरलीं तुष्टा वृन्दावनविनोदिनी॥
चन्दनागुरुकस्तूरीकुङ्कुमाक्तं च कातरम्। मुहुर्मुहुर्मुखं वीक्ष्य चुचुम्ब परमादरम्॥
क्षणं संतर्जयामास क्षणं स्तोत्रं चकार ह। सकर्पूरं च ताम्बूलं क्षणं तस्मै ददौ मुदा॥
अथ गोपाङ्गनाः सर्वा रुरुदुः प्रेमविह्वलाः। सर्वं निवेदनं चक्रुः स्वदुःखं विरहोद्भवम्॥
देहत्यागं च स्नानं च स्वाहारस्य विसर्जनम्। वने वनेऽहर्निशं च शश्वद्भ्रमणमेव च॥
क्षणं तं भर्त्सयामासुः स्तोत्रं चक्रुः क्षणं मुदा। क्षणं ददुर्भूषणं च क्षणं तस्मै च चन्दनम्॥
काश्चिदूचुः प्राणचोरं पश्य रक्षेति संततम्। एवं पुनर्न कर्तव्यमनेनेति च काश्चन॥
काश्चिदूचुरिमं मध्ये यूयं कुरुत सत्वरम्। निबद्धप्रेमपाशेन हृदये चेति काश्चन॥२१॥
काश्चिदूचुरयं नास्ति प्रतीतिर्नै कदाचन। यत्नाचेतनचोरं च पश्य पश्येति काश्चन॥
काश्चिदूचुर्निष्ठुरोऽयं नरघातीति कोपतः। न पुनर्वदते मां च काश्चनेति च नारद॥
निर्जनानि च रम्याणि यानि यानि वनानि च। भ्रमेयुर्गोपिकास्तानि कृष्णेन सह कौतुकात्॥
एवं तं गोपिकाः सर्वा मध्ये कृत्वा सदीश्वरम्। ययुर्वनान्तरं यत्र सुरम्यं रासमण्डलम्॥
रासं गत्वा स्वर्णपीठे तस्थौ स रसिकेश्वरः। निशि भाति यथाऽऽकाशे चन्द्रस्तारागणैः सह॥
नानामूर्तीर्विधायात्र सह ताभिर्जनार्दनः। चकार च पुनः क्रीडां कामुकीनां मनोहराम्॥
स्वयं राधां करे धृत्वा पूर्वोक्तं रतिमन्दिरम्। विश्वकर्मविनिर्माणमारुरोह स्मरातुरः॥
चन्दनागुरुकस्तूरीकुङ्कुमाक्तं सुवासितम्। तत्र चम्पकतल्पे स सुष्वाप च तया सह॥
नानाप्रकारशृङ्गारं कामशास्त्रविशारदः। चकार कामी क्रीडां च कामिन्या सह कौतुकी॥
बभूव सुरतिस्तत्र सुचिरं च तयोर्मुने। रतिनिष्ठा तयो रम्या निरतिर्नास्ति तत्क्षणम्॥
एवं तौ तस्थतुस्तत्र राधाकृष्णौ रसोत्सुकौ। तस्थुस्ता गोपिकाश्च सुरतौ कृष्णमूर्तयः॥

नारद उवाच--

आदौ राधां समुच्चार्य पश्चात्कृष्णं विदुर्बुधाः। निमित्तमस्य मां भक्तं वद भक्तजनप्रिय॥

---

१ ख. भर्म।

नारायण उवाच—

निमित्तमस्य त्रिविधं कथयामि निशामय । जगन्माता च प्रकृतिः पुरुषश्च जगत्पिता ॥
गरीयसी त्रिजगतां माता शतगुणैः पितुः । राधाकृष्णेति गौरीशेत्येवं शब्दः श्रुतौ श्रुतः ॥
कृष्णराधेशगौरीति लोके न च कदा श्रुतः । प्रसीद रोहिणीचन्द्र गृहाणार्घ्यमिदं मम ॥
गृहाणार्घ्यं मया दत्तं संज्ञया सह भास्कर । प्रसीद कमलाकान्त गृहाण मम पूजनम् ॥
इति दृष्टं सामवेदे कौथुमे मुनिसत्तम । राशब्दोच्चारणादेव स्फीतो भवति माधवः ॥
धाशब्दोच्चारतः पश्चाद्धावत्येव ससंभ्रमः । आदौ पुरुषमुच्चार्य पश्चात्प्रकृतिमुच्चरेत् ॥
स भवेन्मातृघाती च वेदातिक्रमणे मुने । त्रैलोक्ये भारतं धन्यं कर्मक्षेत्रे च पुण्यदम् ॥
ततो वृन्दावनं पुण्यं राधापादाब्जरेणुना । षष्टिवर्षसहस्राणि तपस्तप्तं च वेधसा ॥
राधिकाचरणाम्भोजपादरेणूपलब्धये ॥ ४१ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० राधामाधवयो रासवर्णनं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

अथ त्रिपञ्चाशत्तमोऽध्यायः ।

---

नारद उवाच—

समतीते पूर्णरासे किं चकार जगत्पतिः । रहस्यं किं बभूवाथ तद्भवान्वक्तुमर्हति ॥१॥

नारायण उवाच—

रासं निवर्त्य रासे च रासेश्वर्या समन्वितः । स्वयं रासेश्वरस्तस्माद्यमुनापुलिनं ययौ ॥
तत्र स्नात्वा जलं पीत्वा निर्मलं निर्मले जले । सार्धं गोपाङ्गनाभिश्च जलक्रीडां चकार सः
ततो जगाम भगवान्भाण्डीरं राधया सह । गोपाङ्गनाश्च स्वगृहान्प्रययुर्विरहातुराः ॥
क्रीडां चकार रहसि भाण्डीरे मालतीवने । मालतीपुष्पशय्यायां रम्यायां रमणोत्सुकः
कृत्वा क्रीडां च तत्रैव वासन्तीकाननं ययौ । रेमे तत्रैव रासेशो वसन्ते सुमनोहरे ॥
तत्रैव रमणं कृत्वा ययौ चन्दनकाननम् । चन्दनोक्षितसर्वाङ्गो गृहीत्वा चन्दनोक्षिताम् ॥
रम्ये चन्दनतल्पे च शिवे चन्दनपल्लवे । पूर्णचन्द्रे समुदिते विजहार तया सह ॥८॥
कृत्वा विहारं तत्रैव ययौ चम्पककाननम् । रम्ये चम्पकतल्पे च चकार रतिमीश्वरः ॥
रतिं निर्वृत्य तत्रैव ययौ पद्मवनं प्रभुः । पद्मपत्रसमाकीर्णे तल्पेऽतिसुमनोहरे ॥१०॥
सार्धं तत्र पद्ममुख्या शीतेन पद्मवायुना । चकार सुखसंभोगं ययौ निद्रां तया सह ॥
विहाय निद्रां निद्रेशो ददर्श निद्रितां प्रियाम् । शयानां पद्मतल्पे च सुखसंभोगमानसः

दृष्ट्वा मुखं च घर्माक्तं शरच्चन्द्रविनिन्दितम्। अतिसंलुप्तसिन्दूरं लुप्तं कज्जलमुज्ज्वलम्
संलुप्ताधररागं च संलुप्तगण्डपत्रकम्। विस्रस्तकबरीभारं नेत्रोत्पलविमुद्रितम्॥ १४॥
रत्नकुण्डलयुग्मेनामूल्येन परिशोभितम्। राजितं मौक्तिकेनैव गजराजोद्भवेन च ॥
प्रेम्णा स्वसूक्ष्मवस्त्रेण वह्निशुद्धेन माधवः। चकार मार्जनं भक्त्या तद्वक्त्रं भक्तवत्सलः
केशसंमार्जनं कृत्वा निर्माय कबरीं हरिः। माधवीमालतीमालाजालेन परिशोभिताम्॥
रत्नपट्टसूत्रबद्धा वामवक्त्रां मनोहराम्। अतीव वर्तुलाकारां कुन्दपुष्पसुशोभिताम् ॥
ददौ सिन्दूरतिलकमधश्चन्दनमुज्ज्वलम्। कस्तूरीबिन्दुना सार्धं परितः परिशोभितम्॥
चकार पत्रकं गण्डयुग्मे चित्रविचित्रितम्। प्रददौ कज्जलं भक्त्या नेत्रोत्पलसमुज्ज्वलम्
चकाराधररागं च राधायाश्चानुरागतः। कर्णभूषणयुग्मं च चकारातीव निर्मलम् ॥
अमूल्यरत्नहारं च स्तनभारयुगोज्ज्वलम्। ददौ कण्ठे च वैकुण्ठो मणिराजिविराजितम्
वह्निशुद्धांशुकं दिव्यममूल्यं विश्वरत्नतः। वासयामास वसनं कस्तूरीकुङ्कुमाक्तकम्॥
प्रददौ पादयुगुले रत्नमञ्जीररञ्जितम्। चकारालक्तकं भक्त्या पादाङ्गुलिनखेषु च ॥
चकार सेवां सेव्यायाः सेव्यक्लिन्नगता सताम्। अहो सेवकसंभक्त्या श्वेतेन चामरेण च
सर्वभावविदां श्रेष्ठो बोधज्ञः कामशास्त्रवित्। कामिनीं बोधयामास वासयामास वक्षसि
प्रेम्णा च प्रददौ तस्यै सद्रत्नदर्पणं शुभम्। सुवेषदर्शनार्थं च मुखचन्द्रं च मार्जितुम्
नानापुष्पैर्विरचितामम्लाना चन्दनोक्षिताम्। गण्डे सौभाग्ययुक्तायाः सौभाग्येन ददौ हरिः
कस्तूरीकुङ्कुमाक्तं च सुगन्धि चन्दनं ततः। ददौ प्रियायाः सर्वाङ्गे प्रिय. प्रेमभरेण च
पारिजातस्य कुसुमं दत्तं रहसि ब्रह्मणा। प्रददौ तत्कबर्यां च ललितायाश्च नारद ॥
कमलं निर्मलं दिव्यं सहस्रदलमुज्ज्वलम्। शिवेन दत्तं रहसि ददौ तद्दक्षिणे करे ॥
अतिसारं मणीन्द्राणां मणिरत्नं च कौस्तुभम्। दत्तं रहसि धर्मेण तस्यै सुप्रीतये ददौ॥
आसवं रत्नपात्रस्थं दक्षदत्तं च निर्जने। पानार्थं प्रददौ तस्यै कामोन्मादकरं परम् ॥
मालतीमाधवीकुन्दमन्दारचम्पकादिकम्। पुष्पं सद्रत्नपात्रस्थं तस्यै सुप्रीतये ददौ ॥
सुदुर्लभं च ताम्बूलं कर्पूरादिसुसंस्कृतम्। भक्षणं कारयामास समयज्ञश्च तां प्रियाम्॥
सुदुर्लभं च विश्वेषु वाक्पतेः परिनिर्मितम्। अनुत्तममसूल्यं च वरुणेन रहःस्थले ॥
अतिसूक्ष्ममनुपमं दत्तं भक्त्या विराजितम्। वासयामास वसनं कृत्वा नग्नां च कौतुकात्
देवराजेन दत्तं च गजराजेन्द्रमौक्तिकम्। नासिकाभूषणं चारु तस्यै सुप्रीतये ददौ ॥
एतस्मिन्नन्तरे तत्र सुशीलायाश्च गोपिकाः। पष्टि. तत्सहचर्यश्च राधायाः सुप्रतिष्ठिताः

१ ख. स्त्रः। २ ख. 'सत्त्यौ'।

पष्टितत्कोटिगोपीभिः सार्धं संहृष्टमानसाः । आययुः पादचिह्नेन प्रियस्य वहतः प्रियाम्
काश्चिच्चन्दनहस्ताश्च काश्चिच्चामरवाहिकाः । काश्चित्कस्तूरिहस्ताश्च मालाहस्ताश्च काश्चन
काश्चित्सिन्दूरहस्ताश्च काश्चित्कङ्कतिकाकराः । काश्चिदलक्तककरा वस्त्रहस्ताश्च काश्चन
काश्चिद्दर्पणहस्ताश्च पुष्पपात्रधरा वराः । काश्चित्क्रीडापद्महस्ता मालाहस्ताश्च काश्चन ॥
काश्चिदासवहस्ताश्च काश्चिद्भूषणवाहिकाः । करतालकराः काश्चिन्मृगं(मृदङ्ग)वाहिकाः पराः
स्वरयन्त्रकराः काश्चिद्वीणाहस्ताश्च काश्चन । षट्त्रिंशद्रागरागिण्यो गोपिकारूपधारिकाः ॥
गोलोकादागता याश्च भारतं राधया सह । काश्चिज्जगुश्च ननृतुस्तत्राऽऽगत्य च काश्चन ॥
काश्चिच्चक्रुश्च सेवां च राधायाः श्वेतचामरैः । काश्चिच्चक्रुश्च देव्याश्च पादसंवाहनं मुदा ॥
काचिद्ददौ च ताम्बूलं भक्षणार्थं महामुने । एवं कौतुकयुक्तश्च पुण्ये वृन्दावने वने ॥
मत्तस्थौ गोपिकासार्धं राधावक्षःस्थलस्थितः । क्षणं पपौ च माध्वीकं प्रियया सह माधवः
क्षणं चखाद ताम्बूलं क्षणं निद्रां ययौ मुदा । क्षणं चकार शृङ्गारं रत्ननिर्मितमन्दिरे ॥
क्षणं जलविहारं च चकार यमुनाजले । इत्येवं कथिता वत्स रासक्रीडा हरेरहो ॥१३॥
स्वेच्छामयस्याऽऽमनश्च परिपूर्णतमस्य च । निर्गुणस्य स्वतन्त्रस्य परस्य प्रकृतेः प्रभोः
ब्रह्मविष्णुशिवादीनामीश्वरस्य परस्य च । कृष्णजन्मरहस्यं च बालक्रीडनमीप्सितम् ॥
उक्तं किशोरचरितं किं भूयः श्रोतुमिच्छसि ॥ १४ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० श्रीकृष्णरास-
क्रीडावर्णनं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

अथ चतुःपञ्चाशत्तमोऽध्यायः ।

---

नारद उवाच--

अतः परं किं रहस्यं बभूव मुनिसत्तम । कथं जगाम भगवान्मथुरां नन्दमन्दिरात् ॥ १ ॥
नन्दो दधार प्राणांश्च विच्छेदेन हरेः कथम् । गोपाङ्गना यशोदा वा कृष्णैकतानमानसाः
चक्षुर्निमेषविच्छेदाद्या राधा न हि जीवति । कथं दधार सा देवी प्राणान्प्राणेश्वरं विना ॥
ये ये तत्सङ्गिनो गोपाः शयनाशनभोगतः । कथं विसस्मरुस्ते च तादृशं बान्धवं व्रजे ॥
श्रीकृष्णो मथुरां गत्वा किं किं कर्म चकार सः । स्वर्गारोहणपर्यन्तं तद्भवान्वक्तुमर्हति ॥

नारायण उवाच--

कंसश्चकार यज्ञं च समारम्भो धनुर्मखम् । जगाम तत्र भगवान् तेन राज्ञा निमन्त्रितः ॥

---

१ क. °सः धीरयज्ञं च समारेभे ध° ।

राजा प्रस्थापयामास चाक्रूरं भगवत्प्रियम् । अक्रूरः प्रेरितो राज्ञा गत्वा च नन्दमन्दिरम्
श्रीकृष्णं च गृहीत्वा स सगणं मथुरां गतः । कृष्णश्च मथुरां गत्वा जघान नृपतिं मुने ॥
जघान रजकं चैव चाणूरं मुष्टिकं गजम् । चकार पित्रोरुद्धारं बान्धवानां च बान्धवः ॥
कुब्जया सह शृङ्गारं कृत्वा च कौतुकेन च । तां च प्रस्थापयामास गोलोकं गोपिकापतिः
चकार कृपया कृष्णो मालाकारस्य मोक्षणम् । कृपया चोद्धवद्वारा बोधयामास गोपिकाः
तदोपनीतो भगवानवन्तीनगरं ययौ । चकार विद्याग्रहणं मुनेः सान्दीपनेर्गुरोः ॥ १२ ॥
ततो जित्वा जरासंधं निहत्य यवनेश्वरम् । उग्रसेनं च नृपतिं चकार विधिपूर्वकम् ॥
गत्वा समुद्रनिकटे निर्माय द्वारकां पुरीम् । जहार रुक्मिणीं देवीं जित्वा नृपतिसंघकम् ॥
कालिन्दीं लक्ष्मणां शैब्यां सत्यां जाम्बवतीं सतीम् । मित्रविन्दां नाग्नजितीं समुद्वाहं चकार सः
निहत्य नरकं भूपं रणेन दारुणेन च । पत्नीः षोडशसाहस्रं विहारं च चकार सः ॥
जहार पारिजातं च जित्वा शक्रं च लीलया । चिच्छेद बाणहस्तांश्च जित्वा च चन्द्रशेखरम्
पौत्रस्य मोक्षणं कृत्वा पुनरागत्य द्वारकाम् । आत्मानं दर्शयामास लोकांश्च प्रतिमन्दिरम्
यागे च वसुदेवस्य तीर्थयात्राप्रसङ्गतः । माणाविष्टां तु देवीं च ददर्श तत्र राधिकाम् ॥
पूर्णे च शतवर्षे च सुदाम्नः शापमोक्षणे । पुनर्ययौ तया सार्धं पुण्यं वृन्दावनं वनम् ॥
पुनश्चतुर्दशाब्दं च तया सार्धं जगत्पतिः । चकार रासं रामे च पुण्यक्षेत्रे च भारते ॥
पूर्णमेकादशाब्दं च निवृत्य नन्दमन्दिरे । मथुरायां द्वारकायां पूर्णमब्दशतं विभुः ॥२२॥
चकार भारहरणं पृथिव्यां पृथुविक्रमः । पञ्चविंशतिवर्षे च शतवर्षाधिकं मुने ॥ २३ ॥
निष्ठगाम गोलोकं पृथिव्यां च पुरातनः । यशोदायै च नन्दाय वृषभानाय धीमते ॥
राधामात्रे कलावत्यै ददौ सामीप्यमोक्षणम् । कृष्णेन सार्धं गोपी च राधिका च कुतूहलात्
निबध्य धर्मसेतुं च वेदोक्तं च युगे युगे । इत्येवं कथितं सर्वं समासेन महामुने ॥ २६ ॥
श्रीकृष्णचरितं रम्यं चतुर्वर्गफलप्रदम् । ब्रह्मादिस्तम्बपर्यन्तं सर्वं नश्वरमेव च ॥ २७ ॥
भज तं परमानन्दं सानन्दं नन्दनन्दनम् । स्वेच्छामयं परं ब्रह्म परमात्मानमीश्वरम् ॥
परमव्ययमव्यक्तं भक्तानुग्रहविग्रहम् । सत्यं नित्यं स्वतन्त्रं च सर्वेशं प्रकृतेः परम् ॥
निर्गुणं च निरीहं च निराकारं निरञ्जनम् ॥ ३० ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदनारा० श्रीकृष्णराधिकासंवादो
नाम चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ श्रीकृष्णार्पणमस्तु

---

समाप्तोऽयं श्रीमद्ब्रह्मवैवर्तपुराणस्य श्रीकृष्णजन्मखण्डस्याऽऽदिमः खण्डः ।

---

१ क. 'स दमघूर्णं च योक्तुम्' । २ क. 'मथुराम्' ।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमद्द्वैपायनमुनिप्रणीतं—

# ब्रह्मवैवर्तपुराणम् ।

## अथ श्रीकृष्णजन्मखण्डस्योत्तरार्धः ।

### अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

नारायण उवाच—

स एव भगवान्कृष्णः सर्वात्मा पुरुषः परः । दुराराध्योऽतिसाध्यश्च सर्वाराध्यः सुखप्रदः
निजभक्तातिसाध्यश्चाभक्तस्यासाध्य एव च । शश्वद्दृश्यः स्वभक्तस्याभक्तस्यादृश्य एव च
दुर्ज्ञेयं तस्य चरितं कार्यं हृदयमेव च । ब्रह्मास्तन्मायया सर्वे मोहिताश्च दुरन्तया ॥ ३ ॥
यद्भयाद्वाति वातोऽयं कूर्मं धत्ते निराश्रयः । कूर्मोऽनन्तं विधत्ते च यद्भयेन निरन्तरम् ॥
बिभर्ति शेषो विश्वं च यद्भयेन च नारद । सहस्रशीर्षा पुरुषः शिरस्येकदेशतः ॥ ५ ॥
सप्तसागरसंयुक्ता सप्तद्वीपा वसुंधरा । शैलकाननसंयुक्ता पातालाः सप्त एव च ॥ ६ ॥
सप्त स्वर्गाश्च विविधा ब्रह्मलोकसमन्विताः । एवं विश्वं त्रिभुवनं कृत्रिमं परिकीर्तितम् ॥
यद्भयेन विधात्रा च प्रतिसृष्टौ च निर्मितम् । एवं विश्वान्यसंख्यानि लोमकूपैर्महान्विराट्
यद्भयेन विधत्ते च यदंशो ध्यायते हि यम् । विष्णुः पाति च संसारं यद्भयेन कृपानिधिः ॥
कालाग्निरुद्रो यद्भीतः कालः संहरते प्रजाः । मृत्युंजयो महादेवो यद्भयाद्ध्यायते च यम्
षड्गुणैरनुरागैश्च विरागी विरतः सदा । यद्भयेन दहत्यग्निः सूर्यस्तपति यद्भयात् ॥
यद्भयाद्वर्षतीन्द्रश्च मृत्युश्चरति जन्तुषु । यद्भयेन यमः शास्ता पापिनां धर्म एव च ॥
धत्ते च धरणी लोकान्यद्भयेन चराचरान् । सूयते प्रकृतिः सृष्टौ यद्भयान्महदादिकम् ॥
दुर्ज्ञेयं तदभिप्रायं को वा जानाति पुत्रक । यत्प्रभावं न जानन्ति ब्रह्मविष्णुमहेश्वराः ॥
कथं जानामि तच्चेष्टामहं वत्स सुमन्दधीः । कथं जगाम मथुरां त्यक्त्वा वृन्दावनं वनम्
कथं तत्याज गोपीश्च राधां प्राणाधिकां प्रियाम् । यशोदां बान्धवादींश्च नन्दं वा नन्दनन्दनः
दर्पहा दर्पदः सोऽपि सर्वेषां सर्वदः सदा । बभञ्ज राधादर्पं च सुदाम्नः शापकारणात् ॥
अन्येषां भावनाहेतोर्ब्रह्मप्राप्तिस्तथा भवेत् । एवं किंचिद्वितर्कं च कुरुते कमलोद्भवः ॥

---

१ क. °श्यात्° ।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमद्द्वैपायनमुनिप्रणीतं—

# ब्रह्मवैवर्तपुराणम् ।

## अथ श्रीकृष्णजन्मखण्डस्योत्तरार्धः ।

### अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

नारायण उवाच—

स एव भगवान्कृष्णः सर्वात्मा पुरुषः परः । दुराराध्योऽतिसाध्यश्च सर्वाराध्यः सुखप्रदः
निजभक्तातिसाध्यश्चाभक्तस्यासाध्य एव च । शश्वद्दृश्यः स्वभक्तस्याभक्तस्यादृश्य एव च
दुर्ज्ञेयं तस्य चरितं कार्यं हृदयमेव च । ब्रह्मास्तन्मायया सर्वे मोहिताश्च दुरन्तया ॥ ३ ॥
यद्भयाद्वाति वातोऽयं कूर्मं धत्ते निराश्रयः । कूर्मोऽनन्तं विधत्ते च यद्भयेन निरन्तरम् ॥
बिभर्ति शेषो विश्वं च यद्भयेन च नारद । सहस्रशीर्षा पुरुषः शिरसश्चैकदेशतः ॥ ५ ॥
सप्तसागरसंयुक्ता सप्तद्वीपा वसुंधरा । शैलकाननसंयुक्ता पातालाः सप्त एव च ॥ ६ ॥
सप्त स्वर्गाश्च विविधा ब्रह्मलोकसमन्विताः । एवं विश्वं त्रिभुवनं कृत्रिमं परिकीर्तितम् ॥
यद्भयेन विधात्रा च प्रतिसृष्टौ च निर्मितम् । एवं विश्वान्यसंख्यानि लोमकूपैर्महाविराट्
यद्भयेन विधत्ते च यदंशो ध्यायते हि यम् । विष्णुः पाति च संसारं यद्भयेन कृपानिधिः ॥
कालाग्निरुद्रो यद्भीतः कालः संहरते प्रजाः । मृत्युंजयो महादेवो यद्भयाद्ध्यायते च यम्
षड्गुणैरनुरागैश्च विरागी विरतः सदा । यद्भयेन दहत्यग्निः सूर्यस्तपति यद्भयात् ॥
यद्भयाद्वर्षतीन्द्रश्च मृत्युश्चरति जन्तुषु । यद्भयेन यमः शास्ता पापिनां धर्म एव च ॥
धत्ते च धरणी लोकान्यद्भयेन चराचरान् । सूयते प्रकृतिः सृष्टौ यद्भयान्महदादिकम् ॥
दुर्ज्ञेयं तदभिप्रायं को वा जानाति पुत्रक । यत्प्रभावं न जानन्ति ब्रह्मविष्णुमहेश्वराः ॥
कथं जानामि तच्चेष्टामहं वत्स सुमन्दधीः । कथं जगाम मथुरां त्यक्त्वा वृन्दावनं वनम्
कथं तत्याज गोपीश्च राधां प्राणाधिकां प्रियाम् । यशोदां बान्धवादींश्च नन्दं वा नन्दनन्दनः
दर्पहा दर्पदः सोऽपि सर्वेषां सर्वदः सदा । बभञ्ज राधादर्पं च सुदाम्नः शापकारणात् ॥
अन्येषा भावनाहेतोर्ब्रह्मशापस्तथा भवेत् । एवं किंचिद्वितर्कं च कुरुते कमलोद्भवः ॥

---

१ क. °दाम्न° ।

चकार दर्पभङ्गं च महाविष्णुः पुरा विभुः। ब्रह्मणश्च तथा विष्णोः शेषस्य च शिवस्य च
धर्मस्य च यमस्यापि साम्बस्य चन्द्रसूर्ययोः। गरुडस्य च वह्नेश्च गुरोर्दुर्वाससस्तथा॥
दौवारिकस्य भक्तस्य जयस्य विजयस्य च। सुराणामसुराणां च भवतः कामशक्रयोः॥
लक्ष्मणस्यार्जुनस्यापि बाणस्य च भृगोस्तथा। सुमेरोश्च समुद्राणां वायोश्च वरुणस्य च॥
सरस्वत्याश्च दुर्गायाः पद्मायाश्च भुवस्तथा। सावित्र्याश्चैव गङ्गाया मनसायास्तथैव च॥
प्राणाधिष्ठातृदेव्याश्च प्रियायाः प्राणतोऽपि च। प्राणाधिकाया राधाया अन्येषामपि का कथा
हृत्वा दर्पं च सर्वेषां प्रसादं च चकार सः। कर्ता हर्ता पालयिता स्रष्टा स्रष्टुश्च सर्वतः॥
यं स्तोतुमीशो नालं च पञ्चवक्त्रैस्तु शंकरः। स्तोतुं नालं चतुर्वक्त्रो विधाता जगतामपि
स्तोतुं नालमनन्तश्च सहस्रवदनैरहो। स्वयं विष्णुर्विश्वव्यापी नालं स्तोतुं जनार्दनः॥
महाविराण्न शक्तोऽपि यं स्तोतुं परमेश्वरम्। कम्पिता यस्य पुरतः प्रकृतिः परमात्मनः
सरस्वती जडीभूता यं स्तोतुं परमेश्वरम्। महिमानं न जानन्ति वेदा यस्य च नारद॥
इत्येवं कथितो ब्रह्मन्प्रभावः परमात्मनः। निर्गुणस्य च कृष्णस्य किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्तरार्धे नारदना० श्रीकृष्णप्रभावर्णनं नाम पञ्चपञ्चाशत्तमोऽध्यायः॥ ५५॥

---

## अथ षट्पञ्चाशत्तमोऽध्यायः।

नारद उवाच--

किमपूर्वं श्रुतं ब्रह्मन्रहस्यं परमाद्भुतम्। अनन्तचरितं धन्यमनन्तस्याच्युतस्य च॥१॥
कथं कृष्णो महाविष्णोर्दर्पभङ्गं चकार सः। अन्येषां वा कथमहो तद्भवान्वक्तुमर्हति॥
स्वतः श्रीकृष्णचरितमतीव मधुरं श्रुतौ। अतीव मधुरं रम्यं काव्यं कविमुखात्ततः॥३॥

नारायण उवाच---

महाविष्णोरहंकारो बभूव सहसेति च। सर्वे मल्लोमकूपेषु विश्वान्येवाऽहमीश्वरः॥ ४॥
संहारभैरवो भूत्वा तं स जग्रास लीलया। स्थिते मूर्धावशेषे च प्रसादं तं चकार सः॥
सर्वात्मना ध्यायमानः स्तुतो भीतं कृपानिधिः। तच्छरीरं सुसंपन्नं पुनरेव चकार सः॥
ब्रह्मणः सहसा ब्रह्मन्निति दर्पो बभूव ह। अहं त्रिजगतां धाता कर्ताऽहमीश्वरः स्वयम्॥
मत्परः पूजितो नास्ति मत्परश्च जितेन्द्रियः। इत्येवं मनसा कृत्वा बहुदर्पो बभूव ह॥

---

१ क. "दपनेण दं"। २ क. देवा।

तं ब्रह्मणां समूहं च दर्शयामास तत्क्षणम् । गोलोके स्वसमीपे च वसन्तं पुरतो विभोः ॥
चतुर्वक्त्रं पञ्चवक्त्रं षड्वक्त्रं च ततोऽधिकम् ॥ ९ ॥
शतवक्त्रं च प्रत्येकं ब्रह्माण्डौघं च लीलया । त्यक्तुकामं स्वदेहं च व्रीडया नतकंधरम् ॥
पुनः प्रसादं कृपया तं चकार कृपानिधिः । कालेन मोहिनीद्वारा तमपूज्यं चकार सः ॥
स्वकन्यां दर्शयित्वा तं सकामं च चकार ह । पुनस्तद्दर्पभङ्गं च शिवद्वारा चकार सः ॥
तत्याज लज्जया देहं पुनर्देहं दधार सः । पुनश्चकार तं पूज्यं ब्रह्माणं ब्रह्मणः प्रभुः ॥
ज्ञानं ददौ महाज्ञानी ज्ञानानन्दः सनातनः । विष्णोर्बभूव गर्वश्च जगत्पाताऽहमीश्वरः ॥
तमात्मविस्मृतं कृष्णश्चकार रामजन्मनि । अहं विश्वं बिभर्मीति शेषो दर्पी बभूव ह ॥
तद्दर्पं गरुडद्वारा चूर्णीभूतं चकार सः । एकदा पूजितो नागैर्गरुडः कृष्णवाहनः॥१६॥
न पूजितश्च शेषेण स्वदर्पेण पुरा मुने । गरुडेन जितं क्रोधात्तमनन्तं मनस्विनम् ॥१७॥
चकार मोक्षणं तस्य श्रीकृष्णश्च कृपानिधिः । स्वयं शिवः स्वदर्पाच्च विवाहं न चकार सः॥
तं कृत्वा मायया मोहं कारयामास श्रीयुतम् । पुनर्जहार तत्पत्नीं दक्षकन्यां महासतीम् ॥
वर्षं शुशोच तद्देहं क्रोडे कृत्वा च शंकरः । नानास्थानं च बभ्राम रुदन्लोकान्मुहुर्मुहुः ॥
जन्मान्तरे पुनः प्राप्य तां सतीं पार्वतीं मुदा । विसस्मार च स्वज्ञानं दर्पशापः पुनः शिवः॥
पुनश्चाऽऽङ्गीरसद्वारा स्मारयामास सत्वरम् । एकदा सदयः शंभुः प्रेरितास्त्रिपुरे पुरा ॥
हत्वा दैत्यं शिवद्वारा त्रिपुरारिं चकार तम् । सर्वं वरं च सर्वस्मै दातुं शंभुः कृपानिधिः
स्वयं कल्पतरुर्भूत्वा प्रतिज्ञां च चकार सः । वृकासुरोऽनुष्ठानं च कृत्वा वव्रे वरं विभुम् ॥
दास्यामि हस्तं यन्मूर्ध्नि भस्मसाद्भवतु क्षणात् । जगाद जगतां नाथ ईप्सितं ते भविष्यति
इति लब्ध्वा वरं रुद्राद्दच्छन्तं शंकरं विभुम् । हस्तं दातुं च तं मूर्ध्नि प्राधावत्सत्वरं पुरा ॥
अतीव भीतः शंभुश्च जगाम शरणं हरिम् । भगवांश्च शिवस्यापि दैत्यं भस्मी चकार सः॥
शिवं युद्धं च कुर्वन्तं बाणयुद्धे पुरा विभुः । लीलया जृम्भणास्त्रेण जडीभूतं चकार सः॥
समागतं दक्षयज्ञे शंभुं दम्भेन लीलया । वारयामास भगवान्हस्तं दत्त्वा च तद्गले ॥२९॥
वेदाङ्कन्यकाद्वारा शशी धर्मोऽतिदैवतः । बभूवातिकृशो भीतः कुहूमिव यथा शशी ॥
तदा तस्याश्च शापान्ते सत्ये पूर्णो बभूव ह । त्रिपाद्बभूव त्रेतायां द्वापरं च द्विपादिति ॥
एकपाच्च कलौ सोऽपि कलेरन्ते पुनः क्षयः । षोडशांशोऽतिहिंड्यश्च सस्मार चरणं विभोः॥
तदा सत्ययुगारम्भे परिपूर्णोऽभवत्पुनः । पुनर्युगानुरोधेन क्रमेण च पुनः क्षयः ॥३३॥
यमो माण्डव्यशापेन शूद्रयोनिमवाप ह । तदा पुनः शताब्दान्ते पुनः शुद्धो बभूव ह ॥

---

१ क. 'दशवक्त्रं त'। २ ग. 'माश्च'।

साम्बो विमातृशापेन गलत्कुष्ठी बभूव सः । तदा सूर्यव्रतं कृत्वा पुनः शुद्धो बभूव सः॥
चन्द्रो दर्पमदेनैव जहार च गुरोः प्रियम् । बभूव दर्पभङ्गोऽस्य यक्ष्मग्रस्तो बभूव सः ॥
सूर्यो दर्पात्तेजसश्च हन्तुं शंकरकिंकरम् । सुमालीत्यभिधं दैत्यं जगामाऽऽशु गिरिं प्रति ॥
अहर्निशं दीप्तिकरं कुर्वन्तं विषयं रवेः । सूर्येण भीतो दैत्यश्च शंकरं शरणं ययौ ॥
सूर्यं दृष्ट्वा शंकरश्च जग्राह शूलमेव च । भीतो दुद्राव सूर्यश्च दृष्ट्वा तं शूलिनं मुने ॥
जघान काश्यां शूलेन शूली काशीश्वरो रविम् । मूर्छां संप्राप्य शूलेन दर्पभङ्गो बभूव ह ॥
सान्धान्धकारः सहसा जग्राह पृथिवीतलम् । आशुतोषो महादेवो जीवयामास तत्क्षणम् ॥
तुष्टाव शंकरं सूर्यो लज्जितोऽपि भयेन च । कृत्वा तमाशिषं तुष्टो ययौ गेहं कृपानिधि. ॥
विभुर्गरुत्मतो दर्पं बभञ्ज लीलया पुरा । निःश्वासैः प्रेरितस्यापि शिवस्य वृषभस्य च ॥
आगच्छन्तं च वैकुण्ठं पृष्ठे कृत्वा शिवं पुरा । द्रष्टुं समागतं भक्त्या देवं नारायणं परम्
वह्निर्दर्पी भृगोः शापात्सर्वभक्षो बभूव ह । गुरोः स्वभार्याहरणाद्दर्पश्चूर्णो बभूव ह ॥
दुर्वाससो दर्पभङ्गो बभूव ह्यम्बरीषतः । सुदर्शनेन चक्रेण विष्णोर्दुर्विषहेण च ॥ ४९ ॥
जयस्य विजयस्यापि दर्पभङ्गं चकार सः । वैकुण्ठात्पतितस्यापि ब्रह्मशापच्छलेन च ॥
नृसिंहेण हतः सोऽपि हिरण्यकशिपुर्यथा । सूकरेण हिरण्याक्षो लीलया च रसातले ॥
रावणः कुम्भकर्णश्च निहतौ राघवाणतः । जन्मान्तरे च लङ्कायां ब्रह्मणा प्रार्थितस्य च ॥
शिशुपालो हि निहतः कृष्णबाणेन लीलया । दन्तवक्त्रश्च सहसा परिपूर्णेऽत्र जन्मनि ॥
सुराणां दर्पभङ्गं च दैत्यद्वारा चकार ह । असुराणां सुरद्वारा विरोधेन परस्परम् ॥ १० ॥
विधिद्वारा दर्पभङ्गं भवतश्च चकार सः । भवानासीन्नारदश्च पुरा पुत्रः प्रजापतेः ॥
गन्धर्वश्च पितुः शापाच्छूद्रीपुत्रस्ततः क्रमात् । ततः पुनर्नारदश्च प्रसादादधुना विभोः ॥
मम साध्यं विश्वमिति कामदर्पो बभूव ह । तं प्रमत्तं हरद्वारा भस्मसाच्च चकार सः ॥
पुनः कृत्वा प्रसादं तं जीवयामास लीलया । ऐकान्तिकं च तद्भक्तं स च नाशं करोति हि ॥
चकार दर्पभङ्गं च दर्पिणो लक्ष्मणस्य च । रणे शंकरशूलेन रावणप्रेरितेन च ॥ ११ ॥
पुनस्तं जीवयामास रामस्य स्तवनेन च । स्वयं विस्मृतविष्णोश्च प्रतापेन नारद ॥
चकार दर्पभङ्गं च कार्तवीर्यार्जुनस्य च । जामदग्न्यस्य शस्त्रेणामोघेन पर्शुना पुरा ॥
विप्रपुत्रस्य मरणे हरणे कृष्णयोषिताम् । कर्णेन सार्धं समरे पार्थदर्पं बभञ्ज सः ॥
बाणस्य चापाहरणे चिच्छेद च भुजाश्रिभुः । भृगोश्च दक्षयज्ञे च दर्पभङ्गं चकार सः ॥
पर्शुरामस्य रामस्य विवाहे पथि गच्छतः । बभञ्ज दर्पं समरे रामद्वारा पुरा विभुः ॥

---

१०. 'रत्नपदेन ।

सुमेरोः शृङ्गभङ्गं च वायुद्वारा चकार सः । समुद्राणां दर्पभङ्गं चकारागस्त्यभक्षणात् ॥
अकाले सृष्टिहरणे तत्पुत्रमरणे पुरा । कोपयुक्तस्य वायोश्च दर्पभङ्गं चकार सः ॥६२॥
उषाहरणयात्रायां द्वारकागमने हरेः । बाणस्य च गवां हेतोर्वरुणं च शशाप सः ॥
कलहे गङ्गया सार्धं वाण्या नारायणाग्रतः । सरस्वतीं च तत्याज तस्या दर्पं बभञ्ज सः ॥
दर्पयुक्तां च दुर्गां च त्यक्त्वा शंभुर्हिमालये । कामं च भस्मसात्कृत्वा तपसे च ययौ विभुः ॥
लज्जामवाप सा देवी तस्या दर्पं बभञ्ज सः । सा ययौ तपसे विष्णोः पाद्विहितोः शिवस्य च ॥
भारते सुचिरं तप्त्वा देवी विष्णोर्वरेण च । चकार स्वामिनं शंभुं भगवन्तं सनातनम् ॥
महासौभाग्ययुक्ता सा बभूव शंकरप्रिया । विश्वेषु सर्वदेवीषु पूज्या वन्द्या स्तुता सुरैः ॥
दर्पयुक्ता महालक्ष्मीर्बभूव सा महामुने । पराभूता पुरा देवी जयेन विजयेन च ॥६९॥
प्रविशन्तीं विमोर्द्वारं दत्त्वा भक्ताय वाञ्छितम् । निवारिता सा द्वाराच्च तेन दौवारिकेण वै
धैर्यात्मनस्तिरस्कारं साभिमाना महासती । स्मृत्वा हरेः पादपद्मं देहं त्यक्तुं समुद्यता ॥
तदा ब्रह्मा महेशश्च विष्णुर्धर्मश्च भास्करः । चन्द्रश्च कामदेवश्च वैश्वानरो धनेश्वरः॥७२॥
ऋषयो मुनयश्चैव मनवो विघ्ननाशकाः । महेन्द्रो वरुणश्चैव जगत्प्राणो हुताशनः॥७३॥
समावयू रुदन्तस्ते पद्मायाः पुरतः पुरा । तुष्टुवुश्च महालक्ष्मीं मूलप्रकृतिमीश्वरीम् ॥७४॥

देवा ऊचुः—

क्षमस्व भगवत्यम्ब क्षमाशीले परात्परे । शुद्धसत्त्वस्वरूपे च कोपादिपरिवर्जिते॥७५॥
उपमे सर्वसाध्वीनां देवीनां देवपूजिते । त्वया विना जगत्सर्वं मृततुल्यं च निष्फलम् ॥
सर्वसंपत्स्वरूपा त्वं सर्वेषां सर्वरूपिणी । रासेश्वर्यधिदेवी त्वं त्वत्कलाः सर्वयोषितः ॥
कैलासे पार्वती त्वं च क्षीरोदे सिन्धुकन्यका । स्वर्गे च स्वर्गलक्ष्मीस्त्वं मर्त्यलक्ष्मीश्च भूतले ॥
वैकुण्ठे च महालक्ष्मीर्देवदेवी सरस्वती । गङ्गा च तुलसी त्वं च सावित्री ब्रह्मलोकतः ॥
कृष्णप्राणाधिदेवी त्वं गोलोके राधिका स्वयम् । रासे रासेश्वरी त्वं च वृन्दा वृन्दावने वने ॥
कृष्णप्रिया त्वं भाण्डीरे चन्द्रा चन्दनकानने । विरजा चम्पकवने शतशृङ्गे च सुन्दरी ॥
पद्मावती पद्मवने मालती मालतीवने । कुन्ददन्ती कुन्दवने सुशीला केतकीवने ॥८२॥
कदम्बमाला त्वं देवी कदम्बकाननेऽपि च । राजलक्ष्मी राजगेहे गृहलक्ष्मीर्गृहे गृहे॥८३॥
इत्युक्त्वा देवताः सर्वे मुनयो मनवस्तथा । रुरुदुर्नम्रवदनाः शुष्ककण्ठोष्ठतालुकाः ॥
इति लक्ष्मीस्तवं पुण्यं सर्वदेवैः कृतं शुभम् । यः पठेत्प्रातरुत्थाय स वै सर्वं लभेद्ध्रुवम् ॥
अभार्यो लभते भार्यां विनीतां च सुतां सतीम् । सुशीलां सुन्दरीं रम्यामतिसुप्रियवादिनीम् ॥

---

१ क. पद्म । २ क. महात्मनस्ति° । ३ क. स्तवा ।

पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां वराम्। अपुत्रो लभते पुत्रं वैष्णवं चिरजीविनम् ॥
परमैश्वर्ययुक्तं च विद्यावन्तं यशस्विनम्। भ्रष्टराज्यो लभेद्राज्यं भ्रष्टश्रीर्लभते श्रियम्॥
हतबन्धुर्लभेद्बन्धुं धनभ्रष्टो धनं लभेत्। कीर्तिहीनो लभेत्कीर्तिं प्रतिष्ठां च लभेद्ध्रुवम्॥
सर्वमङ्गलदं स्तोत्रं शोकसंतापनाशनम्। हर्षानन्दकरं शश्वद्धर्ममोक्षसुहृत्प्रदम् ॥ ९० ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवद्गुणवर्णने लक्ष्मीस्तोत्रकथनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

---

अथ सप्तपञ्चाशत्तमोऽध्यायः।

---

*नारायण उवाच—*

देवानां स्तवनं श्रुत्वा त्यक्त्वा च रोदनं सती। उवाच सुप्रसन्ना तास्तेषां स्तोत्रेण नारद॥

महालक्ष्मीरुवाच—

त्यजामि देहं न क्रोधात्स्ववैराग्येण सांप्रतम्। इदं हृदि समालोच्य देवास्तच्छ्रूयतामिति॥
यस्मिन्सर्वेशे महति सर्वसाम्ये च निर्गुणे। सर्वात्मनि सदानन्दे समता तृणशैलयोः॥
भ्रूभङ्गलीलया लक्ष्मीर्लक्षं स्रष्टुमलं च यः। भृत्ये स्त्रिया यत्समता किं कार्यं तस्य सेवया
तत्पत्नीनां प्रधानाऽहं निरस्ता द्वारिणाऽधुना। तद्भृत्यभृत्यभृत्येन परिपूर्णेन नेप्सिता॥
त्यक्ष्यामि जीवनमहमसौभाग्या च स्वामिनि। वह्नौ च कामना कृत्वा यथा मद्रं भवेत्पुरा
या स्त्री भर्तुरसौभाग्या साऽसौभाग्या च सर्वतः। शयनेऽभोजने तस्या न सुखं जीवनं वृथा
यस्या नास्ति प्रियप्रेम तस्या जन्म निरर्थकम्। तत्किं पुत्रे धने रूपे संपत्तौ यौवनेऽथवा॥
यद्भक्तिर्नास्ति कान्ते च सर्वप्रियतमे परे। साऽशुचिर्धर्महीना च सर्वकर्मविवर्जिता ॥
पतिर्बन्धुर्गतिर्भर्ता दैवतं गुरुरेव च। सर्वस्माच्च परः स्वामी न गुरुः स्वामिनः परः॥
पिता माता सुतो भ्राता हितो दाताऽमितं धनम्। सर्वस्वदाता स्वामी च मूढानां योषितां सुराः
काचिदेव हि जानाति महासाध्वी च स्वामिनम्। अतिसद्वंशजाता च सुशीला कुलपालिका
असद्वंशप्रसूता या दुःशीला धर्मवर्जिता। सुखदुष्टा योनिदुष्टा पतिं निन्दति कोपतः॥
या स्त्री सर्वपरं द्वेष्टि पतिं विष्णुसमं गुरुम्। कुम्भीपाके पचति सा यावदिन्द्राश्चतुर्दश
व्रतं चानशनं दानं सत्यं पुण्यं तपश्चिरम्। पतिभक्तिविहीनाया भस्मीभूतं निरर्थकम्॥
अतः किंचिन्न वक्ष्यामि निष्ठुरं पतिमीश्वरम्। भृत्यापराधैर्देवस्य प्राणांस्त्यक्ष्यामि निश्चितम्
पतिदोषे महासाध्वी पतिं न निष्ठुरं वदेत्। यदि सोढुमशक्ता च प्राणांस्त्यजति धर्मतः॥

---

१ क. °परः। २ क. दैवेन।

पतिसेवा व्रतं स्त्रीणां पतिसेवा परं तपः । पतिसेवा परो धर्मः पतिसेवा सुरार्चनम् ॥
पतिसेवा परं सत्यं दानतीर्थानुकीर्तनम्। सर्वदेवमयः स्वामी सर्वदेवमयः शुचिः॥१९॥
सर्वपुण्यस्वरूपश्च पतिरूपी जनार्दनः । या सती भर्तुरुच्छिष्टं भुङ्क्ते पादोदकं सदा ॥
तस्या दर्शमुपस्पर्श नित्यं वाञ्छन्ति देवताः। ततः सर्वाणि तीर्थानि पुनन्ति पापिनो ह्यघात्
इत्युक्त्वा च महासाध्वी रुरोद च मुहुर्मुहुः। उवाच ब्रह्मा भीतश्च भक्तिनम्रात्मकंधरः॥

ब्रह्मोवाच—

भविष्यति न भद्रं च जयस्य विजयस्य च। त्वया न शप्तौ तौ मूढौ प्रियापराधभीतया
सापराधं च धर्मिष्ठः क्षमया न शपेद्यदि । सर्वनाशो भवेत्तस्य निश्चितं मा चिरं सति
यदि शप्तुं न शक्तश्च न दण्डं कर्तुमीश्वरः। सापराधे च पुरुषे धर्मो दण्डं करोति च॥
सर्वं क्षमस्व हे मातर्गच्छ गच्छ प्रियान्तिकम्। मां च त्वत्स्वामिनो भक्तं नियोज्य सृष्टिकर्मणि
इत्युक्त्वा तां पुरस्कृत्वा सार्धं देवैर्मुनीन्द्रकैः । शीघ्रं जगाम वैकुण्ठं वैकुण्ठं स्तोतुमीश्वरः
तत्र गत्वा जगन्नाथं तुष्टाव कमलासनः। चतुर्वक्त्रैश्चतुर्वक्त्रश्चतुर्वेदविदां गुरुम्॥२८॥
ब्रह्मणः स्तवनं श्रुत्वा दृष्ट्वा लक्ष्मीं पुरःसराम्। रुदतीं नम्रवदनामुवाच कमलापतिः॥

श्रीभगवानुवाच—

सर्वं जानामि सर्वज्ञः सर्वात्मा सर्वपालकः । सर्वशास्ता च सर्वादिकारणं कमलोद्भव॥
भक्ते कलत्रे बन्धौ च सर्वत्र समता मम । विशेषतोऽतिमद्भक्तः कलत्रात्पर एव च ॥
मद्भक्तौ तव पुत्रौ च द्वारपालौ दुरन्तकौ । क्षम मामपराधं च तयोश्च भक्तिपूर्णयोः॥
मद्भक्तिपूर्णौ बलवान्दैत्येभ्यो न बिभेति च। रक्षितो मम चक्रेण भक्तिमार्गाकुर्मदः॥
इत्युक्त्वा जगतां नाथो लक्ष्मीं कृत्वा स्ववक्षसि। समानीय द्वारपालं तमुवाचेदमेव च॥
मा भैर्वत्स सुखं तिष्ठ भयं किं ते मयि स्थिते। मद्भक्तानां च कः शास्ता गच्छ वत्साऽऽ-
त्मनः पदम् ॥ ३९ ॥

इत्युक्त्वा भगवांस्तत्र विरराम महामुने । यथुर्देवाश्च स्वस्थानं प्रणम्य जगदीश्वरम् ॥
नारायणवचः श्रुत्वा द्वारपाल उवाच तम्। पुलकाञ्चितसर्वाङ्गो भक्तिनम्रात्मकंधरः ॥

जय उवाच—

नाहं बिभेति देवांश्च लक्ष्मीं मुनिगणांस्तथा । त्वदीयचरणाम्भोजध्यानैकतानमानसः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० उत्त० लक्ष्मी-
वैराग्यमोचनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥



अथाष्टपञ्चाशत्तमोऽध्यायः ।

नारायण उवाच—

बभूव दर्पः पृथ्व्याश्च सर्वाधाराऽहमेव च । पृथुद्वारा च तद्दर्पं जघान चैव तत्प्रभुः ॥
बभूव दर्पः सावित्र्या वेदमाताऽहमेव च । चक्रे चकार तस्याश्च सपुत्राया अदर्शनम्
बभूव दर्पो गङ्गाया अहं निर्वाणदेति च । जह्नुद्वारा च तद्दर्पं जहार जगतां पतिः ॥
जहार मनसादर्पं दुर्गाद्वारा पुरा मुने । विरजोपगतं कृष्णं मत्सयामास कोपतः ॥
प्रविशन्तं रासगृहं गोपीभिर्विनिवारितम् । दौवारिकाभिर्वेत्रैश्च ताडितं तं च दर्पतः ॥
सुदाम्ना निजभक्तेन राधा शप्ता बभूव ह । दैवेन सहसा ध्वस्ता गोलोकादागता धराम्
वृषभानुस्त्रियां जाता कलावत्यां च नारद । कृष्णस्तदनुरोधेन कंसभीतिच्छलेन च ॥
समागतो नन्दगेहं तेनाहं नन्दनन्दनः । सुदाम्नः शापविच्छेदपालनार्थं जगत्पतिः ॥
पुनर्जगाम मथुरामित्याह कमलोद्भवः । अस्यापरमभिप्रायं को वा जानाति नारद ॥
कथं जातः समायातो मथुरायाश्च गोकुलम् । इत्येवं कथितं सर्वमपरं श्रूयतामिति॥१०॥
यथा जगाम मथुरां नन्दास्य नन्दनन्दनः । शोकं नन्दो यशोदा च यथा संप्राप दैवतः ॥
यथा गोपाश्च गोप्यश्च गावो वृन्दावने वने । वने वने वा धन्यास्ते वन्या जानन्ति किंचन॥
वनं रम्यं वन्यपदमपि त्यक्त्वा वने वने । श्मशाने वाऽश्मशाने वा बभ्राम भ्रमिणी मुने ॥
ग्रामं त्यक्त्वा च बभ्राम चेतनाऽचेतना क्षणम् । क्षणेन वर्जिता सा च मार्थयन्ती प्रतिक्षणम्
क्षणं क्षणं सा श्वसिति चिन्तनं कुर्वती क्षणम् । क्षणं विशन्ती तल्पे च क्षणमुत्थाय तिष्ठति॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्म० उत्त० नारदना० अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

अथैकोनषष्टितमोऽध्यायः ।

नारायण उवाच—

इत्येवं कथितं सर्वं सर्वेषां दर्पभञ्जनम् । इन्द्रस्य दर्पभङ्गं च विस्तरेण निशामय ॥ १ ॥
इन्द्रो दर्पात्सभायां च रत्नसिंहासनाद्‌द्रुतात् । नोत्तस्थौ स्वगुरुं दृष्ट्वा ब्रह्मिष्ठं च बृहस्पतिम्
गुरुर्जगामातिरुष्टः स्वापमाने समत्सरः । तथाऽपि कृपया धर्मी स्नेहाच्च न शशाप तम् ॥
विना शापेन तद्दर्पश्चूर्णीभूतो बभूव ह । अन्यश्चेन्न शपेद्धर्मात्प्रेम्णा वा चातिकिल्बिषम् ॥
तथाऽपि तं च फलति धर्मस्तं हन्ति नारद । यो यं हिंस्रं सापराधं शपेत्कोपेन धार्मिकः

१ क. 'इने वसन्' । २ क. 'जातकि' ।

विनाशः सापराधस्य धर्मो नष्टश्च धर्मिणः । तेनाधर्मेण शक्रस्य ब्रह्महत्या बभूव ह ॥
भीतस्त्यक्त्वा स्वराज्यं च प्रययौ स सरोवरम् । सरसः पद्मसूत्रे च निवासं च चकार सः
गन्तुं न शक्ता हत्या च पुण्यं विष्णुसरोवरम् । श्रेष्ठं भारतवर्षे च तपःस्थानं तपस्विनाम्
तदेव पुष्करं तीर्थं प्रवदन्ति पुराविदः । राज्यभ्रष्टं हरिं दृष्ट्वा हरिभक्तो नराधिपः ॥१०॥
बलाज्जहार तद्राज्यं नहुषो नाम धार्मिकः । दृष्ट्वा शचीं वरारोहामनपत्यां च सुन्दरीम् ॥
स्वर्गगङ्गां च गच्छन्तीं हृदयेन विदूयता । नवयौवनसंपन्नां रत्नालंकारभूषिताम् ॥११॥
सुकोमलां तां सुदतीं वदन्तीं च महासतीम् । मूर्छां संप्राप राजेन्द्रः कामेन यौवनेन च ॥
उवाच तत्पुरः स्थित्वा सुविनीतश्च दासवत् ॥ १२ ॥

नहुष उवाच—

धातुर्गतिर्विचित्राऽहो न बोध्या च सतामपि ॥ १३ ॥
ईदृशी स्त्री भगाङ्गस्य लुब्धस्य परयोषिति । ईदृशी सुन्दरी यस्य परमार्थास्तु तन्मनः ॥
अस्या अग्रे च का रम्भा कोर्वशी का तिलोत्तमा । का वा मेना घृताची वा रत्नमाला कलावती ॥ १५ ॥
कालिका सुन्दरी भद्रावती चम्पावती तथा । एताश्चाप्सरसश्चान्याः कलां नार्हन्ति षोडशीम्
इमां विहाय मूढोऽन्यां कथं गच्छति मन्दधीः । अस्माकं गोपितोऽस्याश्च चेष्टितुल्याश्च निश्चितम् ॥ १७ ॥
मां भजस्व वरारोहे सुप्रीता भव किंकरम् । यथा राधा च गोलोके कृष्णवक्षसि राजते ॥
वैकुण्ठोरसि वैकुण्ठे यथा लक्ष्मीः सरस्वती । ब्रह्मलोके च ब्रह्माणी यथैव ब्रह्मवक्षसि ॥
यथा मूर्तिर्महासाध्वी धर्मवक्षःस्थलास्थिता । पातालतललक्ष्मीर्वा यथैवाऽनन्तवक्षसि ॥
यथा पुष्टिर्गणेशे च देवसेना च कार्तिके । वरुणे वरुणानी च यथा स्वाहा हुताशने ॥
यथा रतिः कामदेवे यथा संज्ञा दिनेश्वरे । वायोः पत्नी यथा वायौ यथा चन्द्रे च रोहिणी
यथाऽदितिर्देवमाता तव श्वश्रूश्च कश्यपे । यथा हिमालये मेना पितृकन्या च मानसी ॥
लोपामुद्रा यथाऽगस्त्ये यथा तारा बृहस्पतौ । कर्दमे देवहूतिश्च वसिष्ठेऽरुन्धती यथा ॥
मनौ च शतरूपेव दमयन्ती नले यथा । तथा भव त्वं सौभाग्या मम वक्षसि सुन्दरि ॥
त्रैलोक्या च सहमेन्द्राञ्छेत्तुं शक्तोऽहमीश्वरः । नारी वाञ्छति जारं च स्वामिनो बलान्तरम्
सुमेरुगिरिकूटे च दुर्गमेति रहःस्थले । अथवा मलये रम्ये रम्ये चन्दनवायुना ॥ २७ ॥
विश्रम्भके सुरसने किंवा नन्दनकानने । निकटे शतशृङ्गस्य पुष्पभद्रानदीतटे ॥ २८ ॥
गोदावरीतीरनीरे समीपे शीतवायुना । चम्पावतीनदीतीरे रम्ये चम्पककानने ॥ २९ ॥

श्मशानेऽतिश्मशाने च रम्येऽतिनिर्जने वने । शैले शैलेऽतिरहसि कंदरे कंदरे वने ॥
द्वीपे द्वीपे दुर्गदुर्गे नद्यां नद्यां नदे नदे । समुद्रपुलिने रम्ये सर्वजन्तुविवर्जिते ॥ ३१ ॥
विदग्धाया विदग्धेन संगमो निर्जने सुखः । पुष्पचन्दनशय्यायां पुष्पचन्दनचर्चिते ॥
मां गृहीत्वा कुरु रतिं पुष्पचन्दनचर्चितम् । ब्रह्मणश्च वरैर्देवि जरामृत्युविवर्जितम् ॥
मां कुरुष्व पतिं भद्रे नित्यं सुस्थिरयौवनम् । सुवेषं सुन्दरं धीरं कामशास्त्रविशारदम् ॥
शरत्पार्वणचन्द्रास्यं चन्द्रवंशसमुद्भवम् । आगतामुर्वशीं मह्यां रथच्छन्तं च याचतीम् ॥
न मे स्पृहा परस्त्रीषु त्वां दृष्ट्वा लोलुपं मनः । त्यक्ता मया स्वभार्याश्च रत्नभूषणभूषिताः ॥
अथवा रक्षिताः सर्वा दासीः कृत्वा वरानने । रत्नेन्द्रसारां मालां ते दास्यामि वरुणस्य च
निर्जित्य वरुणं युद्धे ब्रह्मास्त्रेणातितेजसा । वह्निशुद्धं वस्त्रयुगं जित्वा वह्निं सुदुर्बलम्
दास्याम्यद्यैव ते देवि नियोज्यं मां नियोजय । मणीन्द्रसारनिर्माणमकराकारकुण्डले २९
दास्यामि देवान्निर्जित्य देवमातुश्च सुन्दरि । करभूषणयुग्मं चात्यमूल्यरत्ननिर्मितम् ॥
दास्याम्यद्यैव रोहिण्याश्चन्द्रं जित्वाऽतिदुर्लभम् । यक्ष्मग्रस्तमतिकृशं ममैव पूर्वपूरुषम् ॥
विना युद्धेन भीतो मां कृपया वा प्रदास्यति । अमूल्यरत्ननिर्माणं क्वणन्मञ्जीरयुग्मकम् ॥
दास्याम्यद्यैव पार्वत्या भिक्षां कृत्वा महेश्वरम् । आशुतोषं स्तुतिवशं भक्तेशं च कृपामयम् ॥
सर्वसंपत्तिदातारं परं कल्पतरुं शुभे । अमूल्यरत्ननिर्माणकेयूरयुगुलं प्रिये ॥ ४४ ॥
दास्यामि तेऽद्य गङ्गाया युद्धं कृत्वा सुदुर्लभम् । बङ्गुलीयुगुलं चारु सूर्यपत्न्या मनोहरम्
सद्रत्नसारनिर्माणं दास्याम्यद्य सुशोभने । अमूल्यरत्ननिर्माणं दर्पणं चातिनिर्मलम् ॥
दास्यामि ते कामपत्न्याः कामं जित्वा च लीलया । क्रीडाकमलमम्लानं कमलायाश्च सुन्दरि
भिक्षां कृत्वा च दास्यामि स्तुत्वा च कमलापतिम् । अङ्गुलीयकरत्नानि विश्वेषु दुर्लभानि च
सावित्र्याश्च प्रदास्यामि कृत्वा च ब्रह्मणस्तपः । स्वयं गीतं प्रगायन्तीं मूर्छनाश्रुतिसंयुताम् ॥
वाणीवीणां प्रदास्यामि कृत्वा नारायणव्रतम् । रत्नपाशकसंघं च विश्वकर्मविनिर्मितम् ॥
कुबेरपत्न्या दास्यामि पादाङ्गुलिविभूषणम् । इत्येवमुक्त्वा नहुषः पपात तत्पदाम्बुजे ॥
उवाच तं शची त्रस्ता राजमार्गगतं नृपम् । उत्थाप्य तं करे धृत्वा शुष्ककण्ठोष्ठतालुका ॥
स्मारं स्मारं पदाम्भोजं महासाध्वी हरेर्गुरोः ॥ ५२ ॥

शच्युवाच—

शृणु वत्स महाराज हे तात भयभञ्जन ॥ ५३ ॥
मद्भ्राता च राजा च सर्वेषां पालकः पिता । अष्टश्रीश्च महेन्द्रोऽथ त्वं च स्वर्गे नृपोऽधुना

१ क. 'दुर्बल'। २ क. स्वप्राणानां च दा°।

यो राजा स पिता पाता प्रजानामेव निश्चितम् । गुरुपत्नी राजपत्नी देवपत्नी तथा वधूः
पित्रोः स्वसा शिष्यपत्नी भृत्यपत्नी च मातुली । पितृपत्नी भ्रातृपत्नी श्वश्रूश्च भगिनी सुता
गर्भधात्रीष्टदेवी च पुंसः षोडश मातरः । त्वं नरो देवभार्याऽहं माता ते देवसंमता ॥
गच्छ वत्साऽदितिं रन्तुं यदि चेच्छसि मातरम् । सर्वेषां निष्कृतिश्चास्ति न वत्स मातृगामिनाम्
कुम्भीपाके ते पचन्ति यावद्वै ब्रह्मणो वयः । ततो भवन्ति कृमयः कल्पाः सप्त भवन्ति ते
ततश्च कुष्ठिनो म्लेच्छा भवन्ति सप्तजन्मसु । नास्त्येव निष्कृतिस्तेषामित्याह कमलोद्भवः॥
एवं विट्क्षत्रशूद्राणां ब्राह्मणीगमने नृप । वेदेषु निष्कृतिर्नास्ति चेत्याङ्गिरसभाषितम् ॥
स्वर्गसंपत्तिभोगश्च सुखं संसारिणां ध्रुवम् । मुमुक्षूणां च मोक्षश्च तपश्चैव तपस्विनाम् ॥
ब्राह्मणानां च ब्राह्मण्यं मुनीनां मौनमेव च । वेदाभ्यासो वैदिकानां कवीनां काव्यवर्णनम्
विष्णुदास्यं वैष्णवानां विष्णुभक्तिरसं परम् । विष्णुभक्तिं विना नैव मुक्तिं वाञ्छन्ति वैष्णवाः
मलाढ्येषु च क्लेदेषु दुर्गन्धिनिलयेषु च । साधूनां किं सुखं साधो स्त्रीणां योनिषु मां वद
कुलप्रदीप राजेन्द्र राज्ञां मण्डलवर्तिनाम् । लब्धं च भारते जन्म पुण्येन बहुजन्मनाम्॥
पद्मानां चन्द्रवंश्यानां नृपाणां दीप्तिहेतवे । त्वमाविरासीत्तेजस्वी ग्रीष्ममध्याह्नभास्करः ॥
सर्वेषामाश्रमाणां च स्वधर्मश्च यशः परम् । स्वधर्महीना नरके पतन्ति मूढचेतसः ॥६८॥
ब्राह्मणस्य स्वधर्मश्च त्रिसंध्यमर्चनं हरेः । तत्पादोदकनैवेद्यभक्षणं च सुधाधिकम् ॥६९॥
अन्नं विष्ठा जलं मूत्रमनिवेद्य हरेर्नृप । भवन्ति सूकराः सर्वे ब्राह्मणा यदि भुञ्जते ॥
आजीवं भुञ्जते विप्रा एकादश्यां न भुञ्जते । कृष्णजन्मदिने चैव शिवरात्रौ सुनिश्चितम्
तथा रामनवम्यां च यत्नतः पुण्यवासरे । ब्राह्मणानां स्वधर्मश्च कथितो ब्रह्मणा नृप ॥
व्रतं पतिव्रतानां च पतिसेवा परं तपः । यथा पुत्रः परपतिरेष धर्मश्च योषिताम् ॥७३॥
पालयन्ति यथा भूपाः प्रजाः पुत्रानिवौरसान् । प्रजाश्चित्रं च पश्यन्ति राजानो मातरं यथा
यज्ञं कुर्वन्ति विष्णोश्च सेवनं देवविप्रयोः । निवारणं च दुष्टानां शिष्टानां प्रतिपालनम्
इति धर्मः क्षत्रियाणां कथितो ब्रह्मणा पुरा । वाणिज्यं चैव वैश्यानां स्वधर्मो धर्मसंचयः
शूद्राणां विप्रसेवा च परो धर्मो विधीयते । सर्वन्यासो हरौ भूप धर्मः संन्यासिनां ध्रुवम्
रक्तैकवासा दण्डी च बिभर्ति मृत्कमण्डलुम् । सर्वत्र समदर्शी च स्मरेन्नारायणं सदा॥
करोति भ्रमणं नित्यं गेहे गेहे न तिष्ठति । विद्यामन्त्रं च कस्मैचिन्न ददाति च लोभतः ॥
करोति नाऽऽश्रमं भिक्षुः करोति नान्यवासनाम् । करोति नान्यसङ्गं च निर्मोहः सङ्गवर्जितः
न स्वादु भुङ्क्ते लोभाच्च स्त्रीमुखं न हि पश्यति । न वाञ्छितं भक्ष्यवस्तु याचते गृहिणं मनी
इति संन्यासिनां धर्म इत्याह धर्मदेवराः । इति ते कथितं पुत्र गच्छ वत्स यथासुखम् ॥

इत्युक्त्वा च महेन्द्राणी विरराम च वर्णिनि । उवाच नहुषो राजा शची वक्त्रकंधरः ॥

नहुष उवाच—

त्वया प्रकथितं देवि सर्वं तत्तु विपर्ययम् । यथार्थमर्थं वेदोक्तं निबोध कथयामि ते ॥
कर्मणां फलभोक्ता सर्वेषां सुरसुन्दरि । नैव स्वर्गे न पाताले नान्यद्वीपे श्रुतौ श्रुतम् ॥
कृत्वा शुभाशुभं कर्म पुण्यक्षेत्रे च भारते । अन्यत्र तत्फलं भुङ्क्ते कर्मी कर्मनिबन्धनात् ॥
हिमालयात्समुद्रं पुण्यक्षेत्रं च भारतम् । श्रेष्ठं सर्वस्थलानां च मुनीनां च तपःस्थलम् ॥
तत्र लब्ध्वा जन्म जीवी वञ्चितो विष्णुमायया । शश्वत्करोति विषयं विहाय सेवनं हरेः ॥
कृत्वा तत्र महत्पुण्यं स्वर्गं गच्छति पुण्यवान् । गृहीत्वा सर्वकन्याश्च चिरं स्वर्गे प्रमोदते ॥
स्वर्गमागच्छति नरो विहाय मानवीं तनुम् । स्वशरीरेणाऽऽगतोऽहं मत्पुण्यं पश्य सुन्दरि ।
अनेकजन्मपुण्येन चाऽऽगतः स्वर्गमीप्सितम् । ततः किं केन पुण्येन दर्शनं मे त्वया सह ॥
न हि कर्मस्थलमिदं स्वर्भोगस्थलमेव च । सारं च सर्वभोगानां वरस्त्रीभोगमेव च ॥ ९२ ॥
भोगस्थले भोगवस्तु न हि त्यक्तुं प्रशस्यते । भावानुरक्ता रसिका भोग्या त्वं भोगिनामिह ।
द्रव्यमस्वामिकं भोग्यं सुखं त्यजति मन्दधीः । अविरोधसुखत्यागी पशुरेव न संशयः ॥
गच्छ कान्ते गृहं गत्वा कुरु तल्पं मनोहरम् । रमणीयं च रहसि वरं रतिकरं परम् ॥
त्यज द्वैधं च मनसो निश्चितं वरवर्णिनि । वरानने मया सार्धं मोदस्व वरमन्दिरे ॥
अमूल्यरत्नमालां च मणिराजविराजिताम् । भिक्षां कृत्वा च दास्यामि लक्ष्मीवक्षसि शोभि-
ताम् ॥ ९६ ॥
मणिं चानन्तशिरसः सर्वेषामतिदुर्लभम् । दुष्प्राप्यं त्रिषु लोकेषु तुभ्यं दास्यामि सुन्दरि ॥
मणिरत्नं कौस्तुभं च यो नारायणवक्षसि । भिक्षां कृत्वा तु दास्यामि कृत्वा नारायणव्रतम् ॥
चन्द्रशेखरमौलेश्च यदर्धं चन्द्रभूषणम् । जरामृत्युव्याधिहरं शक्रं क्रीडाकरं वरम् ॥ ९९ ॥
अतीव विश्वदुष्प्राप्यं विश्ववन्द्यं च सुन्दरम् । विश्वनाथव्रतं कृत्वा तुभ्यं दास्यामि निश्चितम् ॥
दास्यामि ते श्रीसूर्यस्य मणिश्रेष्ठं स्यमन्तकम् । भक्त्या सूर्यव्रतं कृत्वा त्रिषु लोकेषु दुर्लभम् ॥
अष्टौ भारान्सुवर्णं च यश्च नित्यं प्रसूयते । जरामृत्युहरं चैव परं क्रीडाकरं प्रिये ॥ १०२ ॥
अमूल्यरत्ननिर्माणं पात्ररत्नं मनोहरम् । संततं मधुपूर्णं च दास्यामि मदनस्य च ॥ १०३ ॥
अमूल्यरत्ननिर्माणं सूर्यतुल्यं च तेजसा । नानाचित्रविचित्राढ्यं निर्माणमीश्वरेच्छया ॥
निर्मलं मण्डलाकारं मणिराजविराजितम् । हस्तलक्षपरिमितं चतुरस्रं च सुन्दरि ॥ १०५ ॥
पद्मापद्मासने श्रेष्ठं श्रेष्ठं तस्याः सुदुर्लभम् । ध्रुवं तुभ्यं प्रदास्यामि कृत्वा पद्मालयाव्रतम् ॥

---

१ क. शस्तं । २ क. °दरम् ।

इत्येवमुक्त्वा नहुषः कृत्वा वर्त्मनिरोधनम् । पुनः पपात चरणे महेन्द्राण्या मुहुर्मुहुः ॥
नृपस्य वचनं श्रुत्वा शुष्ककण्ठोष्ठतालुका । तमुवाच महेन्द्राणी स्मारं स्मारं गुरुं हरिम् ॥

शच्युवाच—

अचेतनस्य मूढस्य कार्याकार्यमजानतः । श्रोष्याम्यद्य कातिविधा कथा कामातुरस्य च ॥
मधुमत्तः सुरामत्तः काममत्तो विचेतनः । मृत्युं न गणयेत्कामी कामेन हृतमानसः ॥
त्यज मामद्य हे मत्त मातृतुल्यां रजस्वलाम् । ऋतौ प्रथमो दिवसो ह्यद्य हे नृप मे ध्रुवम् ॥
प्रथमे दिवसे स्त्री च चाण्डाली सा रजस्वला । द्वितीये दिवसे म्लेच्छा तृतीये रजकी तथा ॥
शुद्धा भर्तुश्चतुर्थेऽहनि न शुद्धा दैवपैत्र्ययोः । असच्छूद्रासमा सा च तद्दिने च परं प्रति
प्रथमे दिवसे कान्तां यो हि गच्छेद्रजस्वलाम् । ब्रह्महत्याचतुर्थांशं लभते नात्र संशयः ॥
स पुमान्न हि कर्मार्हो दैवे पित्र्ये च कर्मणि । अधमः स च सर्वेषां निन्दितश्चायशस्करः
द्वितीये दिवसे नारीं यो व्रजेच्च रजस्वलाम् । कामतः परिपूर्णां च गोहत्यां लभते ध्रुवम् ॥
आजीवनं नाधिकारी पितृविप्रसुरार्चने । अमनुष्योऽयशस्यः स्यादित्याङ्गिरसभाषितम् ॥
तृतीये दिवसे जायां यो हि गच्छेद्रजस्वलाम् । स मूढो भ्रूणहत्यां च लभते नात्र संशयः
पूर्ववत्पतितः सोऽपि न चार्हः सर्वकर्मसु । असच्छूद्रां चतुर्थेऽहनि न गच्छेत्तां विचक्षणः
यदि मां मातरं मूढ ग्रहीष्यसि बलेन च ॥ १२० ॥
ऋतावती तां दिवसे गमनं च करिष्यसि । शच्याश्च वचनं श्रुत्वा प्रहस्य नहुषस्तदा ॥
उवाच मधुरं शान्तः शक्रकान्तां च सुव्रताम् । देवपत्नी सदा शुद्धा तन्न्यूनं मानवं प्रति ॥
शयने भोजने देवी नाशुद्धा मानवं प्रति । रजस्वलायाः संभोगे कर्मक्षेत्रे च भारते ॥
त्वयोक्तं च भवेत्पापं नात्र दु(स्व)र्गे च सुन्दरि । कर्मक्षेत्रेऽपि तत्कर्म यद्वेदोक्तं शुभाशुभम् ॥
न भेद्रूपचाम्भ च उष्णा अस्तोवस्ता । यथा प्रदीप्ते वह्नौ च शुष्काणि च तृणानि च
भवन्ति भस्मीभूतानि तथा पापानि वैष्णवे । वह्निसूर्यब्राह्मणेभ्यस्तेजीयान्वैष्णवः सदा ॥
रक्षितो विष्णुचक्रेण स्वतन्त्रो मत्तकुंजरः । न विचारो न भोगश्च वैष्णवानां स्वकर्मणाम्
लिखितं सन्ति कौथुम्यां कुरु प्रश्नं बृहस्पतिम् । अस्माश्च सर्वे जानन्ति चन्द्रवंशपांश्च वैष्णवान् ॥ ९८ ॥
देवमन्यं न सेवन्ते चन्द्रवंशया हरिं विना । सद्वंशप्रभवो यो हि ब्राह्मणः क्षत्रियोऽथवा ॥
विष्णुमन्त्रं न गृह्णाति वञ्चितो देवमायया । को वा मन्त्रश्च के देवा न हि शास्त्रा दमो मम ॥ १३० ॥

---

१ क. °प्रयो° । २ ख. पुष्प । ३ क. विष्णुना° ।

सर्वोत्कृष्टाऽहं समर्थोऽहं ब्रह्मविष्णुशिवान्विना । शच्यो कुरु गृहं गत्वा शीघ्रं यास्यामि ते गृहम् ॥ ११ ॥
ऋतुपापं मयि भवेत्तव किं गच्छ शोभने । इत्युक्त्वा नहुषो राजा प्रफुल्लवदनेक्षणः ॥
रत्नयानं समारुह्य ययौ नन्दनकाननम् । न ययौ सा शची गेहं प्रजगाम गुरोर्गृहम् ॥
गत्वा कुशासनस्थं च ददर्श च बृहस्पतिम् । तारासेवितपादाब्जं ज्वलन्तं ब्रह्मतेजसा ॥
जपमालाकरं शश्वज्जपन्तं कृष्णमीप्सितम् । परमं परमानन्दं परमात्मानमीश्वरम् ॥
निर्गुणं च निरीहं च स्वतन्त्रं प्रकृतेः परम् । स्वेच्छामयं परं ब्रह्म भक्तानुग्रहविग्रहम् ॥
तमानन्दाश्रुनेत्रं च ननाम शिरसा भुवि । रुदती साश्रुनेत्रा सा मज्जन्ती भक्तिसागरे ॥
शोकार्णवे निमज्जन्ती हृदयेन विदूयता । तुष्टाव भीता स्वगुरुं वरिष्ठं च कृपानिधिम् ॥

शच्युवाच—

रक्ष रक्ष महाभाग मां भीतां शरणागताम् । त्वमीश्वरः स्वदासीं च निमग्नां शोकसागरे ॥
अनीश्वरश्चेश्वरो वा बलवान्वा सुदुर्बलः । स्वशिष्यभार्यां पुत्रांश्च शासितुं च सदा क्षमः ॥
दूरीभूतः स्वराज्याच्च स्वशिष्यश्च कृतस्त्वया । शान्तिर्बभूव दोषस्य चाधुनाऽनुग्रहं कुरु ॥
अनाथा सर्वशून्या मां शून्याताममरावतीम् । संपच्छून्यमाश्रमं मे पश्य रक्ष कृपानिधे ॥
दस्युग्रस्ता च मां रक्ष देशं किंकरमानय । दत्त्वा चरणरेणुं तं शुभाशीर्वचनं कुरु ॥४३॥
सर्वेषां च गुरूणां च जन्मदाता परो गुरुः । पितुः शतगुणा माता पूज्या वन्द्या गरीयसी ॥
विद्यादाता मन्त्रदाता ज्ञानदो हरिभक्तिदः । पूज्यो वन्द्यश्च सेव्यश्च मातुः शतगुणो गुरुः ॥
मन्त्राद्युद्गिरणेनैव गुरुरित्युच्यते बुधैः । अन्यो वन्द्यो गुरुस्त्वमन्यश्चारोपितो गुरुः ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥
अदीक्षितस्य मूर्खस्य निष्कृतिर्नास्ति निश्चितम् । सर्वकर्मस्वनर्हस्य नरके तत्पशोः स्थितिः ॥
जन्मदाताऽन्नदाता च माताऽन्ये गुरवस्तथा । पारं कर्तुं न शक्तास्ते घोरसंसारसागरे ॥
विद्यामन्त्रज्ञानदाता निपुणः पारकर्मणि । स शक्तः शिष्यमुद्धर्तुमीश्वरश्चेश्वरात्परः ॥
गुरुर्विष्णुर्गुरुर्ब्रह्मा गुरुर्देवो महेश्वरः । गुरुर्धर्मो गुरुः शेषः सर्वात्मा निर्गुणो गुरुः ॥
सर्वतीर्थाश्रयश्चैव सर्वदेवाश्रयो गुरुः । सर्ववेदस्वरूपश्च गुरुरूपी हरिः स्वयम् ॥ ५२ ॥
अभीष्टदेवे रुष्टे च गुरुः शक्तो हि रक्षितुम् । गुरौ रुष्टेऽभीष्टदेवो न हि शक्तश्च रक्षितुम् ॥
सर्वे ग्रहाश्च यं रुष्टा यं रुष्टा देवब्राह्मणाः । स्वमेव रुष्टो भवति गुरुरेव हि देवताः ॥
न गुरोश्च प्रियश्चाऽऽत्मा न गुरोश्च प्रियः सुतः । धनं प्रियं च न गुरोर्न च भार्या प्रिया तथा ॥

---

१ क. स्वदीक्षरस्य दां ।

न गुरोश्च प्रियो धर्मो न गुरोश्च प्रियं तपः । न गुरोश्च प्रियं सत्यं न पुण्यं च गुरोः परम् ॥
गुरोः परो न शास्ता च न हि बन्धुर्गुरोः परः । देवो राजा च शास्ता च शिष्याणां च सदा गुरुः ॥ ५७ ॥
यावच्छक्तो दातुमन्नं तावच्छास्ता तदन्नदः । गुरुः शास्ता च शिष्याणां प्रतिजन्मनि जन्मनि
मन्त्रो विद्या गुरुर्देवः पूर्वलब्धो यथा पतिः । प्रतिजन्मनि बन्धेन सर्वेषामुपरि स्थितः ॥
पिता गुरुश्च वन्द्यश्च यत्र जन्मनि जन्मदः । गुरवोऽन्ये तथा माता गुरुश्च प्रतिजन्मनि ॥
विप्राणां त्वं वरिष्ठश्च गरिष्ठश्च तपस्विनाम् । ब्रह्मिष्ठो ब्रह्मविद्ब्रह्मन् धर्मिष्ठः सर्वधर्मिणाम् ॥
तुष्टो भव मुनिश्रेष्ठ मां च शक्रं च सांप्रतम् । त्वयि तुष्टे सदा तुष्टा भवन्ति ग्रहदेवताः ॥
इत्युक्त्वा सा शची ब्रह्मन्पुनरुच्चै रुरोद ह । दृष्ट्वा तद्रोदनं तारा रुरोदोच्चैर्मुहुर्मुहुः ॥ ६१ ॥
पपात चरणे तारा रुरोद च पुनः पुनः । अपराधं क्षमेत्युक्त्वा गुरुस्तुष्टोऽप्युवाच ताम्

गुरुरुवाच—

उत्तिष्ठ तारे शचशश्च सर्वं भद्रं भविष्यति । सद्यः प्राप्स्यति भर्तारं महेन्द्रं च मदाशिषा
इत्युक्त्वा स गुरुस्तत्र विरराम च नारद । पपात चरणे तारा पुनरेव रुरोद च ॥
गृहीत्वा च शचीं तारा संस्थाप्य च स्ववक्षसि । बोधयामास विविधमाध्यात्मिकमनुत्तमम्
शचीकृतं गुरुस्तोत्रं पूजाकाले च यः पठेत् । गुरुश्चाभीष्टदेवश्च संतुष्टः प्रतिजन्मनि ॥
ग्रहदेवद्विजास्तं च परितुष्टाश्च संततम् । राजानो बान्धवाश्चैव संतुष्टाः सर्वतः सदा ॥
गुरुभक्तिं विष्णुभक्तिं वाञ्छितं लभते ध्रुवम् । सदा हर्षो भवेत्तस्य न च शोकः कदाचन ॥
पुत्रार्थी लभते पुत्रं भार्यार्थी लभते प्रियाम् । सुस्वरूपां गुणवतीं सतीं पुत्रवतीं ध्रुवम्
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् । अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः
कदाचिद्बन्धुविच्छेदो न भवेत्तस्य निश्चितम् । नित्यं तद्वर्धते धर्मो विपुलं निर्मलं यशः ॥
लभते परमैश्वर्यं पुत्रपौत्रधनान्वितम् । इह सर्वसुखं भुक्त्वा प्राप्यते श्रीहरेः पदम् ॥
न भवेत्तत्पुनर्जन्म हरिदास्यं लभेद्ध्रुवम् । विष्णुभक्तिरसाब्धौ च निमग्नश्च भवेद्ध्रुवम्
शश्वत्पिबति शान्तिश्च विष्णुभक्तिरसामृतम् । जन्ममृत्युजराव्याधिशोकसंतापनाशनम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० महेन्द्रदर्पभङ्गप्रकरणे शचीशोकापनोदने शचीकृतगुरुस्तोत्रकथनं नामैकोनषष्टितमोऽध्यायः ॥५९॥

===

अथ पष्टितमोऽध्यायः ।

नारायण उवाच—

शचीस्तोत्रं समाकर्ण्य परितुष्टो बृहस्पतिः । उवाच मधुरं शान्तः कान्तामिन्द्रस्य नारद

बृहस्पतिरुवाच—

त्यज वत्से भयं सर्वं भयं किं ते मयि स्थिते । यथा कचस्य पत्नी मे तथा त्वमपि शोभने
यथा पुत्रस्तथा शिष्यो न भेदः पुत्रशिष्ययोः । तर्पणे पितृदाने च पालने परितोषणे ॥
यथाऽग्निदाता पुत्रश्च तथा शिष्यश्च निश्चितम् । इतीदं कण्वशाखायामुवाच कमलोद्भवः ॥
पिता माता गुरुर्भार्या शिशुश्चानाथबान्धवाः । एते पुंसा नित्यपोष्या इत्याह कमलोद्भवः
यश्चैतांश्च न पुष्णाति यस्मान्तं तस्य सूतकम् । दैवे पित्र्ये न कर्मार्हः सोऽपीत्याह महेश्वरः
कुरुते नरबुद्धिं च मातरं पितरं गुरुम् । अयशस्तस्य सर्वत्र विघ्न एव पदे पदे ॥
संपन्मत्तो यः करोति स्वगुरोश्च पराभवम् । अचिरात्सर्वनाशश्च भवेत्तस्य सुनिश्चितम्॥
मां च दृष्ट्वा सभामध्ये नोत्तस्थौ पाकशासनः । तत्फलं भुज्यते साक्षात्त्वया पश्य च साप्रतम्
अहं करोमि मोक्षं च तव रक्षा सुनिश्चितम् । शास्तितु रक्षितुं शक्तः स एव गुरुरुच्यते ॥
न पश्यति सतीत्वं च हृच्छुद्धायाश्च योषितः । यन्मानसे विकल्पश्च तस्य धर्मश्च नश्यति
भविष्यति प्रभावस्ते दुर्गायाश्च समः सति । लक्ष्मीसमा प्रतिष्ठा च यशस्तद्यशसा समम्॥
सौभाग्यं राधिकातुल्यं तत्समं प्रेमभर्तरि । तत्तुल्यं गौरवं मान्यं प्रीतिः प्राधान्यमीश्वरे
रोहिण्याश्च समापेक्षा पूज्या च भारतीसमा । शुद्धा निरुपमा शश्वत्सावित्रीसदृशी सदा
एतस्मिन्नन्तरे तत्र आगतो नहुषाचरः । उवाच वचनं भीतो वाक्पतेर्गोचरे ततः ॥१९॥

दूत उवाच—

उत्तिष्ठ देवि शीघ्रं त्वं गच्छस्व नहुषं प्रति । क्रीडां कर्तुं च रहसि रम्ये नन्दनकानने ॥
दूतस्य वचनं श्रुत्वा तमुवाच बृहस्पतिः । कम्पितावयवः कोपाद्रक्तपङ्कजलोचनः ॥

गुरुरुवाच—

नहुषं वद गत्वा त्वं शचीं भेक्तुमिच्छसि । अपूर्वं यानमारुह्य निशायामागमिष्यसि
सप्तर्षीणां च स्कन्धे च दत्त्वा स्वशिबिकां शुभाम् । तामारुह्य सुवेषश्च गमनं कर्तुमर्हसि
वाक्पतेर्वचनं श्रुत्वा गत्वोवाच नृपं तदा । दूतस्य वचनं श्रुत्वा प्रहस्योवाच किंकरम् ॥
गच्छ गच्छ त्वरन् गच्छ सप्तर्षीन्शीघ्रमानय । उपायं च करिष्यामि ते. सार्धं साप्रतं चर
नृपस्य वचनं श्रुत्वा गत्वा दूतस्तदन्तिकम् । उवाच सर्वांस्तत्रैव यथोक्तं नहुषेण च ॥
दूतस्य वचनं श्रुत्वा ययुः सप्तर्षयो मुदा । राजा दृष्ट्वा च तान्सर्वानिनमोवाच सादरम्

१ ध. 'भिन्द्रा' । २ क. 'गुरुः' ।

नहुष उवाच—

यूयं च ब्रह्मणः पुत्रा ज्वलन्तो ब्रह्मतेजसा । ब्रह्मणः सदृशाः सर्वे सततं भक्तवत्सलाः ॥
नारायणपराः शश्वच्छुद्धसत्त्वस्वरूपिणः । मोहमात्सर्यहीनाश्च दर्पाहंकारवर्जिताः ॥
नारायणसमाः सर्वे तेजसा यशसा सदा । गुणेन कृपया प्रेम्णा वरदानेन निश्चितम् ॥
इत्युक्त्वा प्रणतो राजा तुष्टाव च रुरोद च । दृष्ट्वा ते कातरं भूपमूचुः परहितैषिणः ॥

ऋषय ऊचुः—

वरं वृणीष्व हे वत्स यत्ते मनसि वाञ्छितम् । सर्वं दातुं वयं शक्ता नासाध्यं नश्च किंचन
इन्द्रत्वं वा मनुत्वं वा चिरायुर्वा ततः परम् । सप्तद्वीपेश्वरत्वं चाप्यतीव सुचिरं सुखम् ॥
अथापि सर्वसिद्धित्वं सर्वैश्वर्यं सुदुर्लभम् । मुक्तिं वा हरिभक्तिं वा तपसा या सुदुर्लभा ॥
किमीप्सितं ते हे वत्स ब्रूहि नः सांप्रतं मुदा । सर्वं तुभ्यं प्रदायैव यास्यामस्तपसे मुदा ॥
युगलक्षसमं यच्च क्षणं कृष्णार्चनं विना । तद्दिनं दुर्दिनं यत्तद्ध्यानसेवनवर्जितम् ॥३२॥
विना तत्सेवनं यो हि विषयान्यं च वाञ्छति । विषमत्ति प्रणाशाय विहायामृतमीप्सितम्
ब्रह्मा शिवश्च धर्मश्च विष्णुश्चापि महान्विराट् । गणेशश्च दिनेशश्च शेषश्च सनकादयः ॥
एते यच्चरणाम्भोजं ध्यायन्तेऽहर्निशं मुदा । जन्ममृत्युजराव्याधिहरं तन्निरता वयम् ॥
तेषां च वचनं श्रुत्वा तानुवाच नृपेश्वरः । स लज्जितो नम्रवक्त्रो मायामोहितमानसः ॥

नहुष उवाच—

सर्वं दातुं समर्थाश्च यूयं च भक्तवत्सलाः । अधुना देहि (दत्त) मे तूर्णं शचीदानमभीप्सितम् ॥
सप्तर्षिवाहनं कान्तं शचीच्छति महासती । एतदेव मम वरं निष्पन्नं कुरुताचिरम् ॥३८॥
नहुषस्य वचः श्रुत्वा मुनयश्च परस्परम् । अत्युच्चैर्जहसुः सर्वे कौतुकेन च नारद ॥३९॥
राजानं मोहितं मत्वा वेष्टितं विष्णुमायया । चक्रुः प्रतिज्ञां तं वोढुं कृपया दीनवत्सलाः ॥
चक्रुः स्कन्धे तच्छिबिकां मुक्तामाणिक्यभूषिताम् । राजा ययौ सुवेषश्च रत्नभूषणभूषितः
दृष्ट्वा चातिविलम्बं च भर्त्सयामास तान्नृपः । क्रुधा शशाप दुर्वासाश्चाग्रगामी च वर्त्मनि
महानजगरो भूत्वा पत वै मूढमानस । दर्शनाद्धर्मपुत्रस्य तव मोक्षो भविष्यति ॥ ४२ ॥
रत्नयानेन वैकुण्ठं गत्वा वैकुण्ठसेवनम् । करिष्यसि महाराज न कर्म निष्फलं भवेत् ॥
इत्युक्त्वा प्रययुः सर्वे प्रहस्य मुनिसत्तमाः । राजा पपात तच्छापात्सर्पो भूत्वा महामुने ॥
शची जगाम तच्छ्रुत्वा गुरुं नत्वाऽमरावतीम् । ययौ बृहस्पतिः शीघ्रं धर्मेन्द्रः पद्मतन्तुषु
गत्वा सरोवराम्भःस्थमाजुहाव सुरेश्वरम् । अतिप्रसन्नवदनः कृपया च कृपानिधिः ॥४७॥

बृहस्पतिरुवाच—
अयि वत्स त्वमागच्छ भयं किं ते मयि स्थिते । त्यज भीतिमिहागच्छ गुरुस्तेऽहं बृहस्पतिः
स्वगुरोश्च स्वरं श्रुत्वा महेन्द्रो हृष्टमानसः । रूपं विहाय सूक्ष्मं च स्वरूपेण समाययौ ॥
पपात दण्डवद्भूमौ भक्त्या चरणयोर्गुरोः । तं रुदन्तं महाभीतं गुरोरसि चकार सः ॥
कारयित्वा सोमयागं प्रायश्चित्तार्थमेव च । रत्नसिंहासने रम्ये वासयामास तं गुरुः ॥
प्रददौ परमैश्वर्यं पूर्वस्माच्च चतुर्गुणम् । आगत्य सर्वदेवाश्च चक्रुः सेवां मुदाऽन्विताः ॥
शची संप्राप भर्तारं महेन्द्रं त्रिदशेश्वरम् । मन्दिरे पुष्पतल्पे च सुन्दरे सा मुदाऽन्विता ॥
इत्येवं कथितं वत्स महेन्द्रदर्पभञ्जनम् । शचीसतीत्वरक्षा च किं भूयः श्रोतुमिच्छसि ॥

नारद उवाच—
सोमयागविधानं च ब्रूहि मां मुनिसत्तम । कथं तं कारयामास गुरुश्च किं फलं परम् ॥

नारायण उवाच—
ब्रह्महत्याप्रशमनं सोमयागफलं मुने । वर्षं सोमलतापानं यजमानः करोति च ॥ ५६ ॥
वर्षमेकं फलं भुङ्क्ते वर्षमेकं जलं मुदा । त्रैवार्षिकं व्रतमिदं सर्वपापप्रणाशनम् ॥ ५७ ॥
यस्य त्रैवार्षिकं धान्यं निहितं भृत्यवृत्तये । अधिकं वाऽपि विद्येत स सोमं पातुमर्हति ॥
महाराजश्च देवो वा यागं कर्तुमलं मुने । न सर्वसाध्यो यज्ञोऽयं बह्वन्नो बहुदक्षिणः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० शक्रदर्पभङ्गप्रकरणे
शक्रमोक्षकथनं नाम षष्टितमोऽध्यायः ॥ ६० ॥

अथैकषष्टितमोऽध्यायः ।

नारायण उवाच—
इति ते कथितं किंचिदिन्द्रस्य दर्पभञ्जनम् । अपरं श्रूयतां ब्रह्मन्सावधानं निगूढकम् ॥
समुद्रमथनं कृत्वा पीत्वाऽमृतरसं पुरा । निर्जित्य दैत्यसंघांश्च बहुदर्पो बभूव ह ॥ २ ॥
तदा कृष्णो बलिद्वारा शक्रदर्पं बभञ्ज ह । भ्रष्टश्रियो बभूवुस्ते देवा इन्द्रपुरोगमाः ॥३॥
तदा बृहस्पतेः स्तोत्रादृदितेश्च मनेन ते । जातश्च स्वांशकलयाऽप्यदित्यां वामनो विभुः ॥
याच्ञां कृत्वा बलिराज्यं कृपया च कृपानिधिः । तस्मै ददौ महेन्द्राय देवेभ्यश्चापि संपदम्
बभूव शक्रदर्पश्च पुनः कल्पान्तरे पुरा । विभुर्दुर्वाससो द्वारा जहार तच्छ्रियं मुने ॥६॥
पुनर्ददौ च कृपया कृपालुर्भक्तवत्सलः । पुनः श्रीदुर्मदः सोऽपि जहार गौतमप्रियाम् ॥
तदा गौतमशापेन भगाङ्गश्च बभूव सः । संप्राप यातनामिन्द्रः स्वाङ्गवेदनया पुरा ॥८॥

१ क. गृतिद्द ।

उच्चैस्तं जहसुर्दृष्ट्वा ऋषयो मनवस्तदा । देवाश्च लज्जिताः सर्वे मृततुल्यो बृहस्पतिः
तदा सहस्रवर्षं च तपस्तप्त्वा रवेः पुरा । रवेर्वरेण शक्रः स सहस्राक्षो बभूव ह ॥
कलङ्करूपमिन्द्रस्य तच्चक्षुर्निकरं परम् । यथा चन्द्रे कलङ्कश्च तारकाहरणादभूत् ॥

नारद उवाच—

ब्रह्मन् केन प्रकारेण जहार गौतमप्रियाम् । महासतीमहल्यां च पूज्यां भुवनपावनीम्
शुद्धाशयां महाभागां निर्मलां कमलाकलाम् । एतद्वेदितुमिच्छामि वद वेदविदां वर ॥

नारायण उवाच—

पुष्करे तीर्थयात्रायां सूर्यपर्वणि नारद । तत्राऽऽगतामहल्यां च ददर्श पाकशासनः ॥
सुस्मितां सुदतीं शान्तां पीनश्रोणिपयोधराम् । मूर्छामवाप चेन्द्रश्च दृष्टिमात्रेण तत्क्षणात्
अथापरदिने तां च दृष्ट्वा मन्दाकिनीतटे । एकाकिनीं सुस्मितां च स्नातीं नग्नां सलज्जिताम्
दृष्ट्वा श्रोणिं स्तनयुगमतीव विपुलं हरिः । मूर्छामवाप कामार्तो जहार चेतनां पुनः ॥
क्षणेन चेतनां प्राप्य गत्वा कामी तदन्तिकम् । उवाच श्लक्ष्णया वाचा विनयेन पतिव्रताम्

महेन्द्र उवाच—

अहो गुणमहो रूपमहो किं वा नवं वयः । अहो किंवा मुखश्रीस्ते शरच्चन्द्रं विनिन्दती
अहो कटाक्षं कुटिलं पुंसां चित्तविकर्षणम् । किमहो लोचनं पद्मप्रभमोचनमीप्सितम् ॥
गमनं रमणीयं च गजखञ्जनभञ्जनम् । अहो वाक्यं सुमधुरं पीयूषादपि दुर्लभम् ॥२०॥
किमहो विपुलश्रोणी कामाधारा मनोहरा । कामदा कामुकार्थेन मुनिमानसमोहिनी ॥
अतीव कठिना पीना रम्भास्तम्भविडम्बिना । अहो नितम्बयुगुलं वर्तुलं चन्द्रबिम्बवत् ॥
श्रीयुक्तं श्रीफलयुगतुल्यं ते स्तनयुग्मकम् । अत्युन्नतं सुकठिनं त्रैलोक्यचित्तमोहनम् ॥
अहो किं वा तपस्तेपे गौतमश्च तपोधनः । संप्राप त्वत्फलेनैव सुदतीं सुन्दरीं वराम् ॥
निषेव्य प्रकृतिं दुर्गां विष्णुमायां सनातनीम् । लक्ष्मीं च लक्ष्मीसदृशीमीदृशीं प्राप पद्मिनीम्
सुकोमलां सुवदनां ललनां नलिनाननाम् । शुद्धां च सुदतीं श्यामां न्यग्रोधपरिमण्डलाम्
रसपालनं च जानामि कामशास्त्रविचक्षण । कामो वा कामुकश्चन्द्रः किं त्वां जानाति गौतमः
मां प्रशंसन्ति नित्यं ते कामशास्त्रविचक्षणाः । उर्वश्याद्याश्चाप्सरसो मां प्रशंसन्ति संततम्
दासीं कृत्वा च दास्यामि शचीं तुभ्यं वरानने । त्रैलोक्यदर्शीं विपुलां गृहाण त्यज गौतमम्
अनभिज्ञं कामशास्त्रे दुर्बलं च तपस्विनम् । अव्यवहार्यं निष्कामं नारायणपरायणम् ॥
अविदग्धो विधाता च योजयामास योऽक्षमम् । ईदृशीं कुमुदीं रम्यां ददाति च तपस्विने

---

१ ख. "दृशीं लपना प्राप प॰" ।

इत्युक्त्वा कामुकः शक्रः पपात चरणे मुदा । तमुवाच महासाध्वी वेदोक्तं च यथोचितम् ॥

अहल्योवाच—

अभाग्याद्ब्रह्मणश्चापि मरीचेश्च तपस्विनः । अभाग्यात्कश्यपस्यापि त्वं पुत्रः पापमानसः ॥
किं तज्ज्ञेन तपसा मौनेन च ध्यानेन च । सुरार्चनेन तीर्थेन स्त्रीभिर्यस्य मनो हृतम् ।
स्त्रीरूपं निर्मितं सृष्टौ मोहाय कामिनां मनः । अन्यथा न भवेत्सृष्टिः सृष्टा तेन पुराऽऽज्ञय
सर्वं मायाकरण्डश्च धर्ममार्गार्गलं नृणाम् । व्यवधानं च तपसां दोषाणामाश्रयं परम् ।
कर्मबन्धननिबद्धानां निगडं कठिनं स्मृतम् । प्रदीपरूपं कीटानां मीनानां बडिशं यथा ।
विषकुम्भं दुग्धमुखमारम्भे मधुरोपमम् । परिणामे दुःखबीजं सोपानं नरकस्य च ॥ ३९ ॥
ऋषयः सनकाद्याश्च नोद्वाहं चक्रुरीप्सितम् । परस्त्रीषु मनो येषां तेषां सर्वं च निष्फलम्
परस्त्रीसेवनं शक्र इहैवात्ययशस्करम् । परत्र नरकं घोरं ददाति कामुकाय च ॥ ४१ ॥
इत्युक्त्वा च महासाध्वी विहाय तं च कामुकम् । प्रययौ स्वगृहं तूर्णं गृहिणी गौतमस्य च
तत्सर्वं कथयामास गौतमाय तपस्विने । तस्थौ प्रहस्य स मुनिर्महेन्द्रं च विनिन्द्य वा ॥
एकदा गौतमः शीघ्रं जगाम शंकरालयम् । शक्रो गौतमरूपेण तां संभोगं चकार सः
सर्वं ज्ञात्वा च सर्वज्ञः[3] मन्दिरद्वारमाययौ । निर्गच्छन्तं महेन्द्रं च ददर्श मुनिपुंगवः ॥
नग्नामहल्यां रहसि पीनश्रोणिपयोधराम् । मुनिः शशाप शक्रं च भगाङ्गश्च भवेति च
कोपाच्छशाप पत्नीं च रुदतीं भयविह्वलाम् । त्वं च पाषाणरूपा च महारण्ये भवेति च
ययौ च स्वगृहं शक्रो लज्जैकतानमानसः । उवाच मधुरं भीता स्वामिनं शोककर्शिता ॥

अहल्योवाच—

मां च दासीं च निर्दोषां कथं त्यजसि धार्मिक । त्वं च वेदविदां श्रेष्ठो विचारं कुरु धर्मतः

गौतम उवाच—

त्वां जानामि मनःशुद्धां सुव्रतां च पतिव्रताम् । त्यक्ष्यामि च तथाऽपि त्वां परवीर्यं च बिभ्रतीम्
परभोग्या च या कान्ता साऽशुद्धा सर्वकर्मसु । तां यो गच्छेन्महामूढो नरकं तस्य कल्पकम्
अन्नं विष्ठा जलं मूत्रं परभोग्याश्च(या) निश्चितम् । उपस्पर्शेन तस्याश्च हन्ति पुण्यं पुराकृतम्
अनिच्छया च शृङ्गारे स्त्री जारेण न दुष्यति । दुष्टा स्त्री निश्चितं साध्वी स्वेच्छाशृङ्गारकर्मणि
त्वं शक्रं स्वामिनं मत्वा सुखं भुक्त्वा रतिं गृहे । पश्चाद्बभूव ते ज्ञानं मां दृष्ट्वा च निशामय
गच्छ गच्छ महारण्यं भव पाषाणरूपिणी । रामपादाब्जरजःस्पर्शात्सद्यः पूता भविष्यसि
मां संप्राप्स्यसि तत्पुण्यात्पुनरेवाऽऽगमिष्यसि । गच्छ कान्ते महारण्यमित्युक्त्वा तपसे ययौ

---

१ क. दृष्टा तेन पु° । २ ख. रन्ध्रं । ३ ग. °ज्ञः स्वयं मन्दिरमा° ।

इत्येवं कथितं सर्वं महेन्द्रदर्पभञ्जनम् । पुनः संप्राप लक्ष्मीं च विमोक्ष कृपया मुने ॥
इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना०
एकषष्टितमोऽध्यायः ॥ ६१ ॥

अथ द्विषष्टितमोऽध्यायः ।

नारद उवाच—

ब्रह्मन् केन प्रकारेण रामो दाशरथिः स्वयम् । चकार मोक्षणं कुत्र युगे गौतमयोषितः ॥
रामावतारं सुखदं समासेन मनोहरम् । कथयस्व महाभाग श्रोतुं कौतूहलं मम ॥२॥

नारायण उवाच—

ब्रह्मणा प्रार्थितो विष्णुर्जातो दशरथात्स्वयम् । कौसल्यायां च भगवांस्त्रेतायां च मुदाऽन्वितः
कैकेय्यां भरतश्चैव रामतुल्यो गुणेन च । लक्ष्मणश्चापि शत्रुघ्नः सुमित्रायां गुणार्णवः ॥
विश्वामित्रप्रेषितश्च श्रीरामश्च सलक्ष्मणः । प्रययौ मिथिलां रम्यां सीताग्रहणहेतवे ॥५॥
दृष्ट्वा पाषाणरूपां च रामो वर्त्मनि कामिनीम् । विश्वामित्रं च पप्रच्छ कारणं जगदीश्वरः
रामस्य वचनं श्रुत्वा विश्वामित्रो महातपाः । उवाच तत्र धर्मिष्ठो रहस्यं सर्वमेव च ॥७॥
कारणं तन्मुखाच्छ्रुत्वा रामो भुवनपावनः । पस्पर्श पादाङ्गुलिना सा बभूव च पद्मिनी ॥
सा राममाशिषं कृत्वा प्रययौ भर्तृमन्दिरम् । शुभाशिषं ददौ तस्मै भार्यां संप्राप्य गौतमः
रामश्च मिथिलां गत्वा धनुर्भङ्गं शिवस्य च । चकार पाणिग्रहणं सीतायाश्चैव नारद ॥
कृत्वा विवाहं रामेन्द्रो भृगुदर्पं निहत्य च । अयोध्यां प्रययौ रम्यां क्रीडाकौतुकमङ्गले ॥
राजा पुत्रं नृपं कर्तुमियेष क्रमसादरम् । सप्ततीर्थोदकं तूर्णमानीय मुनिपुंगवान् ॥१२॥
कृताधिवासं श्रीरामं सर्वं मङ्गलसंयुतम् । दृष्ट्वा भरतमाता च कैकेयी शोकविह्वला ॥
वरयामास राजानं पूर्वमङ्गीकृतं वरम् । रामस्य वनवासं च राजत्वं भरतस्य च ॥१४॥
वरं दातुं महाराजो नेयेष प्रेममोहितः । धर्मसत्यभयेनैवोवाच रामो नृपं सुधीः ॥१५॥

श्रीराम उवाच—

तडागशतदानेन यत्पुण्यं लभते नरः । ततोऽधिकं च लभते वापीदानेन निश्चितम् ॥
दशवापीप्रदानेन यत्पुण्यं लभते नरः । ततोऽधिकं च लभते पुण्यं कन्याप्रदानतः ॥१७॥
दशकन्याप्रदानेन यत्पुण्यं लभते नरः । ततोऽधिकं च लभते यज्ञेनैकेन नराधिप ॥१८॥
दानयज्ञेन यत्पुण्यं लभते पुण्यकृज्जनः । ततोऽधिकं च लभते पुत्रास्यदर्शनेन च ॥१९॥

१ क. पुरे । २ क. दाशरथिर्दि ।

दर्शने शतपुत्राणां यत्पुण्यं लभते नरः । तत्पुण्यं लभते नूनं पुण्यवान्सत्यपालनात् ॥२०॥
न हि सत्यात्परो धर्मो नानृतात्पातकं परम् । न हि गङ्गासमं तीर्थं न देवः केशवात्परः ॥
नास्ति धर्मात्परो बन्धुर्नास्ति धर्मात्परं धनम् । धर्मात्प्रियः परः को वा स्वधर्मं रक्ष यत्नतः ॥
स्वधर्मे रक्षिते तात शश्वत्सर्वत्र मङ्गलम् । यशस्यं सुप्रतिष्ठा च प्रतापः पूजनं परम् ॥
चतुर्दशाब्दं धर्मेण त्यक्त्वा गृहसुखं भ्रमन् । वनवासं करिष्यामि सत्यस्य पालनाय ते ॥
कृत्वा सत्यं च शपथमिच्छयाऽनिच्छयाऽथवा । न कुर्यात्पालनं यो हि भस्मान्तं तस्य सूतकम्
कुम्भीपाके स पचति यावच्चन्द्रदिवाकरौ । ततो मूको भवेत्कुष्ठी मानवः सप्तजन्मसु ॥
इत्येवमुक्त्वा श्रीरामो विधाय वल्कलजटाम् । प्रययौ च महारण्ये सीतया लक्ष्मणेन च ॥
पुत्रशोकान्महाराजस्तत्याज स्वतनुं मुने । पालनाय पितुः सत्यं रामो बभ्राम कानने ॥
कालान्तरे महारण्ये भगिनी रावणस्य च । भ्रमन्ती कानने घोरे भर्त्रा सार्धं सुकौतुकात्
ददर्श रामं कुलटा कामार्ता राक्षसी तदा । पुलकाञ्चितसर्वाङ्गी मूर्छामाप स्मरेण च ॥
श्रीरामनिकटं गत्वा सस्मितोवाच कामुकी । शश्वद्यौवनसंयुक्ताऽतिप्रौढा कामदुर्मदा ॥

शूर्पणखोवाच—

हे राम हे घनश्याम रूपधाम गुणान्वित । भावानुरक्ता वनिता मां गृहाण सुनिर्जने ॥
श्रुत्वा शूर्पणखावाक्यं धर्मं संस्मृत्य धार्मिकः । उवाच मधुरं वाक्यं शापभीतश्च नारद

श्रीराम उवाच—

अम्ब मातः सभार्योऽहमभार्यं गच्छ मेऽनुजम् । दुःखं प्रियोऽन्यया प्रभजेदितरं च सुखालयम्
रामस्य वचनं श्रुत्वा प्रययौ लक्ष्मणं मुदा । ददर्श लक्ष्मणं शान्तं कान्तं च लक्षणान्वितम् ॥
मां भजस्व महाभागेत्युवाच च पुनः पुनः । लक्ष्मणस्तद्वचः श्रुत्वा तमुवाच कुतूहलात् ॥

लक्ष्मण उवाच—

विहाय रामं सर्वेशं हे मूढे दासमिच्छसि । सीतादासी च मत्पत्नी सीतादासोऽहमेव च ॥
भव सीतासपत्नी त्वं गच्छ रामं मदीश्वरम् । तव पुत्रो भविष्यामि सीतायाश्च यथा सति
लक्ष्मणस्य वचः श्रुत्वा कामेन हृतमानसा । उवाच लक्ष्मणं मूढा शुष्ककण्ठोष्ठतालुका ॥

शूर्पणखोवाच—

*यदि त्यजसि मां मूढ कामात्स्वयमुपस्थिताम् । पुत्रशोकश्च विपत्तिश्च भविष्यति न संशयः*
ब्रह्मा च मोहिनीं त्यक्त्वा विश्वेऽपूज्यो बभूव सः । रम्भाशापेन दक्षश्च छागमस्तो बभूव सः
इन्द्रश्चोर्वशीशापाद्यज्ञभागविवर्जितः । रूपहीनः कुबेरश्च मेनाशापेन लक्ष्मण ॥ ४१ ॥
कामो घृताचीशापेन बभूव भस्मसाच्छिवात् । बलिर्भद्रालसाशापाद्भ्रष्टराज्यो बभूव ह ॥

शापेन मिश्रकेश्याश्च हृतभार्यो बृहस्पतिः । मम शापात्तथा रामो हृतभार्यो भविष्यति ॥
कामातुरां यौवनस्थां भार्यां स्वयमुपस्थिताम् । न त्यजेद्धर्मभीतश्च श्रुतं माध्यंदिने पुरा ॥
इह त्यक्त्वा विपद्ग्रस्तः परत्र नरकं व्रजेत् । श्रुत्वा शूर्पणखावाक्यमर्धचन्द्रेण लक्ष्मणः ॥
चिच्छेद नासिकां तस्याः क्षुरधारेण लीलया । तस्या भ्राता च युयुधे बलवान्खरदूषणः ॥
ससैन्यो लक्ष्मणास्त्रेण स जगाम यमालयम् । चतुर्दशसहस्रं च राक्षसं खरदूषणम् ॥४८॥
मृतान्दृष्ट्वा शूर्पणखा भर्त्सयामास रावणम् । सर्वं निवेदनं कृत्वा जगाम पुष्करं तदा ॥
ब्रह्मणश्च वरं प्राप कृत्वा च दुष्करं तपः । उवाच तादृशीं दृष्ट्वा निराहारां तपस्विनीम् ।
सर्वज्ञस्तन्मनो मत्वा कृपासिन्धुश्च नारद ॥ ११ ॥

ब्रह्मोवाच—

अप्राप्य रामं दुष्प्रापं करोषि दुष्करं तपः । जितेन्द्रियाणां प्रवरं लक्ष्मणं धर्मलक्षणम् ॥
ब्रह्मविष्णुशिवादीनामीश्वरं प्रकृतेः परम् । जन्मान्तरे च भर्तारं प्राप्स्यसि त्वं वरानने ॥
इत्येवमुक्त्वा ब्रह्मा च जगाम स्वालयं मुदा । देहं तत्याज सा वह्नौ सा च कुब्जा बभूव ह ॥
अथ शूर्पणखावाक्यात्कोपात्कम्पितविग्रहः । जहार मायया सीतां मायावी राक्षसेश्वरः ॥
सीतां न दृष्ट्वा रामश्च मूर्छां प्राप चिरं मुने । चेतनां कारयामास भ्राता चाऽऽश्वासिकेन च
ततो बभ्राम गहनं शैलं च कंदरं नदम् । अहर्निशं च शोकार्तो मुनीनामाश्रमं मुने ॥
चिरमन्वेषणं कृत्वा न दृष्ट्वा जानकीं विभुः । चकार मित्रतां रामः सुग्रीवेण स्वयं प्रभुः ॥
निहत्य वालिनं बाणैर्ददौ राज्यं च लीलया । सुग्रीवाय च मित्राय स्वीकारपालनाय वै ॥
दूतान्प्रस्थापयामास सर्वत्र वानरेश्वरः । तस्थौ सुग्रीवभवने श्रीरामश्च सलक्ष्मणः १८ ॥
हनूमते वरं दत्त्वा रम्यं रत्नाङ्गुलीयकम् । सीतायै शुभसंदेशं प्राणधारणकारणम् ॥१९॥
तं च प्रस्थापयामास दक्षिणां दिशमुत्तमाम् । सुग्रीवस्याऽऽलिङ्गनं दत्त्वा पादरेणुं मुदाऽऽप्तवान् ॥
हनुमान्प्रययौ लङ्कां सीतान्वेषणहेतवे । रामाद्गृहीतसंदेशो यथा रुद्रकलोद्भवः ॥ ११॥
अशोककानने सीतां ददर्श शोककर्शिताम् । निराहारामतिकृशां कुहौ चन्द्रकलामिव ॥
सततं राम रामेति जपन्तीं भक्तिपूर्वकम् । बिभ्रतीं च जटाभारं तप्तकाञ्चनसंनिभाम् ॥
ध्यायमाना पदाब्जं च श्रीरामस्य दिवानिशम् । शुद्धाशयां सुशीलां च सुव्रतां च पतिव्रताम् ।
महालक्ष्मीलक्षयुक्तां प्रज्वलन्तीं स्वतेजसा । पुण्यदां सर्वतीर्थानां दृष्ट्वा भुवनपावनीम् ॥
प्रणम्य मातरं दृष्ट्वा रुदतीं वायुनन्दनः । रत्नाङ्गुलीयं रामस्य ददौ तस्यै मुदाऽन्वितः ॥

---

१ ख. मुदवहां ।

रुरोद धर्मी तां दृष्ट्वा धृत्वा तच्चरणाम्बुजम् । उवाच रामसंदेशं सीताजीवनरक्षणम् ॥

हनुमानुवाच—

पारेसमुद्रं श्रीरामः संनद्धश्च सलक्ष्मणः । बभूव रामभित्रं च सुग्रीवो बलवान्कपिः ॥
रामश्च वालिनं हत्वा राज्यं निष्कण्टकं ददौ । सुग्रीवाय च मित्राय तद्भार्यां वालिना हृताम् ॥
सुग्रीवश्च तवोद्धारं स्वी चकार च धर्मतः । वानराश्च ययुः सर्वे तवान्वेषणकारणात् ॥
प्राप्य मङ्गलवार्तां च मत्तो राजीवलोचनः । गम्भीरं सागरं बद्ध्वा सोऽचिरेणाऽऽगमिष्यति
निहत्य रावणं पापं सपुत्रं च सबान्धवम् । करिष्यत्यचिरेणैव हे मातस्तव मोक्षणम् ॥
अद्य रत्नमयीं लङ्कां निःशङ्कस्त्वत्प्रसादतः । भस्मीभूतां करिष्यामि मातः पश्य च सस्मितम्
मर्कटीडिम्बतुल्यां च लङ्कां पश्यामि सुव्रते । मूत्रतुल्यं समुद्रं च शरावमिव भूतलम् ॥७४॥
पिपीलिकासंघमिव ससैन्यं रावणं तथा । संहर्तुं च समर्थोऽहं मुहूर्तार्धेन लीलया ॥ ७५॥
रामप्रतिज्ञारक्षार्थं न हनिष्यामि सांप्रतम् । स्वस्था भव महाभागे त्यज भीतिं मदीश्वरि ॥
वानरस्य वचः श्रुत्वा रुरोदोच्चैर्मुहुर्मुहुः । उवाच वचनं भीता सीता रामपतिव्रता ॥७७॥

सीतोवाच—

अये जीवति मे रामो मच्छोकार्णवदारुणात् ॥ ७९ ॥
अपि मे कुशली नाथः कौसल्यानन्दन. प्रभुः । कीदृशश्च कृशाङ्गश्च जानकीजीवनोऽधुना॥
किमाहारश्च किं भुङ्क्ते मम प्राणाधिकः प्रियः । अपि पारे समुद्रस्य सत्यं सीतापतिः स्वयम्
अपि सत्यं स संनद्धो न शोकेन हतः प्रभुः । अपि स्मरति मां पापां स्वाभिन्नो दुःखरूपिणीम्
मदर्थे कति दुःखं वा संप्राप स मदीश्वरः । हारो नाऽऽरोपितः कण्ठे पुरा व्यवहितो रतौ ॥
अधुनैवाऽऽवयोर्मध्ये समुद्रः शतयोजनः । अपि द्रक्ष्यामि तं रामं करुणासागरं प्रभुम् ॥
कान्तं शान्तं नितान्तं च धर्मिष्ठं धर्मकर्मणि । अपि सेवां करिष्यामि पादपद्मे पुनः प्रभोः
पतिसेवाविहीनाया मूढाया जीवनं वृथा । अपि मे धर्मपुत्रश्च सत्यं जीवति लक्ष्मणः ॥
मच्छोकसागरे मग्नो भग्नदर्पो मया विना । वीराणां प्रवरो धर्मी देवकल्पश्च देवरः ॥८७॥
अपि सत्यं ससंनद्धो मत्प्रभोरनुजः सदा । अपि द्रक्ष्यामि सत्यं तं लक्ष्मणं धर्मलक्षणम् ॥
प्राणानामधिकं प्रेम्णा धन्यं पुण्यस्वरूपिणम् ॥ ८७ ॥
इत्येवं वचनं श्रुत्वा दत्त्वा प्रत्युत्तरं शुभम् । भस्मीभूतां च तां लङ्कां चकार लीलया मुने ॥
पुनः प्रबोधं तस्यै च दत्त्वा वायुसुतः कपिः । प्रययौ लीलया वेगाद्यत्र राजीवलोचनः ॥
सर्वं तत्कथयामास वृत्तान्तं मातुरेव च । सीतामङ्गलवृत्तान्तं श्रुत्वा रामो रुरोद च ॥
रुरोदोच्चैर्लक्ष्मणश्च सुग्रीवश्चापि नारद । वानरा रुरुदुः सर्वे महाबलपराक्रमाः ॥ ९२ ॥

१.स. अयं भी° ।

निबध्य सेतुं लङ्कां च प्रययौ रघुनन्दनः । ससैन्यः सानुजः शीघ्रं सन्नद्धश्चापि नारद ॥
निहत्य रावणं रामो रणं कृत्वा सुदारुणम् । चकार मोक्षणं सद्यः सीतायाश्च शुभे क्षणे
कृत्वा पुष्पकयानेन सीतां सत्यपरायणाम् । अयोध्यां प्रययौ शीघ्रं क्रीडाकौतुकमङ्गलैः ॥
क्रीडां चकार भगवान् सीतां कृत्वा च वक्षसि । विजहौ विरहज्वालां सीता रामश्च तत्क्षणम्
सप्तद्वीपेश्वरो रामो बभूव पृथिवीतले । बभूव निखिला पृथ्वी आधिव्याधिविवर्जिता ॥
बभूवतू रामपुत्रौ धार्मिकौ च कुशीलवौ । तयोश्च पुत्रैः पौत्रैश्च सूर्यवंशोद्भवा नृपाः ॥
इति ते कथितं वत्स श्रीरामचरितं शुभम् । सुखदं मोक्षदं सारं पारपोतं भवार्णवे ॥९९॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० श्रीरामचरितं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

## अथ त्रिषष्टितमोऽध्यायः ।

---

नारायण उवाच—

अथ कंसो विनिद्रश्चैवं दृष्ट्वा दुःस्वप्नमेव च । समुद्विग्नो महाभीतो निराहारो निरुत्सुकः ॥
पुत्रं मित्रं बन्धुगणं बान्धवं च पुरोहितम् । समानीय सभामध्ये तानुवाच सुदुःखितः ॥२॥

कंस उवाच—

मया दृष्टो निशीथे यो दुःस्वप्नो हि भयप्रदः । निबोधत बुधाः सर्वे बान्धवाश्च पुरोहिताः ॥
बिभ्रती रक्तपुष्पाणां मालां सा रक्तचन्दनम् । रक्ताम्बरं खड्गतीक्ष्णं खर्परं च भयंकरम् ॥
प्रकुर्वती अट्टहासं च लोलजिह्वा भयंकरी । अतीव वृद्धा कृष्णाङ्गी नगरे मम नृत्यति ॥
मुक्तकेशी छिन्ननासा कृष्णा कृष्णाम्बरप्रिया । विधवा सा महाशूद्री मामालिङ्गितुमिच्छति
मलिनं चैलखण्डं च बिभ्रती रुक्षमूर्धजम् । दधती चूर्णतिलकं कपोले मम वक्षसि ॥७॥
कृष्णवर्णानि पक्वानि छिन्नभिन्नानि सत्वरम् । पतन्ति कृत्वा शब्दांश्च शुष्कतालफलानि च ॥
कुचैलो दिगम्बराकारो म्लेच्छो हि रुक्षमूर्धजः । ददाति मह्यं भूषायां छिन्नभिन्नकपर्दकान् ॥
महारुष्टा च विधवा स्त्री पतिपुत्रवती सती । वमन्ती पूर्णकुम्भं च साऽभिशप्य पुनः पुनः ॥
सम्लानामुत्पलमालां च रक्तचन्दनचर्चिताम् । ददाति मह्यं विप्रश्च महारुष्टोऽभिशाप्य च ॥
तप्ताङ्गारवृष्टिश्च भस्मवृष्टिः क्षणं क्षणम् । क्षणं क्षणं रक्तवृष्टिर्भवेच्च नगरे मम ॥१२॥
वानरं वायसं श्वानं भल्लूकं शूकरं खरम् । पश्यामि विकटाकारं शब्दं कुर्वन्तमुल्बणम् ॥

---

१ क निरादरे । २ क स्वप्ने ।

रुरोद धर्मी तां दृष्ट्वा धृत्वा तच्चरणाम्बुजम् । उवाच रामसंदेशं सीताजीवनरक्षणम् ॥
हनुमानुवाच—
पारेसमुद्रं श्रीरामः संनद्धश्च सलक्ष्मणः । बभूव राममित्रं च सुग्रीवो वानरकपिः ॥
रामश्च वालिनं हत्वा राज्यं निष्कण्टकं ददौ । सुग्रीवाय च मित्राय तद्भार्यां वालिना हृताम् ।
सुग्रीवश्च तवोद्धारं स्वी चकार च धर्मतः । वानराश्च ययुः सर्वे तवान्वेषणकारणात् ॥
प्राप्य मङ्गलवार्तां च मत्तो राजीवलोचनः । गम्भीरं सागरं बद्ध्वा सोऽचिरेणाऽऽगमिष्यति
निहत्य रावणं पापं सपुत्रं च सबान्धवम् । करिष्यत्यचिरेणैव हे मातस्तव मोक्षणम् ॥
अथ रत्नमयीं लङ्कां निःशङ्कस्त्वत्प्रसादतः । भस्मीभूतां करिष्यामि मातः पश्य च सस्मितम्
मर्कटीडिम्भतुल्यां च लङ्कां पश्यामि सुव्रते । मूत्रतुल्यं समुद्रं च शरावमिव भूतलम् ॥७४॥
पिपीलिकासंघमिव ससैन्यं रावणं तथा । संहर्तुं च समर्थोऽहं मुहूर्तार्धेन लीलया । ७५॥
रामप्रतिज्ञारक्षार्थं न हनिष्यामि सांप्रतम् । स्वस्था भव महाभागे त्यज भीतिं मदीश्वरि ॥
वानरस्य वचः श्रुत्वा रुरोदोच्चैर्मुहुर्मुहुः । उवाच वचनं भीता सीता रामपतिव्रता ॥७७॥
सीतोवाच—
अये जीवति मे रामो मच्छोकार्णवदारुणात् ॥ ७८ ॥
अपि मे कुशली नाथः कौसल्यानन्दन. प्रभुः । कीदृशश्च कृशाङ्गश्च जानकीजीवनोऽधुना॥
किमाहारश्च किं भुङ्क्ते मम प्राणाधिकः प्रियः । अपि पारे समुद्रस्य सत्यं सीतापतिः स्वयम्
अपि सत्यं स संनद्धो न शोकेन हतः प्रभुः । अपि स्मरति मां पापां स्वामिनो दुःखरूपिणीम्
मदर्थे कति दुःखं वा संप्राप स मदीश्वरः । हारो नाऽऽरोपितः कण्ठे पुरा त्वव्यहितो रतौ ॥
अधुनैवाऽऽवयोर्मध्ये समुद्रः शतयोजनः । अपि द्रक्ष्यामि तं रामं करुणासागरं प्रभुम् ॥
कान्तं शान्तं नितान्तं च धर्मिष्ठं धर्मकर्मणि । अपि सेवां करिष्यामि पादपद्मे पुनः प्रभोः
पतिसेवाविहीनाया मूढाया जीवनं वृथा । अपि मे धर्मपुत्रश्च सत्यं जीवति लक्ष्मणः ॥
मच्छोकसागरे मग्नो मग्नदर्पो मया विना । वीराणां प्रवरो धर्मी देवकल्पश्च देवरः ॥८६॥
अपि सत्यं ससंनद्धो मत्प्रभोरनुजः सदा । अपि द्रक्ष्यामि सत्यं तं लक्ष्मणं धर्मलक्षणम्
प्राणानामधिकं प्रेम्णा धन्यं पुण्यस्वरूपिणम् ॥ ८७ ॥
इत्येवं वचनं श्रुत्वा दत्त्वा प्रत्युत्तरं शुभम् । भस्मीभूतां च तां लङ्कां चकार लीलया
पुनः प्रबोधं तस्यै च दत्त्वा वायुसुतः कपिः । प्रययौ लीलया वेगाद्यत्र रा[illegible]
सर्वं तत्कथयामास वृत्तान्तं मातुरेव च । सीतामङ्गलवृत्तान्तं श्रुत्वा रामो रुरोद च
रुरोदोच्चैर्लक्ष्मणश्च सुग्रीवश्चापि नारद । वानरा रुरुदुः सर्वे महाबलपराक्रमाः ॥ ९

१. ख. अयं नी° ।

आध्यात्मिकमाधिदैवमाधिभौतिकमुत्कटम् । एषां त्रिविधोत्पातानां खण्डनो भूतिवर्धनः ॥
यागे समाप्ते शंभुश्च जरामृत्युहरं वरम् । ददाति साक्षाद्भगवान्दाता च सर्वसंपदाम् ॥
चकारेमं च यागं च पुरा बाणो महाबलः । नन्दी परशुरामश्च भल्लश्च बलिनां वरः ॥
पुरा ददौ धनुरिदं शिवो नन्दीश्वराय च । यागेन भुक्त्वा सिद्धः स ददौ बाणाय धार्मिकः ॥
कृत्वा यागं महासिद्धो ददौ रामाय पुष्करे । तुभ्यं ददौ परशुरामः कृपया च कृपानिधिः ॥
सहस्रहस्तपरिमितं दैर्घ्येऽतिकठिनं नृप । दशहस्तप्रशस्तं च शंकरेच्छाविनिर्मितम् ॥
पशुपतेः पाशुपतं युक्तयानेन दुर्वहम् । सर्वे भङ्क्तुं न शक्ताश्च देवं नारायणं विना ॥
यागे च धनुषः पूजां शंकरस्य तु शंकरे । कुरु शीघ्रं शुभार्थं च सर्वान्कुरु निमन्त्रणम् ॥
अस्मिन्यागे धनुर्भङ्गो भवेद्यदि नराधिप । विनाशो यजमानस्य भविष्यति न संशयः ॥
भग्ने धनुषि यागश्च भग्नो भवति निश्चितम् । फलं ददाति को वाऽत्र चानिष्पन्ने च कर्मणि ॥
ब्रह्मा च धनुषो मूले मध्ये नारायणः स्वयम् । अग्रे चोग्ररूपश्च महादेवो महामते ॥
धनुर्हि त्रिविकारं च सद्रत्नखचितं वरम् । ग्रीष्ममध्याह्नमार्तण्डप्रभाप्रच्छन्नकारणम् ॥
अशक्तश्च नमयितुमनन्तश्च महाबलः । सूर्यश्च कार्तिकेयश्च का कथाऽन्यस्य भूमिप ॥
त्रिपुरारिः पुराऽनेन जघान त्रिपुरं मुदा । निर्भयं कुरु स्वच्छन्दं मङ्गलार्हं महोत्सवम् ॥
सत्यकस्य वचः श्रुत्वा चन्द्रवंशविवर्धनः । उवाच कंसः सर्वार्थं सततं च हितैषिणम् ॥

कंस उवाच—

वसुदेवगृहे जज्ञे मद्वधी कुलनाशनः । स्वच्छन्दं नन्दगेहे च वर्धते नन्दनन्दनः ॥ १९ ॥
मद्बन्धुवर्गाञ्छूरांश्च मन्त्रिणः सुविशारदान् । भगिनीं पूतनां पूतां जघान बालको बली ॥
गोवर्धनं दधारैककरेण बलवर्धनः । महेन्द्रस्य च शूरस्य चकार च पराभवम् ॥२१॥
ब्रह्माणं दर्शयामास ब्रह्मरूपं चराचरम्[1] । निर्वहं वालवत्सानां चकार कृत्रिमं मुदा ॥
तमेव बलिनं हन्तुं मन्त्रणां कुरु सत्यक । मम शत्रुर्विना तेन नास्तीह धरणीतले ॥
न हि स्वर्गे न पाताले त्रिषु लोकेषु निश्चितम् । सन्ति सन्तश्च राजानः सर्वत्र मम बान्धवाः ॥
महातपस्वी ब्रह्मा च तपस्वी शंकरः स्वयम् । विष्णुः सर्वत्र सर्वात्मा समदर्शी सनातनः ॥
नन्दपुत्रं निहत्याहं त्रिषु लोकेषु पूजितः । सार्वभौमो भविष्यामि सप्तद्वीपेश्वरो महान् ॥
स्वर्गे निहत्य शक्रं च दुर्बलं दैत्यनिर्मितम् । भविष्यामि महेन्द्रश्च तत्र निर्जित्य भास्करम् ॥
हुताशनं च चन्द्रं च ममैव पूर्वपूरुषम् । वायुं कुबेरं वरुणं यमं जेष्यामि निश्चितम् ॥
९८ नन्दमानं शीघ्रं नन्दं च नन्दनन्दनम् । तद्भ्रातरं च बलिनं बलमानय सांप्रतम् ॥

[1] ख. °स्थिरे ।

पश्यामि शुष्ककाष्ठानां राशिमम्लानकज्जलम् । अरुणोदयवेलायां कर्णौच्छिन्ननरं नि च॥
पीतवस्त्रपरिधाना शुक्लचन्दनचर्चिता । बिभ्रती मालतीमाल्यं रत्नभूषणभूषिता ॥ १४ ॥
क्रीडाकमलहस्ता सा सिन्दूरबिन्दुशोभिता । कृत्वाऽभिशापं मां रुष्टा याति मन्मन्दिरात्सती
पाशहस्तांश्च पुरुषान्मुक्तकेशान्भयंकरान् । अतिरूक्षांश्च पश्यामि विशतो नगरं मम ॥
नग्नानारीं मुक्तकेशीं नृत्यन्तीं च गृहे गृहे । अतीव विकृताकारां पश्यामि सस्मितां सदा ॥
छिन्ननासा च विधवा महाशूद्री दिगम्बरा । सा तैलाभ्यङ्कितं मां च करोत्यतिभयंकरी ॥
निर्वाणाङ्गारयुक्ताश्च भस्मपूर्णा दिगम्बराः । अतिप्रभातसमये चित्रः पश्यामि सस्मितः
पश्यामि च विवाहं च नृत्यगीतमनोहरम् । रक्तवस्त्रपरीधानान्पुरुषान्रक्तमूर्धजान् ॥
रक्तं वमन्तं पुरुषं नृत्यन्तं नग्नमुल्बणम् । धावन्तं च शयानं च पश्यामि सस्मितं सदा ॥
राहुग्रस्तं च गगने मण्डलं चन्द्रसूर्ययोः । एककाले च पश्यामि सर्वग्रासं च बान्धवाः ॥
उल्कापातं धूमकेतुं भूकम्पं राष्ट्रविप्लवम् । झञ्झावातं महोत्पातं पश्यामि च पुरोहित ॥
वायुना घूर्णमानांश्च च्छिन्नस्कन्धान्महीरुहान् । पतितान्पर्वतांश्चैव पश्यामि पृथिवीतले ॥
पुरुषं छिन्नशिरसं नृत्यन्तं नग्नमुच्छ्रितम् । मुण्डमालाकरं घोरं पश्यामि च गृहे गृहे ॥
दग्धं सर्वाश्रमं भस्मपूर्णमङ्गारसंकुलम् । हाहाकारं च कुर्वन्तं सर्वं पश्यामि सर्वतः ॥
इत्येवमुक्त्वा राजा स विरराम सभातले । दृष्ट्वा(श्रुत्वा) स्वप्नं बान्धवाश्च न तमुक्त्वा निशश्वसुः ॥ २७ ॥
जहार चेतनां सद्यः सत्यकश्च पुरोहितः । मत्वा विनाशं कंसस्य यजमानस्य नारद ॥
रुरोद नारीवर्गश्च पिता माता च शोकतः । मेने विनाशं तं च सद्यः स्वयमुपस्थितम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० कंसदुःस्वप्नकथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

=====

अथ चतुःषष्टितमोऽध्यायः ।

---

नारायण उवाच—
सर्वं कृत्वा परामर्शं सत्यकश्च पुरोहितः । बुद्धिमाञ्छुक्रशिष्यश्च तमुवाच हितं मुने ॥

सत्यक उवाच—
भयं त्यज महाभाग भयं किं ते मयि स्थिते । कुरु यागं महेशस्य सर्वारिष्टविनाशनम् ॥
यागो धनुर्मखो नाम बह्वन्नो बहुदक्षिणः । दुःस्वप्नानां नाशकरः शत्रुभीतिविनाशकः ॥

---

१ क. महोत्सवम् । २ क. °र्मयो ।

आध्यात्मिकमाधिदैवमाधिभौतिकमुल्बणम् । एषां त्रिविधोत्पातानां खण्डनो भूतिवर्धनः ॥
यागे समाप्ते शंभुश्च जरामृत्युहरं वरम् । ददाति साक्षाद्भवानि दाता च सर्वसंपदाम् ॥
चकारेमं च यागं च पुरा बाणो महाबलः । नन्दी परशुरामश्च मल्लश्च बलिनां वरः ॥
पुरा ददौ धनुरिदं शिवो नन्दीश्वराय च । यागेन भूत्वा सिद्धः स ददौ बाणाय धार्मिकः ॥
कृत्वा यागं महासिद्धो ददौ रामाय पुष्करे । तुभ्यं ददौ परशुरामः कृपया च कृपानिधिः ॥
सहस्रहस्तपरिमितं दैर्घ्येऽतिकठिनं नृप । दशहस्तप्रशस्तं च शंकरेच्छाविनिर्मितम् ॥
पशुपतेः पाशुपतं युक्तयानेन दुर्वहम् । सर्वे भङ्क्तुं न शक्ताश्च देवं नारायणं विना ॥
यागे च धनुषः पूजा शंकरस्य तु शंकरे । कुरु शीघ्रं शुभार्थं च सर्वान्कुरु निमन्त्रणम् ॥
अस्मिन्यागे धनुर्भङ्गो भवेद्यदि नराधिप । विनाशो यजमानस्य भविष्यति न संशयः ॥
भग्ने धनुषि यागश्च भग्नो भवति निश्चितम् । फलं ददाति को वाऽत्र चानिष्पन्ने च कर्मणि ॥
ब्रह्मा च धनुषो मूले मध्ये नारायणः स्वयम् । अग्रे चोग्रप्रतापश्च महादेवो महामते ॥
धनुर्हि त्रिविकारं च सद्रत्नखचितं वरम् । ग्रीष्ममध्याह्नमार्तण्डप्रभाप्रच्छन्नकारणम् ॥
अशक्तश्च नमयितुमनन्तश्च महाबलः । सूर्यश्च कार्तिकेयश्च का कथाऽन्यस्य भूमिप ॥
त्रिपुरारिः पुराऽनेन जघान त्रिपुरं मुदा । निर्भयं कुरु स्वच्छन्दं मङ्गलार्हं महोत्सवम् ॥
सत्यकस्य वचः श्रुत्वा चन्द्रवंशाभिवर्धनः । उवाच कंसः सर्वार्थं सततं च हितैषिणम् ॥

कंस उवाच—

वसुदेवगृहे जज्ञे मद्वधी कुलनाशनः । स्वच्छन्दं नन्दगेहे च वर्धते नन्दनन्दनः ॥ १९ ॥
मद्बन्धुवर्गाञ्छूराश्च मन्त्रिणः सुविशारदान् । भगिनीं पूतना पूतां जघान बालको बली ॥
गोवर्धनं दधारैककरेण बलवर्धनः । महेन्द्रस्य च शूरस्य चकार च पराभवम् ॥ २१ ॥
ब्रह्माणं दर्शयामास ब्रह्मरूपं चराचरम् । निवहं बालवत्सानां चकार कृत्रिमं मुदा ॥
तमेव बलिनं हन्तुं मन्त्रणां कुरु सत्यक । मम शत्रुर्विना तेन नास्तीह धरणीतले ॥
न हि स्वर्गे न पाताले त्रिषु लोकेषु निश्चितम् । सन्ति सन्तश्च राजानः सर्वत्र मम बान्धवाः ॥
महातपस्वी ब्रह्मा च तपस्वी शंकरः स्वयम् । विष्णुः सर्वत्र सर्वात्मा समदर्शी सनातनः ॥
नन्दपुत्रं निहत्याहं त्रिषु लोकेषु पूजितः । सार्वभौमो भविष्यामि सप्तद्वीपेश्वरो महान् ॥
स्वर्गे निहत्य शक्रं च दुर्बलं दैत्यनिर्जितम् । भविष्यामि महेन्द्रश्च तत्र निर्जित्य भास्करम् ॥
यक्ष्मग्रस्तं च चन्द्रं च ममैव पूर्वपूरुषम् । वायुं कुबेरं वरुणं यमं जेष्यामि निश्चितम् ॥
गच्छ नन्दव्रजं शीघ्रं नन्दं च नन्दनन्दनम् । तद्भ्रातरं च बलिनं बलमानय सांप्रतम् ॥

---

१ घ. °त्सवे ।

कंसस्य वचनं श्रुत्वा तमुवाच ह सत्यकः । हितं सत्यं नीतिसारं परं सामयिकं तथा

सत्यक उवाच—

अक्रूरमुद्धवं वाऽपि वसुदेवमथापि वा । प्रस्थापय महाभाग नन्दव्रजमभीप्सितम् ॥
सत्यकस्य वचः श्रुत्वा वसन्तं तत्र संसदि । स्वर्णसिंहासनस्थं च वसुदेवमुवाच सः ॥

राजेन्द्र उवाच—

तत्त्वज्ञो नीतिशास्त्राणां त्वमुपायविशारदः । व्रज नन्दव्रजं बन्धो वसुदेवसुताऽऽश्रमम् ॥
वृषभानं च नन्दं च बलं च नन्दनन्दनम् । शीघ्रमानय यज्ञेऽत्र सर्वं गोकुलवासिनम्
गृहीत्वा पत्रिका दूता गच्छन्तु च चतुर्दिशम् । नृपान्मुनिगणान्सर्वान्कर्तुं विज्ञापनं मुदा
नृपस्य वचनं श्रुत्वा शुष्ककण्ठोष्ठतालुकः । उवाच वचनं ब्रह्मन् हृदयेन विदूयता ॥

वसुदेव उवाच—

नियुक्तमत्र राजेन्द्र गमनं मम साम्प्रतम् । विज्ञापितुं नन्दव्रजं नन्दं वा नन्दनन्दनम् ॥
यद्यायातो नन्दपुत्रो यागे ते च महोत्सवे । अवश्यं तद्विरोधश्च भविष्यति त्वया सह
तमहं च समानीय कारयिष्यामि संयुतम् । इति मे न हि भद्रं च विघ्नस्तस्य तथापि च
विप्राऽऽनीतो मृतः कृष्ण इति सर्वो वदिष्यति । वसुदेवः सुतद्वारा जघान नृपमेव च
द्वयोरेकतरस्यापि सद्यो मृत्युर्भविष्यति । पतिष्यन्ति च शूराश्च नास्ति युद्धं निरामिषम्
वसुदेववचः श्रुत्वा रक्तपङ्कजलोचनः । खड्गं गृहीत्वा तं हन्तुं प्रययौ नृपतीश्वरः ॥
हाहेति कृत्वा पुत्रं च वारयामास तत्क्षणम् । उग्रसेनो महाराजपतीव बलवान्मुने ॥
स्वपीठाद्वसुदेवश्च कोपाविष्टो गृहं ययौ । अक्रूरं प्रेरयामास गन्तुं नन्दव्रजं नृप. ॥४४॥
दूतान्प्रस्थापयामास शीघ्रं प्रतिदिशं तथा । आययुर्मुनयः सर्वे नृपाश्च सपरिच्छदाः ॥
दिक्पालाश्च सुराः सर्वे ब्राह्मणाश्च तपस्विनः । सनकश्च सनन्दश्च वोढुः पञ्चशिखस्तथा
सनत्कुमारो भगवान्प्रज्वलन्ब्रह्मतेजसा । कपिलश्चासुरिः पैलः सुमन्तुश्च सनातनः ॥४७॥
पुलहश्च पुलस्त्यश्च भृगुश्च क्रतुरङ्गिराः । मरीचिः कश्यपश्चैव दक्षोऽत्रिश्च्यवनस्तथा
भरद्वाजश्च व्यासश्च गौतमश्च पराशर. । प्रचेताश्च वसिष्ठश्च संवर्तश्च बृहस्पतिः ॥४९॥
कात्यायनो याज्ञवल्क्योऽप्युतङ्कः सौभरिस्तथा । पर्वतो देवलश्चैव जैगीषव्यश्च जैमिनिः
विश्वामित्रश्च सुतपाः पिप्पलः शाकटायनः । जाबालिर्मुद्गलश्चैव पिशाचिश्च शिलाञ्छिकः
आस्तीकश्च जगत्कारस्तथा कल्याणमित्रकः । दुर्वासा वामदेवश्च ऋष्यशृङ्गो विभाण्डकः
पविः कविः कणादश्च कौशिकः पाणिनिस्तथा । कौत्सोऽघमर्षणश्चैव वाल्मीकिर्लोमहर्षणः

---

१ क. 'शङ्क'।

मार्कण्डेयो मृकण्डुश्च पर्शुरामश्च सांकृतिः । अगस्त्यश्च तथा चान्ये तथाऽन्ये मुनयो मुने
साशिष्याश्च सपुत्राश्च ब्राह्मणाश्च तपस्विनः । जरासंधो दन्तवक्रो दाम्भिको द्रविडाधिपः ॥
शिशुपालो भीष्मकश्च भगदत्तश्च मुद्गलः । धार्तराष्ट्रो धूमकेशो धूम्रकेतुश्च शम्बरः ॥
शल्यः सत्राजितः शङ्कुर्नृपाश्चान्ये महाबलाः । भीष्मो द्रोणः कृपाचार्यो ह्यश्वत्थामा महाबलः
भूरिश्रवाश्च शाल्वश्च कैकेयः कौशलस्तथा । सर्वान्संमापयामास महाराजो यथोचितम्
सत्यको यज्ञदिवसं चकार च शुभक्षणम् ॥ ९८ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० कंसयज्ञ-
कथनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

अथ पञ्चषष्टितमोऽध्यायः ।

नारायण उवाच—
कंसस्य वचनं श्रुत्वा सोऽक्रूरो धर्मिणां वरः । उवाच चोद्धवं शान्तं शान्तः प्रहृष्टमानसः
अक्रूर उवाच—
सुप्रभाताऽद्य रजनी बभूव मे शुभं दिनम् । तुष्टाश्च गुरवो विप्रा देवा मामिति निश्चितम्
कोटिजन्मार्जितं पुण्यं मम स्वयमुपस्थितम् । बभूव मे समुत्पन्नं यद्यत्कर्म शुभाशुभम्
चिच्छेद बन्धनिगडं मम बद्धस्य कर्मणा । कारागाराच्च संसारान्मुक्तो यामि हरेः पदम्
सुहृदर्थी कृतोऽहं च कंसेन विदुषा रुषा । वरेण तुल्यो देवस्य क्रोधो मम बभूव ह
व्रजराजं समाहर्तुं व्रजं यास्यामि सांप्रतम् । द्रक्ष्यामि परमं पूज्यं भुक्तिमुक्तिप्रदायिनम्
नवीनजलदश्यामं नीलेन्दीवरलोचनम् । पीतवस्त्रसमायुक्तकटिदेशविराजितम् ॥ ७ ॥
धूलिधूसरिताङ्गं च किंवा चन्दनचर्चितम् । अथवा नवनीताक्तमङ्गं द्रक्ष्यामि हरिमनम्
किंवा विनोदमुरलीं वादयन्तं मनोहरम् । किंवा गवां समूहं च चारयन्तमितस्ततः ॥
किंवा वसन्तं गच्छन्तं शयानं वा सुनिश्चितम् । निर्देशं कीदृशं चाद्य सुदृष्ट्वा च शुभे क्षणे
यत्पादपद्मं ध्यायन्ते ब्रह्मविष्णुशिवादयः । न हि जानाति यस्यान्तमनन्तोऽनन्तविग्रहः ॥
यत्प्रभावं न जानन्ति देवाः सन्तश्च संततम् । यस्य स्तोत्रे जडीभूता भीता देवी सरस्वती
दासीनियुक्ता यद्दास्ये महालक्ष्मीश्च लक्षिता । गङ्गा यस्य पदाम्भोजान्निःसृता सत्त्वरूपिणी
जन्ममृत्युजराव्याधिहरा त्रिभुवनात्परा । दर्शनस्पर्शनाभ्यां च नृणां पातकनाशिनी ॥
ध्यायते यत्पदाम्भोजं दुर्गा दुर्गविनाशिनी । त्रैलोक्यजननी देवी मूलप्रकृतिरीश्वरी ॥

१ क समुद्धर्तुं । २ ख. दुर्गतिना° ।

लोम्नां कूपेषु विश्वानि महाविष्णोश्च यस्य च । असंख्यानि विचित्राणि स्थूलात्स्थूलतरस्य च
स च यत्षोडशांशश्च यस्य सर्वेश्वरस्य च । तं द्रष्टुं यामि हे बन्धो मायामानुषरूपिणम् ॥
सर्वं सर्वान्तरात्मानं सर्वज्ञं प्रकृतेः परम् । ब्रह्मज्योतिःस्वरूपं च भक्तानुग्रहविग्रहम् ॥
निर्गुणं च निरीहं च निरानन्दं निराश्रयम् । परमं परमानन्दं सानन्दं नन्दनन्दनम् ॥
स्वेच्छामयं सर्वपरं सर्वबीजं सनातनम् । वदन्ति योगिनः शश्वद्ध्यायन्तेऽहर्निशं शिशुम्
मन्वन्तरसहस्रं च निराहारः कृशोदरः । पद्मे पद्मस्तपस्तेपे पुरा पाद्मे तु यत्कृते ॥
पुनः कुरु तपस्यां च तदा द्रक्ष्यसि मामिति । सकृच्छब्दं च शुश्राव न ददर्श तथाऽपि तम्
तावत्कालं पुनस्तप्त्वा वरं प्राप ददर्श तम् । ईदृशं परमेशं च द्रक्ष्याम्यद्य तमुद्धव ॥
पुरा शंभुस्तपस्तेपे यावद्वै ब्रह्मणो वयः । ज्योतिर्मण्डलमध्ये च गोलोके तं ददर्श सः ॥
सर्वतत्त्वं सर्वसिद्धं समतत्त्वं परं वरम् । संप्राप तत्पदाम्भोजे भक्तिं च निर्मलां पराम् ॥
चकाराऽऽत्मसमं तं च यो भक्तो(क्तं) भक्तवत्सलः । ईदृशं परमेशं च द्रक्ष्या० ॥ २६ ॥
सहस्रशक्रपातान्तं निराहारः कृशोदरः । यस्यानन्तस्तपस्तेपे भक्त्या च परमात्मनः ॥
तदा चाऽऽत्मसमं ज्ञानं ददौ तस्मै स ईश्वरः । ईदृशं परमेशं च द्रक्ष्या० ॥ २८ ॥
सहस्रशक्रपातान्तं धर्मस्तेपे च यत्तपः । तदा बभूव साक्षी स धर्मिणां सर्वकर्मिणाम् ॥
शास्ता च फलदाता च यत्प्रसादात्क्षणादिह । सर्वेशमीदृशमहो द्रक्ष्या० ॥ ३० ॥
अष्टाविंशतिरिन्द्राणां पतने यद्दिवानिशम् । एवं क्रमेण मासाब्दैः शताब्दं ब्रह्मणो वयः
अहो यस्य निमेषेण ब्रह्मणः पतनं भवेत् । ईदृशं परमात्मानं द्रक्ष्या० ॥ ३१ ॥
नास्ति भूरजसां संख्या यथैव ब्रह्मणां तथा । तथैव बन्धो विश्वानां तदाधारो महाविराट्
विश्वे विश्वे च प्रत्येकं ब्रह्मविष्णुशिवादयः । मुनयो मनवः सिद्धा मानवाद्याश्चराचराः ॥
यस्योद्भवाश्च स विराट् सृष्टो यश्च लीलया । ईदृशं सर्वशास्तारं द्रक्ष्या० ॥ ३९ ॥
इत्येवमुक्त्वाऽक्रूरश्च पुलकाञ्चितविग्रहः । मूर्छां प्राप[1] साश्रुनेत्रो दध्यौ तच्चरणाम्बुजम् ॥
बभूव भक्तिपूर्णश्च स्मारं स्मारं पदाम्बुजम् । कृत्वा प्रदक्षिणं चाऽपि कृष्णस्य परमात्मनः
उद्धवश्च तमाश्लिष्य प्रशशास पुनः पुनः । स च शीघ्रं ययौ गेहमक्रूरोऽपि स्वमन्दिरम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० अक्रूरहर्षोत्कर्षकथनं
नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

अथ षट्षष्टितमोऽध्यायः ।

---

[1] क. °सिद्धममरत्वं ।

नारायण उवाच—

अथ रासेश्वरीयुक्तो रासे रासेश्वरः स्वयम् । स च रेमे तया सार्धमतीव रमणोत्सुकः ॥
सुखसंभोगमात्रेण ययौ निद्रां च राधिका । दृष्ट्वा स्वप्नं समुत्थाय दीनोवाच प्रियं द्विजे ॥

राधिकोवाच—

अहो स्वामिन्निहाऽऽगच्छ त्वां करोमि स्ववक्षसि । परिणामे विधाता मे न जाने किं करिष्यति
इत्युक्त्वा सा महाभागा प्रियं कृत्वा स्ववक्षसि । दुःस्वप्नं कथयामास हृदयेन विदूयता

राधिकोवाच—

रत्नसिंहासनेऽहं च रत्नच्छत्रं च बिभ्रती । तदातपत्रं जग्राह दृष्टो विप्रश्च मे प्रभो ॥
सागरे कज्जलाकारे महाघोरे च दुस्तरे । गभीरे प्रेरयामास मामेव दुर्बलां स च ॥ ६ ॥
तत्र स्रोतसि शोकार्ता भ्रमामि च मुहुर्मुहुः । महोर्मीणां च वेगेन व्याकुला नक्रसंकुले ॥
त्राहि त्राहीति हे नाथ त्वां वदामि पुनः पुनः । त्वां न दृष्ट्वा महाभीता करोमि प्रार्थनां सुरम्
कृष्ण तत्र निमज्जन्ती पश्यामि चन्द्रमण्डलम् । निपतन्तं च गगनाच्छतखण्डं च भूतले
क्षणान्तरे च पश्यामि गगनात्सूर्यमण्डलम् । बभूव च चतुःखण्डं निपत्य धरणीतले ॥
एककाले च गगने मण्डलं चन्द्रसूर्ययोः । अतीव कज्जलाकारं सर्वं ग्रस्तं च राहुणा ॥
क्षणान्तरे च पश्यामि ब्राह्मणो दीप्तिमानिति । मत्क्रोडस्थं सुधाकुम्भं बभञ्ज च रुषेति च
क्षणान्तरे च पश्यामि महारुष्टं च ब्राह्मणम् । गृहीत्वा च भजन्तं च चक्षुषोः पुरुषं मम
क्रीडाकमलदण्डं च हस्ताद्ध्वस्तं मम प्रभो । सहसा खण्डखण्डं च बभूव सह हेतुना ॥
हस्ताद्ध्वस्तश्च सहसा सद्रत्नसारदर्पणः । निर्मलः कज्जलाकारः खण्डखण्डो बभूव ह ॥
हारो मे रत्नसाराणां छिन्नो भूत्वा च वक्षसः । अतीव मलिनं पद्मं पपात धरणीतले ॥
सौधपुत्तलिकाः सर्वा नृत्यन्ति च हसन्ति च । आस्फोटयन्ति गायन्ति रुदन्ति च क्षणं क्षणम्
कृष्णवर्णं वृहच्चक्रं खे भ्रमन्तं मुहुर्मुहुः । निपतन्तं चोत्पतन्तं पश्यामि च भयंकरम् ॥
प्राणाधिदेवः पुरुषो निःसृत्यास्मदन्तरान्मम । राधे विदायं देहीति ततो मामित्युवाच ह ॥
कृष्णवर्णा च प्रतिमा मामाश्लिष्यति चुम्बति । कृष्णवस्त्रपरीधाना चेति पश्यामि सांप्रतम्
इतीदं विपरीतं च दृष्ट्वा च प्राणवल्लभ । नृत्यन्ति दक्षिणाङ्गानि प्राणा आन्दोलयन्ति मे ॥
रुदन्ति शोकात्कम्पन्ति समुद्विग्नं च मानसम् । किमिदं किमिदं नाथ वद वेदविदां वर ॥
इत्युक्त्वा राधिका देवी शुष्ककण्ठोष्ठतालुका । पपात तत्पदाम्भोजे भीता सा शोकविह्वला
श्रुत्वा स्वप्नं जगन्नाथो देवीं कृत्वा स्ववक्षसि । आध्यात्मिकेन योगेन बोधयामास तत्क्षणम्

१ क. °भुजा । २ ग. °दायं ।

तत्याज शोकं सा देवी ज्ञानं संप्राप्य निर्मलम् । शान्तं च भगवन्तं च कृत्वा कान्तं स्ववक्षसि

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० राधाशोकापनोदने षट्षष्टितमोऽध्यायः ॥ ६६ ॥

अथ सप्तषष्टितमोऽध्यायः ।

नारायण उवाच—

विरहव्याकुलां दृष्ट्वा कामिनीं काममोहनः । कृत्वा वक्षसि तां कृष्णो ययौ क्रीडासरोवरम्
रासराजेश्वरी राधा कृष्णवक्षसि राजते । सौदामिनीव जलदे नवीने गगने मुने ॥ २ ॥
रेमे स रमया सार्धं कृपया च कृपानिधिः । द्वयोर्द्वयोर्यथा स्वर्णमण्योर्मारकतो मणिः ॥
रत्ननिर्माणपर्यङ्के रत्नेन्द्रसारनिर्मिते । रत्नप्रदीपे ज्वलति रत्नभूषणभूषितः ॥ ४ ॥
रत्नभूषाभूषितया रासरत्नश्च कौतुकात् । रसरत्नाकरे रम्ये निमग्नो रसिकेश्वरः ॥ ५ ॥
रासे रासेश्वरी राधा रासेश्वरमुवाच सा । सुरतौ विरतौ सत्यां विरतेन मनोरथे ॥ ६ ॥

राधिकोवाच—

प्रफुल्लाऽहं त्वया नाथ मृता म्लाना च त्वां विना । यथा महौषधिगणः प्रभाते भाति भास्करे
नक्तं दीपशिखेवाहं त्वया सार्धं त्वया विना । दिने दिने यथा क्षीणा कृष्णपक्षे विधोः कला
तव वक्षसि मे दीप्तिः पूर्णचन्द्रप्रभासमा । सद्यो मृता त्वया त्यक्ता कुह्वां चन्द्रकला यथा ॥
ज्वलदग्निशिखेवाहं घृताहुत्या त्वया सह । त्वया विनाऽहं निर्वाणा शिशिरे पद्मिनी यथा
चिन्ताज्वरजराग्रस्ता मत्तस्त्वयि गतेऽप्यहम् । अस्तंगते रवौ चन्द्रे ध्वान्तग्रस्ता धरा यथा
भ्रष्टो वेषस्त्वा विना मे रूपयौवनचेतनम् । तारावली परिभ्रष्टा सूर्यसूतोदये यथा ॥
त्वमेवाऽऽत्मा च सर्वेषां मम नाथो विशेषतः । तनुर्यथाऽऽत्मना त्यक्ता तथाऽहं च त्वया विना
पञ्चप्राणात्मकस्त्वं मे मृताऽहं च त्वया विना । दृष्टेश्च गोलकौ यद्वद्दृष्टिः पुत्तलिकां विना
स्थलं यथा चित्रयुक्तं त्वया सार्धमहं तथा । असंस्कृता त्वया हीना तृणाच्छन्ना यथा मही
त्वया सार्धमहं कृष्ण चित्रयुक्तेव मृन्मयी । त्वां विना जलधौताऽहं विरूपा मृन्मयीव च ॥
गोपाङ्गनानां शोभा च त्वया रासेश्वरेण च । हारे स्वर्णविकारे च श्वेतेन मणिना सह ।
व्रजराज त्वया सार्धं राजन्ते राजराजयः । यथा चन्द्रेण नभसि ताराराजिर्विराजते ॥
त्वया शोभा यशोदाया नन्दस्य नन्दनन्दन । यथा शाखाफलस्कन्धैस्तरुराजिर्विराजते ॥
त्वया सार्धं गोकुलेश शोभा गोकुलवासिनाम् । यथा सर्वा लोकराजी राजेन्द्रेण विराजते

१ क. रासो रासेन क्री॰ ।

रासस्यापि च रासेश त्वया शोभा मनोहरा । राजते देवराजेन यथा स्वर्गेऽमरावती ॥
वृन्दावनस्य वृक्षाणां त्वं च शोभा पतिर्गतिः । अन्येषां च वनानां च बलवान्केसरी यथा ।
त्वया विना यशोदा च निमग्ना शोकसागरे । अप्राप्य वत्सं सुरभिः क्रोशन्ती व्याकुला यथा ।
आन्दोलयन्ति नन्दस्य प्राणा दग्धं च मानसम् । त्वया विना तत्पात्रे यथा धान्यसमूहकः ॥
इत्युक्त्वा परमप्रेम्णा सा पतन्ती हरेः पदे । पुनराध्यात्मिकेनैव बोधयामास तां विभुः ॥
आध्यात्मिको महायोगो मोहसंछेदकारणम् । यथा पर्शुश्च वृक्षाणां तीक्ष्णधारश्च नारद ॥

नारद उवाच—

आध्यात्मिकं महायोगं वद वेदविदां वर । शोकच्छेदं च लोकानां श्रोतुं कौतूहलं मम ॥

नारायण उवाच—

आध्यात्मिको महायोगो न ज्ञातो योगिनामपि । स च नानाप्रकारश्च सर्वं वेत्ति हरिः स्वयम् ।
किंचिदाध्यात्मिकं चैव गोलोके राधिकेश्वरः । सुप्रीतः कथयामास त्रिपुरारिं यथा मुने ॥
सहस्रेन्द्रनिपातान्ते तपः कुर्वन्तमीश्वरम् । श्रेष्ठं ज्येष्ठं वैष्णवानां वरिष्ठं च तपस्विनाम् ॥
पुष्करे दुष्करं तप्त्वा पाद्मे पाद्मं च पद्मजः । दृष्ट्वा तं सादरं कृष्ण उवाच किंचिदेव तम् ॥
शतेन्द्रपातपर्यन्तं कठोरेण कृशोदरम् । निश्चेष्टमस्थिसारं च कृपया च कृपानिधिः ॥ ३२ ॥
सिंहक्षेत्रे पुरा धर्मं मत्तातं धर्मिणां वरम् । चतुर्दशेन्द्रावच्छिन्नं तपस्तप्त्वा कृशोदरम् ॥
पपाठाऽऽध्यात्मिकं किंचित्कृपया च कृपानिधिः । किंचिच्छतेन्द्रावच्छिन्नं मां तपन्तमुवाच सः ।
किंचित्सनत्कुमारं च तपन्तं सुचिरं परम् । सुतपन्तमनन्तं च किंचिच्चोवाच नारद ॥ ३९ ॥
चिरं तपन्तं कपिलं हिमशैले तपस्विनम् । पुष्करे भास्करे किंचित्तपन्तं दुष्करं तपः ॥
उवाच किंचित्प्रह्लादं किंचिद्दुर्वाससं भृगुम् । एवं निगूढं भक्तं च कृपया भक्तवत्सलः ॥
क्रीडासरोवरे रम्ये यदुवाच कृपानिधिः । शोकार्तां राधिकां तच्च कथयामि निशामय ॥
विरसां रसिकां दृष्ट्वा वासयित्वा च वक्षसि । उवाचाऽऽध्यात्मिकं किंचिद्योगिनीं योगिनां गुरुः

श्रीकृष्ण उवाच—

[1]जातिस्मरे स्मराऽऽत्मानं कथं विस्मरसि प्रिये । सर्वं गोलोकवृत्तान्तं सुदाम्नः शापमेव च ॥
शापात्किंचिद्दिनं दीने त्वद्विच्छेदो मया सह । भविष्यति महाभागे मेलनं पुनरावयोः ॥
पुनरेव गमिष्यामि गोलोकं तं निजालयम् । गत्वा गोपाङ्गनाभिश्च गोपैर्गोलोकवासिभिः ॥
अधुनाऽऽध्यात्मिकं किंचित्त्वां वदामि निशामय । शोकघ्नं हर्षदं सारं सुखदं मानसस्य च ॥
अहं सर्वान्तरात्मा च निर्लिप्तः सर्वकर्मसु । विद्यमानश्च सर्वेषु सर्वत्राऽदृष्ट एव च ॥ ४४ ॥

---

१ १ ख. 'चिन्नमनावर्पणम्' ।

तत्याज शोकं सा देवी ज्ञानं संप्राप्य निर्मलम्। शान्तं च भगवन्तं च कृत्वा कान्तं स्ववक्षसि

इति श्रीब्रह्म० मह० श्रीकृष्णजन्मख० उत्त० नारदना० राधाशोका-
पनोदने षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

अथ सप्तषष्टितमोऽध्यायः।

---

नारायण उवाच—

नाहं शक्तो धर्मकृत्ये त्वां च धर्मक्रियां विना । अहं यज्ञश्च कलया त्वं च स्वांशेन दक्षिणा
त्वया सार्धं च फलदोऽप्यसमर्थस्त्वया विना । कलया पितृलोकोऽहं स्वांशेन त्वं स्वधा सती
त्वयाऽलं कव्यदाने च सदा नालं त्वया विना । अहं पुमांस्त्वं प्रकृतिर्न स्रष्टाऽहं त्वया विना
त्वं च संपत्स्वरूपाऽहमीश्वरश्च त्वया सह । लक्ष्मीयुक्तस्त्वया लक्ष्म्या निःश्रीकश्च त्वया विना ॥ ७७ ॥
यथा नालं कुलालश्च घटं कर्तुं मृदा विना । अहं शेषश्च कलया स्वांशेन त्वं वसुंधरा ॥
त्वां सस्यरत्नाधारां च बिभर्मि मूर्ध्नि सुन्दरि । त्वं च कान्तिश्च शान्तिश्च मूर्तिर्मूर्तिमती सती
तुष्टिः पुष्टिः क्षमा लज्जा क्षुधा तृष्णा परा दया । निद्रा श्रद्धा च तन्द्रा च मूर्छा च संनतिः क्रिया ॥ ७८ ॥
मूर्तिरूपा भक्तिरूपा देहिनां देहरूपिणी । ममाऽऽधारा सदा त्वं च तवाऽऽत्माऽहं परस्परम्
यथा त्वं च तथाऽहं च समौ प्रकृतिपूरुषौ । न हि सृष्टिर्भवेद्देवि द्वयोरेकतरं विना ॥
इत्युक्त्वा परमात्मा च राधां प्राणाधिकां प्रियाम् । कृत्वा वक्षसि सुप्रीतो बोधयामास नारद
स च क्रीडानियुक्तश्च बभूव रत्नमन्दिरे । तया च राधया सार्धं कामुक्या सह कामुकः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० आध्यात्मिक-
योगकथनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## अथाष्टषष्टितमोऽध्यायः ।

नारायण उवाच—

कृत्वा क्रीडां समुत्थाय पुनस्तल्पात्पुरातनः । निद्रितां प्राणसदृशीं बोधयामास तत्क्षणम्
वस्त्राञ्चलेन संस्कृत्य कृत्वा तन्निर्मलं मुखम् । उवाच मधुरं शान्तो शान्तां च मधुसूदनः ॥

श्रीकृष्ण उवाच—

अयि तिष्ठ क्षणं रासे रासेश्वरि शुचिस्मिते । व्रज वृन्दावनं वाऽपि वनं वन वनेश्वरि ॥
रासाधिष्ठातृदेवि त्वं रासं रासे कुरु क्षणम् । ग्रामे ग्रामे यथा सन्ति सर्वत्र ग्रामदेवताः ।
विपिनालिनिवहे सार्धं क्षणं चन्दनकाननम् । क्षणं वा चम्पकवनं गच्छ वा तिष्ठ सुन्दरि ॥
क्षणं गृहं च यास्यामि विशिष्टं कार्यमस्ति मे । विदायं देहि मे प्रीत्या क्षणं मां प्राणवल्लभे
प्राणाधिष्ठातृदेवी त्वं प्राणाश्च त्वयि सन्ति मे । प्राणान्विहाय प्राणाश्च कुत्र स्थातुं क्षमः प्रिये
त्वयि मे मानसं शश्वत्त्वं मे संसारवासना । त्वत्तो मम प्रिया नास्ति त्वमेव शंकरात्प्रिया
प्राणा मे शंकरः सत्यं त्वं च प्राणाधिका सति । इत्युक्त्वा तां समालिङ्ग्य भगवान्मधुसूदनः

---

१ ख. र्धं रहस्ये° ।

वायुश्चरति सर्वत्र यथैव सर्ववस्तुषु । न च लिप्तस्तथैवाहं साक्षी च सर्वकर्मणाम् ॥ ४९ ॥
जीवो मत्प्रतिबिम्बश्च सर्वत्र सर्वजीविषु । भोक्ता शुभाशुभानां च कर्ता च कर्मणां सदा ॥
यथा जलघटेष्वेव मण्डलं चन्द्रसूर्ययो. । भग्नेषु तेषु संश्लिष्टस्तयोरेव तथा मयि ॥५०॥
जीवः श्लिष्टस्तथा काले मृतेषु जीविषु प्रिये । आवां च विद्यमानौ च सततं सर्वजन्तुषु ॥
आधारश्चाहमाधेयं कार्यं च कारणं विना । अये सर्वाणि द्रव्याणि नश्वराणि च सुन्दरि ॥
आविर्भावाधिकाः कुत्र कुत्रचिन्न्यूनमेव च । ममांशाः केऽपि देवाश्च केचिद्देवाः कलास्तथा
केचित्कलाः कलांशांशास्तदंशांशाश्च केचन मदंशा प्रकृतिः सूक्ष्मा सा च मूर्त्या च पञ्चधा
सरस्वती च कमला दुर्गा त्वं चापि वेदसूः । सर्वे देवाः प्राकृतिका यावन्तो मूर्तिधारिणः ॥
अहमात्मा नित्यदेही भक्तध्यानानुरोधतः । ये ये प्राकृतिका राधे ते नष्टाः प्राकृते लये ॥
अहमेवाऽऽसमेवाग्रे पश्चादप्यहमेव च । यथाऽहं च तथा त्वं च यथा धावल्यदुग्धयोः ॥
भेदः कदाऽपि न भवेन्निश्चितं च तथाऽऽवयो. । अहं महान्विराट् सृष्टौ विश्वानि यस्य लोमसु
अंशस्त्वं तत्र महती स्वांशेन तस्य कामिनी । अहं क्षुद्रविराट् सृष्टौ विश्वं यन्नाभिपद्मतः ॥
अयं विष्णोर्लोमकूपे वासो मे चांशतः सति । तस्य स्त्री त्वं च बृहती स्वांशेन सुभगा तथा
तस्य विश्वे च प्रत्येकं ब्रह्मविष्णुशिवादयः । ब्रह्मविष्णुशिवा अंशाश्चान्ये चापि च मत्कलाः
मत्कलांशांशकलया सर्वे देवि चराचराः । वैकुण्ठे त्वं महालक्ष्मीरहं तत्र चतुर्भुजः ॥
स च विश्वाद्बहिश्चोर्ध्वे यथा गोलोक एव च । सरस्वती त्वं सत्ये च सावित्री ब्रह्मणः प्रिया
शिवलोके शिवा त्वं च मूलप्रकृतिरीश्वरी । विनाश्य दुर्गं दुर्गा च सर्वदुर्गतिनाशिनी ॥
सा एव दक्षकन्या च सा एव शैलकन्यका । कैलासे पार्वती तेन सौभाग्या शिववक्षसि ॥
स्वांशेन त्वं सिन्धुकन्या क्षीरोदे विष्णुवक्षसि । अहं स्वांशेन सृष्टौ च ब्रह्मविष्णुमहेश्वराः ॥
त्वं च लक्ष्मी शिवा धात्री सावित्री च पृथक्पृथक् । गोलोके च स्वयं राधा रासे रासेश्वरी सदा
वृन्दा वृन्दावने रम्ये विरजा विरजातटे । सा त्वं सुदामशापेन भारतं पुण्यमागता ॥
पूतं कर्तुं भारतं च वृन्दारण्यं च सुन्दरि । त्वत्कलांशांशकलया विश्वेषु सर्वयोषितः ॥
या योषित्सा च भवती यः पुमान्सोऽहमेव च । अहं च कलया वह्निस्त्वं स्वाहा दाहिका प्रिया
त्वया सह समर्थोऽहं नालं दग्धुं च त्वां विना । अहं दीप्तिमतां सूर्यः कलया त्वं प्रभाकरी
संज्ञा त्वं च त्वया भामि त्वां विनाऽहं न दीप्तिमान् । अहं च कलया चन्द्रस्त्वं च शोभा च
रोहिणी ॥ ६१ ॥
मनोहरस्त्वया सार्धं त्वां विना न च सुन्दरः । अहमिन्द्रश्च कलया स्वर्गलक्ष्मीश्च त्वं शची
त्वया सार्धं देवराजो हतश्रीश्च त्वया विना । अहं धर्मश्च कलया त्वं च मूर्तिश्च धर्मिणी ॥

---

१ क. 'गुबोध' । २ क. अर्ह । ३ क. सदा ।

नाहं शक्तो धर्मकृत्ये त्वां च धर्मक्रियां विना । अहं यज्ञश्च कलया त्वं च स्वांशेन दक्षिणा
त्वया सार्धं च फलदोऽप्यसमर्थस्त्वया विना । कलया पितृलोकोऽहं स्वांशेन त्वं स्वधा सती
त्वयाऽलं कव्यदाने च सदा नालं त्वया विना । अहं पुमांस्त्वं प्रकृतिर्न स्रष्टाऽहं त्वया विना
त्वं च संपत्स्वरूपाऽहमीश्वरश्च त्वया सह । लक्ष्मीयुक्तस्त्वया लक्ष्म्या निःश्रीकश्च त्वया
विना ॥ ७९ ॥
यथा नालं कुलालश्च घटं कर्तुं मृदा विना । अहं शेषश्च कलया स्वांशेन त्वं वसुंधरा ॥
त्वां सस्यरत्नाधारां च बिभर्मि मूर्ध्नि सुन्दरि । त्वं च कान्तिश्च शान्तिश्च मूर्तिर्मूर्तिमती सती
तुष्टिः पुष्टिः क्षमा लज्जा क्षुधा तृष्णा परा दया । निद्रा श्रद्धा च तन्द्रा च मूर्छा च संनतिः
क्रिया ॥ ७८ ॥
मूर्तिरूपा भक्तिरूपा देहिना देहरूपिणी । ममाऽऽधारा सदा त्वं च तवाऽऽत्माऽहं परस्परम्
यथा त्वं च तथाऽहं च समौ प्रकृतिपूरुषौ । न हि सृष्टिर्भवेद्देवि द्वयोरेकतरं विना ॥
इत्युक्त्वा परमात्मा च राधां प्राणाधिकां प्रियाम् । कृत्वा वक्षसि सुप्रीतो बोधयामास नारद
स च क्रीडानियुक्तश्च बभूव रत्नमन्दिरे । तया च राधया सार्धं कामुक्या सह कामुकः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० आध्यात्मिक-
योगकथनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

अथाष्टषष्टितमोऽध्यायः ।

---

नारायण उवाच—

कृत्वा क्रीडां समुत्थाय पुनस्तल्पात्पुरातनः । निद्रितां प्राणसदृशीं बोधयामास तत्क्षणम्
वस्त्राञ्चलेन संस्कृत्य कृत्वा तन्निर्मलं मुखम् । उवाच मधुरं शान्तं शान्ता च मधुसूदनः ॥

श्रीकृष्ण उवाच—

अयि तिष्ठ क्षणं रासे रासेश्वरि शुचिस्मिते । व्रज वृन्दावनं वाऽपि वने वन वनेश्वरि ॥
रासाधिष्ठातृदेवि त्वं रासं रासे कुरु क्षणम् । ग्रामे ग्रामे यथा सन्ति सर्वत्र ग्रामदेवताः ॥
प्रियाश्लिनिवहैः सार्धं क्षणं चन्दनकाननम् । क्षणं वा चम्पकवनं गच्छ वा तिष्ठ सुन्दरि ॥
क्षणं गृहं च यास्यामि विशिष्टं कार्यमस्ति मे । विदायं देहि मे प्रीत्या क्षणं मां प्राणवल्लभे
प्राणाधिष्ठातृदेवी त्वं प्राणाश्च त्वयि सन्ति मे । प्राणी विहाय प्राणांश्च कुत्र स्थातुं क्षमः प्रिये
त्वयि मे मानसं शश्वत्त्वं मे संसारवासना । त्वत्तो मम प्रिया नास्ति त्वमेव शंकरात्प्रिया
प्राणा मे शंकरः सत्यं त्वं च प्राणाधिका सति । इत्युक्त्वा तां समाश्लिष्य भगवान्गन्तुमुद्यतः

---

१ क. त्वं रासहारे ।

अक्रूरागमनं ज्ञात्वा सर्वज्ञः सर्वसाधनः । आत्मा पाता च सर्वेषां सर्वोपकारकारकः ॥
दृष्ट्वा तमेव गच्छन्तमुत्सुकं भिन्नमानसम् । उवाच राधिका देवी हृदयेन विदूयता ११॥

राधिकोवाच—

हे नाथ रमणश्रेष्ठ श्रेष्ठश्च प्रेयसां मम । हे कृष्ण हे रमानाथ व्रजेश मा व्रज व्रजम् ॥
अधुना त्वां प्राणनाथ पश्यामि भिन्नमानसम् । गते त्वयि मम प्रेम गतं सौभाग्यमेव च
क्व यासि मां विनिक्षिप्य गम्भीरे शोकसागरे । विरहव्याकुलां दीनां त्वय्येव शरणागताम्
न यास्यामि पुनर्गेहं यास्यामि काननान्तरम् । कृष्ण कृष्णेति कृष्णेति गायं गायं दिवानिशम् ॥ १९ ॥
न यास्याम्यथवाऽरण्यं यास्यामि कामसागरे । तत्र त्वत्कामना कृत्वा त्यक्ष्यामि च कलेवरम्
यथाऽऽकाशो यथाऽऽत्मा च यथा चन्द्रो यथा रविः । तथा त्वं यासि मत्पार्श्वे निबद्धो वसनाञ्चले ॥ १७ ॥
अधुना यासि नैराश्यं कृत्वा मे दीनवत्सल । न युक्तं हि परित्यक्तुं दीनां मां शरणागताम्
यत्पादपद्मं ध्यायन्ते ब्रह्मविष्णुशिवादयः । त्वां मायया गोपवेषं कथं जानामि मत्सरी
कृतं यद्देव दुर्नीतमपराधसहस्रकम् । यदुक्तं पतिभावेन चाभिमानेन तत्क्षम ॥ २० ॥
चूर्णीभूतश्च मद्दर्पो दूरीभूतो मनोरथः । विज्ञातुमात्मसौभाग्यं किमन्यत्कथयामि ते ॥
ज्ञात्वा गर्गमुखाच्छ्रुत्वा मोहिता तव मायया । त्वां च वक्तुं न शक्नोमि प्रेम्णा वा भक्तिपाशतः ॥ २२ ॥
यासि चेन्मां परित्यज्य सकलङ्को भविष्यसि । त्वत्पुत्रपौत्रा नश्यन्ति ब्रह्मकोपानलेन च
क्षणं युगशतं मन्ये त्वां विना प्राणवल्लभम् । कथं शक्ताऽहं त्वां त्यक्त्वा बिभर्मि जीवनं प्रभो
इत्युक्त्वा राधिका कोपात्पपात धरणीतले । मूर्छां संप्राप सहसा जहार चेतनां मुने ॥
कृष्णस्तां मूर्छितां दृष्ट्वा कृपया च कृपानिधिः । चेतनां कारयित्वा च वासयामास वक्षसि
बोधयामास विविधं योगैः शोकखण्डनैः । तथाऽपि शोकं त्यक्तुं च न शशाक शुचिस्मिता
सामान्यवस्तुविश्लेषो नृणां शोकाय केवलम् । देहात्मनोश्च विच्छेदः कः सुखाय प्रकल्पते ॥
न ययौ तत्र दिवसे व्रजराजो व्रजं प्रति । क्रीडासरोवराभ्याशं प्रययौ राधया सह ॥
तत्र गत्वा पुनः क्रीडां चकार च तया सह । विजहौ विरहज्वालां रासे रासेश्वरी मुदा ॥
राधा सा स्वामिना सार्धं पुष्पचन्दनचर्चिता । पुष्पचन्दनतल्पे च सुष्वाप रहसि नारद

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० राधाशोक-
विमोचनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

===

अथैकोनसप्ततितमोऽध्यायः ।

नारद उवाच—

अतः परं किं रहस्यं राधाकेशवयोर्वद । निगूढतत्त्वमस्पष्टं तन्मे व्याख्यातुमर्हसि ॥१॥

नारायण उवाच—

शृणु नारद वक्ष्यामि रहस्यं परमाद्भुतम् । गोपनीयं च वेदेषु पुराणेषु पुराविदाम् ॥ पुनः सकामो भगवान्कृष्णः स्वेच्छामयो विभुः । रेमे स रमया सार्धं विदग्धश्च विदग्धया चतुःषष्टिकलाशास्त्या यथा कान्ता कलावती । कामशास्त्रेषु निपुणा विदग्धा रसिकेश्वरी शृङ्गारलीलानिपुणा शश्वत्कामा च कामुकी । सुन्दरी सुन्दरीष्वेव शश्वत्सुस्थिरयौवना पितृणा मानसी कन्या धन्या मान्या च मानिनी । शंभोः शिष्या ज्ञानयुता शतकन्यान्तर्गामिनी वेदवेदाङ्गनिपुणा योगनीतिविशारदा । नानारूपधरा साध्वी प्रसिद्धा सिद्धयोगिनी ॥ तत्कन्या राधिका देवी मातृतुल्या च कामुकी । चकार नानाभावं सा सुशीला स्वामिनं प्रति चतुःषष्टिकलामानं शृङ्गारं च चकार सः । तया विशिष्टया सार्कं रासे रासरसोत्सुकः ता नखाग्रक्षतश्रोणीं नखक्षतपयोधराम् । लुप्तचन्दनसिंदूरां कबरीशिथिलां सतीम् ॥ सुखसंभोगमग्ना च नग्ना च शोकमूर्छिताम् । पुलकाञ्चितसर्वाङ्गीं निद्रादेवी समाययौ ॥ दृष्ट्वा तां निद्रितां कृष्णः कृपया च कृपानिधिः । रुरोद मायया मायी मायेशो लोकशिक्षया कृत्वा वक्षसि राधां च चुचुम्ब च पुनः पुनः । स्नातां च नेत्रसलिलैः प्राणाधिष्ठातृदेवताम् प्राणाधिकां प्रियतमां धारयामास मानसीं । वह्निशुद्धेंऽशुसूक्ष्मे चामूल्ये विश्वसुदुर्लभे ॥ कबरीं रचयामास ददौ कुङ्कुमचन्दनम् । तद्गात्रे च गले हारममूल्यं रत्ननिर्मितम् ॥ सिन्दूरं च ददौ तस्याः सीमन्ताधःस्थलेऽमले । दाडिमीकुसुमाकारं युक्तं चन्दनबिन्दुभिः ॥ चकार पत्राकं गण्डे नानाचित्रविचित्रकम् । ददौ तत्पादपद्मे च रत्नमञ्जीररञ्जितम् ॥ पादाङ्गुलिनखाग्रे च सुन्दरालक्तकं ददौ । नानासुवेषोज्ज्वलिता ता निद्राकुलिता विभु. ॥ पुनश्चकार मोहेन गाढालिङ्गनमीप्सितम् । पुनश्च चुम्बनं कृत्वा निवेश्य च स्ववक्षसि ॥ सुष्वाप जगतां स्वामी कान्ताविरहकातरः । एतस्मिन्नन्तरे काले ब्रह्मा लोकपितामहः ॥ शिवशेष दिभिर्देवैर्मुनीन्द्रैः सार्धमाययौ । आगत्य नत्वा शिरसा तुष्टाव संपुटाञ्जलिः ॥ सामवेदोक्तस्तोत्रेण परिपूर्णतमं विभुम् ॥ २२ ॥

ब्रह्मोवाच—

जय जय जगदीश वन्दितचरण निर्गुण निराकार स्वेच्छामय भक्तानुग्रह नित्यविग्रह

१ क. °स्थलोज्ज्वले । २ ख. कामी ।

गोपवेष मायया मायेश सुवेष सुशील शान्त सर्वकान्त दान्त नितान्तज्ञानानन्द परा-
त्परतर प्रकृतेः पर सर्वान्तरात्मरूप निर्लिप्त साक्षिस्वरूप व्यक्ताऽव्यक्त निरञ्जन भारा-
वतारण करुणार्णव शोकसंतापप्रसन जरामृत्युभयादिहरण शरणपञ्जर भक्तानुग्रहकारक
भक्तवत्सल भक्तसंचितधन ओं नमोऽस्तु ते ॥ ३३ ॥
सर्वाधिष्ठातृदेवायेत्युक्त्वा वै प्रीणनाय च । पुनःपुनरुवाचेदं मूर्छितश्च बभूव ह ॥३४॥
इति ब्रह्मकृतं स्तोत्रं यः शृणोति समाहितः । तत्सर्वाभीष्टसिद्धिश्च भवत्येव न संशयः
अपुत्रो लभते पुत्रं प्रियाहीनो लभेत्प्रियाम् । निर्धनो लभते सत्यं परिपूर्णतमं धनम् ॥
इह लोके सुखं भुक्त्वा चान्ते दास्यं लभेद्धरेः । अचलां भक्तिमाप्नोति मुक्तेरपि सुदुर्लभाम्
स्तुत्वा च जगतां धाता प्रणम्य च पुनः पुनः शनैः शनैः समुत्थाय भक्त्या पुनरुवाच ह

ब्रह्मोवाच—

उत्तिष्ठ देवदेवेश परमानन्दकारण । नन्दनन्दन सानन्द नित्यानन्द नमोऽस्तु ते ॥३६॥
व्रज नन्दालयं नाथ त्यज वृन्दावनं वनम् । स्मर सुदामशापं च शतवर्षनिबन्धनम् ॥
भक्तशापानुरोधेन शतवर्षं प्रियां त्यज । पुनरेनां च संप्राप्य गोलोकं च गमिष्यसि ॥
गत्वा पितृगृहं देव पश्याक्रूरं समागतम् । पितृव्यमतिथिं मान्यं धन्यं वैष्णवमीश्वर ॥
तेन सार्धं मधुपुरीं भगवन् गच्छ सांप्रतम् । कुरु शंभोर्धनुर्भङ्गं भग्नं वैरिगणं हरे ॥
हन कंसं दुराचारं तातं बोधय मातरम् । निर्माणं द्वारकायाश्च भारावतरणं भुवः ॥
दह वाराणसीं शंभोः शत्रस्य सदनं विभो । शिवस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम्
रुक्मिणीहरणं नाथ घातनं नरकस्य च । षोडशानां सहस्रं च स्त्रीणां पाणिग्रहं कुरु ॥
त्यज प्रियां प्राणसमां व्रजेश्वर व्रजं व्रज । उत्तिष्ठोत्तिष्ठ भद्रं ते यावद्राधा न जाग्रति
इत्येवमुक्त्वा ब्रह्मा च सेन्द्रैर्देवगणैः सह । जगाम ब्रह्मलोकं च शेषश्च शंकरस्तथा ॥
पुष्पचन्दनवृष्टिं च कृष्णस्योपरि देवताः । चक्रुः प्रीत्या च भक्त्या च बाभूवाशरीरिणी
वव वंशीं यथार्हं च रत्नसिंहासनं कुरु । क्षयं कुरु भुवो भारं नारदेत्येवमेव च ॥४०॥
इत्येवं तद्वचः श्रुत्वा भगवान् भूतभावनः । राधां भगवतीं त्यक्त्वा समुत्तस्थौ शनैः शनैः
ययौ हरिः किंचिद्दूरं निरीक्ष्य च पुनः पुनः । क्षणं तस्थौ चन्दनानां वने वाससमीपतः॥
विहाय राधा निद्रां सा समुत्तस्थौ रसातलपनः । न निरीक्ष्य हरिं शान्तं कान्तं च प्राण-
वल्लभम् ॥ ४१ ॥
हा नाथ रमण प्रेष्ठ प्राणेश प्राणवल्लभ । प्राणेश्वर प्रियतम क्व गतोऽसीत्युवाच ह ॥

क्षणमन्वेषणं कृत्वा बभ्राम मालतीवनम् । उवास क्षणमुत्तस्थौ क्षणं सुष्वाप भूतले ॥
रुरोद क्षणमत्युच्चैर्विललाप मुहुर्मुहुः । आगच्छाऽऽगच्छ हे नाथेत्येवमुक्त्वा पुनः पुनः ॥
मूर्छां संप्राप संतापात्संतप्ता विरहानलैः । भूतले च तृणाच्छन्ने पपात च यथा मृता ॥
आययुस्तत्र गोप्यश्च ब्रह्मन्शतसहस्रशः । काश्चिच्चापरहस्ताश्च गृहीत्वा चन्दनद्रवम् ॥
तासां मध्ये प्रिया लीला कृत्वा राधां स्ववक्षसि । मृतामिव प्रियां दृष्ट्वा रुरोद प्रेमविह्वला
सजलं पङ्कजदलं पङ्कोपरि निधाय च । स्थापयामास तां राधां निश्चेष्टां च मृतामिव ॥
गोपीभिः सेवितां तत्र रुचिरैः श्वेतचामरैः । चन्दनद्रवयुक्तां च स्निग्धवस्त्रान्वितां सतीम्
ददर्श कृष्णस्तत्रैत्य तामेव प्राणवल्लभाम् । निवारितश्च गोपीभिर्बलिष्ठाभिश्च नारद ॥
यथा नीतः सापराधो दण्ड्यो राजभटादिभिः चकार राधां क्रोडे च समागत्य कृपानिधिः
चेतनां कारयामास बोधयामास बोधनैः । संप्राप्य चेतनां देवी ददर्श प्राणवल्लभम् ॥
बभूव सुस्थिरा देवी तत्याज विरहज्वरम् । चकार कान्तं सा कान्ता गाढालिङ्गनमीप्सितम्
नानाप्रकारशृङ्गारं चकार मधुसूदनः । उवास रत्नतल्पे च राधां कृत्वा स्ववक्षसि ॥
राधासखी रत्नमाला विदग्धा सर्वपूजिता । उवाच कृष्णं मधुरं नीतिसारमनुत्तमम् ॥

रत्नमालोवाच--

शृणु कृष्ण प्रवक्ष्यामि परिणामसुखावहम् । हितं तथ्यं नीतिसारं दंपत्योः प्रीतिकारणम् ॥
संमतं कामशास्त्रेषु नीतौ वेदपुराणयोः । लौकिकव्यवहारेषु प्रशस्यं सुयशस्करम् ॥६९॥
नारीणां च प्रिया माता प्रियो भ्राता च बन्धुषु । ततः प्रियश्च पुत्रश्च पुत्रादेव प्रियः पतिः
शतपुत्रात्प्रियः स्वामी साध्वीनां साधुतमनः । रसिकानां विदग्धानां न हि भर्तुः परः प्रियः
यदि भर्ता विदग्धश्च विदग्धानां सुखावहः । अन्यथा विषतुल्यश्च विषमश्चेत्खलः खलु ॥
संसारे चानृते वत्स दंपत्योः प्रीतिरेव च । परस्परं च समता प्रियसौभाग्यमीप्सितम् ॥
दंपत्योः समता नास्ति यत्र यत्र हि मन्दिरे । अलक्ष्मीस्तत्र तत्रैव विफलं जीवनं तयोः
सुस्वामिनां विभेदश्च परं दुःखं च योषिताम् । शोकसंतापबीजं च जीवितं मरणाधिकम्
स्वप्ने जागरणे चापि पतिः प्राणाश्च योषितः । पतिरेव गुरुः स्त्रीणामिह लोके परत्र च ॥
अस्मात्त्वयि गते नाथे मूर्छां संप्राप राधिका । पपात सहसा भूमौ तृणाच्छन्ने च भूतले ॥
मया दत्तं मुखेऽस्याश्च शीतलं जलमुत्तमम् । तदा श्वासो बभूवास्याश्चेतनं वाक्यमेव च ॥
क्षणं वदति हे नाथ हे कृष्णेति क्षणं सखी । क्षणं रोदिति संतप्ता मूर्छां प्राप्नोति तत्क्षणम्
राधिकायाः शरीरं च संतप्तं विरहानलैः । दग्धोऽहमन्तरे दमसदृशपवनशोषणम् ॥७०॥

१ ख. °लो सो शृ°। २ क. °गगमु च पू°।

स्वप्ने जागरणे रात्रौ दिवसे च गृहे वने । जले स्थले चान्तरिक्षेऽभ्युदये चन्द्रसूर्ययोः ॥
नास्ति भेदश्च राधाया मृततुल्या जडाकृतिः । शश्वत्पश्यति स्थानस्था सर्वं विष्णुमयं जगत्
स्निग्धपङ्के पङ्कजानां सजलानि दलानि च । निधाय तत्कृते तल्पे सुष्वाप विरहातुरा
सेविता सा प्रियालीभिः संततं श्वेतचामरैः । चन्दनद्रवसंसिक्ता स्निग्धवस्त्रसमन्विता ॥
राधाङ्गस्पर्शमात्रेण पङ्कः संप्राप शुष्कताम् । स्निग्धानि पद्मपत्राणि बभूवुर्भस्मसात्क्षणम्
चन्दनं शुष्कतां प्राप वर्णश्चम्पकसंनिभः । बभूव कज्जलाकारः केशस्य वर्णतो हरे ॥
सिन्दूरबिन्दू रुचिरः श्यामतां प्राप तत्क्षणम् । वेषो विलासो लीला च क्रीडा त्यक्ता बभूव ह ॥ ७७ ॥
रत्नमाला तु तां दृष्ट्वा गत्वा कृष्णान्तिकं तदा । उवाच मधुरं वाक्यं राधाहितकरं परम् ॥

रत्नमालोवाच--

हे कृष्ण कमलाकान्त त्वद्वियोगेन मत्सखी । प्राणांस्त्यक्ष्यति शीघ्रं सा यदि नाऽऽयास्यसि ध्रुवम् ॥ ७९ ॥
विचार्य मनसा कृष्ण यत्तत्समुचितं कुरु । न भवेत्कामिनीहत्या येन नीतिविशारद ॥
रत्नमालावचः श्रुत्वा प्रहस्योवाच माधवः । हितं सत्यं नीतिसारं परिणामसुखावहम्

श्रीभगवानुवाच—

ईशो यद्यपि शक्तोऽहं निषेकं खण्डितुं प्रिये । तथाऽपि न क्षमो रत्ने नियतेर्न करोम्यहम्
ब्रह्माण्डेषु च सर्वेषु मर्यादा स्थापिता मया । तया कर्म प्रकुर्वन्ति मुनयश्च सुरा नराः ॥
सुदामशापाद्विच्छेदः शतवर्षमनीप्सितः । भविष्यत्येव दंपत्योरावयोरेव सुन्दरि ॥८४॥
भेदो जागरणेऽस्याश्च मया सह सुमध्यमे । संश्लेषं संततं स्वप्ने मद्वरेण भविष्यति ॥
आध्यात्मिकी मया दत्ता शोकच्छेदो भविष्यति । राधां बोधय भद्रे ते यास्यामि नन्दमन्दिरम्
इत्युक्त्वा जगतां नाथो ययौ नन्दालयं प्रति । राधिकां बोधयामासुरालिसंघाश्च नारद ॥
गत्वा गृहं च पितरं ननाम मातरं तथा । चकार माता क्रोडे च नवनीतं च नूतनम् ॥
मातृदत्तं च ताम्बूलं चखाद शीतलं जलम् । उवास तत्र जगतां नाथो मातृसमीपतः ॥
सर्वगोपसमूहैश्च सेवितः श्वेतचामरैः । माल्यचन्दनताम्बूलं ते च तस्मै ददुर्मुदा ॥९०॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० श्रीकृष्णागमनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

१ क. °पि सुन्दरि ।

## अथ सप्ततितमोऽध्यायः ।

नारायण उवाच—

अथाक्रूरः स्वशरणं गत्वा कंसेन प्रेषितः । चकार शयनं तल्पे भुक्त्वा मिष्टान्नमुत्तमम् ॥
सकर्पूरं च ताम्बूलं चखाद वासितं जलम् । जगाम निद्रां सुखतः सुखसंभोगमात्रतः ॥
ततो ददर्श सुस्वप्नं पुराणश्रुतिसंमतम् । निशावशेषसमये बाध्यादिपरिवर्जितः ॥ ३ ॥
अरोगी बद्धकेशश्च वस्त्रयुग्मसमन्वितः । सुतल्पशायी सुस्निग्धश्चिन्ताशोकविवर्जितः ॥
किशोरवयसं श्यामं द्विभुजं मुरलीधरम् । पीतवस्त्रपरीधानं वनमालाविभूषितम् ॥ ५ ॥
चन्दनोक्षितसर्वाङ्गं मालतीमाल्यशोभितम् । भूषितं भूषणार्हं च सद्रत्नमणिभूषणैः ॥ ६ ॥
मयूरपिच्छचूडं च सस्मितं पद्मलोचनम् । एवंभूतं द्विजशिशुं ददर्श प्रथमं मुने ॥७॥
ततो ददर्श रुचिरां पतिपुत्रवतीं सतीम् । पीतवस्त्रपरिधानां रत्नभूषणभूषिताम् ॥ ८ ॥
ज्वलत्प्रदीपहस्तां च शुक्लधान्यकरां वराम् । शरच्चन्द्रनिभास्यां च सस्मितां वरदां शुभाम्
ततो ददर्श विप्रं च प्रकुर्वन्तं शुभाशिषम् । श्वेतपद्मगतं हंसं तुरगं च सरोवरम् ॥१०॥
ददर्श चित्रितं चारु फलितं पुष्पितं शुभम् । आम्रनिम्बनारिकेलगुर्वर्ककदलीतरम् ॥
दशन्तं श्वेतसर्पं च स्वात्मानं पर्वतस्थितम् । वृक्षस्थं च गजस्थं च तरिस्थं तुरगस्थितम्
वीणां वादितवन्तं च भुक्तवन्तं च पायसम् । दधिक्षीरयुतान्नं च पद्मपत्रस्थमीप्सितम् ॥
कृमिविट्सहिताङ्गं च रुदन्तं मोहितं तदा । शुक्लधान्यपुष्पकरं क्षणं चन्दनचर्चितम् ॥
प्रासादस्थं समुद्रस्थमात्मानं च सलोहितम् । छिन्नभिन्नं क्षताङ्गं च मेदपूयसमन्वितम् ॥
ततो ददर्श रजतं मणिं शुभ्रं च काञ्चनम् । मुक्तामाणिक्यरत्नं च पूर्णकुम्भजलं शुभम्
सुरभिं च सवत्सां च वृषभेन्द्रं मयूरकम् । शुकं च सारसं हंसं चिल्लं खञ्जनमेव च ॥
ताम्बूलं पुष्पमाल्यं च ज्वलदग्निं सुरार्चनम् । पार्वतीप्रतिमां कृष्णप्रतिमां शिवलिङ्गकम्
विप्रबालां च बालं च सुपक्वफलितां कृषिम् । देवस्थलीं च राजेन्द्रं सिंहं व्याघ्रं गुरुं सुरम्
दृष्ट्वा स्वप्नं समुत्तस्थौ चकाराऽऽह्निकमीप्सितम् । उद्धवं कथयामास सर्वं वृत्तान्तमेव च
उद्धवाज्ञां समादाय कृत्वा गुरुसुरार्चनम् । यात्रां चकार श्रीकृष्णं ध्यात्वा मनसि नारद
ददर्श वर्त्मन्येवं च मङ्गलार्हं शुभप्रदम् । वाञ्छाफलप्रदं रम्यं पुरो मङ्गलसूचकम् ॥२२॥
वामे शवं शिवां पूर्णकुम्भं नकुलचाषकम् । पतिपुत्रवती साध्वी दिव्याभरणभूषिताम् ॥
शुक्लपुष्पं च माल्यं च धान्यं च खञ्जनं शुभम् । दक्षिणे ज्वलदग्निं च विप्रं च वृषभं गजम्

---

१ क. 'सुखाढ्य' । २ क. 'शङ्खवि' । ३ ख. शिवं ।

वत्सप्रयुक्तां धेनुं च श्वेताश्वं राजहंसकम्। वेश्यां च पुष्पमालां च पताकां दधि पायसम्
मणिं सुवर्णं रजतं मुक्तामाणिक्यमीप्सितम्। मेध्यं मांसं चन्दनं च माध्वीकं घृतमुत्तमम्
कृष्णसारं फलं लाजाः सिद्धान्नं दर्पणं तथा। विचित्रितं विमानं च सुदीप्तां प्रतिमां तथा
शुक्लोत्पलं पद्मवनं शङ्खचिह्नं च कोरकम्। मार्जारं पर्वतं मेघं मयूरं शुकसारसम्॥२८॥
शङ्खकोकिलवाद्यानां ध्वनिं शुश्राव मङ्गलम्। विचित्रकृष्णसंगीतं हरिशब्दं जयध्वनिम्
एवंभूतं शुभं दृष्ट्वा श्रुत्वा प्रहृष्टमानसः। प्रविवेश हरिं स्मृत्वा पुण्यं वृन्दावनं वनम्॥
ददर्श पुरतो रम्यं रासमण्डलमीप्सितम्। चन्दनागुरुकस्तूरीपुष्पचन्दनवायुना॥ ३१॥
वासितं मङ्गलघटै रम्भास्तम्भैर्विराजितम्। आम्रपल्लवपर्णैश्च पट्टसूत्रविचित्रितैः॥३२॥
शोभितैः परितः शश्वत्पद्मरागविनिर्मितम्। शोभितं शोभनार्हं च त्रिकोटिरत्नमन्दिरैः॥
रम्यैः कुञ्जकुटीरैश्च राजितं शतकोटिभिः। रासं वृन्दावनं दृष्ट्वा कियद्दूरं ययौ च सः।
ददर्श पुरतो रम्यं नन्दव्रजमनुत्तमम्। परं वैकुण्ठसंकाशं वैकुण्ठनिलयं शुभम्॥ ३५॥
रत्नसोपानसंयुक्तं रत्नस्तम्भैर्विराजितम्। नानाचित्रविचित्राढ्यं सद्रत्नवलयान्वितम्॥
खचितं मणिसारेण रचितं विश्वकर्मणा। द्वारि दृष्टेन मार्गेण राजद्वारं विवेश सः॥३७॥
पताकारत्नजालाढ्यं मुक्तामाणिक्यभूषितम्। रत्नदर्पणशोभाढ्यं रत्नचित्रविचित्रम्॥
रत्नवीथीविरचितं मङ्गलं मङ्गलैर्घटैः। अक्रूरागमनं श्रुत्वा साह्लादो नन्द एव च॥
सहितो रामकृष्णाभ्यां जगामानुव्रजाय वै। वृषभान्वादिभिर्युक्तः कृत्वा वेश्यां पुरःसराम्॥
पूर्णकुम्भं गजेन्द्रं च कृत्वाऽग्रे शुक्लधान्यकम्। कृष्णां गां मधुपर्कं च पाद्यं रत्नासनादिकम्॥
गृहीत्वा सादरः शान्तः सस्मितो विनतस्तथा। आनन्दयुक्तो नन्दश्च सगणः सहबालकः॥
दृष्ट्वाऽक्रूरं महाभागं तूर्णमालिङ्गनं ददौ। प्रणेमुः शिरसा सर्वे गोपा जगृहुराशिषम्॥
परस्परं च संयोगो बभूव गुणवान्मुने। क्रोडे चकाराक्रूरश्च कृष्णं रामं क्रमेण च॥
चुचुम्ब गण्डयुगले पुलकाञ्चितविग्रहः। साश्रुनेत्रोऽतिसाह्लादः कृतार्थः सिद्धवाञ्छितः॥
ददर्श कृष्णं द्विभुजं क्षणं श्यामलसुन्दरम्। पीतवस्त्रपरीधानं मालतीमाल्यभूषितम्॥४६॥
चन्दनोक्षितसर्वाङ्गं परं वंशीधरं वरम्। स्तुतं महेशशेषाद्यैर्मुनीन्द्रैः सनकादिभिः॥४७॥
वीक्षितं गोपकन्याभिः परिपूर्णतमं विभुम्। क्षणं ददर्श क्रोडस्थं सस्मितं च चतुर्भुजम्॥
लक्ष्मीसरस्वतीयुक्तं वनमालाविभूषितम्। सुनन्दनन्दकुमुदैः पार्षदैः परिसेवितम्॥४९॥
सेवितं सिद्धसंघैश्च भक्तिनम्रैः परात्परम्। क्षणं ददर्श देवं तं पञ्चवक्त्रं त्रिलोचनम्॥
शुद्धस्फटिकसंकाशं नागराभैर्विराजितम्। दिगम्बरं परं ब्रह्म भस्माङ्गं च जटायुतम्॥

१ क. पद्मानां।

जपमालाकरं ध्याननिष्ठं श्रेष्ठं च योगिनाम् । क्षणं चतुर्मुखं ध्याननिष्ठं श्रेष्ठं मनीषिणाम् ॥
क्षणं धर्मस्वरूपं च शेषरूपं क्षणं क्षणम् । क्षणं भास्कररूपं च ज्योतीरूपं सनातनम् ॥
क्षणं परमशोभाढ्यं कोटिकन्दर्पनिन्दितम् । कामिनीकमनीयं च कामुकं कामसंयुतम् ॥
एवंभूतं शिशुं दृष्ट्वा स्थापयामास वक्षसि । रत्नसिंहासने रम्ये नन्ददत्ते च नारद ॥
कृत्वा प्रदक्षिणं भक्त्या पुलकाञ्चितविग्रहः । प्रणम्य शिरसा भूमौ तुष्टाव पुरुषोत्तमम् ॥

अक्रूर उवाच—

नमः कारणरूपाय परमात्मस्वरूपिणे ॥ ५६ ॥
सर्वेषामपि विश्वानामीश्वराय नमो नमः । पराय प्रकृतेरीश परात्परतराय च ॥५७॥
निर्गुणाय निरीहाय नीरूपाय स्वरूपिणे । सर्वदेवस्वरूपाय सर्वदेवेश्वराय च ॥ ५८ ॥
सर्वदेवाधिदेवाय विश्वादिभूतरूपिणे । असंख्येषु च विश्वेषु ब्रह्मविष्णुशिवात्मक ॥५९॥
स्वरूपायाऽऽदिबीजाय तद्बीज विश्वरूपिणे । नमो गोपाङ्गनेशाय गणेशेश्वररूपिणे ॥
नमः सुरगणेशाय राधेशाय नमो नमः । राधारमणरूपाय राधारूपधराय च ॥६१॥
राधाराध्याय राधायाः प्राणाधिकतराय च । राधासाध्याय राधाधिदेवप्रियतमाय च ॥
राधाप्राणाधिदेवाय विश्वरूपाय ते नमः । वेदस्तुतात्मवेदज्ञरूपिणे वेदिने ॥ ६३ ॥
वेदाधिष्ठातृदेवाय वेदबीजाय ते नमः । यस्य लोमसु विश्वानि चासंख्यानि च नित्यशः
महद्विष्णोरीश्वराय विश्वेशाय नमो नमः । स्वयं प्रकृतिरूपाय प्राकृताय नमो० ॥
प्रकृतीश्वररूपाय प्रधानपुरुषाय च । इत्येवं स्तवनं कृत्वा मूर्छामाप समानसे ॥६६॥
पपात सहसा भूमौ पुनर्गोशं ददर्श सः । बहिःस्थं हृदयस्थं च परमात्मानमीश्वरम् ॥
परितः श्यामरूपं च विश्वस्थं विश्वमेव च । अक्रूरं मूर्छितं दृष्ट्वा नन्दः सादरपूर्वकम् ।
रत्नसिंहासने रम्ये वासयामास नारद । पप्रच्छ सर्ववृत्तान्तं किंस्विद्दृष्टमिति त्वया ॥६९॥
मिष्टान्नं भोजयामास कुशलं च पुनः पुनः । अक्रूरः कथयामास कंसवृत्तान्तमीप्सितम् ।
स्वपित्रोर्मोक्षणार्थं च गमनं रामकृष्णयोः । इत्यक्रूरकृतं स्तोत्रं यः पठेत्सुसमाहितः ॥
अपुत्रो लभते पुत्रमभार्यो लभते प्रियाम् । अधनो धनमाप्नोति निर्भूमिरुर्वरां महीम् ।
हतप्रजः प्रजालाभं प्रतिष्ठां चाप्रतिष्ठितः । यशः प्राप्नोति विपुलमयशस्वी च लीलया ॥
अथ सुप्ताय समये परं संहृष्टमानसः । रम्ये चम्पकतल्पे च कृष्णं कृत्वा स्ववक्षसि ॥
प्रातरुत्थाय सहसा कृत्वाऽऽह्निकमनुत्तमम् । स्वरथे स्थापयामास रामं कृष्णं जगत्पतिम्
गव्यं पञ्चप्रकारं च नानाद्रव्यं सुदुर्लभम् । वृषभानं च नन्दं च सुनन्दं चन्द्रभानकम् ॥
नानाप्रकारं वाद्यं च मृदङ्गमुरजादिकम् । पटहं पणवं चैव ढक्कां दुन्दुभिमानकम् ॥७७॥

चन्दनं लेपनं कृत्वा पुष्पमालां गले ददौ । गुरुवर्गं ब्राह्मणं च वन्दयामास भक्तितः ॥
शङ्खध्वनिं वेदपाठं संगीतं मङ्गलाष्टकम् । विप्राशीर्वचनं रम्यं शुश्राव परमादरम् ॥
ध्यात्वा मङ्गलरूपं च सर्वत्र मङ्गलप्रदम् । विशेषदक्षिणं पादं सुन्दरं स्वात्मविग्रहम् ॥
विधृत्य नासिकावाममार्गं मन्थनया विभुः । विसृज्य वायुं संपूर्णं नासादक्षिणरन्ध्रतः ॥
ततो ययौ नन्दनन्दो नन्दस्य प्राङ्गणं परम् । सानन्दः परमानन्दो नित्यानन्दः सनातनः ॥
नित्योऽनित्यो नित्यबीजस्वरूपो नित्यविग्रहः । नित्याङ्गभूतो नित्येशो नित्यकृत्यविशारदः ॥
नित्यनूतनरूपश्च नित्यनूतनयौवनः । नित्यनूतनवेषश्च वयसा नित्यनूतनः ॥ १६ ॥
नित्यनूतनसंभाषो यत्प्रेम नित्यनूतनम् । नित्यनूतनसंभाविः सौभाग्यं नित्यनूतनम् ॥
सुधारसपरं मिष्टं यद्वाक्यं नित्यनूतनम् । नित्यनूतनमर्कं च यत्पदं नित्यनूतनम् ॥
स्थापं स्थापं प्राङ्गणेऽस्मिन्नादेशो मायया पुनः । अतीव रम्ये सुदिनन्दो बभूव गगने त्वतः ॥
रम्भास्तम्भसमूहैश्च रसालपल्लवान्वितैः । पट्टसूत्रनिबद्धैश्च सुन्दरैश्च सुसंस्कृतैः ॥२०॥
पद्मरागेण खचितैः रचितैः विश्वकर्मणा । कस्तूरीकुङ्कुमाक्तैश्च चन्दनैश्च सुसंस्कृतैः ॥
तत्र तस्थौ स्वयं कृष्णः सह कृष्णः सत्वरं स्वयम् । यशोदया समाश्लिष्टो वामपार्श्वेन मायया ॥
नन्देनाऽऽनन्दयुक्तेनाऽऽश्लिष्टो दक्षिणपार्श्वतः । संभाषितो बान्धवैश्च पित्रा मात्रा च चुम्बितः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० यात्रामङ्गले नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

अथ द्विसप्ततितमोऽध्यायः ।

नारायण उवाच—
अथ कृष्णो गुरुं नत्वा निर्गम्य शिबिरान्मुने । आरुह्य स्वर्गयानं च शुभं मधुपुरीं ययौ ॥
विवेश मथुरां रम्यां सार्धं नृपगणैः समम् । निरीक्ष्य नगरीं शोभां युक्तां मनोहराम् ॥
रत्नश्रेष्ठेन खचितां रचितां विश्वकर्मणा । अमूल्यरत्नकलशै राजितैश्च विराजिताम् ॥
राजमार्गैराजमार्गैर्वेष्टितां रचितैर्वरैः । चन्द्राकारैश्चन्द्रकान्तमणिभिः परिसंस्कृतैः ॥४॥
विचित्रैर्गोपुरादिभिश्च कौशीदाविनिर्मितैः । गोमेदमणिभिः श्रेष्ठैः पुष्पराजमयान्वितैः ॥
सरोवरसहस्रैश्च पानैः परिशोभिताम् । शुद्धस्फटिकसंकाशैः स्वर्णगणविराजितैः ॥
रत्नालंकारभूषाढ्यैः शोभितां पद्मिनीगणैः । स्थिरयौवनसंयुक्तैर्निमेषरहितैः परैः ॥७॥

१ क 'सुस्थिर च ना' ।

सज्जां संनहनीं कास्यपट्टमर्दलमण्डवीद् । वादयामास सानन्दं नन्दगोपो व्रजेश्वरः ॥
श्रुत्वा वाद्यं च गोप्यश्च गमनं रामकृष्णयोः । दृष्ट्वा कृष्णं रथस्थं तमाययुः कोपपीडिताः ॥
कृष्णेन वारिताः सर्वाः प्रेरिता राधया द्विज । बभञ्जुरीश्वररथं पादाघातेन लीलया ॥
तत्र सर्वेषु गोपेषु हाहाकारं कृतेषु च । प्रययुर्बलवत्यश्च कृष्णं कृत्वा स्ववक्षसि ॥
काचित्क्रूरं तमक्रूरं भर्त्सयामास कोपतः । काश्चिद्बद्ध्वा च वस्त्रेण चाक्रूरं प्रययुस्ततः ॥
काचित्तं ताडयामास कङ्कणेन करेण च । तद्वस्त्रं हारयामास कृत्वा विवसनं मुने ॥
क्षतविक्षतसर्वाङ्गं दृष्ट्वाऽक्रूरं च माधवः । जगाम राधानिकटं बोधयामास ता पुनः ॥
आध्यात्मिकेन योगेन विनयेन च सादरम् । अक्रूरं बोधयामास बोधयामास ता विभुः
आकाशात्पतितं दिव्यं मन्त्रग्रन्थायितं रथम् । विचित्रवस्त्रसंयुक्तं ददर्श पुरतो हरिः ॥
खचितं मणिराजेन रचितं विश्वकर्मणा । तं दृष्ट्वा मातृभवनमाजगाम जगत्पतिः ॥
भुक्त्वा पीत्वा सुखं सुप्त्वा भगवान्सहबान्धवः । तस्थौ मुनीन्द्रदेवेन्द्रब्रह्मेशशेषवन्दितः ॥
सुषुपुर्गोपिकाः सर्वाः परं संहृष्टमानसाः । पुष्पतल्पे च रम्ये च राधया सह नारद ॥
सर्वे चाऽऽनन्दयुक्ताश्च जना गोकुलवासिनः । केचिद्वीणाश्च ननृतुः केचित्संगीततत्पराः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० गोपीविषयो
नाम सप्ततितमोऽध्यायः ॥ ७० ॥

---

अथैकसप्ततितमोऽध्यायः ।

---

नारायण उवाच—

राधिकाया च सुप्तायां सुप्तासु गोपिकासु च । पुष्पचन्दनतल्पे च वायुना सुरभीकृते ॥
तृतीयप्रहरेऽतीते निशाया च शुभे क्षणे । शुभचन्द्रर्क्षयोगे चामृतयोगसमन्विते ॥
सौम्यस्वामियुते लग्ने सौम्यग्रहविलोकिते । पापग्रहसमासक्तदुष्टदोषादिवर्जिते ॥ १ ॥
यशोदा बोधयामास कारयामास मङ्गलम् । बन्धूनाश्वासयामास समुत्थाय हरिः स्वयम् ॥
वाद्यं निषेधयामास राधिकाभयभीतवत् । स्वतन्त्रो विश्वकर्ता च पाता भर्ता स्वतन्त्रवत् ॥
प्रक्षाल्य पादयुगलं पूत्वा धौते च वाससी । उवास संस्कृते स्थाने विलिप्ते चन्दनादिना ॥
सद्रत्नपीठयुक्त संस्कृतं चन्दनादिभिः । वामे कृत्वा पूर्णकुम्भं वह्निं विप्रं स्वदक्षिणे ॥
पतिपुत्रवतीं दीपं दर्पणं पुरतस्तथा । दूर्वाचगण्टं च सुरभिं पुष्पं धान्यं सितं शुभम् ॥
गुरु दत्तं गृहीत्वा च प्रदर्थो मातरीपरि । घृतं ददर्श माध्वीकं रजतं काञ्चनं दधि ॥

---

१ क. नर्तिन । २ क. ग्मते । ३ क. 'पुष्पाढ्य' ।

चन्दनं लेपनं कृत्वा पुष्पमाल्यं गले ददौ । गुरुवर्गं ब्राह्मणं च वन्दयामास भक्तितः ॥
शङ्खध्वनिं वेदपाठं संगीतं मङ्गलाष्टकम् । विप्राशीर्वचनं रम्यं शुश्राव परमादरम् ॥
ध्यात्वा मङ्गलरूपं च सर्वत्र मङ्गलप्रदम् । चिक्षेप दक्षिणं पादं सुन्दरं स्वात्मविग्रहम् ॥
विमृश्य नासिकाग्रभागं मध्यमया विभुः । विसृज्य वायुं संपूर्णं नासादक्षिणरन्ध्रतः ॥
ततो ययौ नन्दनन्दो नन्दस्य प्राङ्गणं वरम् । सानन्दः परमानन्दो नित्यानन्दः सनातनः ॥
नित्योऽनित्यो नित्यबीजस्वरूपो नित्यविग्रहः । नित्याङ्गभूतो नित्येशो नित्यकृत्यविशारदः
नित्यनूतनरूपश्च नित्यनूतनयौवनः । नित्यनूतनवेषश्च वयसा नित्यनूतनः ॥ १९ ॥
नित्यनूतनसंभाषो यत्प्रेम नित्यनूतनम् । नित्यनूतनसंप्राप्तिः सौभाग्यं नित्यनूतनम् ॥
सुधारसपरं मिष्टं यद्वाक्यं नित्यनूतनम् । नित्यनूतनमकं च यत्पदं नित्यनूतनम् ॥
स्थायं स्थायं प्राङ्गणेऽस्मिन्मायेशो मायया युतः । अतीव रम्ये सुस्निग्धो बभूव गमनोन्मुखः
रम्भास्तम्भसमूहैश्च रसालपल्लवान्वितैः । पट्टसूत्रनिबद्धैश्च सुन्दरैश्च सुसंस्कृतैः ॥ २० ॥
पद्मरागेण खचिते रचिते विश्वकर्मणा । कस्तूरीकुङ्कुमाक्तैश्च चन्दनैश्च सुसंस्कृते ॥
तत्र तस्थौ स्वयं कृष्णः सह क्रूरः सत्वरम् । यशोदया समाश्लिष्टो वामपार्श्वेन मायया ॥
नन्देनाऽऽनन्दयुक्तेनाऽऽश्लिष्टो दक्षिणपार्श्वतः । संभाषितो बान्धवैश्च पित्रा मात्रा च चुम्बितः

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० यात्रामङ्गलं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

=====

अथ द्विसप्ततितमोऽध्यायः ।

---

नारायण उवाच—

अथ कृष्णो गुरुं नत्वा निर्गम्य शिबिरान्मुने । आरुह्य स्वर्णयानं च शुभां मधुपुरीं ययौ ॥
विवेश मथुरां रम्यां सहाक्रूरगणैः समम् । निरीक्ष्य शक्रनगरीशोभायुक्तां मनोहराम् ॥
रत्नश्रेष्ठेन खचितां रचितां विश्वकर्मणा । अमूल्यरत्नकलशै राजितैश्च विराजिताम् ॥
राजमार्गशतैर्गेहैर्वेष्टितां रचितैर्वरैः । चन्द्राकारैश्चन्द्रमार्गैर्मणिभिः परिसंस्कृतैः ॥ ४ ॥
विनिर्मणिसारैश्च वीथीशानविनिर्मितैः । शोभितैर्वणिजैः श्रेष्ठैः पुष्पवायुसमन्वितैः ॥
सरोवरसहस्रैश्च परितः परिशोभिताम् । शुद्धस्फटिकसंकाशैः पद्मरागविराजितैः ॥
रत्नशृङ्गारभूषाढ्यैः शोभितां पक्षिनिर्गमैः । स्थिरयौवनसंयुक्तैर्निमेषरहितैः परैः ॥ ७ ॥

---

१ क. 'सुमिष्टं च ना' ।

साक्षतैरूर्ध्ववदनैः कृष्णदर्शनलालसैः । भ्रूभङ्गलीलालोलैश्च शश्वच्चञ्चललोचनैः ॥ ८ ॥
शश्वत्कामसमायुक्तैः पीनश्रोणिपयोधरैः । कोमलाङ्गैर्मध्यकृशै रतिरासविशारदैः ॥९॥
रत्ननिर्माणयानानां कोटिभिः परिशोभिताम् । भूषणैर्भूषिताभिश्च चित्रिताभिश्च चित्रकैः
नानाप्रकारश्रीयुक्तां पुष्पोद्यानत्रिकोटिभिः । नानापुष्पैः पुष्पिताभिर्युक्ताभिर्मधुसूदन ॥
माधुर्यमधुसंयुक्तैर्मधुलुब्धैर्मुदाऽन्वितैः । माध्वीकमधुमत्तैश्च युक्तैर्मधुकरीचयैः ॥ १२ ॥
नानाप्रकारदुर्गैश्च दुर्गम्या वैरिणां गणैः । रक्षितां रक्षकैः शश्वद्रक्षाशास्त्रविशारदैः ॥
त्रिकोटयाट्टालिकाभिश्च संयुक्तां सुमनोहराम् । रचितां किल सद्रत्नैर्विचित्रैर्विश्वकर्मणा
एवंभूतां च मथुरां दृष्ट्वा कमललोचनः । ददर्श पथि कुब्जां तां वृद्धामतिजरातुराम् ॥
यान्तीं दण्डसहायेन चातिनम्रां नमत्कटीम् । रूक्षितां विकृताकारां बिभ्रतीं चन्दनद्रवम्
कस्तूरीकुङ्कुमाक्तं च स्पर्शपात्रेण नारद । सुगन्धिमकरन्देन गन्धाढ्यं सुमनोहरम् ॥
सा दृष्ट्वा सस्मिता वृद्धा श्रीकान्तं शान्तमीश्वरम् । श्रीयुक्तं श्रीनिवासं तं श्रीबीजं श्रीनिके-
तनम् ॥ १८ ॥
प्रणम्य सहसा मूर्ध्ना भक्तिनम्रा पुटाञ्जलिः । प्रददौ चन्दनं तस्य गात्रे श्यामलसुन्दरे
गात्रेषु सद्गणानां च स्वर्णपात्रकरा वरा । कृत्वा प्रदक्षिणं कृष्णं प्रणनाम पुनः पुनः॥
श्रीकृष्णदृष्टिमात्रेण श्रीयुक्ता सा बभूव ह । सहसा श्रीसमा रम्या रूपेण यौवनेन च
वह्निशुद्धांशुवसना रत्नभूषणभूषिता । यथा द्वादशवर्षीया कन्या धन्या मनोहरा ॥२२॥
बिम्बोष्ठी सस्मिता श्यामा तप्तकाञ्चनसंनिभा । सुश्रोणी सुदती बिल्वफलतुल्यपयोधरा
अमूल्यरत्ननिर्माणहारसारविराजिता । गजेन्द्रराजगमना रत्नमञ्जीररञ्जिता ॥ २४ ॥
बिभ्रती कबरीभारं मालतीमाल्यवेष्टितम् । रचितं वामभागेन रुचिरं वर्तुलाकृतिम् ॥
सिन्दूरबिन्दुं दधती दाडिमीकुसुमाकृतिम् । कस्तूरीबिन्दुमुपरि सार्धं चन्दनबिन्दुभिः ॥
रत्नदर्पणहस्ता च प्रशस्ता रतिकर्मसु । श्रीकृष्णं वरयामास लोललोचनकोणतः ॥
श्रीवासस्तां समाश्वास्य ययौ स्थानान्तरं परम् । कृतार्थरूपा सा प्रीत्या ययौ पद्मा यथाऽऽल-
यम् ॥ २८ ॥
सा ददर्श स्वभवनं यथा पद्मालयालयम् । रत्नशय्याविरचितं सद्रत्नसारनिर्मितम् ॥
रत्नप्रदीपराजीभी राजिताभिश्च राजितम् । रत्नदर्पणराजैश्च राजितं परितस्ततः ॥
सिन्दूरघटताम्बूलं श्वेतचामरमाल्यकम् । बिभ्रतीभिश्च दासीभिर्वेष्टितं दाससंघकैः ॥
स्नात्वा गत्वा च भुक्त्वा च मिष्टान्नं परमं मुदा । सुष्वाप रत्नपर्यङ्के सा दासीभिश्च सेविता

१ ख. 'दनैः । ख. २ स्पृष्ट्वा' ।

सकर्पूरं च ताम्बूलं कस्तूरीकुङ्कुमान्वितम् । चन्दनं स्थापयामास स्वतल्पे हरये सती ॥
मालतीमाल्ययुगलं कर्पूरादिसुवासितम् । शीतलं सलिलं स्वादु मिष्टान्नं स्वसमीपतः ॥
कर्मणा मनसा वाचा चिन्तयन्ती हरेः पदम् । हरेरागमनं चारे मुखचन्द्रं मनोहरम् ॥
जगत्कृष्णमयं शश्वत्पश्यन्ती कामुकी मुने । कोटिकन्दर्पलीलाभं कामसक्तं च कामुकम् ॥
ततो ददर्श श्रीकृष्णो मालाकारं मनोहरम् । मालासमूहं * बिभ्रन्तं गच्छन्तं राजमन्दिरम्
सोऽपि दृष्ट्वा च श्रीकान्तं प्रणम्य शिरसा भुवि । ददौ माल्यसमूहं च कृष्णाय परमात्मने
कृष्णस्तस्मै वरं दत्त्वा स्वदास्यमतिदुर्लभम् । माल्यं गृहीत्वा प्रययौ राजमार्गे वरं वरः ॥
ततो ददर्श रजकं बिभ्रतं वस्त्रपुञ्जकम् । अहंकृतिबलिष्ठं च सततं यौवनोद्धतम् ॥
वस्त्रं ययाचे तं कृष्णो विनयेन महामुने । स तस्मै न ददौ वस्त्रं तमुवाच च निष्ठुरम् ॥४१॥

रजक उवाच—

गोरक्षकाणां त्वयोग्यं वस्त्रमेतत्सुदुर्लभम् । राजयोग्यं च हे मूढ हे गोपजनवल्लभ ॥
गृहीत्वा गोपकन्याश्च कन्यालोलुप लम्पट । यद्विहारः कृतस्तत्र वृन्दारण्येऽप्यराजके ॥
न चात्र तादृशं कर्म राज्ञः कंसस्य वर्त्मनि विद्यमानोऽत्र राजेन्द्रः शास्ता दुष्टस्य तत्क्षणम्
रजकस्य वचः श्रुत्वा जहास मधुसूदनः । जहास बलदेवश्च साक्रूरो गोपवर्गकः ॥
तं निहत्य चपेटेन जग्राह वस्त्रपुञ्जकम् । वस्त्रं संधारयामास श्रीकृष्णः सगणस्तथा ॥
रत्नयानेन गोलोकं पार्षदैर्वेष्टितेन च । ययौ रजकराजश्च धृत्वा दिव्यकलेवरम् ॥४७॥
शश्वद्यौवनयुक्तं च जरामृत्युहरं वरम् । पीतवस्त्रसमायुक्तं सस्मितं श्यामसुन्दरम् ॥
बभूव सोऽपि गोलोके पार्षदेषु च पार्षदः । कृष्णस्याऽऽगमनं तत्र सस्मार सततं वशी ॥
अस्तं गतो दिनकरोऽप्यक्रूरः स्वगृहं ययौ । कृष्णस्यानुमतिं प्राप्य कृष्णोऽपि कस्य-
चिद्गृहम् ॥ ५० ॥

वैष्णवस्य कुविन्दस्य तस्मिन्नन्तधनस्य च । सानन्दो नन्दसहितो बलदेवादिभिर्वृतः ॥
स भक्तः पूजयामास प्रणम्य श्रीनिकेतनम् । तस्मै ददौ स्वदास्यं च वरं ब्रह्मादिदुर्लभम्
पर्यङ्के सुषुपुः सर्वे भुक्त्वा मिष्टान्नमुत्तमम् । निद्रां च लेभे सा कुब्जा निद्रेशोऽपि ययौ मुदा
गत्वा ददर्श कुब्जां तां रत्नतल्पे च निद्रिताम् । दासीगणैः परिवृतां सुन्दरीं कमलामिव ॥
बोधयामास तां कृष्णो न दासीश्चापि निद्रिताः । तामुवाच जगन्नाथो जगन्नाथप्रियां सतीम्

श्रीभगवानुवाच—

त्यज निद्रां महाभागे शृङ्गारं देहि सुन्दरि । पुरा शूर्पणखा त्वं च भगिनी रावणस्य च ॥

* सुमागम अर्थः । नाभ्यस्तात्स्युरितिपाणिनिस्मरणस्य जागरूकत्वात् ।

ब्राह्मणांश्च सुहृद्वर्गान्धर्मिष्ठान्गणकोविदान् । अथाऽऽजगाम गोविन्दो रामेण सह नारद ॥
महेशस्य धनुर्मध्यं बभञ्ज तत्र लीलया । शब्देन तस्य मथुरा बधिरा च बभूव ह ॥८६॥
विषादं प्राप कंसश्च मुदं च देवकीसुतः । उपस्थितः सभामध्ये गजं मल्लं निहत्य च
योगी ददर्श तं देवं परमात्मानमीश्वरम् ॥ ८७ ॥
यथा हृत्पद्ममध्यस्थं तादृशं च हरेव च । राजेन्द्र रूपं राजानः शास्तारं दण्डधारिणम् ॥
पिता माता दुग्धमुखं स्तनान्धं बालकं यथा । कामिन्यः कोटिकन्दर्पलीलालावण्यधारिणम् ॥
कंसश्च कालपुरुषं वैरिणं तस्य बान्धवाः । मल्ला मृत्युपदं चैव प्राणतुल्यं च यादवाः ॥
नमस्कृत्य मुनीन्विप्रान्पितरं मातरं गुरुम् । जगाम मञ्चकाभ्यासं हस्ते कृत्वा सुदर्शनम् ॥
दृष्ट्वा भक्तं भक्तबन्धुः कृपया च कृपानिधिः । आकृष्य मञ्चकात्कंसं जघान लीलया मुने
राजा ददर्श विश्वं च सर्वं कृष्णमयं परम् । पुरतो रत्नयानं च हीरकाहारभूषितम् ॥
ययौ विष्णुपदं स्फीतो दिव्यरूपं विधाय च । तेजो विवेश परमं कृष्णपादाम्बुजे मुने ॥
निवृत्य तस्य सत्कारं ब्राह्मणेभ्यो धनं ददौ । ददौ राज्यं राजच्छत्रमुग्रसेनाय धीमते ॥
स बभूव नृपेन्द्रश्च चन्द्रवंशसमुद्भवः । विललाप कंसमाता पत्नीवर्गश्च तत्पिता ॥९१॥
बान्धवा मातृवर्गश्च भगिनी भ्रातृकामिनी । दर्शनं देहि राजेन्द्र समुत्तिष्ठ नृपासने ॥
राज्यं रक्ष धनं रक्ष बान्धवं बलमेव च । क यासि बान्धवान्हित्वा त्वमनाथान्महाबल ॥
ब्रह्मादिस्तम्बपर्यन्तमसंख्यं विश्वमेव च । सर्वं चराचराधारं यः सृजत्येव लीलया ॥
ब्रह्मेशशेषधर्माश्च दिनेशश्च गणेश्वरः । मुनीन्द्रवर्गो देवेन्द्रो ध्यायते यमहर्निशम् ॥
वेदाः स्तुवन्ति यं कृष्णं स्तौति भीता सरस्वती । स्तौति यं प्रकृतिर्दृष्टा प्राकृतं प्रकृतेः परम्
स्वेच्छामयं निरीहं च निर्गुणं च निरञ्जनम् । परात्परतरं ब्रह्म परमात्मानमीश्वरम् ॥
नित्यं ज्योतिःस्वरूपं च भक्तानुग्रहविग्रहम् । नित्यानन्दं च नित्यं च नित्यमक्षरविग्रहम् ॥
सोऽवतीर्णो हि भगवान्भारावतरणाय च । गोपालबालवेषश्च मायेशो मायया प्रभुः ॥
स यं हन्ति च सर्वेशो रक्षिता तस्य कः पुमान् । स यं रक्षति सर्वात्मा तस्य हन्ता न कोऽपि च
इत्येवमुक्त्वा सर्वश्च विरराम महामुने । ब्राह्मणान्भोजयामास तेभ्यः सर्वं धनं ददौ ॥
भगवानपि सर्वात्मा जगाम पितुरन्तिकम् । छित्त्वा च लोहनिगडं तयोर्मोक्षं चकार सः
ननाम दण्डवद्भूमौ मातरं पितरं तथा । तुष्टाव भक्त्या देवेशो भक्तिनम्रात्मकंधरः ॥

श्रीभगवानुवाच--

पितरं मातरं विद्यामन्त्रदं गुरुमेव च । यो न पुष्णाति पुत्रो यावज्जीवं च सोऽशुचिः
सर्वेषामपि पूज्यानां पिता वन्द्यो महान् गुरुः । पितुः शतगुणैर्माता गर्भधारणपोषणात्

---

१ क. चूर्णं । २ क. भूयः ।

रामजन्मनि मद्धेतोस्त्वया कान्ते तपः कृतम् । तपःप्रभावान्मां कान्तं भज श्रीकृष्णजन्मनि
अधुना सुखसंभोगं कृत्वा गच्छ ममाऽऽलयम् । सुदुर्लभं च गोलोकं जरामृत्युहरं परम् ॥
इत्युक्त्वा श्रीनिवासश्च कृत्वा तामेव वक्षसि । नग्नां चकार शृङ्गारं चुम्बनं चापि कामुकीम्
सा सस्मिता च श्रीकृष्णं नवसंगमलज्जिता । चुचुम्ब गण्डे क्रोडे तं चकार कमला यथा
सुरतेर्विरतिर्नास्ति दंपती रतिपण्डितौ । नानाप्रकारसुरतं बभूव तत्र नारद ॥ ६१ ॥
स्तनश्रोणियुगं तस्या विक्षतं च चकार ह । भगवान्नखरैस्तीक्ष्णैर्दशनैरधरं वरम् ॥६२॥
निशावसानसमये वीर्याधानं चकार सः । सुखसंभोगयोगेन मूर्छामाप च सुन्दरी ॥६३॥
तत्राऽऽजगाम सा तन्द्रा कृष्णवक्षःस्थलस्थिताम् । बुबुधे न दिवारात्रं स्वर्गं मर्त्यं जलं स्थलम्
सुप्रभाता च रजनी बभूव रजनीपतिः । पत्युर्व्यतिक्रमेणैव लज्जयेव मलीमसः ॥ ६९ ॥
अथाऽऽजगाम गोलोकाद्रथो रत्नविनिर्मितः । जगाम तेन तं लोकं धृत्वा दिव्यकलेवरम्
वह्निशुद्धांशुकाधानं रत्नभूषणभूषितम् । प्रतप्तकाञ्चनाभासं नित्यं जन्मादिवर्जितम् ॥
सा बभूव च तत्रैव गोपी चन्द्रमुखी मुने । गोप्यः कतिविधास्तस्या बभूवुः परिचारिकाः
भगवानपि तत्रैव क्षणं स्थित्वा स्वमन्दिरम् । जगाम यत्र नन्दश्च स नन्दो नन्दनन्दनः ॥
अथ कंसो निशायां च निद्रायां भयविह्वलः । ददर्श दुःखदं स्वप्नमात्मनो मृत्युसूचकम्
ददर्श सूर्यं भूमिस्थं चतुःखण्डं नभश्च्युतम् । दशखण्डं चन्द्रबिम्बं भूमिस्थं खाच्च्युतं मुने
पुरुषान्विकृताकारान्रज्जुहस्तान्दिगम्बरान् । विधवां शूद्रपत्नीं च नग्नां च छिन्ननासिकाम्
हसन्तीं चूर्णतिलकां श्वेतकृष्णोच्चमूर्धजाम् । खड्गखर्परहस्तां च लोलजिह्वां च बिभ्रतीम् ॥
रुण्डमालासमायुक्तां गर्दभं महिषं वृषम् । भल्लूकं सूकरं काकं गृध्रं कङ्कं च वानरम् ॥
विरजं कुक्कुरं नक्रं शृगालं भस्मपुञ्जकम् । अस्थिराशिं तालफलं केशं कार्पासमुल्बणम् ॥
निर्वाणाङ्गारमुल्कां च शवं मर्त्यं चिताश्रितम् । कुलालतैलकाराणां चक्रं वक्रं कपर्दकम् ॥
श्मशानं दग्धकाष्ठं च शुष्ककाष्ठं कुशं तृणम् । गच्छन्तं च कबन्धं च नदन्तं मृतमस्तकम्
दग्धस्थानं भस्मयुतं तडागं जलवर्जितम् । दग्धमत्स्यं च लोहं च निर्वाणदग्धकाननम् ॥
गलत्कुष्ठं च वृषलं नग्नं च मुक्तमूर्धजम् । अतीव रुष्टं विप्रं च शपन्तं गुरुमीदृशम् ॥७९॥
अतीव रुष्टं भिक्षुं च योगिनं वैष्णवं नरम् । एवं दृष्ट्वा समुत्थाय कथयामास मातरम् ॥
पितरं भ्रातरं पत्नीं रुदतीं प्रेमविह्वलाम् । मञ्चरान्कारयामास स्थापयामास हस्तिनम् ॥
मल्लं सैन्यं च दोद्वारं कारयामास मङ्गलम् । सभां च कारयामास पुण्यं स्वस्त्ययनं शिवम्
यत्नेन योजयामास योगे युक्तं पुरोहितम् । उवास मञ्चके रम्ये धृत्वा खड्गं विलक्षणम् ॥
रणे नियोजयामास योद्धारं युद्धकोविदम् । वासयामास राजेन्द्रान्ब्राह्मणांश्च मुनीश्वरान् ॥

ब्राह्मणांश्च सुहृद्वर्गान्वर्मिष्ठान्रणकोविदान् । अथाऽऽजगाम गोविन्दो रामेण सह नारद ॥
महेशस्य धनुर्मध्यं बभञ्ज तत्र लीलया । शब्देन तस्य मथुरा बधिरा च बभूव ह ॥८६॥
विषादं प्राप कंसश्च मुदं च देवकीसुतः । उपस्थितः सभामध्ये गजं मल्लं निहत्य च
योगी ददर्श तं देवं परमात्मानमीश्वरम् ॥ ८७ ॥
यथा हृत्पद्ममध्यस्थं तादृशं च हरेव च । राजेन्द्र रूप राजानः शास्तारं दण्डधारिणाम् ॥
पिता माता दुग्धमुखं स्तनान्धं बालकं यथा । कामिन्यः कोटिकन्दर्पलीलालावण्यधारिणम्॥
कंसश्च कालपुरुषं वैरिणं तस्य बान्धवाः । मल्ला मृत्युपदं चैव प्राणतुल्यं च यादवाः ॥
नमस्कृत्य मुनीन्विप्रान्पितरं मातरं गुरुम् । जगाम मञ्चकाभ्याशं हस्ते कृत्वा सुदर्शनम्॥
दृष्ट्वा भक्तं भक्तबन्धुः कृपया च कृपानिधिः । आकृष्य मञ्चकात्कंसं जघान लीलया मुने
राजा ददर्श विश्वं च सर्वं कृष्णमयं परम् । पुरतो रत्नयानं च हीरकाहारभूषितम् ॥
ययौ विष्णुपदं स्फीतो दिव्यरूपं विधाय च । तेजो विवेश परमं कृष्णपादाम्बुजे मुने॥
निवृत्य तस्य सत्कारं ब्राह्मणेभ्यो धनं ददौ । ददौ राज्यं राजच्छत्रमुग्रसेनाय धीमते ॥
स बभूव नृपेन्द्रश्च चन्द्रवंशसमुद्भवः । विललाप कंसमाता पत्नीवर्गश्च तत्पिता ॥९६॥
बान्धवा मातृवर्गश्च भगिनी भ्रातृकामिनी । दर्शनं देहि राजेन्द्र समुत्तिष्ठ नृपासने ॥
राज्यं रक्ष धनं रक्ष बान्धवं बलदेव च । क्व यासि बन्धून्हित्वा त्वमनाथान्महाबल ॥
ब्रह्मादिस्तम्बपर्यन्तमसंख्यं विश्वमेव च । सर्वं चराचराधारं यः सृजत्येव लीलया ॥
महेशशेषधर्माश्च दिनेशश्च गणेश्वरः । मुनीन्द्रवर्गो देवेन्द्रो ध्यायते यमहर्निशम् ॥
वेदाः स्तुवन्ति यं कृष्णं स्तौति भीता सरस्वती । स्तौति यं प्रकृतिर्हृष्टा प्राकृतं प्रकृतेः परम्
स्वेच्छामयं निरीहं च निर्गुणं च निरञ्जनम् । परात्परतरं ब्रह्म परमात्मानमीश्वरम् ॥
नित्यं ज्योतिःस्वरूपं च भक्तानुग्रहविग्रहम् । नित्यानन्दं च नित्यं च नित्यप्रकृतिविग्रहम् ॥
सोऽवतीर्णो हि भगवान्भारावतरणाय च । गोपालबालवेषश्च मायेशो मायया प्रभुः ॥
स यं हन्ति च सर्वेशो रक्षिता तस्य कः पुमान् । स यं रक्षति सर्वात्मा तस्य हन्ता न कोऽपि च
इत्येवमुक्त्वा सर्वश्च विरराम महामुने । ब्राह्मणान्भोजयामास तेभ्यः सर्वं धनं ददौ ॥
भगवानपि सर्वात्मा जगाम पितुरन्तिकम् । छित्वा च लोहनिगडं तयोर्मोक्षं चकार सः
ननाम दण्डवद्भूमौ मातरं पितरं तथा । तुष्टाव भक्त्या देवेशो भक्तिनम्रात्मकंधरः ॥

श्रीभगवानुवाच--

पितरं मातरं विद्यादद्यं गुरुमेव च । यो न पुष्णाति पुरुषो यावज्जीवं च सोऽशुचिः
सर्वेषामपि पूज्यानां पिता वन्द्यो महान् गुरुः । पितुः शतगुणैर्माता गर्भधारणपोषणात्

१ क. 'तुष्टिं । २ क मुख्य ।

माता च पृथिवीरूपा सर्वेभ्यश्च हितैषिणी । नास्ति मातु. परो बन्धुः सर्वेषां जगतीतले
विद्यामन्त्रप्रदः सत्यं मातु परतरो गुरुः । न हि तस्मात्परः कोऽपि वन्द्यः पूज्यश्च वेदतः
इत्येवमुक्त्वा श्रीकृष्णो बलभद्रो ननाम च । माता चकार तौ क्रोडे पिता च सादरं मुने ॥
मिष्टान्नं परमं तौ च भोजयामास सादरम् । नन्दश्च भोजयामास गोपालान्परमादरम् ॥
मङ्गलं कारयामास भोजयामास ब्राह्मणान् । वसुर्वसुसमूहं च ब्राह्मणेभ्यो ददौ मुदा ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० कंसवधवसुदेव-
देवकीमोक्षणं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

अथ त्रिसप्ततितमोऽध्यायः ।

---

**नारायण उवाच—**

अथ कृष्णश्च सानन्दं नन्दं तं पितरं व्रजः । बोधयामास शोकार्तं दिव्यैराध्यात्मिकादिभिः
उच्चै रुदन्तं निश्चेष्टं पुत्रविच्छेदकातरम् । दत्त्वा तस्मै मणिश्रेष्ठमित्युवाच जगत्पतिः ॥

**श्रीभगवानुवाच—**

निबोध नन्द सानन्दं त्यज शोकं मुदं लभ । ज्ञानं गृहाण मद्दत्तं यद्दत्तं ब्रह्मणे पुरा ॥
यद्यद्दत्तं च शेषाय गणेशायेश्वराय च । दिनेशाय मुनीशाय योगीशाय च पुष्करे ॥
कः कस्य पुत्रः कस्तातः का माता कस्यचित्कुतः । आयान्ति यान्ति संसारं परं स्वकृतकर्मणा
कर्मानुसाराज्जन्तुश्च जायते स्थानभेदतः । कर्मणा कोऽपि जन्तुश्च योगीन्द्राणां नृपस्त्रियाम्
द्विजपत्न्यां क्षत्रियाणां वैश्यायां शूद्रयोनिषु । तिर्यग्योनिषु कश्चिच्च कश्चित्पश्वादियोनिषु
ममैव मायया सर्वे सानन्दा विषयेषु च । देहत्यागे विषण्णाश्च विच्छेदे बान्धवस्य च ॥८॥
प्रजाभूमिधनादीनां विच्छेदो मरणाधिकः । नित्यं भवति मूढश्च न च विद्वाञ्छुचा युतः
मद्भक्तो भक्तियुक्तश्च मद्यजी विजितेन्द्रियः । मन्मन्त्रोपासकश्चैव मत्सेवानिरतः शुचिः
मद्भयाद्वाति वातोऽयं रविर्भाति च नित्यशः । भाति चन्द्रो महेन्द्रश्च कालभेदे च वर्षति
वह्निर्दहति मृत्युश्च चरत्येव हि जन्तुषु । बिभर्ति वृक्षः कालेन पुष्पाणि च फलानि च
निराधारश्च वायुश्च वाय्वाधारश्च कच्छपः । शेषश्च कच्छपाधारः शेषाधाराश्च पर्वताः ॥
तदाधाराश्च पातालाः सप्त एव हि पङ्क्तिनः । निश्चलं च जलं तस्माज्जलस्था च वसुंधरा
सप्तस्वर्गं धराधारं ज्योतिश्चक्रं ग्रहाश्रयम् । निराधारश्च वैकुण्ठो ब्रह्माण्डेभ्यः परो वरः ॥
तत्परश्चापि गोलोकः पञ्चाशत्कोटियोजनात् । ऊर्ध्वे निराश्रयश्चापि रत्नसारविनिर्मितः ॥
सप्तद्वार. सप्तसार: परिखासप्तसंयुतः । लक्षप्राकारयुक्तश्च नद्या विरजया युतः ॥१९॥

वेष्टितो रत्नशैलेन शतशृङ्गेण चारुणा । योजनायुतमानं च यस्यैकं शृङ्गमुज्ज्वलम् ॥
शतकोटियोजनश्च शैल उच्छ्रित एव च । दैर्घ्यं तस्य शतगुणं प्रस्थं च लक्षयोजनम् ॥
योजनायुतविस्तीर्णस्तत्रैव रासमण्डलः । अमूल्यरत्ननिर्माणो वर्तुलश्चन्द्रबिम्बवत् ॥२०॥
पारिजातवनेनैव पुष्पितेन च वेष्टितः । कल्पवृक्षसहस्रेण पुष्पोद्यानशतेन च ॥ २१ ॥
नानाविधैः पुष्पवृक्षैः पुष्पितेन च चारुणा । त्रिकोटिरत्नभवनो गोपीलक्षैश्च रक्षितः ॥
रत्नप्रदीपयुक्तश्च रत्नतल्पसमन्वितः । नानाभोगसमायुक्तो मधुवापीशतैर्वृतः ॥ २३ ॥
पीयूषवापीयुक्तश्च कामभोगसमन्वितः । गोलोकगृहसंख्यानवर्णने वा विशारदः ॥२४॥
न कोऽपि वेद विद्वान्वा वेद विद्वान्व्रजेश्वरः । अमूल्यरत्ननिर्माणभवनानां त्रिकोटिभिः ॥
शोभितं सुन्दरं रम्यं राधाशिबिरमुत्तमम् । अमूल्यरत्नकलशैरुज्ज्वलं रत्नदर्पणैः ॥२६॥
अमूल्यरत्नस्तम्भानां राजिभिश्च विराजितम् । नानाचित्रविचित्रैश्च चित्रितं श्वेतचामरैः ॥
माणिक्यमुक्तासंसक्तं हीराहारसमन्वितम् । रत्नप्रदीपसंसक्तं रत्नसोपानसुन्दरम् ॥२८॥
अमूल्यरत्नपात्रैश्च तल्पराजिविराजितम् । अमूल्यरत्नचित्रैश्च त्रिभिश्चित्रविचित्रितैः ॥
तिसृभिः परिखाभिश्च त्रिभिर्द्वारैश्च दुर्गमैः । युक्तं षोडशकक्षाभिः प्रतिद्वारेषु वाऽन्तरम् ॥
गोपीषोडशलक्षैश्च संनियुक्तैरितस्ततः । वह्निशुद्धांशुकाधानै रत्नभूषणभूषितैः ॥३१॥
तप्तकाञ्चनवर्णाभिः शतचन्द्रसमन्वितैः । राधिकाकिंकरीवर्गैर्युक्तमभ्यन्तरं वरम् ॥३२॥
अमूल्यरत्ननिर्माणप्राङ्गणं सुमनोहरम् । अमूल्यरत्नस्तम्भानां समूहैश्च सुशोभितम् ॥
रत्नमङ्गलकुम्भैश्च फलपल्लवसंयुतैः । संयुतं रत्नवेदीभिर्मुक्तायुक्ताभिरीप्सितम् ॥३४॥
अमूल्यरत्नमुकुरैः शोभितं सुन्दरैरहो । अमूल्यरत्ननिर्माणं भवनानां वरं गृहम् ॥३५॥
रत्नसिंहासनस्था च गोपीलक्षैश्च सेविता । कोटिपूर्णेन्दुशोभाढ्या श्वेतचम्पकसंनिभा ॥
अमूल्यरत्ननिर्माणभूषणैश्च विभूषिता । अमूल्यरत्नवसना बिभ्रती रत्नदर्पणम् ॥ ३७ ॥
रत्नपद्मं च रुचिरं स्वयं दक्षिणहस्ततः । दाडिम्बकुसुमाकारं सिन्दूरं सुमनोहरम् ॥
सुशोभितं मृगमदैरिष्टैश्चन्दनबिन्दुभिः । दधती कबरीभारं मालतीमाल्यमण्डितम् ॥३९॥
रचितं वामभागेन मुनीन्द्राणां मनोहरम् । एवंभूतं(ता)त्र राधा गोपीभिः परिसेविता ॥
श्वेतचामरहस्ताभिस्तत्तुल्याभिश्च सर्वतः । अमूल्यरत्ननिर्माणैर्भूषिताभिश्च भूषणैः ॥४१॥
मत्प्राणाधिष्ठातृदेवी देवीनां प्रवरा वरा । सुदाम्नः सा च शापेन वृषभानसुताऽधुना ॥
शताब्दिको हि विच्छेदो भविष्यति मया सह । तेन भाराबतरणं करिष्यामि भुवः प्रिये ॥
तदा यास्यामि गोलोकं तया सार्धं सुनिश्चितम् । त्वदा यशोदया चाऽपि गोपैर्गोपीभिरेव च

---

१ क. 'पुरः ।

प्रह्लादश्चापि दैत्यानां बलिष्ठानां बलिः स्वयम् । नारायणर्षिर्भगवाञ्ज्ञानिनां मध्य एव च ॥
हनूमान्वानराणां च पाण्डवानां धनंजयः । मनसा नागकन्यानां वसूनां द्रोण एव च ॥
द्रोणो जलधराणां च वर्षाणां भारतं तथा । कामिनां कामदेवोऽहं रम्भा च कामुकीषु च
गोलोकश्चास्मि लोकानामुत्तमः सर्वतः परः । मातृकासु शान्तिरहं रतिश्च सुन्दरीषु च ॥
धर्मोऽहं साक्षिणां मध्ये संध्या च वासरेषु च । देवेष्वहं च माहेन्द्रो राक्षसेषु विभीषणः ॥
कालाग्निरुद्रो रुद्राणां संहारो भैरवेषु च । शङ्खेषु पाञ्चजन्योऽहमङ्गेष्वपि च मस्तकः ॥
परं पुराणसूत्रेषु चाहं भागवतं वरम् । भारतं चेतिहासेषु पञ्चरात्रेषु कापिलम् ॥७९॥
स्वायंभुवो मनूनां च मुनीनां व्यासदेवकः । स्वधाऽहं पितृपत्नीषु स्वाहा वह्निप्रियासु च ॥
यज्ञानां राजसूयोऽहं यज्ञपत्नीषु दक्षिणा । शस्त्रास्त्रज्ञेषु रामोऽहं जमदग्निसुतो महान् ॥
पौराणिकेषु सूतोऽहं नीतिमत्स्वङ्गिरा मुनिः । विष्णुव्रतं व्रतानां च बलानां दैवमेव च ॥
ओषधीनामहं दूर्वा तृणानां कुशमेव च । धर्मकर्मसु सत्यं च स्नेहपात्रेषु पुत्रकः ॥
अहं व्याधिश्च शत्रूणां ज्वरो व्याधिष्वहं तथा । मद्भक्तिष्वपि मद्दास्यं वरेषु च वरः स्मृतः ॥
आश्रमाणां गृहस्थोऽहं संन्यासी च विवेकिनाम् । सुदर्शनं च शस्त्राणां कुशलं च शुभाशिषाम्
ऐश्वर्याणां महाज्ञानं वैराग्यं च सुखेष्वहम् । मि(इ)ष्टवाक्यं प्रीतिदेषु दानेषु चाऽऽत्मदानकम्
संचयेषु धर्मकर्म कर्मणां च मदर्चनम् । कठोरेषु तपश्चाहं फलेषु मोक्ष एव च ॥८७॥
अष्टसिद्धिषु प्राकाम्यमहं काशी पुरीषु च । नगरेषु तथा काञ्ची स देशो यत्र वैष्णवः ॥
सर्वाधारेषु स्थूलेषु अहमेव महान्विराट् । परमाणुरहं विश्वे महासूक्ष्मेषु नित्यशः ॥८९॥
वैद्यानामाश्विनीपुत्रौ चौषधीषु रसायनम् । धन्वन्तरिर्मन्त्रविदां विपादः क्षयकारिणाम् ॥
रागाणां मेघमल्लारः कामोदस्तत्प्रियासु च । मत्पार्षदेषु श्रीदामा मद्बन्धुष्वहमुद्धवः ॥
पशुजन्तुषु गौश्चाहं चन्दनं काननेषु च । तीर्थपूतश्च पूतेषु निःशङ्केषु च वैष्णवः ॥९२॥
न वैष्णवात्परः प्राणी मन्मन्त्रोपासकश्च यः । वृक्षेष्वङ्कुररूपोऽहमाकारः सर्ववस्तुषु ॥
अहं च सर्वभूतेषु मयि सर्वं च संततम् । यथा वृक्षे फलान्येव फलेषु चाङ्कुरस्तरोः ॥
सर्वकारणरूपोऽहं न च मत्कारणं परम् । सर्वेशोऽहं न मेऽधीशो ह्यहं कारणकारणम् ॥
सर्वेषां सर्वबीजानां प्रवदन्ति मनीषिणः । मन्मायामोहितजना मां न जानन्ति पापिनः
पापप्रदेन दुर्बुद्ध्या विधिना वधिनेन च । स्वात्माऽहं सर्वजन्तूनां स्वाम्यहं नाहनः स्वयम्
यशाहं हात्कपन्तम ज्ञुत्पिपासादयस्तथा । गते मयि तथा यान्ति नरदेहे(वे)यथाऽनुगाः ॥
हे ब्रजेश नन्द तान ज्ञानं ज्ञात्वा ब्रजं व्रज । कथयस्व च तां राधां यशोदां ज्ञानमेव च ॥

१ क. 'धर्मेष' । २ ख. 'वदत' ।

ज्ञात्वा ज्ञानं व्रजेशश्च जगाम स्वानुगैः सह । गत्वा च कथयामास ते द्वे च योषितां वरे ॥
ते च सर्वे जहुः शोकं महाज्ञानेन नारद । कृष्णो यद्यपि निर्लिप्तो मायेशो मायया रतः ॥
यशोदया प्रेरितश्च पुनरागत्य माधवम् । तुष्टाव परमानन्दं नन्दश्च नन्दनन्दनम् ॥१०२॥
सामवेदोक्तस्तोत्रेण कृतेन ब्रह्मणा पुरा । पुत्रस्य पुरतः स्थित्वा रुरोद च पुनः पुनः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० नन्दादि-
शोकप्रमोचनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

=====

अथ चतुःसप्ततितमोऽध्यायः ।

---

नारायण उवाच—

श्रीकृष्णः परमानन्दः परिपूर्णतमः प्रभुः । परमात्मा च परमो भक्तानुग्रहकारकः ॥
भुवो भारावतरणो निर्गुणः प्रकृतेः परः । परात्परस्तु भगवान्ब्रह्मेशशेषवन्दितः ॥२॥
तुष्टो नन्दस्तवं श्रुत्वा तमुवाच जगत्पतिः । आगच्छन्तं गोकुलाच्च विरहज्वरकातरम् ॥

श्रीभगवानुवाच—

गच्छ नन्दव्रजं नन्द त्यज शोकं भ्रमं भुवि । शृणु सत्यं परं ज्ञानं शोकग्रन्थिनिकृन्तनम् ·
वायुश्च भूमिराकाशो जलं तेजश्च पञ्चमम् । उक्तः श्रुतिगणैरेतैः पञ्चभूतैश्च नित्यशः
सर्वेषां देहिनां तात देहश्च पाञ्चभौतिकः । मिथ्याभ्रमः कृत्रिमश्च स्वप्नवन्माययाऽन्वितः
देहं गृह्णन्ति सर्वेषां पञ्च भूतानि नित्यशः । मायासंकेतरूपं तदभिज्ञानं भ्रमात्मकम् ॥
को वा कस्य सुतस्तात का स्त्री कस्य पतिस्तु वा । कर्मणा भ्रमणं शश्वत्सर्वेषां भूरिजन्मनि
कर्मणा जायन्ते जन्तुः कर्मणैव प्रलीयते । सुखं दुःखं भयं शोकं कर्मणा च प्रपद्यते ॥
केषां वा जन्म स्वर्गेषु केषां वा ब्रह्मणो गृहे । केषां विप्रेषु क्षत्त्रेषु केषां वा वैश्यशूद्रयोः
अतिनीचेषु केषां वा केषां कृमिषु विट्सु च । पशुपक्षिषु केषां वा केषां वा क्षुद्रजन्तुषु ॥
पुनः पुनर्भ्रमन्त्येव सर्वे तात स्वकर्मणा । करोति कर्म निर्मूलं मद्भक्तो मत्प्रियः सदा ॥
सत्यं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् । पञ्चविंशत्सहस्राणां युगानां निधनं मनोः ॥
मनोः समं महेन्द्रस्य परमायुर्विनिर्मितम् । चतुर्दशेन्द्रविच्छित्तौ ब्रह्मणो दिनमुच्यते ॥
एवं परिमिता रात्रिः कालविद्भिर्विनिर्मिता । एवं परिमिता मासा वर्षं च परिनिश्चितम्
ब्रह्मणश्च वर्षशतं परमायुर्विनिर्मितम् । निमेषमात्रं कालोऽयं ब्रह्मणो निधने मम ॥१६॥
ब्रह्मादितृणपर्यन्तं सर्वं विश्वे विनिर्मितम् । सत्योऽहं परमात्मा च भक्तानुग्रहविग्रहः ॥
मन्मन्त्रोपासकः सत्यो देहं त्यक्त्वा धरासु च । यास्यत्येव हि गोलोकं छित्वा कर्म पुरातनम्

असंख्यब्रह्मणां पाते न भवेत्तस्य पातनम् । गृह्णाति नित्यं स्वं देहं जन्ममृत्युजरापहम्
न नन्द मम भक्तानामशुभं विद्यते क्वचित् । नित्यं सुदर्शनं तं च परिरक्षति सर्वतः ॥
भक्तो हि बलवान्भक्ताश्चिन्तितोऽहं न चिन्तितः । अहं स्वामी च तस्यैव न मे स्वामी पिता मम ॥
पुत्रबुद्धिं परित्यज्य भज मां ब्रह्मरूपिणम् । छित्त्वा च ब्रह्मनिगडं गोलोकं तद्व्रज स्वयम्
कथयस्व यशोदां च गोपीं गोपगणं व्रज । तैश्च सर्वैर्जनैः शोकं त्यज स्वमन्दिरं व्रज
इत्येवमुक्त्वा भगवान्विरराम च संसदि । पप्रच्छ पुनरेवं तं नन्दश्चाऽऽनन्दसंप्लुतः ॥

नन्द उवाच—

वद सांसारिकं ज्ञानं येन यास्यामि त्वत्पदम् । मूढोऽहं परमानन्द श्रुतीनां जनको भवान्
नन्दस्य वचनं श्रुत्वा सर्वज्ञो भगवान्स्वयम् । आह्निकं कथयामास श्रुतिभिर्न श्रुतं हि यत्

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसंवादे
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## अथ पञ्चसप्ततितमोऽध्यायः ।

श्रीभगवानुवाच—

शृणु नन्द प्रवक्ष्यामि ज्ञानं च परमाद्भुतम् । सुगोपनीयं वेदेषु पुराणेषु च दुर्लभम् ॥
न विश्वासो हि नारीषु संततं कुलटासु च । मोक्षमार्गार्गलास्वेव भ्रममायास्वसूषु च ॥२॥
हरिभक्तेरसाध्वीनां विरुद्धासु युवासु च । बीजरूपासु नाशानां प्रमदासु व्रजेश्वर ॥
नित्यं च प्रातरुत्थाय रात्रिवासो विहाय च । अभीष्टदेवं हृत्पद्मे ब्रह्मरन्ध्रे गुरुं परम् ॥
विचिन्त्य मनसा प्रातःकृत्यं कृत्वा सुनिश्चितम् । स्नानं करोति सुप्राज्ञो निर्मलेषु जलेषु च
न संकल्पं च कुरुते भक्तः कर्मनिकृन्तनः । स्नात्वा हरिं स्मरेत्संध्यां कृत्वा याति गृहं प्रति
प्रक्षाल्य पादौ प्रविशेद्विधाय धौतवाससी । पूजयेत्परमात्मानं मामेव मुक्तिकारणम् ॥
शालग्रामे मणौ यन्त्रे प्रतिमायां जलेऽग्नौ च । तथा च विप्रे गवि च गुरुष्वेव विशेषतः ॥
घटेऽष्टदलपद्मे च पात्रे चन्दननिर्मिते । आवाहनं च सर्वत्र शालग्रामे जले न च ॥९॥
मन्त्रानुरूपध्यानेन ध्यात्वा मां पूजयेद्व्रती । षोडशोपचारद्रव्याणि दद्यान्मूलेन भक्तितः ॥
श्रीदामानं सुदामानं वसुदामानमेव च । वीरभानुं शूरभानुं गोपांश्च प्रपूजयेत् ॥
सुनन्दनन्दकुमुदं पार्षदं मे सुदर्शनम् । लक्ष्मीं सरस्वतीं दुर्गां राधां गङ्गां वसुंधराम् ॥
गुरुं च तुलसीं शंभुं कार्तिकेयं विनायकम् । नवग्रहांश्च दिक्पालानादितः पूजयेत्सुधीः

१ ध. साधु भूमिषु ।

देवषट्कं च संपूज्य सर्वादौ विघ्नविघ्नतः । गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम्
श्रुतौ विनिर्मितान्देवान्मोक्षदान्कर्मकृन्तनान् । गणेशं विघ्ननाशाय सूर्यं व्याधिविनाशिने
वह्निं प्राप्तिनिमित्तेन शान्तौ शुद्धौ भवेद्ध्रुवम् । विष्णुं मोक्षनिमित्तेन ज्ञानदानाय शंकरम् ॥
बुद्धिमुक्तिनिमित्तेन पार्वतीं पूजयेत्सुधीः । पुष्पाञ्जलित्रयं दत्त्वा स्वस्तोत्रं कवचं पठेत् ॥
गुरुं प्रणम्य संपूज्य तत्पश्चात्प्रणमेत्सुरम् । कृत्वाऽऽह्निकं च संपूज्य यथासुखमुदीरितम्
समाचरेत्स्वकर्मैतद्वेदोक्तं स्वात्मशुद्धये । विष्ठां न पश्येत्प्राज्ञश्च व्याधिबीजस्वरूपिणीम् ॥
मूत्रं च व्याधिबीजं च परं नरककारणम् । लिङ्गं योनिं पापदुःखव्याधिदारिद्र्यदायिनीम्
ऊरुं मुखं स्तनं स्त्रीणां कटाक्षं हास्यमेव च । विनाशबीजं रूपं च विपदां कारणं सदा ॥
दिवाभोगं च स्वस्त्रीणां स्वालापं परिवर्जयेत् । रोगाणां कारणं चैव चक्षुषोः कर्णयोस्तथा
एकतारं च गगनं न पश्येत्तु रुजा भयात् । दैवाद्दृष्ट्वा हरिं स्मृत्वा सप्तधा नारदं जपेत् ॥
अस्तकाले रविं चन्द्रं न पश्येद्व्याधिकारणम् । खण्डं समुदितं चन्द्रं न पश्येद्व्याधिकारणम्
जलस्थं च रविं चन्द्रं दृष्ट्वा शोकं लभेन्नरः । बन्धुविच्छेदहेतुं च न पश्येत्परमैथुनम् ॥२९॥
एकत्र शयनं स्थानं भोजनं च गतिं तथा । न कुर्यात्पापिना सार्धं सर्वनाशस्य लक्षणम् ॥
आलापाद्गात्रसंस्पर्शाच्छयनाश्रयभोजनात् । संचरन्ति ध्रुवं पापास्तैलबिन्दुरिवाम्भसा ॥
हिंस्रजन्तुसमीपं च न गच्छेद्दु सकारणम् । खलेन सार्धं मिलनं न कुर्याच्छोककारणम् ॥
ब्राह्मणानां गवां चैव वैष्णवानां विशेषतः । न कुर्याद्धिंसनं हानिं सर्वनाशस्य कारणम् ॥
देवदेवलविप्राणां वैष्णवानां तथैव च । वित्तं धनं च न हरेत्सर्वनाशस्य कारणम् ॥३०॥
स्वदत्तं परदत्तं वा ब्रह्मवित्तं हरेत्तु यः । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥३१॥
गृध्रः कोटिसहस्राणि शतजन्मानि सूकरः । श्वापदः शतजन्मानि गण्डकः सप्तजन्मानि ॥
घोटकः सप्तजन्मानि कुम्भीरः पञ्चजन्मसु । पुंश्चलीनां योनिकीटं शतजन्मसु निश्चितम् ॥
कलकीटं च तैलं च शतजन्मसु नारद । गोधिका सप्तजन्मानि गर्दभः सप्तजन्मसु ॥३२॥
सप्तजन्मानि मार्जारो नकुलस्त्रिषु जन्मसु । उष्ट्रः श्वा जन्मशतं खरश्चापि तथैव च ॥
क्रूरसर्पश्च शार्दूलो महिषः सप्तजन्मसु । भेकश्च शतजन्मानि छागलः सप्तजन्मसु ॥
भल्लूकः शतजन्मानि सृगालः सप्तजन्मसु । ततो जडश्च भवति ब्रह्मस्वहरणाद्ध्रुवम् ॥
कुम्भीपाके च पच्यन्ते पापिनो ब्रह्मणः शतम् । दक्षिणां विप्रमुद्दिश्य तत्काले नैव दीयते
एकरात्रे व्यतीते तु तद्दानं द्विगुणं भवेत् । मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम् ॥
संवत्सरे व्यतीते तु स दाता नरकं व्रजेत् । दाता न दीयते मूर्खो गृहीता च न याचते ॥

१ क. दात°।

उभौ तौ नरकं यातो दाता व्याधियुतो भवेत् । विप्राणां हिंसनं कृत्वा वंशहानिं लभेद्ध्रुवम्
धनं लक्ष्मीं परित्यज्य भिक्षुकश्च भवेद्व्रजन् । देवं च ब्राह्मणं दृष्ट्वा न नमेद्यो लभेच्छुचम् ॥
न कुर्याद्गुरुभक्तिं यो लभते रौरवं ध्रुवम् । या स्त्री मूढा दुराचारा स्वपतिं हरिरूपिणम्
न पश्येत्तर्जनं कृत्वा कुम्भीपाके व्रजेद्ध्रुवम् । वाक्तर्जनाद्भवेत्काको हिंसनात्सूकरो भवेत्
सर्पो भवति कोपेन दर्पेण गर्दभो भवेत् । कुक्कुरी च कुवाक्येनाप्यन्धश्च विषदर्शनात् ॥
पतिव्रता च वैकुण्ठं पत्या सह व्रजेद्ध्रुवम् । शिवं दुर्गां गणपतिं सूर्यं विप्रं च वैष्णवम् ॥
विष्णुं निन्दति यो मूढः स महारौरवं व्रजेत् । पितरं मातरं पुत्रं सतीं भार्यां गुरुं तथा ॥
अनाथां भगिनीं कन्यां विनिन्द्य नरकं व्रजेत् । विप्रभक्तिविहीनाश्च क्षत्रविट्शूद्रयोनिजाः
हरिभक्तिविहीनाश्च पच्यन्ते नरके ध्रुवम् । पतिभक्तिविहीनाश्च युवत्यश्च नराधमाः ॥
शालग्रामजलं विष्णुप्रसादं ये च भुञ्जते । तीर्थं पुनन्ति ते विप्राः शतं पुंसां वसुंधराम् ॥
पितॄन्देवान्समभ्यर्च्य खादन्मांसं द्विजः शुचिः । यो भक्षति वृथा मांसं स महारौरवं व्रजेत्
मत्स्यांश्च कामतो जग्ध्वा चोपवासं वसेद्द्विजः । प्रायश्चित्तं ततः कुर्याद्व्रतं चान्द्रायणं चरेत्
कामतो ब्राह्मणो मत्स्यं भुङ्क्ते यो ज्ञानदुर्बलः । सोऽशुचिः सततं नन्द हन्ति पुण्यं पुराकृतम्
विष्णोरुच्छिष्टभोजी यो मत्स्यं मांसं न खादति । पदे पदेऽश्वमेधस्य लभते निश्चितं फलम्
एकादशीं ये कुर्वन्ति कृष्णजन्माष्टमीव्रतम् । शतजन्मकृतात्पापान्मुच्यन्ते नात्र संशयः
यद्बाल्ये यच्च कौमारे वार्धके यच्च यौवने । भस्मीभूतानि कुर्वन्ति पातकानि कृतानि च ॥
एकादशीदिने भुङ्क्ते कृष्णजन्माष्टमीव्रते । त्रैलोक्यजनितं पापं सोऽपि भुङ्क्ते न संशयः
आतुरे नियमो न स्यादपि वृद्धे च बालके । भक्तस्या द्विगुणं दत्त्वा ब्राह्मणाय शुचिर्भवेत्
यो भुङ्क्ते शिवरात्रौ च श्रीरामनवमीदिने । उपवासे समर्थश्च स महारौरवं व्रजेत् ॥
कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च । नरश्चाण्डालयोनिः स्यात्स्त्रीतैलमांससेवनात् ॥
मत्स्यं मांसं मसूरं च कांस्यपात्रे च भोजनम् । आर्द्रकं रक्तशाकं च रवौ च परिवर्जयेत् ॥
अन्यथा नरकं याति कुम्भीपाकं न संशयः । रजस्वलान्नं वेश्यान्नं मदिरान्नं व्रजेश्वर ॥
यो भुङ्क्ते ब्राह्मणो दैवाद्विड्भोजी स भवेद्ध्रुवम् । यद्यद्वा कुरुते कर्म न तस्य फलभाग्भवेत्
स भवेदशुचिर्नित्यं मासमात्रं तस्य सूतकम् । नारी वेश्या प्रतिज्ञेया चतुष्पुरुषगामिनी ॥
पाके च पितृदेवानामधिकारो न तद्भवेत् । यद्वामयाजिनामन्नं शूद्रश्राद्धान्नभोजनम् ॥
भुक्त्वा च नरकं याति यावच्चन्द्रदिवाकरौ । शूद्राणां श्राद्धदिवसे तदन्नं भुञ्जते द्विजाः ॥
कुम्भीपाके च पच्यन्ते यावद्वै ब्रह्मणः शतम् । यः शूद्रेणाभ्यनुज्ञातो भुङ्क्ते श्राद्धदिनेऽन्यतः

१ क. स्याद् ।

सुरापीति स विज्ञेयः सर्वधर्मबहिष्कृतः। असिजीवी मषीजीवी देवलो वृषवाहकः ॥
शूद्राणां शवदाही च यो हि शूद्रापतिर्द्विजः। स शूद्रवद्बहिष्कार्यस्तदन्नं विट्समं सताम्
नोपतिष्ठति यः पूर्वां नोपास्ते यस्तु पश्चिमाम्। स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः
संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत् ॥
वाममन्त्रोपासकश्च ब्राह्मणो नरकं व्रजेत्। नदीगर्भे च गर्ते च वृक्षमूले जलान्तिके ॥
देवान्तिके सस्यभूमौ पुरीषं नोत्सृजेद्बुधः। वल्मीकमूषकोत्खातां मृदमन्तर्जलां तथा ॥
शौच वशिष्टां गेहाच्च नाऽऽद्द्यात्लेपसंभवाम्। अन्तःप्राणिपरीक्ष्या च हलोत्खातां व्रजेश्वर
आलवालोत्थितां चैव सस्यक्षेत्रोत्थिता तथा। वृक्षमूलोत्थितां नन्द नदीगर्भोत्थितां तथा
परित्यजेन्मृदस्त्वेताः सकला. शौचसाधने। कूष्माण्डघातिका या स्त्री दीपनिर्वाणकः पुमान्
सप्तजन्म भवेद्रोगी दरिद्रो जन्मजन्मनि। प्रदीपं शिवलिङ्गं च शालग्रामं मणिं तथा ॥
प्रतिमा यज्ञसूत्रं च सुवर्णं शङ्खमेव च। हीरकं च तथा मुक्ता गोमूत्रं गोमयं घृतम् ॥७८॥
शालग्रामशिलातोयं भूमौ त्यक्त्वा व्रजेदधः। दरिद्रः कृपणः कुष्ठी वंशहीनोऽप्यभार्यकः॥
भूमिहीनः प्रजाहीनो बन्धुहीनश्च कुत्सितः। अन्धः पङ्गुर्वा खर्वश्च खञ्जश्चैवाङ्गहीनकः ॥
भवेत्क्रमेण पापी स ह्येतान्भूमौ त्यजेत्तु यः। दिवसे संध्ययोर्निद्रां स्त्रीसंभोगं करोति यः॥
सप्तजन्म भवेद्रोगी दरिद्र. सप्तजन्मसु। उदिते जगतीनाथे यः कुर्याद्दन्तधावनम्॥८२॥
स पापिष्ठः कथं ब्रूते पूजयामि जनार्दनम्। मृद्भस्मगोशकृत्पिण्डैस्तथा वालुकयाऽपि वा
कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पशतं दिवि। सहस्रपूजनात्सोऽपि लभते वाञ्छितं फलम्
लक्षं च पूजयेद्यस्तु शिवत्वं लभते ध्रुवम्। जीवन्मुक्तो भवेद्विप्रो लिङ्गमभ्यर्चयेत्तु य.॥
शिवपूजाविहीनश्च ब्राह्मणो नरकं व्रजेत्। मत्पूजितं प्रियतमं शिवं निन्दन्ति ये नराः॥
पच्यन्ते निरये तावद्यावद्वै ब्रह्मणः शतम्। पूजिते शिवलिङ्गे च यदि स्यात्केशवालुका॥
स महान्धो वालुकया केशेन यवनो भवेत्। क्षुद्रो दरिद्रः कृपणो व्याधिः स्यात्कुत्सिते
यथा ॥ ८८ ॥
सर्वेभ्यो मानहानिः स्यात्सर्वत्र नीचयोनिषु। सर्वेषु प्रियभक्तेषु ब्राह्मणश्च मम प्रियः ॥
ब्राह्मणाच्च प्रिया लक्ष्मीः सततं वक्षसि स्थिता। ततोऽधिका प्रिया राधा प्रिया भक्तास्ततोऽ-
धिका. ॥ ९० ॥
ततोऽधिक. शंकरो मे नास्ति मे शंकरात्प्रियः। महादेव महादेव महादेवेति वादिनः
पश्चाद्यामि च संत्रस्तो नामश्रवणलोभतः। मनो मे भक्तमूले च प्राणा राधात्मका ध्रुवम् ॥

१ क. 'दर्भे'।

आत्मा मे शंकरस्त्वं च शिव. प्राणाधिकश्च यः । आद्या नारायणी शक्तिः सृष्टिस्थित्यन्त-
कारिणी ॥ ९३ ॥
करोमि च यया सृष्टिं यया ब्रह्मादिदेवताः । यया जयति विश्वं च यया सृष्टिः प्रजायते
यया विना जगन्नास्ति मया दत्ता शिवाय सा । दया निद्रा च क्षुत्तृष्णा श्रद्धा क्षमा धृतिः
तुष्टि. पुष्टिस्तथा शान्तिर्लज्जाधिदेवता हि सा । वैकुण्ठे सा महालक्ष्मीर्गोलोके राधिका सती
मर्त्ये लक्ष्मीश्च क्षीरोदे दक्षकन्या सती च सा । सा दुर्गा मेनकाकन्या दैन्यदुर्गतिनाशिनी
स्वर्गलक्ष्मीश्च दुर्गा सा शान्तादीनां गृहे गृहे । सा वाणी सा च सावित्री विद्याधिष्ठातृदेवता॥
वह्नौ सा दाहिकाशक्तिः प्रभाशक्तिश्च भास्करे । शोभाशक्तिः पूर्णचन्द्रे जले शक्तिश्च शीतता
सस्यप्रसूता शक्तिश्च धारणा च धरासु सा । ब्राह्मण्यशक्तिर्विप्रेषु देवशक्तिः सुरेषु सा ॥
तपस्विनां तपस्या सा गृहिणां गृहदेवता । मुक्तिशक्तिश्च मुक्तानां माया सांसारिकस्य सा
मद्भक्तानां भक्तिशक्तिर्मयि भक्तिप्रदा सदा । नृपाणां राज्यलक्ष्मीश्च वणिजां लभ्यतारिणी
पारे संसारसिन्धूनां प्रवीणतरा तु तारिणी । सत्सु सद्बुद्धिरूपा सा मेधाशक्तिस्वरूपिणी
व्याख्याशक्तिः श्रुतौ शास्त्रे दातृशक्तिश्च दातृषु । क्षत्रादीनां विप्रभक्तिः पतिभक्तिः
सतीषु च ॥ १०४ ॥
एवंरूपा च या शक्तिर्मया दत्ता शिवाय सा । एवं ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि
प्रश्नं कोपि यदन्यत्तु तत्सर्वं कथयामि ते ॥ १०५ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं०
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

अथ षट्सप्ततितमोऽध्यायः ।

---

नन्द उवाच—

येषां च दर्शने पुण्यं पापं यस्य च दर्शने । तत्सर्वं वद सर्वेश श्रोतुं कौतूहलं मम ॥ १ ॥

श्रीभगवानुवाच—

सुब्राह्मणानां तीर्थानां वैष्णवानां च दर्शने । देवताप्रतिमादर्शी तीर्थस्नायी भवेन्नरः ॥ २ ॥
सूर्यस्य दर्शने भक्त्या सतीनां दर्शने तथा । संन्यासिनां यतीनां च तथैव ब्रह्मचारिणाम् ॥
भक्त्या गवां च वह्नीनां गुरूणां च विशेषतः । गजेन्द्राणां च सिंहानां श्वेताश्वानां तथैव च
शुकानां च पिकानां च खञ्जनानां तथैव च । हंसानां च मयूराणां चाषाणां शङ्खपक्षि

वत्सप्रयुक्तधेनूनामश्वस्थाना तथैव च । पतिपुत्रवतीना च नराणा तीर्थयायिनाम् ॥९॥
प्रदीपाना सुवर्णाना मणीना च विशेषत । मुक्ताना हीरकाणा च माणिक्याना महाशय ॥
तुलसीशुक्लपुष्पाणा दर्शनं पापनाशनम् । फलानि शुक्लधान्यानि घृतं दधि मधूनि च ॥
पूर्णकुम्भं च लाजांश्च राजेन्द्र दर्पणं जलम् । माला च शुक्लपुष्पाणा दृष्ट्वा पुण्य लभेन्नरः ॥
गोरोचनं च कर्पूरं रजतं च सरोवरम् । पुष्पोद्यानं पुष्पितं च दृष्ट्वा पुण्यं० ॥ १० ॥
शुक्लपक्षस्य चन्द्रं च पीयूष चन्दन तथा । कस्तूरीं कुङ्कुमं दृष्ट्वा नन्द पुण्यं० ॥ ११ ॥
पताकामक्षयवटं तरु देवोत्थितं शुभम् । देवालयं देवखातं दृष्ट्वा पुण्यं० ॥ १२ ॥
देवाश्रितं देवघटं सुगन्धिपवनं तथा । शङ्खं च दुंदुभिं दृष्ट्वा सद्य पुण्यं० ॥ १३ ॥
शुक्ति प्रवाळ रजत स्फटिकं कुशमूलकम् । गङ्गास्पद कुशं ताम्रं दृष्ट्वा पुण्यं० ॥१४॥
पुराणपुस्तकं शुद्धं सबीजं विष्णुयन्त्रकम् । स्निग्धदूर्वाक्षते रत्नं दृष्ट्वा पुण्यं० ॥१५॥
तपस्विना सिद्धमन्त्र समुद्र कृष्णसारकम् । यज्ञं महोत्सवं दृष्ट्वा स पुण्यं लभते नर. ॥
गोमूत्र गोमयं दुग्ध गोधूलिं गोष्ठगोष्पदम् । पक्वसस्यान्वितं क्षेत्र दृष्ट्वा पुण्यं लभेद्ध्रुवम् ॥
रुचिरा पद्मिनीं श्यामा न्यग्रोधपरिमण्डलाम् । सुवेषा सुवसना दिव्यभूषणभूषिताम् ॥
वेश्या क्षेमकरीं गन्ध मुदूर्वाक्षततण्डुलम् । सिद्धान्नं परमान्न च दृष्ट्वा पुण्यं० ॥१९॥
कार्तिक्या पूर्णिमाया च राधिकाप्रतिमा शुभाम् । संपूज्य दृष्ट्वा नत्वा च करोति जन्मखण्ड-
नम् ॥ २० ॥

हिङ्गुलायां तथाऽष्टम्यामिषे मासि सिते शुभे । श्रीदुर्गाप्रतिमा दृष्ट्वा करोति जन्म० ॥
शिवरात्रौ च काश्या च विश्वनाथस्य दर्शनम् । कृत्वोपवासं पूजा च करोति जन्म० ॥
जन्माष्टमीदिने भक्तो दृष्ट्वा मा बि दुमाधवम् । प्रणम्य पूजा कृत्वा च करोति जन्म० ॥
पौषे मसि शुक्लरात्रौ यत्र यत्र स्थले नर. । पद्माया प्रतिमा दृष्ट्वा करोति जन्म० ॥
सप्तजन्म भवेत्तस्य पुत्रः पौत्रो धनेश्वरः । उपोष्यैकादशीं स्नात्वा प्रभाते द्वादशीदिने ॥
दृष्ट्वा काश्यामन्नपूर्णां करोति जन्म० । चैत्रे मासि चतुर्दश्या कामरूपेषु पुण्यदे ॥ २९ ॥
दृष्ट्वा नत्वा भद्रकालीं करोति जन्म० । अयोध्याश च रामं च श्रीरामनवमीदिने ॥
संपूज्य नत्वा दृष्ट्वा च करोति जन्म० । उपोष्य पुष्करे स्नात्वा किंवा बदरिकाश्रमे ॥
संपूज्य दृष्ट्वा मासेक करोति जन्म० । दत्वा विष्णुपदे पिण्ड विष्णु यश्च प्रपूजयेत् ॥
पितृणा स्वात्मनश्चैव करोति जन्म० । प्रयागे मुण्डनं कृत्वा दानं च कुरुते यदि ॥
उपोष्य नैमिषारण्ये करोति जन्म० । सिद्धिं कृत्वा च बदरीं भुङ्क्ते बदरिकाश्रमे ॥

---

१ क. स पितृन्तर्पयेत्सुधी ।

दृष्ट्वा मत्प्रतिमां नन्द करोति जन्म० । दोलायमानं गोविन्दं पुण्ये वृन्दावने च माम् ॥
दृष्ट्वा संपूज्य नत्वा च करोति जन्म० । माद्रे दृष्ट्वा च मच्चरित्रं मामेव मधुसूदनम् ॥३२॥
संपूज्य नत्वा भक्तश्च करोति जन्म० । रथस्थं च जगन्नाथं यो द्रक्ष्यति कलौ नरः ॥
संपूज्य नत्वा भक्त्या च करोति जन्म० ।
उत्तरायणसंक्रान्त्यां प्रयागे स्नानमाचरेत् । संपूज्य नत्वा मामेव करोति जन्म० ॥
कार्तिक्यां पूर्णिमायां च दृष्ट्वा मत्प्रतिमां शुभाम् । उपोष्य पूजनं कृत्वा करोति जन्म०
चन्द्रभागासमीपे च माघ्यां च मां नमेत्सुधीः । राधया सह मां दृष्ट्वा करोति जन्मनः क्षयम्
रामेश्वरं सेतुबन्ध आषाढीपूर्णिमादिने । उपोष्य दृष्ट्वा संपूज्य करोति जन्म० ॥
स्वर्गे विद्याधरा रात्रौ नृत्यन्ति च मुहुर्मुहुः । प्रणामं कर्तुमीशं तं समायाति विभीषणः
गायन्ति किंनरा रात्रौ गन्धर्वाश्च मनोहरम् । प्रणामं कर्तुमीशं तं समायाति च माधवः
दृष्ट्वा साक्षाद्वसन्तं च सर्वेशं चन्द्रशेखरम् । जीवन्मुक्तो भवेदन्ते प्रयाति हरिमन्दिरम्
दीननाथं दिनकरं कोणार्के चोत्तरायणे । उपोष्य दृष्ट्वा संपूज्य करोति जन्म० ॥४२॥
कपिकोष्ठे सुवमने कलविङ्के वसुंधरे । विस्पन्दके रामकोष्ठे नन्दके पुष्पभद्रके ॥४३॥
पार्वतीप्रतिमां दृष्ट्वा कार्तिकेयं गणेश्वरम् । नन्दिनं शंकरं दृष्ट्वा करोति जन्मनः क्षयम्
उपोष्य प्रातः संपूज्य दृष्ट्वा स्तुत्वा स्तुतौ नतः । पारणं च दधि प्राश्य करोति जन्मनः०
त्रिकूटे मणिभद्रे च पश्चिमोदधिसंनिधौ । समुपोष्य दधि प्राश्य मां दृष्ट्वा मुक्तिमाप्नुयात् ॥
प्रतिमासु मदीयासु पार्वतीप्रतिमासु च । जीवं संन्यस्य संपूज्य करोति जन्मनः० ॥४७॥
शिवदुर्गालयं कृत्वा मदीयं च विशेषतः । शिवसंस्थापनं कृत्वा करोति जन्म० ॥४८॥
पुष्पोद्यानं च शङ्कुं च सेतुं खातं सरोवरम् । विप्रसंस्थापनं कृत्वा करोति जन्म० ॥
न च वेदाः पुराणानि ब्रह्मसंस्थापने फलम् । जानन्ति सन्तो मुनयः सुरा विधादयः पितः
गण्यन्ते पांसवो भूमेर्गण्यन्ते वृष्टिबिन्दवः । न गण्यते विधात्राऽपि विप्रसंस्थापने फलम्
कृत्वोपजीव्यं विप्रस्य जीवन्मुक्तो भवेन्नरः । अचलां श्रियमाप्नोति परे मुक्तिमनुत्तमाम् ॥
मद्दास्यभक्तिं स लभेद्वैकुण्ठे मोदते चिरम् । न हि पातो भवेत्तस्य यथा मे परमात्मनः ॥
कुमारीमष्टवर्षीयां सुविप्राय ददाति यः । संपूज्य सर्वाभरणां दुर्गादानफलं लभेत् ॥
सर्वैश्वर्यं समालोक्य ब्रह्मलोकेषु पूजितः । लभते मम दास्यं च वैकुण्ठे मोदते चिरम् ॥
विवाहदर्शने कोटिस्वर्णदानफलं लभेत् । अन्ते स्वर्गं प्रयात्येवमिहैव निश्चलां श्रियम् ॥
यः सुविप्रमनाथं च दरिद्रं च सुपण्डितम् । दृष्ट्वा कुर्यात्तद्विवाहं स मोक्षं लभते ध्रुवम् ॥

१ ख. फलम् । २ ख. प्रति० । ३ ख. च धी० ४ । क. स्वर्ग ।

यच्छत्रपादुकादानं शालग्रामस्य पोषितः । करोति भक्त्या पुण्याहे पृथ्वीदानफलं लभेत्
गजदाने च तल्लोममानवर्षं श्रुतौ श्रुतम् । चतुर्गुणं गजेन्द्रे च मोदते मम मन्दिरे ॥
गजार्धं श्वेततुरगे तदर्धं चेतरे पितः । गजतुल्यं कृष्णगवां दाने च तत्फलं लभेत् ॥
तत्तुल्यं धेनुदाने च अर्धं सामान्यगोस्तथा । लभेद्वत्सप्रसूतानां दाने दाने फलं ध्रुवः ॥
भूमिदाने रेणुमानवर्षं स्थानं च मत्पदे । ज्ञानदाने महत्पुण्यं वैकुण्ठे मोदते चिरम् ॥
श्रियं लभेत्स्वर्णदाने राजत्वं रजतेन च । अन्नदाने फलं नाहं कथं जानामि वै श्रुतम् ॥
लभते सर्वदानस्य फलं ब्राह्मणभोजने । अन्नदानात्परं दानं न भूतं न भविष्यति ॥
नात्र पात्रपरीक्षाऽस्ति न कालनियमः क्वचित् । अन्नदाने शुभं पुण्यं दातुः पात्रं स्वपातकी
अन्नदानं च धन्यं स्याद्भूमौ वैकुण्ठहेतुकम् । वस्त्रं ददाति विप्राय दरिद्राय कुटुम्बिने ॥
वस्त्रसूत्रमानवर्षं वैकुण्ठे मोदते चिरम् । सुरम्ये चन्द्रलोके च वारुणे च तथैव च ॥
कृत्वा लोहप्रदीपं च स्वर्णवर्तिसमन्वितम् । दत्त्वा घृतप्रदीपं च हरये परमात्मने ॥
अन्धकारं च न गृहं यमदूतं यमं तथा । न हि पश्यति दाता च प्रयाति मम मन्दिरम्
ब्राह्मणाय च दत्त्वैव न याति यमयातनाम् । दिव्यवर्षसहस्रं च मोदते शक्रमन्दिरे ॥
आसनं लभते स्वर्गे वस्तुमात्रानुरूपतः । उत्तमे लक्षवर्षं च तदर्धं चेतरे व्रजेत् ॥
ताम्बूलेन लभेद्भोगं स्वर्गे वर्षशतं व्रजेत् । माल्यदाने श्रियं स्वर्गे वस्तुमात्रानुरूपतः ॥
फलदानफलं स्वर्गे लभते नात्र संशयः । सामान्यशय्यादानेन स्वर्गे वर्षशतं व्रजेत् ॥
चतुर्गुणं प्रकृष्टाया गुणलक्षं विलक्षणे । अनाथाय सुविप्राय यदि गेहं प्रदीयते ॥ ७४ ॥
अत्रैव मानवर्षं च शक्रलोके महीयते । दृष्ट्वा बुभुक्षितं विप्रमन्नं तस्मै प्रदीयते ॥७५॥
अनन्तां श्रियमाप्नोति पुत्रपौत्रविवर्धिनीम् । व्रजनाथ व्रजं गत्वा व्रजभूमौ व्रजाधुना ॥
व्रज भोजय विप्रांश्च व्रज सर्वं व्रजे व्रजे । गोकुले गोकुले वत्स वत्स वत्स निराकुले ॥
व्याकुलाना गोकुलाना संकुले च व्रजे व्रजे । एतत्ते कथितं नन्द सानन्दं पुण्यवर्धनम् ॥
सुस्वप्नदर्शने पुण्यं यदि नीचं न वक्ति च ।
काश्यपं दुर्भगं नीचं शत्रुमज्ञानिनं स्त्रियम् । त्यक्त्वा रात्रिं च दिवसे वक्ति विप्रं सुपण्डितम्
देवालये च देवं वाऽप्यश्वत्थतुलसीवटम् । उक्त्वा तद्द्विगुणं पुण्यमप्रकाश्य चतुर्गुणम् ॥
सुस्वप्नदर्शने प्राज्ञो गङ्गास्नानफलं लभेत् । अर्थं वित्तं च भार्यां च भूमिं पुत्रं लभेत्प्रजाम्
मोक्षं च परमैश्वर्यं लभते सर्ववाञ्छितम् । इत्येवं कथितं तात किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं०
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

१ ख. विभो । २ ख. °मात्रानु° । ३ ख. °पात्रा° । ४ क. स्वर्ण ।

अथ सप्तसप्ततितमोऽध्यायः ।

---

नन्द उवाच—

केन स्वप्नेन किं पुण्यं केन मोक्षो भवेत्सुखम् । कोऽपि कोऽपि च सुस्वप्नस्तत्सर्वं कथय प्रभो

श्रीभगवानुवाच—

वेदेषु सामवेदश्च प्रशस्तः सर्वकर्मसु । तथैव कण्वशाखायां पुण्यकाण्डे मनोहरे ॥२॥
स व्यक्तो यश्च दुःस्वप्नः शश्वत्पुण्यफलप्रदः । तत्सर्वं निखिलं तात कथयामि निशामय॥
स्वप्नाध्यायं प्रवक्ष्यामि बहुपुण्यफलप्रदम् । स्वप्नाध्यायं नरः श्रुत्वा गङ्गास्नानफलं लभेत्
स्वप्नस्तु प्रथमे यामे संवत्सरफलप्रदः । द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके ॥५॥
चतुर्थे चार्धमासेन स्वप्नः स्यात्मफलप्रदः । दशाहे फलदः स्वप्नोऽप्यरुणोदयदर्शने ॥
प्रातःस्वप्नश्च फलदस्तत्क्षणं यदि बोधितः । दिने मनसि यद्दृष्टं तत्सर्वं च लभेद्ध्रुवम् ॥
चिन्ताव्याधिसमायुक्तो नरः स्वप्नं च पश्यति । तत्सर्वं निष्फलं तात प्रयात्येव न संशयः
जडो मूत्रपुरीषेण पीडितश्च भयाकुलः । दिगम्बरो मुक्तकेशो न लभेत्स्वप्नजं फलम् ॥
दृष्ट्वा स्वप्नं च निद्रालुर्यदि निद्रां प्रयाति च । विमूढो वक्ति चेद्रात्रौ न लभेत्स्वप्नजं फलम्
उक्त्वा काश्यपगोत्रे च विपत्तिं लभते ध्रुवम् । दुर्गते दुर्गतिं याति नीचे व्याधिं प्रयाति च
शत्रौ भयं च लभते मूर्खे च कलहं लभेत् । कामिन्यां धनहानिः स्याद्रात्रौ चोरभयं भवेत् ॥
निद्रायां लभते शोकं पण्डिते वाञ्छितं फलम् । न प्रकाश्यश्च सुस्वप्नः पण्डितैः काश्यपे व्रज
गवां च कुञ्जराणां च हयानां च व्रजेश्वर । प्रासादानां च शैलानां वृक्षाणां च तथैव च ॥
आरोहणं च धनदं भोजनं रोदनं तथा । प्रतिगृह्य तथा वीणां सस्याढ्यां भूमिमालभेत् ॥
शस्त्रास्त्रेण यदा विद्धो व्रणेन कृमिणा तथा । विष्ठया रुधिरेणैव संयुक्तोऽप्यर्थवान्भवेत्॥
स्वप्नेऽप्यगम्यागमनं मार्याल्लाभं करोति यः । मूत्रसिक्तः पिबेच्छुक्रं नरकं च विशत्यपि
नगरं प्रविशेद्रक्तं समुद्रं वा सुधां पिबेत् । शुभवार्तामवाप्नोति विपुलं चार्थमालभेत् ॥
गजं नृपं सुवर्णं च वृषभं धेनुमेव च । दीपमन्नं फलं पुष्पं कन्यां छत्रं रथं ध्वजम् ॥
कुटुम्बं लभते दृष्ट्वा कीर्तिं च विपुलां श्रियम् । पूर्णकुम्भं द्विजं वह्निं पुष्पताम्बूलमन्दिरम्
शुक्लधान्यं नटं वेश्यां दृष्ट्वा श्रियमवाप्नुयात् । गोक्षीरं च घृतं दृष्ट्वा चापि पुण्यधनं लभेत् ॥
पायसं पद्मपत्रे च दधि दुग्धं घृतं मधु । मिष्टान्नं स्वास्तिकं भुक्त्वा ध्रुवं राजा भविष्यति॥
पक्षिणां मानुषाणां च भुङ्क्ते मांसं नरो यदि । बहुपे शुभवार्तां च लभते वाञ्छितं फलम्
छत्रं वा पादुकां वाऽपि लब्ध्वा धान्यं च गच्छति । अग्निं च निर्मलं तीक्ष्णं तत्पार्श्व भविष्यति

हेलया संतरेद्यो हि स प्रधानो भविष्यति । दृष्ट्वा च फलितं वृक्षं धनमाप्नोति निश्चितम्
सर्पेण भक्षितो यो हि अर्थलाभश्च तद्भवेत् । स्वप्ने सूर्यं विधुं दृष्ट्वा मुच्यते व्याधिबन्धनात्
वडवां कुक्कुटीं दृष्ट्वा क्रौञ्चीं भार्यां लभेद्ध्रुवम् । स्वप्ने यो निगडैर्बद्धः प्रतिष्ठां पुत्रमाप्नुयात्
दध्यन्नं पायसं भुङ्क्ते पद्मपत्रे नदीतटे । विशीर्णपद्मपत्रे च सोऽपि राजा भविष्यति ॥
जलौकसं वृश्चिकं च सर्पं च यदि पश्यति । धनं पुत्रं च विजयं प्रतिष्ठां वा लभेदिति ॥
शृङ्गिभिर्दंष्ट्रिभिः कोलैर्वानरैः पीडितो यदि । निश्चितं च भवेद्राजा धनं च विपुलं लभेत्
मत्स्यं मांसं मौक्तिकं च शङ्खं चन्दनहीरकम् । यस्तु पश्यति स्वप्नान्ते विपुलं धनमाप्नुयात्
सुरां च रुधिरं स्वर्णं भुक्त्वा विष्ठां धनं लभेत् । प्रतिमां शिवलिङ्गं च लभेद्दृष्ट्वा जयं धनम्
फलितं पुष्पितं चित्रमाम्रं दृष्ट्वा लभेद्धनम् । दृष्ट्वा च ज्वलदग्निं च धनं बुद्धिं श्रियं लभेत्
आमलकं धात्रीफलमुत्पलं च धनागमम् । देवताश्च द्विजा गावः पितरो लिङ्गिनस्तथा ॥
यद्ददति मिथः स्वप्ने तत्तथैव भविष्यति । शुक्लाम्बरधरा नार्यः शुक्लमाल्यानुलेपना ॥
समाश्लिष्यन्ति यं स्वप्ने तस्य श्रीः सर्वतः सुखम् ॥
पीताम्बरधरां नारीं पीतमाल्यानुलेपनाम् । अवगूहति यः स्वप्ने कल्याणं तस्य जायते

सर्वाणि शुक्लानि प्रशंसितानि भस्मास्थिकार्पासविवर्जितानि ।
सर्वाणि कृष्णान्यतिनिन्दितानि गोहस्तिवाजिद्विजदेववर्ज्यम् ॥ २७ ॥

दिव्या स्त्री सस्मिता विप्रा रत्नभूषणभूषिता । यस्य मन्दिरमायाति स प्रियं लभते ध्रुवम्
स्वप्ने च ब्राह्मणो देवो ब्राह्मणी देवकन्यका । ब्राह्मणो ब्राह्मणी वाऽपि संतुष्टा सस्मिता सती
फलं ददाति यस्मै च तस्य पुत्रो भविष्यति । यं स्वप्ने ब्राह्मणा नन्द कुर्वन्ति च शुभाशिषम्
यद्ददन्ति भवेत्तस्य तस्यैश्वर्यं भवेद्ध्रुवम् । परितुष्टो द्विजश्रेष्ठश्चाऽऽयाति यस्य मन्दिरम् ॥
नारायणः शिवो ब्रह्मा प्रविशेत्तु तदाश्रमम् । संपत्तिस्तस्य भवति यशश्च विपुलं शुभम् ॥
पदे पदे सुखं तस्य सम्मानं गौरवं लभेत् । अकस्मादपि स्वप्ने तु लभते सुरभिं यदि ॥
भूमिलाभो भवेत्तस्य भार्या चापि पतिव्रता । करेण कृत्वा हस्ती यं मस्तके स्थापयेद्यदि ॥
राज्यलाभो भवेत्तस्य निश्चितं च श्रुतौ मतम् । स्वप्ने तु ब्राह्मणस्तुष्टः समाश्लिष्यति यं व्रज
तीर्थस्नायी भवेत्सोऽपि निश्चितं च श्रियाऽन्वितः । स्वप्ने ददाति पुष्पं च यस्मै पुण्यवते द्विजः
जययुक्तो भवेत्सोऽपि यशस्वी च धनी सुखी । स्वप्ने दृष्ट्वा च तीर्थानि सौधरत्नगृहाणि च
जययुक्तश्च धनवांस्तीर्थस्नायी भवेन्नरः । स्वप्ने तु पूर्णकलशं कश्चित्कस्मै ददाति च ॥
पुत्रलाभो भवेत्तस्य संपत्तिं वा समालभेत् । हस्ते कृत्वा तु कुडवमादर्कं वीरसुन्दरी ॥

१ ख. भवेत् । २ क. श्रुतम् । ३ क. वाऽरिसु॰ ।

यस्य मन्दिरमायाति स लक्ष्मीं लभते ध्रुवम् । दिव्या स्त्री यद्गृहं गत्वा पुरीषं विसृजेद्द्विज
अर्थलाभो भवेत्तस्य दारिद्र्यं च प्रयाति च । यस्य गेहं समायाति ब्राह्मणो भार्यया सह
पार्वत्या सह शंभुर्वा लक्ष्म्या नारायणोऽथवा । ब्राह्मणो ब्राह्मणी वाऽपि स्वप्ने तस्मै प्रदीयते
धान्यं पुष्पाञ्जलिं वाऽपि तस्य श्रीः सर्वतोमुखी । मुक्ताहारं पुष्पमाल्यं चन्दनं च लभेद्ध्रुवम्
स्वप्ने ददाति विप्रश्च तस्य श्रीः सर्व० । गोरोचनं पताकां वा हरिद्रामिक्षुदण्डकम् ॥
सिद्धान्नं च लभेत्स्वप्ने तस्य श्रीः सर्व० । ब्राह्मणो ब्राह्मणी वाऽपि ददाति यस्य मस्तके
छत्रं वा शुक्लधान्यं वा स च राजा भविष्यति । स्वप्ने रथस्थः पुरुषः शुक्लमाल्यानुलेपनः
तत्रस्थो दधि भुङ्क्ते च पायसं वा नृपो भवेत् । स्वप्ने ददाति विप्रश्च ब्राह्मणी च सुधां दधि
मधुस्तनपात्रं यस्मै वा सोऽपि राजा भवेद्ध्रुवम् । कुमारी चाष्टवर्षीया रत्नभूषणभूषिता ॥
यस्य तुष्टा भवेत्स्वप्ने स भवेत्कविपण्डितः । ददाति पुस्तकं स्वप्ने यस्मै पुण्यवते च सा॥
स भवेद्विश्वविख्यातः कवीन्द्रः पण्डितेश्वरः । यं पाठयति स्वप्ने वा मातेव च सुतं यथा
सरस्वतीसुतः सोऽपि तत्परो नास्ति पण्डितः । ब्राह्मणः पाठयेद्यं च पितेव यत्नपूर्वकम्
ददाति पुस्तकं प्रीत्या स च तत्सदृशो भवेत् । प्राप्नोति पुस्तकं स्वप्ने पथि वा यत्र तत्र वा
स पण्डितो यशस्वी च विख्यातश्च महीतले । स्वप्ने यस्मै महामन्त्रं विप्रो विप्रे ददाति चेत्
स भवेत्पुरुषः प्राज्ञो धनवान्गुणवान्सुधीः । स्वप्ने ददाति मन्त्रं वा प्रतिमां वा शिलामयीम्
यस्मै ददाति विप्रश्च मन्त्रसिद्धिश्च तद्भवेत् । विप्रं विप्रसमूहं च दृष्ट्वा नत्वाऽऽशिषं लभेत्
राजेन्द्रः स भवेद्वाऽपि कवि वा च कविपण्डितः । शुक्लधान्ययुतां भूमिं यस्मै विप्रः समुत्सृजेत्
स्वप्नेऽपि परितुष्टश्च स भवेत्पृथिवीपतिः । स्वप्ने विप्रो रथे कृत्वा नानास्वर्गं प्रदर्शयेत् ॥
चिरंजीवी भवेदायुर्धनवृद्धिर्भवेद्ध्रुवम् । विप्राय विप्रः संतुष्टो यस्मै कन्यां ददाति च ॥
स्वप्ने च स भवेन्नित्यं धनाढ्यो भूपतिः स्वयम्[1] । स्वप्ने सरोवरं दृष्ट्वा समुद्रं वा नदीं नदम्
शुक्लाहिं शुक्लशैलं च दृष्ट्वा श्रियमवाप्नुयात्[2] । यं पश्यन्ति मृतं स्वप्ने स भवेच्चिरजीवनः ॥
अरोगी रोगिणं दुःखी सुखिनं च सुखं भवेत् । दिव्या स्त्री यं प्रवदति मम स्वामी भवानिति
स्वप्ने दृष्ट्वा च जागर्ति स च राजा भवेद्ध्रुवम् । स्वप्ने वा कौलिकां दृष्ट्वा लब्ध्वा स्फटिक-
मालिकाम् ॥ ७२ ॥

इन्द्रचापं शक्रवज्रं स प्रतिष्ठां लभेद्ध्रुवम् । स्वप्ने वदति यं विप्रो मम दासो भवेति च ॥
हरिदास्यं च मद्भक्तिः स लब्ध्वा वैष्णवो भवेत् । स्वप्ने विप्रो हरिः शंभुर्ब्राह्मणी कमला शिवा
शुद्धा स्त्री देवमाता वा जाह्नवी वा सरस्वती । गोपालिकावेषधरी बालिका राधिका मम

1 क. 'यन्भव । 2 क. याति' ।

बालश्च बालगोपालः स्वप्नविद्भिः प्रकाशितः । एष ते कथितो नन्द सुस्वप्नः पुण्यहेतुकः
श्रोतुमिच्छसि किं वा त्वं किं भूयः कथयामि ते ॥ ७६ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० सुस्वप्नकथनं
नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

अथाष्टसप्ततितमोऽध्यायः ।

---

नन्द उवाच—

श्रीकृष्ण जगतां नाथ सुस्वप्नश्च श्रुतो मया । वेदसारो नीतिसारो लौकिको वैदिकस्तथा ॥
अधुना श्रोतुमिच्छामि पापं येषां च दर्शने । यस्मिन्कर्मणि वा वत्स तन्मां कथितुमर्हसि
वचनं वेदशास्त्रोक्तं तथा वेदानुयायिनः । श्रोतुमिच्छन्ति संततं लोकास्त्वन्मुखतस्तथा ॥
वेदानां जनकस्त्वं च वैदिकानां सतामपि । ब्रह्मादीनां सुराणां च मुनीनां जगतामपि ॥
श्रुतं यत्त्वन्मुखाम्भोजात्परमाणं वचनामृतम् । तेन देहोऽभिषिक्तो मे वत्सविच्छेददाहनः ॥
स्वप्ने यच्चरणाम्भोजं सर्वकामफलप्रदम् । ब्रह्मादयो न पश्यन्ति तदद्य दृष्टिगोचरम् ॥६॥
अतः परं त्वत्पदाब्जं क्व पश्यामि च पातकी । विण्मूत्रधारी देहो मे निबद्धश्च स्वकर्मणा
ईदृशं च दिनं वत्स कदा मम भविष्यति । त्वया ब्रह्मादिनाथेन संवादो मम पापिनः ॥
कृपां कुरु कृपानाथ मम दोषं क्षमस्व च । वत्सबुद्ध्या च दुर्नीतं यत्कृतं च महेश्वर ॥
ब्रह्मेशशेषमुनयो ध्यायन्ते त्वत्पदाम्बुजम् । सरस्वती श्रुतिर्यस्य स्तवने जडतां व्रजेत् ॥
इत्येवमुक्त्वा नन्दश्च निरानन्दः शुचाऽऽकुलः । मूर्छामाप रुरोद च पुत्रविच्छेदविह्वलः
संत्रस्तो भगवान्कृष्णो बोधयामास यत्नतः । परमाध्यात्मिकं ज्ञानं ददौ तस्मै जगत्पतिः ॥

श्रीभगवानुवाच—

हे नन्द जनक श्रेष्ठ सर्वश्रेष्ठ व्रजेश्वर । चेतनं कुरु कल्याण ज्ञानं च परमं शृणु ॥१३॥
परमाध्यात्मिकं ज्ञानं ज्ञानिनां च सुदुर्लभम् । वेदशास्त्रे गोपनीयं तुभ्यमेव ददाम्यहम् ॥
निबोध श्रूयतां नन्द सानन्दः सुसमाहितः । जन्ममृत्युजराव्याधिर्यदभ्यासान्न जायते ॥
स्थिरो भव महाराज व्रजनाथ व्रजं व्रज । ज्ञानं लब्ध्वा सदानन्दः शोकमोहविवर्जित. ॥
जलबुद्बुदवत्सर्वं संसारं सचराचरम् । प्रभाते स्वप्नवन्मिथ्या मोहकारणमेव च ॥
मिथ्याकृत्रिमनिर्माणहेतुश्च पाञ्चभौतिकः । मायया सत्यबुद्ध्या च प्रतीतिं जायते नरः
कामक्रोधलोभमोहैर्वेष्टितः सर्वकर्मसु । मायया मोहितः शश्वज्ज्ञानहीनश्च दुर्बल. ॥ १९॥
निद्रातन्द्राक्षुत्पिपासाक्षमाश्रद्धादयादिभि । लज्जा शान्तिर्धृतिः पुष्टिस्तुष्टिश्चाऽऽभिश्च वेष्टितः

मनोबुद्धिश्चेतनाभिः प्राणज्ञानात्मभिः सह । संसक्तः सर्वदेवैश्च यथा नृपश्च वायसैः ॥
अहमात्मा च सर्वेशः सर्वज्ञानात्मकः स्मृतः । मनो ब्रह्मा च प्रकृतिर्बुद्धिरूपा सनातनी
प्राणा विष्णुश्चेतना स्यात्पद्मा तु चाधिदेवता । मयि स्थिते स्थिताः सर्वे गतास्तेऽपि गते मयि
अस्माभिश्च विना देहः सद्यः पतति निश्चितम् । पाञ्चभूतो विलीनश्च पञ्चभूतेषु तत्क्षणम्
नामसंकेतरूपं च निष्फलं मोहकारणम् । शोकश्चाज्ञानिनां तात ज्ञानिनां नास्ति किंचन
निद्रादयः शक्तयश्च ताः सर्वाः प्रकृतेः कलाः । लोभादयो ह्यधर्मांशास्तथाऽहंकारपञ्चकः
ते ब्रह्मविष्णुरुद्राद्या गुणाः सत्त्वादयस्त्रयः । ज्ञानात्मकः शिवो ज्योतिरहमात्मा च निर्गुणः
यदा विशामि प्रकृतौ तदाऽहं सगुणः स्मृतः । सगुणा विषया विष्णुब्रह्मरुद्रादयस्तथा ॥
धर्मो मदंशो विषयी शेषः सूर्यः कलानिधिः । एवं सर्वे मत्कलांशा मुनिमन्वादयः सुराः ॥
सर्वदेहे प्रविष्टोऽहं न लिप्तः सर्वकर्मसु । जीवन्मुक्तश्च मद्भक्तो जन्ममृत्युजराहरः ॥२०॥
सर्वसिद्धेश्वरः श्रीमान्कीर्तिमान्पण्डितः कविः । चतुस्त्रिंशद्विधः सिद्धः सर्वकर्मोपहारकः ॥
तमुपैमि स्वयं सिद्धं भक्तस्तन्नैव वाञ्छति । द्वात्रिंशतिविधं सिद्धं सिद्धिसाधनकारणम् ॥
मन्मुखाच्छ्रूयतां वत्स सिद्धमन्त्रं गृहाण च । अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा
ईशित्वं च वशित्वं च तथा कामावसायिता । दूरश्रवणमेवेति परकायप्रवेशनम् ॥२४॥
मनोयायित्वमेवेति सर्वज्ञत्वमभीप्सितम् । वह्निस्तम्भं जलस्तम्भं चिरंजीवित्वमेव च ॥
वायुस्तम्भं क्षुत्पिपासानिद्रास्तम्भनमेव च । कायव्यूहं च वाक्सिद्धिं मृतानयनमीप्सितम्
सृष्टीनां करणं चैव प्राणाकर्षणमेव च । ॐ सर्वेश्वरेश्वराय सर्वविघ्नविनाशिने मधुसूदनाय
स्वाहेति ॥ २६ ॥
अयं मन्त्रो महागूढः सर्वेषां कल्पपादपः । सामवेदे च कथितः सिद्धानां सर्वसिद्धिदः
अनेन योगिनः सिद्धा मुनीन्द्राश्च सुरास्तथा । शतलक्षजपेनैव मन्त्रसिद्धिर्भवेत्सताम् ॥
यदि नारायणक्षेत्रे हविष्यान्नरतो जपेत् । गत्वा कुरु जपं तात काशिकां मणिकर्णिकाम्
शृणु नारायणक्षेत्रं जलाद्धस्तचतुष्टयम् । अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥
ज्ञानं चात्र मृते लोके मूर्तिर्भवति तस्य वै । नैवं विनाऽपि मन्त्रेण जीवन्मुक्तो न संशयः
व्रतं कुरु पवित्रं च जगन्नाथ नतं नत । पापं यद्दर्शने तात कथयामि निशामय ॥
दुःस्वप्नं पापबीजं च केवलं विघ्नकारणम् । गोघ्नं च ब्राह्मणघ्नं वा कृतघ्नं कुटिलं तथा ॥
देवघ्नं पितृमातृघ्नं पापं विश्वासघातिनम् । मिथ्यासाक्ष्यप्रदातारं यं चाऽऽतिथ्यविघ्नकम् ॥
ग्रामयाजिनमेवेति देवविप्रस्वहारिणम् । अश्वत्थघातिनं दुष्टं शिवविष्णुविनिन्दकम् ॥

---

१ क. °पदार° । २ क. °भग° । ३ क. °मवानेना° ।

अदीक्षितमनाचारं संध्याहीनं द्विजं तथा । देवलं वृषवाहं च शूद्राणां सूपकारकम् ॥४१॥
शवदाहं च शूद्राणां शूद्रश्राद्धान्नभोजिनम् । अवीरां छिन्ननासां च देवब्राह्मणनिन्दकाम् ॥
पतिभक्तिविहीनां च विष्णुभक्तिविहीनकाम् । शूद्राणां विधवां चैव चाण्डालीं व्यभिचारिणीम्
शश्वत्क्रोपयुतं दुष्टमृगग्रस्तं च जारजम् । चौरं मिथ्यावादिनं च शरणागतघातिनम् ॥
मांसापहारिणं चैव ब्राह्मणं वृषलीपतिम् । ब्राह्मणीगामिनं शूद्रं द्विजं वार्धुषिकं तथा ॥
अगम्यागामिनं दुष्टं चतुर्वर्णं नराधमम् । माता सपत्नीमाता च श्वश्रूश्च भगिनी सुता ॥
गुरुपत्नी पुत्रपत्नी सोदरस्य प्रिया सती । मातृष्वसा पितृष्वसा भगिनेयप्रिया तथा ॥
मातुलानी नवोढा च पितृव्यस्त्री रजस्वला । पितृमातृप्रसूश्चैव चागम्याष्टादश स्मृताः ॥
कीर्तिताः सामवेदे च परिपाल्याः सतां व्रज । एता दृष्ट्वा च स्पृष्ट्वा च ब्रह्महत्यां लभेन्नरः ॥
तस्माद्दैवेन ता दृष्ट्वा सूर्यं दृष्ट्वा हरिं स्मरेत् । कामतो यदि पश्यन्ति विनिन्द्यास्ते भवन्ति वै
तस्मात्सन्तो न पश्यन्ति शापभीता व्रजेश्वर । राहुग्रस्तं रविं सोमं न पश्यन्ति विपश्चितः
जन्माष्टसप्तरिःफाङ्कदशमस्थे दिवाकरे । जन्मर्क्षे निधने चापि चतुर्थेऽपि कलानिधौ ॥
सर्वैरंशैर्न पश्यन्ति कम्पितं चन्द्रभास्करम् । नष्टचन्द्रो न दृश्यश्च भाद्रे मासि सितासिते ॥
चतुर्थ्यामुदितश्चन्द्रः परित्यक्तो मनीषिभिः । चन्द्रस्ताराग्रहणं कलङ्कमतिदुष्करम् ॥
तस्मै ददाति हे नन्द कामतो यदि पश्यति, अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत् ॥
तदा शुद्धो भवेत्सद्यो निष्कलङ्की महीतले । सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ॥
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः । इति मन्त्रेण पूतं च जलं साधुः पिबेद्ध्रुवम् ॥
इति ते कथितं सर्वमपरं कथयामि ते ॥ ६२ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मखण्ड० उत्त० नारदना० भगव-
न्नन्दसं० अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

═════

अथैकोनाशीतितमोऽध्यायः ।

———

नन्द उवाच—
राहुग्रस्तः कथं सूर्यश्चन्द्रो वाऽपि जगत्प्रभो । नष्टश्चन्द्रः कथं भाद्रे चतुर्थ्यां चासिते सिते

* रिःफ इति द्वादशस्थानसंज्ञा ।

१ क. "तदापि" । २ क दृष्ट्वा । ३ घ्नावित्यधिकपाठः ।

वेदानां जनकस्त्वं च कं पृच्छामि त्वया विना । वेदे पुराणे गोप्यं यत्त जानन्ति विपश्चितः
इति तद्वचनं श्रुत्वा चेदं वचनमब्रवीत् ॥ २ ॥

श्रीभगवानुवाच—

अवध्यं वचनं चेदं निषिद्धं वैदिकैरपि । क्षमस्व नन्द भद्रं ते प्रश्नमन्यं कुरुष्व माम् ॥
विश्वस्तं वचनं तात न प्रकाश्यं मनीषिभिः । विघ्नः प्रकाशे भवति सतां छिद्रं च दैवतः ॥

नन्द उवाच—

कथयस्व जगन्नाथ न भक्ते वञ्चनं कुरु । अदृश्यौ चापि देवेशौ राहुग्रस्तौ च पुण्यदौ ॥

श्रीभगवानुवाच—

शृणु नन्द प्रवक्ष्यामि कथामेतां पुरातनीम् । यां श्रुत्वा निष्कलङ्कश्च तीर्थस्नायी भवेन्नरः
सर्वपातकिनं दृष्ट्वा यत्पापं लभते नरः । आख्यानश्रवणेनैव भस्मीभूतं भविष्यति ॥७॥
एकदा जमदग्निश्च महाकौतूहलान्वितः । रेणुकासहितस्तुष्टो जगाम नर्मदातटम् ॥ ८ ॥
निर्जने नर्मदातीरे विजहार तया सह । नवोढया च सुन्दर्या नवयौवनयुक्तया ॥ ९ ॥
सुवेषया सुस्मितया रत्नभूषणयुक्तया । नतया स्तनभारेण श्रोणीभारेण मन्दया ॥१०॥
सुन्दरीणामतुल्यया श्वेतचम्पकवर्णया । सुपूर्णचन्द्राननया कटाक्षयुतया तथा ॥ ११ ॥
अतीव सूक्ष्माम्बरया कामबाणार्तया भ्रम । पुलकाञ्चितसर्वाङ्गसंभोगेनापि मूर्छया ॥१२॥
पुंस्कोकिलयुते रम्ये शन्दिते मधुव्रते । सुगन्धिवायुसंयुक्ते पुष्पतल्पान्विते शुभे ॥१३॥
चन्द्रनोक्षितसर्वाङ्गं वस्त्रमाल्यधरं मुनिम् । महातपस्याढ्यं तमुवाच भास्करः स्वयम् ॥
वेदकर्ता प्रपौत्रस्त्वं ब्रह्मणश्च जगत्पतेः । चतुर्वेदविशेषेषु सुनिष्णातः सदा शुचिः ॥
वेदाङ्गकर्ता धर्मज्ञः श्रेष्ठो वेदविदां वरः । महातपस्वी तेजस्वी ब्रह्मचारी च सुव्रती ॥
युष्मद्विधोक्तं शास्त्रं च पठित्वाऽन्यश्च पण्डितः । वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥
धर्मं त्यजति धर्मज्ञो ह्यधर्मेण रतः कथम् । दिवामैथुनदोषं च वक्ति वेदो विशेषतः ॥
अहं च धर्मिणां साक्षी तेन त्वां कथयामि ते । सूर्यस्य वचनं श्रुत्वा तत्याज मैथुनं द्विजः
दृष्ट्वा पुरो विप्ररूपं सूर्यं तेजस्विनं सुरम् । उवाच सूर्यं रक्ताक्षः कोपप्रज्वलितमानसः ॥
रेणुका लज्जिता तत्र विधार्य वाससा सती ॥ २० ॥

जमदग्निरुवाच—

को भवान्पण्डितंमन्यो न त्वदन्योऽस्ति पण्डितः । अहं भृगोर्भगवतः शिष्यस्त्वं कश्यपस्य च
चतुर्वेदांश्च जानामि धर्माधर्मनिरूपणे । वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥ २२ ॥
अज्ञानी पुरुषः शश्वज्जडितश्च स्वकर्मणा । तेनीयसां न दोषाय वह्नेः सर्वभुजो यथा

अन्ये भवांश्च धर्मश्च साक्षी सर्वे च कर्मणाम् । फलदाता च शास्त्रज्ञो यतस्त्वत्तनयः सदा
न वैष्णवानां शास्तारो यूयमस्माकमेव च । न वासुदेवभक्तानामशुभं विद्यते क्वचित् ॥
हरेः सुदर्शनं चक्रं शश्वद्रक्षति वैष्णवान् । नारायणश्च भगवान्स्वयं ब्रह्मा च शंकरः ॥
शास्ता यमश्च नास्माकं त्वं चै नापि दिवाकर । राजपुत्रो यथा स्थाने वयं स्वच्छन्दगामिनः
शक्तोऽहं भस्मसात्कर्तुं यमं सर्वसुरांस्तथा । महेन्द्रप्रभृतीन्सूर्य क्षणेनैवावलीलया ॥
कस्त्वं धर्मप्रवक्ता मे याहि स्वस्थानमेव च । मम शास्ता तु भगवाञ्छ्रीकृष्णः प्रकृतेः परः
अद्य मे निर्जने स्थाने रसभङ्गस्त्वया कृतः । मम शापात्पापदृश्यो राहुग्रस्तो भविष्यसि ॥
द्रष्टुं त्वां ये घनाः सर्वे दूरीभूता भवन्ति ते । त्वामाच्छन्नं करिष्यन्ति वायुना प्रेरितास्तथा
स्वतेजसा भवान्गर्वोद्धततेजा भविष्यसि । मेघाच्छन्नः स्वल्पतेजा राहुग्रस्तो भवान्भव॥
ब्राह्मणस्य वचः श्रुत्वा भगवान्भास्करः स्वयम् । ततः पुटाञ्जलिर्भूत्वा तुष्टाव मुनिपुंगवम्

भास्कर उवाच—

अवध्याः सर्वे धर्मज्ञ धन्या मान्याः पुरस्कृताः । नारायणश्च भगवाञ्छंभुर्ब्रह्मा स्वयं प्रभुः
गणेशश्चापि शेषश्च धर्मश्चापि सनातनः । स्तुवन्ति ब्राह्मणं सर्वे विप्ररूपी जनार्दनः ॥
विप्रदत्तश्च यो ब्रह्मन्वयमस्मन्मुखो द्विजः । हुताशनश्च द्विमुखाः सुराः सर्वे द्विजो वरः
क्षमस्व वैष्णवः शुद्धः स्वधर्मं च समाचर । वैष्णवानां कुतः कोपो हृदि येषां जनार्दनः
अस्माभिः पूजिता विप्रा युष्माभिः पूजिताः सुराः । परस्परं स्नेहपात्रं चेदमाचरणं द्विज
अहमेवं त्वया शप्तो मया शप्तो भवान्भव । अन्यथा मा वदन्त्येवं सूर्य निस्तेजसं जनाः ॥
पराभूतः क्षत्रियेण भविष्यसि द्विजेश्वर । मरणं क्षत्रियास्त्रेण भवतश्च भविष्यति ॥४०॥
सूर्यस्य वचनं श्रुत्वा चुकोप ब्राह्मणः पुनः । तं शशापातिरस्कारः शंभुना निर्जितो भवान्
उभयोः कलहं ज्ञात्वा कश्यपेन सह व्रज । आजगाम स्वयं ब्रह्मा विधाता जगतामपि
आगत्य ब्रह्मा संत्रस्तं बोधयामास भास्करम् । मुनिश्रेष्ठं च धर्मज्ञं धर्मज्ञानां गुरोर्गुरुः ॥

ब्रह्मोवाच—

क्षमस्व भास्कर त्वं च साक्षान्नारायणो भवान् । युष्माकं परिपाल्यश्चाप्यवध्यो ब्राह्मणः सदा
अहं करोमि भवतो विप्रशापान्तमुत्तमम् । अत्राहमागतस्त्रस्तो भृगुणा प्रेरितस्ततः ॥
स्फुटोऽहं प्रेरितश्चापि कश्यपेन मरीचिना । शान्तो भव सुरश्रेष्ठ साक्षी त्वं सर्वकर्मणाम्
गुप्तचिह्निवसे महांस्त्वं तत्र कुत्रचित्क्षणम् । भविष्यसि घनाच्छन्नः सद्यो मुक्तो भविष्यसि
न्यूनातिरिक्ते वर्षे च राहुग्रस्तो भविष्यसि । तत्रादृश्यश्च केषांचित्पुण्यदृश्यो हि कस्यचित्

१ क. ॰तः स्तुतः ।

अन्यथा सर्वकालेन पुण्यदृश्यो भवान्भुवि। त्वां दृष्ट्वा च नमस्कृत्य सर्वे निष्पापिनो जनाः
जन्मसप्ताष्टरि.फाङ्कचतुर्थे दशमे तथा। जन्मर्क्षे निधने नृणामदृश्यस्त्वं भविष्यसि ॥
अस्तकाले घनाच्छन्ने मध्याह्नस्थे जलेऽपि वा। अर्घोदिते च काले च पापदृश्यो भविष्यसि
भार्यादुःखनिमित्तेन भार्यया हेतुभूतया। श्वशुरेण शालकेन हततेजा भविष्यसि ॥
अन्यथा तव तेजश्च संज्ञा सहितुमक्षमा। मालीसुमालियुद्धे च शंभुना त्वं पराजितः ॥
इत्येवमुक्त्वा सूर्यं च बोधयामास ब्राह्मणम्। नम्रं शापपराभूतं लज्जितं कोपितं मम ॥
हे विप्र स्वगृहं गच्छ गच्छ वत्स यथासुखम्। त्वत्तेजसा क्षणेनैव भस्मीभूतं भवेज्जगत्
सूर्यस्त्वत्परिपाल्यश्च भवान्सूर्यस्य नित्यशः। परस्परं च पूज्यश्च संबन्धः पोष्यपोषकः
हर्यशेन क्षत्रियेण कार्तवीर्यार्जुनेन च। भविष्यसि न संदेहः पराभूतो द्विजो मृतः ॥
पुरा ते प्राक्तनं सर्वं कदाचिन्न हि खण्डितम्। नारायणश्च स्वांशेन तव पुत्रो भविष्यति
त्रिःसप्तकृत्वो जगतीं निःक्षत्रां च करिष्यति। मृत्युस्ते यशसो बीजं भविष्यति महीतले
इत्येवमुक्त्वा ब्रह्मा च ययौ गेहं ब्रजेश्वर। प्रययौ जमदग्निश्च भास्करश्च स्वमन्दिरम् ॥
इत्येवं कथितं तात आख्यानं पुण्यकारकम्। राहुग्रस्तो भास्करश्चाप्यदृश्यो येन हेतुना
चतुर्थ्यामुदितश्चन्द्रो भाद्रे मासि सितासिते। अदृश्यो नष्टरूपश्च श्रूयतां येन हेतुना ॥
राहुग्रस्तः कलङ्की वा पुरा शप्तो मया पितः। सर्वं त्वां कथयिष्यामि कथामेतां पुरातनीम्

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं०
एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

===

अथाशीतितमोऽध्यायः ।

---

श्रीकृष्ण उवाच—

पुरा तारा गुरोः पत्नी नवयौवनसंयुता। रत्नभूषणभूषाढ्या वरसूक्ष्माम्बरा सती ॥१॥
सुश्रोणी सस्मिता रम्या सुन्दरी सुमनोहरा। अतीव कबरीरम्या मालतीमाल्यभूषिता ॥
सिन्दूरबिन्दुना सार्कं चारुचन्दनबिन्दुभिः। कस्तूरीबिन्दुनाऽधश्च भालमध्यस्थलोज्ज्वला ॥
रत्नेन्द्रसारनिर्माणक्वणन्मञ्जीररञ्जिता। सुवक्रलोचना श्यामा सुचारुकज्जलोज्ज्वला ॥२॥
सुधारससारमुक्ताभदन्तपङ्क्तिमनोहरा। रत्नकुण्डलयुग्मेन चारुगण्डस्थलोज्ज्वला ॥३॥
कामिनीत्वद्भुता बाला गजेन्द्रमन्दगामिनी। सुवेषाढ्या चन्द्रमुखी कामाधारा च कामुकी
स्वर्गमन्दाकिनीतीरे स्नाता स्निग्धाम्बरा परा। ध्यायन्ती गुरुपादं सा स्वगृहं गमनोन्मुखी
दृष्ट्वा तस्याश्च सर्वाङ्गमनङ्गबाणपीडितः। भाद्रे चतुर्थ्यां चन्द्रश्च जहार चेतनां मम ॥

ज्ञानं क्षणेन संप्राप्य रथस्थो रसिको बली । रथमारोहयामास करे धृत्वा च तारकाम्
कामोन्मत्त कामिनीं तां समाश्लिष्य चुचुम्ब च । शृङ्गारं कर्तुमुद्युक्तं तमुवाच गुरुप्रिया ॥

तारकोवाच—

त्यज मां त्यज मां चन्द्र सुरेषु कुलपांसन । गुरुपत्नीं ब्राह्मणीं च पातिव्रत्यपरायणाम् ॥
गुरुपत्नीसंगमने ब्रह्महत्याशतं भवेत् । गुरुपत्नी विप्रपत्नी यदि सा च पतिव्रता ॥
ब्रह्महत्यासहस्रं च तस्याः सगमने लभेत् । पुत्रस्त्वं तव माताऽहं धैर्यं कुरु सुरेश्वर ॥
पितस्त्वां श्रुत्वा सुरगुरुर्भस्मीभूतं करिष्यति । पुत्राधिकश्च शिष्यश्च प्रियो मत्स्वामिनो भवान्
स्वधर्मं रक्ष पापिष्ठ मामेव मातरं त्यज । दास्यामि स्त्रीवधं तुभ्यं यदि मां संग्रहीष्यसि ॥
विलङ्घ्य तारावचनं तां च संभोक्तुमुद्यतम् । शशाप तारा कोपेन निष्कामा सा पतिव्रता
राहुग्रस्तो धनग्रस्तः पापदग्धो भवान्भव । कलङ्की यक्ष्मणा ग्रस्तो भविष्यसि न संशयः
चन्द्रं शप्त्वा तदा तूर्णं कामदेवं शशाप सा । तेजस्विना केनचित्त्वं भस्मीभूतो भविष्यसि
चन्द्रस्तारां गृहीत्वा च कृत्वाऽपि रमणं व्रज । क्रोडे निधाय प्रययौ रुदतीं तां शुचाऽन्विताम्
निर्जने निर्जने रम्ये शैले शैले मनोहरे । सरोनदनदीनां च तीरे तीरे मनोहरे ॥१९॥
मधुव्रतविरोधे च पुष्पोद्याने सुपुष्पिते । रम्यायां पुष्पशय्यायां स रेमे रामया सह ॥
चन्द्रोऽक्षिलसर्वाङ्गो मधुपानरतः सुरः । सुखसंभोगसंसक्तो बुबुधे न दिवानिशम् ॥
मलये मलयारण्ये मलयानिलसंयुते । स्यन्दने चन्दनवने पश्चिमोदधिसंनिधौ ॥२३॥
त्रिकूटे वटमूले च तत्र चन्द्रसरोवरे । सुचारुशतपत्राणां पद्मे चन्दनचर्चिते ॥ २४ ॥
सुचारुचम्पकोद्याने चम्पकानिलपूरिते । क्षीरोदकाञ्चनीभूमौ क्रौञ्चकाञ्चनपर्वते ॥२५॥
रत्नशैले मणिमये मणिमन्दिरसुन्दरे । माणिक्यमुक्तासारेण हीरहारेण शोभिते ॥२६॥
सुचारुचित्रचित्राढ्ये श्वेतचामरदर्पणैः । भूषिते रत्नदीपैश्च देवक्रीडे प्रियस्थले ॥२७।
वरुणो मदिरां पीत्वा वरुणानीसमन्वितः । वरुणो रमते यत्र तत्र रेमे तया सह ॥
पावने पवनोद्याने पारिजातानिलेन च । सुगन्धिमोहिते रत्नमालातीरे च निर्मले ॥
चारुशैले चलत्पुष्पे वह्निनिजाश्रमे । पपौ च कामधेनूनां क्षीरं क्षीरोदधेस्तटे ॥३०॥
वह्निशुद्धांशुकयुगं वह्निस्तस्मै ददौ मुदा । वरुणो रत्नमालां च रत्नच्छत्रं समीरणः ॥
तत्र दृष्ट्वा सुरगुरुं बहिर्गेहात्समागतम् । प्रणम्य सर्वमुक्त्वा च चन्द्रस्तं शरणं ययौ ॥
शुक्रस्तं बोधयामास वचनं नीतिपूर्वकम् । निरपेक्षो मुनिश्रेष्ठो वेदवेदाङ्गपारगः ॥

शुक्र उवाच—

शृणु वत्स प्रवक्ष्यामि गुरवे देहि तारकाम् । संभोक्तुं गुरुपत्नीं च पापाय महतां वै ॥

पूजिताय सुराणां च देया तस्मै निशापते। प्रियाय तत्प्रियां दत्त्वा शीघ्रं त्वं शरणं व्रज
गुरुपत्नी मातृतुल्यां त्यज मद्वचनाद्विधो । कुरु पापक्षयं पापनिवृत्तिस्तु महाफला ॥
सतीनां गुरुपत्नीनां ग्रहणे च बलेन च । ब्रह्महत्यासहस्राणां पातकं लभते जनः ॥
कुम्भीपाके च पच्यन्ते यावद्वै ब्रह्मणः शतम्। साम्यं नारायणस्थाने तृणपर्वतयोः सुर ॥
कस्त्वं वत्स हरेः स्थाने कर्मभोगोऽस्ति ब्रह्मण । नारायणाश्रिताः सर्वे जीविनस्त्रिविधा भवे

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं० ताराहरणेऽशीतितमोऽध्यायः ॥ ८० ॥

अथैकाशीतितमोऽध्यायः ।

श्रीकृष्ण उवाच—

एतस्मिन्नन्तरे शुक्रः सुरश्रेणीं ददर्श सः । आकाशमार्गादायान्तीं रणशस्त्रास्त्रधारिणीम्
पताकानां त्रिकोटिश्च शतकोटिर्महारथाः । शतकोटिर्गजेन्द्राणां रथानां तच्चतुर्गुणम् ॥
अश्वानां तच्छतगुणं समूहं च सुदारुणम् । पदातीनां समूहं च तुरङ्गेभ्यश्च षड्गुणम् ॥
दुंदुभीवाद्यभाण्डानां पञ्चलक्षं तथैव च । पटहानां त्रिलक्षं च डिण्डिमानां द्विलक्षकम् ॥
ऐरावते महेन्द्रं च श्वेताश्वे धर्ममेव च । कुबेरं वरुणं वह्निं रथस्थं पवनं तथा ॥ ५ ॥
महिषस्थं यमं चैव स्यन्दनस्थं दिवाकरम् । ईशानं च वृषेन्द्रस्थमनन्तं नागवाहनम् ॥६॥
आदित्यांश्च वसून्रुद्रान्सिद्धगन्धर्वकिंनरान् । जीवन्मुक्तमुनीनां च समूहं सूर्यवर्चसम् ॥
तान्दृष्ट्वा निर्भयः शुक्रः समाश्वास्य निशाकरम् । सुराणां द्विगुणं सैन्यमाजुहाव शनैश्चर ॥
रत्नमालानदीतीरे हुताशनप्रियाश्रमे । तत्र तस्थौ दैत्यसैन्यं पुण्यक्षीरोदवेस्तटे ॥ ९ ॥
एतस्मिन्नन्तरे शुक्रः समीपे सरसस्तटे । पुण्याश्रमेऽक्षयवटे सुरसैन्यात्समागतम् ॥१०॥
ददर्श वृषभस्थं च शंकरं सर्वशंकरम् । त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं वरम् ॥ ११ ॥
तेजःस्वरूपं परमं भक्तानुग्रहविग्रहम् । सर्वसंपत्प्रदातारं सर्वज्ञं सर्वकारणम् ॥ १२ ॥
सर्वेश्वरं सर्वपूज्यं सर्वरूपं सनातनम् । शरणागतदीनार्तपरित्राणपरायणम् ॥ १३ ॥
सस्मितं परमात्मानं ज्वलन्तं ब्रह्मतेजसा । संत्रस्तः सहसोत्थाय प्रणनाम पदाम्बुजे ॥
ददौ शुभाशिषं तस्मै सुप्रसन्नः परात्परः । रत्नसिंहासने तं च वासयामास सादरम् ॥
अथ तत्रान्तरे विप्रं पुरस्तं ददर्श सः । शान्तं स्वयं विधातारं रत्नस्यन्दनसुन्दरम् ॥
वह्निशुद्धांशुकाधानं रत्नमालाविभूषितम् । प्रसन्नं सुस्मितं शुद्धं जगतामीश्वरं परम् ॥

१ घ. त्रि० । २ क. गजेन्द्र' ।

कर्मणां फलदातारं तपोरूपं तपस्विनाम् । वेदानां जनकं वेदप्रसूं कान्तं मनोहरम् ॥
पुटाञ्जलिस्तदा भक्तः प्रणनाम सुरेश्वरम् । रत्नसिंहासने रम्ये वासयमास भक्तितः ॥
पूजां चकार भक्त्या च तयोश्चरणपङ्कजे । नोचितं कुशलप्रश्नं तयोः कल्याणमेव च ॥
विधाता जगतां नेन्द्र शुक्राचार्यं पुरस्थितम् । सुनीतिं कथयामास यत्नतः शंभुसंमतः ॥

ब्रह्मोवाच—

शृणु शुक्र प्रवक्ष्यामि दुर्नीतिं शशिनः सुत । लज्जाकरं त्रिजगतां कर्म वेदबहिष्कृतम् ॥
स्नात्वा गृहोन्मुखीं तारां गुरुपत्नीं पतिव्रताम् । गृहीत्वा शरणापन्नस्त्वयि पापश्च सांप्रतम्
प्रस्तुतं देवसैन्यं च पश्य वत्स रणोद्यतम् । अहं शंभुस्त्वत्समीपं तदर्थं च समागतौ ॥

शंभुरुवाच—

चन्द्रमानय हे विप्र यद्यात्मशिवमिच्छसि । संहरिष्ये शिरस्तस्य त्रिशूलेन च पापिनः ॥
अन्यथा संहरिष्यामि सर्वदैत्यान्क्षणेन च । मयि रुष्टे रक्षिता को दैत्यानां च भवेद्द्विज ॥
सद्यः पाशुपतेनैव वाऽस्त्रेण च सांप्रतम् । सुराणां रिपुवर्गं च हरिष्यामि च लीलया ॥
दुर्वाससो मदंशस्य गुरुस्तस्याङ्गिरा मुनिः । परस्पराच संबन्धाद्गुरुपुत्रो गुरुर्मम ॥२८॥
बृहस्पतिश्च तेजस्वी तं भस्मीकर्तुमीश्वरः । न चकार कृपालुश्चेतिशिष्येण हेतुना ॥
उतथ्यपत्नीं दृष्ट्वा स पुरा रेमे स्वकामतः । तत्पतेः शापतोऽस्यैव परग्रस्ता प्रिया सती ॥
पत्नीं मद्गुरुपुत्रस्य देहि तारां मनोहराम् । मद्वैरिणं च चन्द्रं च भ्रातृभार्यापहारिणम् ॥
शरणागतदीनार्तं न हि रक्षेद्यदीश्वरः । पच्यते निरये तावद्यावदिन्द्राश्चतुर्दश ॥३२॥
अत्र नास्ति विचारो मे पापिष्ठे शरणागते । पापी यं शरणं याति स पापी च न संशयः
देहि तं विप्रशार्दूल पापिनं मातृगामिनम् । बहिष्कृत्य स्वाश्रमाच्च तारासाध्वीसमन्वितम्

शुक्र उवाच—

सुराणामसुराणां च सर्वेषां जगतामपि । त्वमेव शास्ता भगवान्को वा शास्ति सुरेऽसुरे ॥
कृत्वा सुराणां साहाय्यं कथं दैत्यान्हनिष्यसि । संहर्तुः सर्वजगतां दैत्यौघे किं च पौरुषम्
त्वं ज्योतिः परमं ब्रह्म सगुणो निर्गुणः स्वयम् । गुणभेदान्मूर्तिभेदो ब्रह्मविष्णुशिवाभिधः
बलिद्वारे गदापाणिः स्वयमेव भवान्प्रभो । स्वयं प्रदत्ता शक्राय तस्मै श्रीरपि लीलया ॥
क्षमस्व भगवञ्छंभो हर क्रोधं च संहर । किं पौरुषं च भवतो ब्राह्मणस्यापि हिंसया ॥
अहं जीवच्छरीरेण न दास्यामि निशाकरम् । शरणागतदीनार्तं लज्जितं पापसंयुतम् ॥
अहं च त्वत्पदाम्भोजे शरणं यामि शंकर । यथोचितं कुरु विभो जगत्सर्वं तथैव च ॥
शुक्रस्य वचनं श्रुत्वा प्रसन्नो भगवाञ्छिवः । इत्युवाच निशानाथं सनातन शुभं भवेत् ॥

एतस्मिन्नन्तरे ब्रह्मा बोधयित्वा कवि विभुः । समानीय निशानाथं तारकासहितं व्रज ॥
शंभोश्च चरणाम्भोजे चकार च समर्पणम् । शंभुस्तं प्रीतियुक्तश्च वासयामास वक्षसि ॥
दत्त्वा तस्मै पादरेणुं निष्पापं च चकार सः । दत्त्वा तन्मस्तके हस्तं कृपालुरभयं ददौ ॥
क्षीरोदे स्नापयित्वा च प्रायश्चित्तेन शंकरः । चकार चन्द्रं निष्पापं ब्रह्मणा सहित. शुचिम्
योगेन चन्द्रं योगीन्द्रो द्विखण्ड तं चकार स । ररक्षार्धं ललाटे च सोऽप्यर्धं ब्रह्मण· पुरः
अत एव महादेवो बभूव चन्द्रशेखर. । मृगाङ्को लज्जितस्तत्र कलङ्की देवसंसदि ॥ ४८॥
लज्जया च स्वयोगेन देहत्यागं चकार सः । तच्छरीरं च क्षीरोदे ब्रह्मणा च समर्पितम् ॥
रुरोदात्रिश्च कृपया शुचा क्षीरोदधेस्तटे । अत्रेश्चक्षुर्जलं तस्य पपात च जले व्रज ॥
तस्माद्बभूव चन्द्रश्च निष्पापो देवसंसदि । ब्रह्मा च भगवाञ्छंभुरभिषेकं चकार तम् ॥
उवाच तं महादेवो निर्भयं देवसंसदि ॥ ५१ ॥

महादेव उवाच—

स्वस्थानं गच्छ पुत्र त्वं कुरुष्व विषयं मुदा । पश्चात्तस्याश्च शापेन यक्ष्मग्रस्तो भविष्यसि
व्यर्थं पतिव्रताशापं कर्तुमीशश्च को भुवि । मदाशिषा यक्ष्मणश्च प्रतीकारो भविष्यति ॥
यस्माद्भाद्रचतुर्थ्यां तु गुरुपत्नीरतिः कृता । तस्मात्तस्मिन्दिने वत्स पापदृश्यो युगे युगे
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥
देहत्यागेन हे वत्स कर्मभोगो न नश्यति । प्रायश्चित्तान्न संदेहो ह्यन्तमेव भविष्यति ॥
तारापहरणाद्वत्स कलङ्कश्चन्द्रमण्डले । मृगाकृतिर्विलग्नश्च भविष्यति युगे युगे ॥५७॥
शृणु वाक्यमिहाऽऽगच्छ तारके च पतिव्रते । सत्यं ब्रूहि कस्य गर्भं त्यक्त्वा शुद्धा भव प्रिये
अकामतो बलात्साध्वी न स्त्री जारेण दुष्यति । कामतो नरकं याति यावच्चन्द्रदिवाकरौ ॥
उवाच तारा ब्रह्माणं गर्भं चन्द्रस्य सस्मितम् । जहसुर्देवता. सर्वा शंभुश्च मुनिसत्तमाः ॥
ददौ तारां च गुरवे लज्जिताय व्रजेश्वर । बृहस्पतिर्ययौ गेहं गृहीत्वा च पतिव्रताम् । ६१॥
तया प्रसूतं पुत्रं च सुन्दरं कनकप्रभम् । ग्रहीत्वा प्रययौ चन्द्रो नमस्कृत्य विधिं शिवम्
ययुर्देवाश्च मुनयः शंभुश्च कमलोद्भव । प्रययौ स्वगृहं शुक्रो दैत्ययुक्तो मुदाऽन्वितः ॥
एतत्ते कथितं नन्द व्याख्यानं पुण्यदं शुभम् । एतच्छ्रुत्वा तु निष्पापो निष्कलङ्की नरो भवेत्
धन्यं यशस्यमायुष्यं सर्वसंपत्करं परम् । शोकापनोदनं हर्षकरं सर्वत्र मङ्गलम् ॥६५॥
त्यज शोकं सदा नन्द गृहं व्रज व्रजेश्वर । ब्रूहि सर्वं यशोदां च मत्प्रसूं गोपिकागणम् ॥

---

१ क 'भाद्रचतुर्थ्या'। २ क 'क्षता ह' ।

बोधयिष्यसि सर्वां तां स्त्रीजातिं शोकसंयुताम् । मदीयज्ञानदत्तेन हर्षयुक्तः सदा भव ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० ताराहरणं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

अथ द्व्यशीतितमोऽध्यायः ।

नन्द उवाच—

श्रुतं सर्वं महाभाग दुःस्वप्नं कथय प्रभो । उवाच तं वै भगवाञ्छ्रूयतामिति तद्वच ॥

श्रीभगवानुवाच—

स्वप्ने हसति यो हर्षाद्विवाहं यदि पश्यति । नर्तनं गीतमिष्टं च विपत्तिस्तस्य निश्चितम्
दन्ता यस्य विपीड्यन्ते विचरन्तं च पश्यति । धनहानिर्भवेत्तस्य पीडा चापि शरीरजा
अभ्यक्तितस्तु तैलेन यो गच्छेद्दक्षिणां दिशम् । खरोष्ट्रमहिषारूढो मृत्युस्तस्य न संशयः
स्वप्ने कर्णे जपापुष्पमशोकं करवीरकम् । विपत्तिस्तस्य तैलं च लवणं यदि पश्यति ॥
नग्ना कृष्णा छिन्ननासा शूद्रस्य विधवा तथा । कपर्दकं तालफलं दृष्ट्वा शोकमवाप्नुयात्
स्वप्ने रुष्टं ब्राह्मणं च ब्राह्मणीं कोपसंयुताम् । विपत्तिश्च भवेत्तस्य लक्ष्मीर्याति गृहाद्ध्रुवम्
वनपुष्पं रक्तपुष्पं पलाशं च सुपुष्पितम् । कार्पासं शुक्लवस्त्रं च दृष्ट्वा दुःखमवाप्नुयात् ॥
गायन्तीं च हसन्तीं च कृष्णाम्बरधरां स्त्रियम् । दृष्ट्वा कृष्णां च विधवां नरो मृत्युमवाप्नुयात् ॥ ९ ॥
देवता यत्र नृत्यन्ति गायन्ति च हसन्ति च । आस्फोटयन्ति धावन्ति तस्य देहो मरिष्यति
वान्तं मूत्रं पुरीषं च रौप्यं रौप्यं सुवर्णकम् । प्रत्यक्षमथवा स्वप्ने जीवितं दशमासवधि ॥ ११ ॥
कृष्णाम्बरधरां नारीं कृष्णमाल्यानुलेपनाम् । उपगूहति यः स्वप्ने तस्य मृत्युर्भविष्यति
मृतवत्सं च मुण्डं च मृगस्य च नरस्य च । यः प्राप्नोत्यस्थिमालां च विपत्तिस्तस्य निश्चितम्
रथं खरोष्ट्रसंयुक्तमेकाकी योऽधिरोहयेत् । तत्रस्थोऽपि च जागर्ति मृत्युरेव न संशयः ॥
अभ्यक्तितस्तु हविषा क्षीरेण मधुनाऽपि च । तक्रेणापि गुडेनैव पीडा तस्य विनिश्चितम्
रक्ताम्बरधरां नारीं रक्तमाल्यानुलेपनाम् । उपगूहति यः स्वप्ने तस्य व्याधिर्विनिश्चितम्
पतितान्नखकेशांश्च निर्वाणाङ्गारमेव च । भस्मपूर्णां चितां दृष्ट्वा लभते मृत्युमेव च ॥ १७ ॥
श्मशानं शुष्ककाष्ठं च तृणानि लोहमेव च । शाश्मीं च किञ्चिद्रक्तार्धं दृष्ट्वा दुःखं लभेद्ध्रुवम्

पादुकां फलकं रक्तं पुष्पमाल्यं भयानकम् । माषं मसूरं मुद्गं वा दृष्ट्वा सद्यो व्रणं लभेत् ॥
कटकं सरठं काकं भल्लूकं वानरं गवम् । पूयं गात्रमलं स्वप्ने केवलं व्याधिकारणम् ॥
भग्नभाण्डं क्षतं शूद्रं गलत्कुष्ठं च रोगिणम् । रक्ताम्बरं च जटिलं सूकरं महिषं खरम् ॥
अन्धकारं महाघोरं मृतजीवं भयंकरम् । दृष्ट्वा स्वप्ने योनिलिङ्गं विपत्तिं लभते ध्रुवम् ॥
कुवेषरूपं म्लेच्छं च यमदूतं भयंकरम् । पाशहस्तं पाशशास्त्रं दृष्ट्वा मृत्युं लभेन्नरः ॥
ब्राह्मणो ब्राह्मणी बालो बालको वा सुतः सुता । विलापं कुरुते कोपाद्दृष्ट्वा दुःखमवाप्नुयात्
कृष्णं पुष्पं च तन्माल्यं सस्यं शस्त्रास्त्रधारिणम् । म्लेच्छां च विकृताकारां दृष्ट्वा मृत्युं ल-
भेद्ध्रुवम् ॥ २१ ॥
त्यक्तप्राणं मृतं दृष्ट्वा मृत्युं च लभते ध्रुवम् । मत्स्यादिधारयेद्यो हि तद्भ्रातुर्मरणं ध्रुवम् ॥
वाद्यं च नर्तनं गीतं गायनं रक्तवाससम् । मृदङ्गं वाद्यमानं तं दृष्ट्वा दुःखं लभेद्ध्रुवम् ॥
छिन्नं वाऽपि कबन्धं वा विकृतं मुक्तकेशिनम् । क्षिप्रं नृत्यं च कुर्वन्तं दृष्ट्वा मृत्युं लभेन्नरः ॥
मृतो वाऽपि मृता वाऽपि कृष्णा म्लेच्छा भयानका । उपगूहति यं स्वप्ने तस्य मृत्युर्विनिश्चितम्
येषां दन्ताश्च भग्नाश्च केशाश्चापि पतन्ति हि । धनहानिर्भवेत्तस्य पीडा वा तच्छरीरजा ॥
उपद्रवन्ति यं स्वप्ने शृङ्गिणो दंष्ट्रिणोऽपि वा । बालका मानवाश्चैव तस्य राजकुलाद्भयम् ॥
छिन्नवृक्षं पतन्तं च शिलावृष्टिं तुषं क्षुरम् । रक्ताङ्गारं भस्मवृष्टिं दृष्ट्वा दुःखमवाप्नुयात् ॥
गृहं पतन्तं शैलं वा धूमकेतुं भयानकम् । भग्नस्कन्धं तरोर्वाऽपि दृष्ट्वा दुःखमवाप्नुयात्
रथगेहशैलवृक्षगोहस्तितुरगाम्बरात् । भूमौ पतति यः स्वप्ने विपत्तिस्तस्य निश्चितम् ॥
उच्चैः पतन्ति गर्तेषु भस्माङ्गारयुतेषु च । क्षारकुण्डेषु चूर्णेषु मृत्युस्तेषां न संशयः ॥२९॥
भग्नं गृह्णाति दुष्टश्च छत्रं च यस्य मस्तकात् । पितुर्नाशो भवेत्तस्य गुरोर्वाऽपि नृपस्य वा ॥
सुरभिर्यस्य गेहाच्च याति कृष्णा सवत्सिका । प्रयाति पापिनस्तस्य लक्ष्मीरपि वसुंधरा ॥
पाशेन कृत्वा बद्धं च यं गृहीत्वा प्रयान्ति च । यमदूताश्च ये म्लेच्छास्तस्य मृत्युर्विनिश्चितम्
गणको ब्राह्मणो वाऽपि ब्राह्मणी वा गुरुस्तथा । परिहृष्टः शपति यं विपत्तिस्तस्य निश्चितम् ॥
विरोधिनश्च काकाश्च कुक्कुटा भल्लुकास्तथा । पतन्त्यागत्य यद्गात्रे तस्य मृत्युर्न संशयः
महिषा भल्लुका उष्ट्राः सूकरा गर्दभास्तथा । रुष्टा धावन्ति यं स्वप्ने स रोगी निश्चितं भवेत्
रक्तचन्दनकाष्ठानि घृताक्तानि जुहोति यः । गायत्र्याश्च सहस्रेण तेन शान्तिर्विधीयते ॥
सहस्रधा जपेद्यो हि भक्त्यैनं मधुसूदनम् । निष्पापो हि भवेत्सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्
अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम् । हंसं नारायणं चैव ह्येतन्नामाष्टकं शुभम् ॥

१ क. विदार्यं । २ घ. °यं नरं वा ।

शुचिः पूर्वमुखः प्राज्ञो दशकृत्वश्च यो जपेत्। निष्पापोऽपि भवेत्सोऽपि दुःस्वप्नः शुभवान्भवेत् ॥ ४९ ॥

विष्णुं नारायणं कृष्णं माधवं मधुसूदनम्। हरिं नरहरिं रामं गोविन्दं दधिवामनम् ॥५०॥
भक्त्या चेमानि नामानि दश भद्राणि यो जपेत्। शतकृत्वो भक्तियुक्तो जप्त्वा नीरोगतां व्रजेत्
लक्षधा हि जपेद्यो हि बन्धनान्मुच्यते ध्रुवम्। जप्त्वा च दशलक्षं च महावन्ध्या प्रसूयते॥
हविष्याशी यतः शुद्धो दरिद्रो धनवान्भवेत्। शतलक्षं च जप्त्वा च जीवन्मुक्तो भवेन्नरः
ओं नमः शिवं दुर्गां गणपतिं कार्तिकेयं दिनेश्वरम्। धर्मं गङ्गां च तुलसीं राधां लक्ष्मीं सरस्वतीम्
नामान्येतानि मन्त्राणि जले स्नात्वा च यो जपेत्। वाञ्छितं च लभेत्सोऽपि दुःस्वप्नः शुभवान्भवेत् ॥ ५१ ॥

ओं ह्रीं श्रीं क्लीं पूर्वदुर्गतिनाशिन्यै महामायायै स्वाहा। कल्पवृक्षो हि लोकानां मन्त्रः सप्तदशाक्षरः ॥ ५२ ॥

शुचिश्च दशधा जप्त्वा दुःस्वप्नः सुखवान्भवेत्। शतलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम्॥
सिद्धमन्त्रस्तु लभते सर्वसिद्धिं च वाञ्छिताम्। ओं नमो मृत्युंजयायेति स्वाहान्तं लक्षधा जपेत्
दृष्ट्वा च मरणं स्वप्ने शतायुश्च भवेन्नरः। पूर्वोत्तरमुखो भूत्वा स्वप्नं प्राज्ञे प्रकाशयेत् ।
काश्यपे दुर्गते नीचे देवब्राह्मणनिन्दके। मूर्खे चैवानभिज्ञे च न च स्वप्नं प्रकाशयेत् ॥५३॥
अश्वत्थे गणके विप्रे पितृदेवासनेषु च। आर्ये च वैष्णवे मित्रे दिवा स्वप्नं प्रकाशयेत् ॥
इति ते पुण्यमाख्यातं कथितं पापनाशनम्। धन्यं यशस्यमायुष्यं किं भूयः श्रोतुमिच्छसि॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं० द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

अथ त्र्यशीतितमोऽध्यायः ।

नन्द उवाच—

वेदानां कारणं त्वं च ब्रह्मादीनां च पुत्रक। सर्वं कथय भद्रं ते कं पृच्छामि त्वया विना॥
विप्राणां यो हि धर्मश्च क्षत्रविट्शूद्रकर्मणाम्। संन्यासिना च यो धर्मो यतीनां ब्रह्मचारिणाम्
विप्राणां विधवास्त्रीणां वैष्णवानां सतामपि। पतिव्रतानां स्त्रीणां च तत्सर्वं वक्तुमर्हसि ॥
गृहिणां गृहिणीनां च शिष्याणां च विशेषतः। पुत्राणां चापि कन्यानां पितरं मातरं प्रति
स्त्रीजातिश्च कतिविधा भक्तः कतिविधः प्रभो। ब्रह्माण्डं च कतिविधं वदनं च किमात्मकम्॥
किं नित्यं कृत्रिमं किं च ब्रूहि सर्वं क्रमेण च॥

श्रीभगवानुवाच—

संध्यापूतः सदा विप्रः कुरुते मम सेवनम् । नित्यं भुङ्क्ते मत्प्रसादमनिवेद्यं कदा च न ॥
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् । विष्णुप्रसादभोजी च जीवन्मुक्तश्च ब्राह्मणः
नित्यं तपस्यानिरतः शुचिः शान्तश्च शास्त्रवित् । व्रततीर्थाश्रितो धर्मी नानाध्यापनसंयुतः
विष्णुमन्त्रं गृहीत्वा च कृत्वा च गुरुसेवनम् । गृहीत्वा तदनुज्ञां च पश्चाद्भवति स गृही ॥
दक्षिणां नित्यपूजानां गुरवे च निवेदयेत् । गुरूणां पोषणं नित्यं कर्तव्यं नात्र संशयः ॥
सर्वेषामपि बन्धूनां पिता चैव महान् गुरुः । पितुः शतगुणैर्माता मातुः शतगुणैः सुरः ॥
मन्त्रदस्तन्त्रदश्चैव पुराणां च चतुर्गुणः । नारायणश्च भगवान्गुरुः प्रत्यक्ष ईश्वरः ॥ १३॥
उद्देशे दीयते तस्मै सुरायेति श्रुतौ श्रुतम् । प्रत्यक्षभोक्ता स्वगुरुः स्वयं देही जनार्दनः ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुरेव स्वयं शिवः । गुरौ च सर्वदेवाश्च तिष्ठन्ति सततं मुदा ॥१९॥
गुरौ तुष्टे हरिस्तुष्टो यस्मिंस्तुष्टे च देवताः । गुरुः पुत्रसमं स्नेहं शिष्येषु न करिष्यति ॥
लभते ब्रह्महत्यां च भुङ्क्ते कृत्वा च नाऽऽशिषम् । स्वधर्मनिरतो विप्रो ब्राह्मणश्च सदा शुचिः
विष्णुसेवी सदा विप्रस्तदन्योऽप्यशुचिः सदा । ब्राह्मणो वृषवाहश्च शूद्राणां सूपकारकः
ब्राह्मणो देवलश्चैव संध्याहीनश्च दुर्बलः । ब्राह्मणश्च दिवाशायी शूद्रश्राद्धान्नभोजनः ॥
शूद्राणां शवदाही च ते च शूद्रसमा द्विजाः । शालग्राममहामन्त्रं कृत्वा पूजां विधानतः
भुङ्क्ते नैवेद्यशेषं च तत्पादोदकमेव च । हरेः पादोदकं पीत्वा तीर्थस्नायी भवेन्नरः ॥
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति । स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः
शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत् । गङ्गास्नानाद्दशगुणं शाल्यं भजलं भज ॥२३॥
नित्यं भुङ्क्ते च यो विप्रो जीवन्मुक्तः सुरैः समः । विप्राणां नित्यकृत्यं च विष्णोर्नैवे-
द्यभोजनम् ॥ २४ ॥
यत्नेन पूजनं तस्य तत्पादोदकसेवनम् । नित्यं त्रिसंध्यं कुरुते भक्त्या च मम पूजनम्
एकादश्यां न भुङ्क्ते च मम वै जन्मवासरे । शिवरात्रौ च हे तात श्रीरामनवमीदिने
न च भुङ्क्ते मतौ यो हि जीवन्मुक्तो हि स द्विजः । पृथिव्यां यानि तीर्थानि तस्य
पादे च तानि च ॥ २७ ॥
विप्रपादोदकं पीत्वा तीर्थस्नायी भवेन्नरः । विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ॥
तावत्पुष्करपात्रेषु पिबन्ति पितरो जलम् । विष्णुप्रसादभोजी च पवित्रां कुरुते महीम् ॥
तीर्थानि च नरांश्चैव जीवन्मुक्तो हि स द्विजः । सर्वतीर्थेषु स स्नातो व्रतानां च फलं लभेत्

---

१ क. ॰ष्मभक्षणम् । २ क. च ।

नित्यं नूतनभाण्डेन कर्तव्यः पाक एव च । अथवा पक्षपर्यन्तं ततस्त्याज्यं मनीषिभिः
स्थानं सुसंस्कृतं कृत्वा पाकं निर्वृत्य पूजकः । स्थाने परिष्कृते विप्रो दत्त्वा मह्यं च भक्तितः
तदा निवेद्य भुङ्क्ते च दत्त्वा विप्राय सादरम् । अनिवेद्य च भुक्त्वा च सुरापीतिर्भवेद्द्विजः
चन्द्रसूर्योपरागे वै चाऽऽशौचे मृतजातयोः । स्पृष्टेनाशुचिना सद्यः पाकभाण्डं परित्यजेत्
भृष्टं द्रव्यं तथाऽन्नं च धृत्वा धौते च वाससी । पादप्रक्षालनं कृत्वा भुङ्क्ते स्थाने परिष्कृते
द्विर्भोजनं न कर्तव्यं स्थिते सूर्ये द्विजातिभिः । निष्फलं तद्भवेत्कर्म भुक्त्वा च नरकं व्रजेत्
यात्रां युद्धं नदीतीरं पुनर्भोजनमैथुने । वर्जयेच्छ्राद्धदिवसे हविष्याशी च संयमी ॥
द्विजाय विष्णुभक्ताय पात्रं दद्याद्बुधाय च । वृषलीपतये चैव न दद्याच्छूद्रयाजिने ॥
संध्याहीनाय दुष्टाय वृषवाहाय यत्नतः । शुक्रविक्रयिणे चैव देवलाय कदाचन ॥
प्रदत्तं पात्रमेतेभ्यो ब्राह्मणं नरकं नयेत् । पात्रं भुक्त्वा तद्दिवसे मैथुनान्नरकं व्रजेत् ॥
सर्वेभ्यः पातकी तात कन्याविक्रयकारकः । मूल्यं गृहीत्वा यो दद्यात्स महारौरवं व्रजेत्
कन्यालोमप्रमाणान्तं वर्षं च पितृभिः सह । कुम्भीपाके पच्यते च पुत्रश्चापि पुरोहितः
तस्मात्कन्यां सुपात्राय दानं कुर्याद्विचक्षणः । शूद्रब्राह्मणेभ्यश्च नैव तद्दृशजाय च ॥
विप्रवैष्णवयोर्धर्मः कथितश्च व्रजेश्वर । यदुक्तं च पुराणैश्च चतुर्भिः श्रुतिभिस्तथा ॥१८॥
द्विजार्चनं क्षत्रियाणां तथा नारायणार्चनम् । राज्यानां पालनं चैव रणे निर्भयता तथा
नित्यं दानं ब्राह्मणेभ्यः शरणागतरक्षणम् । पुत्रतुल्यं प्रजानां च दुःखिनां परिपालनम्
शास्त्रास्त्राणां च नैपुण्यं रणे शौण्डीर्यमेव च । तपश्च धर्मकृत्यं च यत्नतः कुरुते मुदा
पण्डितं नीतिज्ञास्त्रज्ञं नित्यं च परिपालयेत् । नियोजयेत्सभामध्ये नित्यं सद्भिश्च संयुते
हस्त्यश्वरथपादातं सेनाङ्गं च चतुष्टयम् । पालयेद्यत्नतो नित्यं यशस्वी च प्रतापवान् ॥
रणे निमन्त्रितश्चैव दाने न विमुखो भवेत् । रणे वा यस्त्यजेत्प्राणांस्तस्य स्वर्गो यशस्करः
वैश्यानामपि वाणिज्यमीश्वरः कृषिपालने । विप्रदेवार्चनं दानं तपस्या व्रतसेवनम् ॥
विप्राणामर्चनं नित्यं शूद्रधर्मो विधीयते । तद्द्वेषी तद्धनग्राही शूद्रश्चाण्डालतां व्रजेत् ॥
गृध्रः कोटिसहस्राणि शतजन्मानि सूकरः । श्वापदः शतजन्मानि शूद्रो विप्रधनापहः ॥
यः शूद्रो ब्राह्मणीगामी मातृगामी स पातकी । कुम्भीपाके पच्यते स यावद्वै ब्रह्मणः शतम् ॥
कुम्भीपाके तप्ततैले मुक्तः सर्पैरहर्निशम् । शब्दं च विकृताकारं कुरुते यमताडनात् ॥
ततश्चाण्डालयोनिः स्यात्सप्तजन्मसु पातकी । सप्तजन्मसु सर्पश्च जलौकाः सप्तजन्मसु ॥
जन्मकोटिसहस्रं च विष्ठायां जायते कृमिः । पुंश्चलीनां योनिकृमिः स भवेत्सप्तजन्मसु

---

१ क. शुद्धपि ।

पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् । वह्निवायुसमः पूतस्तेजसा भास्करोपमः ॥
यमदूतं यमं चैव स च स्वप्ने न पश्यति । वैकुण्ठे मोदते सोऽपि पार्षदो हरिणा सह ॥
न भवेत्तस्य पातो हि विप्रस्य हरिसेविनः । विष्णुमन्त्रोपासकश्च स एव वैष्णवो द्विजः
ब्राह्मणो वैष्णवः प्राज्ञो न हि तस्मात्परः पुमान् । वेदोक्तो वा पुराणोक्तस्तन्त्रोक्तो वा
मनुः शुचिः ॥ ३४ ॥
विचारतो गृहीत्वा तं शैवः शाक्तश्च वैष्णवः । गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशत्ययम् ।
तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः । मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ॥
भित्त्वा ब्रह्माण्डमखिलं यास्यत्येव हरेः पदम् । पूर्वान्सप्त परान्सप्त सप्त मातामहादिकान् ॥
सोदरानुद्धरेद्भक्तस्तत्प्रसूं तत्प्रसूं तथा । जपेन्नारायणक्षेत्रे पुरश्चरणपूर्वकम् ॥ ३७ ॥
पुरुषाणां सहस्रं च लीलयाऽऽत्मानमुद्धरेत् । मन्त्रग्रहणमात्रेण फलमेतद्व्रजेश्वर ॥ ३९ ॥
पुरश्चरणसंपर्कात्पुरुषाणां शतं शतम् । ऐकान्तिको वैष्णवश्च पुंसां लक्षं समुद्धरेत् ॥
क्रिया विष्णुपदे यस्य संकल्पाश्च बहिष्कृताः । द्विजाः सुरा मम प्राणा भक्तः प्राणा-
त्परः प्रियः ॥ ४१ ॥
विश्वेषु प्रियपात्रेषु न मे भक्तात्परः प्रियः । तेजीयांसं गुरुं दृष्ट्वा सर्वत्र रक्षितुं क्षमम्
करोति मन्त्रग्रहणं तस्माद्भूयो विचक्षणः । वयोहीनाज्ज्ञानहीनाद्विद्याहीनात्तथैव च ॥
जातिहीनाद्गुरोर्मन्त्रं गृह्णीयान्न कदाचन ॥ ४२ ॥
अशास्त्रार्थं क्षतं मन्त्रं न गृह्णीयात्कदाचन । मूर्खादाश्रमहीनाच्च पितुः संन्यासिनस्तथा
रोगिणो वंशहीनाच्च भार्याहीनात्तथैव च । मन्त्रक्लिष्टात्तथा मन्त्रं न गृह्णीयात्कदाचन
विष्णुमन्त्रं न गृह्णीयाद्विष्णुभक्तिविहीनतः । न च शैवान्न शाक्ताच्च गृह्णीयाद्वैष्णवाद्द्विजात्
वयोहीनात्तथाऽल्पायुर्ज्ञानहीनादपण्डितः । विद्याहीनाद्भवेन्मूढो जातिहीनात्क्षयो भवेत् ॥
मूर्खान्मूर्खो भवेत्सद्यो दुःखी स्वाश्रमहीनतः । यशोहानिः पितुश्चैव मृत्युः संन्यासिनस्तथा
रोगिणो व्याधियुक्तश्च निर्वंशो वंशहीनतः । भार्याहीनोऽपि स्त्रीहीनान्मन्त्रक्लिष्टाद्गुरोः समः
विष्णुभक्तिविहीनाच्च भक्तिहीनो भवेन्नरः । शैवाच्छाक्ताद्गृहीत्वा च हरौ भक्तिर्न वर्धते
ब्राह्मणो वैष्णवः शुद्धः पक्वान्नं दातुमीश्वरः । पक्वान्नं हरये दातुमक्षमश्चेतरो जनः ॥
ओंकारोच्चारणाद्धोमाच्छालग्रामशिलार्चनात् । मह्यं पक्वान्नदानाच्च विप्रादन्यो व्रजेदधः
उदासीनाद्दुराचारान्न गृह्णीयान्मनुं सुधीः । दैवाद्यदि च गृह्णीयाद्धनहीनो भवेद्ध्रुवम्
ब्राह्मणानां सदा भक्ष्यं हविष्यं च निरामिषम् । आमिषस्य परित्यागात्सूर्यवत्तेजसा भवेत्

---

१ क. 'स्वप्ने वि' । २ ख. शास्त्रार्थं चाथ' ।

नित्यं नूतनभाण्डेन कर्तव्यः पाक एव च । अथवा पक्षपर्यन्तं ततस्त्याज्यं मनीषिभिः
स्थानं सुसंस्कृतं कृत्वा पाकं निर्वृत्य पूजकः । स्थाने परिष्कृते विप्रो दत्त्वा मह्यं च भक्तितः
तदा निवेद्य भुङ्क्ते च दत्त्वा विप्राय सादरम् । अनिवेद्य च भुक्त्वा च सुरापीतिर्भवेद्द्विजः
चन्द्रसूर्योपरागे वै चाऽऽशौचे मृतजातयोः । स्पृष्टेनाशुचिना सद्यः पाकभाण्डं परित्यजेत्
भ्रष्टं द्रव्यं तथाऽन्नं च धृत्वा धौते च वाससी । पादप्रक्षालनं कृत्वा भुङ्क्ते स्थाने परिष्कृते
द्विर्भोजनं न कर्तव्यं स्थिते सूर्ये द्विजातिभिः । निष्फलं तद्भवेत्कर्म भुक्त्वा च नरकं व्रजेत्
यात्रां युद्धं नदीतीरं पुनर्भोजनमैथुने । वर्जयेच्छ्राद्धदिवसे हविष्याशी च संयमी ॥
द्विजाय विष्णुभक्ताय पात्रं दद्याद्बुधाय च । वृषलीपतये चैव न दद्याच्छूद्रयाजिने ॥
संध्याहीनाय दुष्टाय वृषवाहाय यत्नतः । शुक्रविक्रयिणे चैव देवलाय कदाचन ॥
प्रदत्तं पात्रमेतेभ्यो ब्राह्मणं नरकं नयेत् । पात्रं भुक्त्वा तद्दिवसे मैथुनान्नरकं व्रजेत् ॥
सर्वेभ्यः पातकी तात कन्याविक्रयकारकः । मूल्यं गृहीत्वा यो दद्यात्स महारौरवं व्रजेत्
कन्यालोमप्रमाणान्तं वर्षं च पितृभिः सह । कुम्भीपाके पच्यते च पुत्रश्चापि पुरोहितः
तस्मात्कन्यां सुपात्राय दानं कुर्याद्विचक्षणः । शूद्रवद्ब्राह्मणेभ्यश्च नैव तद्वंशजाय च ॥
विप्रवैष्णवयोर्धर्मः कथितश्च व्रजेश्वर । यदुक्तं च पुराणैश्च चतुर्भिः श्रुतिभिस्तथा ॥६८॥
द्विजार्चनं क्षत्रियाणां तथा नारायणार्चनम् । राज्यानां पालनं चैव रणे निर्भयता तथा
नित्यं दानं ब्राह्मणेभ्यः शरणागतरक्षणम् । पुत्रतुल्यं प्रजानां च दुःखिनां परिपालनम्
शस्त्रास्त्राणां च नैपुण्यं रणे शौण्डीर्यमेव च । तपश्च धर्मकृत्यं च यत्नतः कुरुते मुदा
पण्डितं नीतिशास्त्रज्ञं नित्यं च परिपालयेत् । नियोजयेत्सभामध्ये नित्यं सद्भिश्च संयुते
हस्त्यश्वरथपादातं सेनाङ्गं च चतुष्टयम् । पालयेद्यत्नतो नित्यं यशस्वी च प्रतापवान् ॥
रणे निमन्त्रितश्चैव दाने न विमुखो भवेत् । रणे वा यस्त्यजेत्प्राणांस्तस्य स्वर्गो यशस्करः
वैश्यानामपि वाणिज्यमीश्वरः कृषिपालने । विप्रदेवार्चनं दानं तपस्या व्रतसेवनम् ॥
विप्राणामर्चनं नित्यं शूद्रधर्मो विधीयते । तद्द्वेषी तद्धनग्राही शूद्रश्चाण्डालतां व्रजेत् ॥
गृध्रः कोटिसहस्राणि शतजन्मानि सूकरः । श्वापदः शतजन्मानि शूद्रो विप्रधनापहः ॥
यः शूद्रो ब्राह्मणीगामी मातृगामी स पातकी । कुम्भीपाके पच्यते स यावद्वै ब्रह्मणः शतम् ॥
कुम्भीपाके तप्ततैले मुक्तः सर्पैरहर्निशम् । शब्दं च विकृताकारं कुरुते यमताडनात् ॥
ततश्चाण्डालयोनिः स्यात्सप्तजन्मसु पातकी । सप्तजन्मसु सर्पश्च जलौकाः सप्तजन्मसु ।
जन्मकोटिसहस्रं च विष्ठायां जायते कृमिः । पुंश्चलीनां योनिकृमिः स भवेत्सप्तजन्मसु

१ क. शुद्रवि॰ ।

गवां व्रणकृमिः स्याच्च पातकी सप्तजन्मसु। योनौ योनौ भ्रमत्येवं न पुनर्जायते नरः
संन्यासिना च यो धर्मो मन्मुखाच्च निशामय। दण्डग्रहणमात्रेण नरो नारायणो भवेत्
पूर्वकर्माणि दग्ध्वा च परकर्मनिकृन्तनम्। कुरुते चिन्तयेन्मां च ध्यायति मम मन्दिरम्
संन्यासिनः पदस्पर्शात्सद्यः पूता वसुंधरा। सद्यः पुनन्ति तीर्थानि वैष्णवस्य यथा व्रज
संन्यासिनश्च स्पर्शेन निष्पापो जायते नरः। संन्यासिनं भोजयित्वा चाश्वमेधफलं लभेत्
नत्वा च कामतो दृष्ट्वा राजसूयफलं लभेत्। फलं संन्यासिना तुल्यं यतीनां ब्रह्मचारिणाम्
संन्यासी याति सायाह्ने क्षुधितो गृहिणा गृहम्। सदन्नं वा कदन्नं वा तद्दत्तं नैव वर्जयेत्
न याचते च मिष्टान्नं न कुर्यात्कोपमेव च। न धनग्रहणं कुर्यादेकवासा निरीहतः ॥
शीतग्रीष्मसमानश्च लोभमोहविवर्जितः। तत्र स्थित्वैकरात्रं च प्रातरन्यत्स्थलं व्रजेत् ॥
यानमारोहणं कृत्वा गृहीत्वा गृहिणो धनम्। गृहं कृत्वा गृही स्यात्स्वधर्मात्पतितो भवेत्
कृत्वा च कृषिवाणिज्यं कुवृत्तिं कुरुते च यः। स संन्यासी हताचारः स्वधर्मात्पतितो भवेत्
अशुभं च शुभं वाऽपि स्वकर्म कुरुते यदि। बहिष्कृतः स्वधर्माद्वाऽप्युपहास्यश्च वै भवेत्
ब्राह्मणी पतिहीना या भवेन्निष्कामिनी सदा। एकभुक्ता दिनान्ते सा हविष्यान्नरता सदा
न धत्ते दिव्यवस्त्रं च गन्धद्रव्यं सुतैलकम्। स्रजं च चन्दनं चैव शङ्खसिन्दूरभूषणम् ॥
त्यक्त्वा मलिनवस्त्रा स्यान्नित्यं नारायणं स्मरेत्। नारायणस्य सेवां च कुरुते नित्यमेव च
तन्नामोच्चारणं शश्वत्कुरुते नान्यभक्तितः। पुत्रतुल्यं च पुरुषं सदा पश्यति धर्मतः ॥
मिष्टान्नं न च भुङ्क्ते सा न कुर्याद्विभवं व्रज। एकादश्यां न भोक्तव्यं कृष्णजन्माष्टमीदिने
श्रीरामस्य नवम्यां तु शिवरात्रौ पवित्रया। अघोरायां च प्रेतायां चन्द्रसूर्योपरागयोः ॥
भ्रष्टं द्रव्यं परित्यज्य भुज्यते परमेव च। ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम् ॥
संन्यासिनां च गोमांससुरातुल्यं श्रुतौ श्रुतम्। रक्तशाकं मसूरं च जम्बीरं पर्णमेव च ॥
अलाबुर्वर्तुलाकारा वर्जनीया च तैरपि। पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ॥
यानमारोहणं कृत्वा विधवा नरकं व्रजेत्। न कुर्यात्केशसंस्कारं गात्रसंस्कारमेव च ॥
केशवेणी जटारूपं तत्क्षौरं तीर्थकं विना। तैलाभ्यङ्गं न कुर्वीत नहि पश्यति दर्पणम् ॥
मुखं च परपुंसां च यात्रां नृत्यं महोत्सवम्। नर्तनं गायनं चैव सुवेषं पुरुषं शुभम् ॥
शृणुयाच्च सतां धर्मं सामवेदनिरूपितम्। परमार्थं परं चैव निबोध कथयामि ते ॥ १ ॥
अध्यापनमध्ययनं शिष्याणां परिपालनम्। गुरूणां सेवनं नित्यं द्विजदेवार्चनं तथा ॥
सिद्धान्तशास्त्रनैपुण्यं भावनं स्वात्मतोषणम्। स्वादयानं परिशुद्धं च ग्रन्थाभ्यसनं च संततम्

व्यवस्थापरिशुद्ध्यर्थं विचारो वेदसंमतः । शास्त्रार्थाचरणं चैव कर्तव्यं स्वयमेव च ॥९॥
देवताह्निकेषु नैपुण्यं वेदाचरणमीप्सितम् । वेदोक्तभक्षणं चैव पवित्राचरणं सदा ॥१०॥
पतिव्रतानां यं धर्मं तं निबोध व्रजेश्वर । नित्यं तु भर्तर्यौत्सुक्यात्तत्पादोदकमीप्सितम् ॥
भक्तिभावेन सततं भोक्तव्यं तदनुज्ञया । व्रतं तपस्यां देवार्चां परित्यज्य प्रयत्नतः ॥१२॥
कुर्याच्चरणसेवां च स्तवनं परितोषणम् । तदाज्ञारहितं कर्म न कुर्याद्दूरतः सती ॥ १३ ॥
नारायणात्परं कान्तं ध्यायते सततं सती । परपुंसां मुखं चैव सुवेषपुरुषं परम् ॥ १४ ॥
यात्रामहोत्सवं नृत्यं नर्तनं गायनं व्रज । परक्रीडां च सततं न हि पश्यति सुव्रता ॥
यद्भक्ष्यं स्वामिनो नित्यं तदेवमपि योषिताम् । नहि त्यजेत्तु तत्सङ्गं क्षणमेव च सुव्रता ॥
उत्तरे नोत्तरं दद्यात्स्वामिनश्च पतिव्रता । न कोपं कुरुते शुद्धा ताडिता चापि कोपतः ॥
क्षुधितं भोजयेत्कान्तं दद्यात्पानं च भोजनम् । न बोधयेत्तं निद्रालुं प्रेरयेन्नैव कर्मसु ॥
पुत्राणां च शतगुणं स्नेहं कुर्यात्पतिं सती । पतिर्बन्धुर्गतिर्भर्ता दैवतं कुलयोषितः ॥१९॥
शुभं दृष्ट्वा सुधातुल्यं कान्तं पश्यति सुन्दरी । सस्मितं वदनं कृत्वा भक्तिभावेन यत्नतः
पुरुषाणां सहस्रं च सती स्त्री च समुद्धरेत् । पतिः पतिव्रतानां च मुच्यते सर्वपातकात् ॥
नास्ति तेषां कर्मभोगः सतीनां व्रततेजसा । तया सार्धं च निष्कर्मी मोदते हरिमन्दिरे ॥
पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि । तेजश्च सर्वदेवानां मुनीनां च सतीषु च ॥
तपस्विनां तपः सर्वं व्रतिनां यत्फलं व्रज । दाने फलं यद्दातॄणां तत्सर्वं तासु संततम् ॥
स्वयं नारायणः शंभुर्विधाता जगतामपि । सुराः सर्वे च मुनयो भीतास्ताभ्यां च संततम्
सतीनां पादरजसा सद्यः पूता वसुंधरा । पतिव्रतां नमस्कृत्य मुच्यते पातकान्नरः ॥
त्रैलोक्यं भस्मसात्कर्तुं क्षणेनैव पतिव्रता । स्वतेजसा समर्था सा महापुण्यवती सदा ॥
सतीनां च पतिः साधुः पुत्रो निःशंक एव च । न हि तस्य भयं किंचिद्देवेभ्यश्च यमादपि
शतजन्मपुण्यवतां गेहे जाता पतिव्रता । पतिव्रताप्रसूः पूता जीवन्मुक्तः पिता तथा ॥
सती स्त्री प्रातरुत्थाय त्यक्त्वा च रात्रिवाससम् । भर्तारं च नमस्कृत्य करोति स्तवनं मुदा ॥
गृहकार्यं ततः कृत्वा स्नात्वा धौते च वाससी । गृहीत्वा शुक्लपुष्पं च भक्तितः पूजयेत्पतिम्
स्नापयित्वा सुपूतेन जलेन निर्मलेन च । तस्मै दत्त्वा धौतवस्त्रं तत्पादौ क्षालयेन्मुदा ॥
आसने वासयित्वा च दत्त्वा भाले च चन्दनम् । सर्वाङ्गलेपनं कृत्वा दत्त्वा माल्यं गलेऽपि च
सामवेदोक्तमन्त्रेण भोगद्रव्यैः सुधोपमैः । संपूज्य भक्तितः कान्तं स्तुत्वा च प्रणमेन्मुदा ॥
ओं नमः कान्ताय शान्ताय सर्वदेवाश्रयाय स्वाहा । इत्यनेनैव मन्त्रेण दत्त्वा पुष्पं च चन्दनम्
पाद्यार्घ्यं धूपदीपौ च वस्त्रं नैवेद्यमुत्तमम् । जलं सुवासितं शुद्धं ताम्बूलं च सुवासितम् ॥

दत्त्वा स्तोत्रं पठेद्यद्यत्कृतं वै पाठ्यमेव च। ओं नमः कान्ताय भर्त्रे च शिरश्चन्द्रस्वरूपिणे
नमः शान्ताय दान्ताय सर्वदेवाश्रयाय च। नमो ब्रह्मस्वरूपाय सतीप्राणपराय च ॥
नमस्याय च पूज्याय हृदाधाराय ते नमः। पञ्चप्राणाधिदेवाय चक्षुषस्तारकाय च ॥
ज्ञानाधाराय पत्नीनां परमानन्दरूपिणे। पतिर्ब्रह्मा पतिर्विष्णुः पतिरेव महेश्वरः ॥
पतिश्च निर्गुणाधारो ब्रह्मरूप नमोऽस्तु ते। क्षमस्व भगवन् दोषं ज्ञानाज्ञानकृतं च यत्
पत्नीबन्धो दयासिन्धो दासीदोषं क्षमस्व मे। इदं स्तोत्रं महापुण्यं सृष्ट्यादौ पद्मया कृतम्
सरस्वत्या च धरया गङ्गया च पुरा व्रज। सावित्र्या च कृतं पूर्वं ब्रह्मणे चापि नित्यशः
पार्वत्या च कृतं भक्त्या कैलासे शंकराय च। मुनीनां च सुराणां च पत्नीभिश्च कृतं पुरा
पतिव्रतानां सर्वासां स्तोत्रमेतच्छुभावहम्। इदं स्तोत्रं महापुण्यं या शृणोति पतिव्रता ॥
नरोऽन्यो वाऽपि नारी वा लभते सर्ववाञ्छितम्। अपुत्रो लभते पुत्रं निर्धनो लभते धनम्
रोगी च मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्। पतिव्रता च स्तुत्वा च तीर्थस्नानफलं लभेत्
फलं च सर्वं तपसां व्रतानां च व्रजेश्वर। इदं स्तुत्वा नमस्कृत्वा भुङ्क्ते सा तदनुज्ञया॥
उक्तः पतिव्रताधर्मो गृहिणां श्रूयतां व्रज ॥ ४८ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं० त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

अथ चतुरशीतितमोऽध्यायः।

---

श्रीभगवानुवाच--

द्विजदेवार्चनं चैव करोति सततं गृही। स्वधर्माचरणं चैव चातुर्वर्ण्यं च नित्यशः ॥१॥
कुर्वन्ति गृहिणामाशां सर्वे देवादयस्तथा। अकृत्वाऽतिथिपूजां च गृहस्थश्च सदाऽशुचिः
पितरः कर्मकाले चातिथिकाले च देवताः। सर्वे गृहस्थमायान्ति निपानमिव धेनवः ॥
समायाति प्रयत्नेन सायाह्ने क्षुधितोऽतिथिः। पूजां लब्ध्वाऽऽशिषं कृत्वा प्रयाति गृहिणो गृहात् ॥ ४ ॥
अदत्त्वाऽतिथिपूजां च गृही भवति पातकी। त्रैलोक्यजनितं पापं लभते नात्र संशयः ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते। पितरस्तस्य देवाश्च वह्नयश्च तथैव च ॥६॥
निराशाः प्रतिगच्छन्ति गृहिणोऽतिथयो गृहात्। स्त्रीभिर्गोभिः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः
तुल्यदोषो भवत्येव येनातिथिरनर्चितः। स्वात्मनः पातकं दत्त्वा पुण्यमादाय गच्छति ॥

१ क. शिवच°। २ क. यस्याति°।

तस्मात्कृत्वा सर्वेषां देवादीश्च शुभाशयः । पोष्याणां भरणं कृत्वा पश्चाद्भुङ्क्ते स धर्मवित्
यस्य माता गृहे नास्ति भार्या च पुंश्चली तथा । अरण्यं तेन गन्तव्यमरण्याद्दुःखदं गृहम्
पतिं द्वेष्टि सदा दुष्टा विषतुल्यं च पश्यति । ददाति तस्मै नाऽऽहारं भर्त्सनं कुरुते सदा
पूजितं मुनितुल्यं च सा च पापीयसी परम् । संततं तृणवन्मत्वा न्यक्कारं कुरुते सदा ॥१२॥
दुर्वाक्यवह्निना दग्धो मृततुल्यश्च जीवति । यावज्जीवनपर्यन्तं संप्राप्य दुष्टवंशजाम् ॥
गृहिणीनां सदाचारं श्रूयतां तच्छ्रुतौ श्रुतम् । गृहिणी पतिभक्ता च देवब्राह्मणपूजिता ॥
सा शुद्धा प्रातरुत्थाय नमस्कृत्य पतिं सुरम् । प्राङ्गणे मङ्गलं दद्याद्गोमयेन जलेन च ॥
गृहकृत्यं च कृत्वा च स्नात्वाऽऽगत्य गृहं सती । सुरं विप्रं पतिं नत्वा पूजयेद्गृहदेवताम्॥
गृहकृत्यं सुनिर्वृत्य भोजयित्वा पतिं सती । अतिथिं पूजयित्वा च स्वयं भुङ्क्ते सुखं सती
पुत्रैश्च पूजितस्तात. शिष्यैश्च पूजितो गुरुः । आज्ञया कुरुते कर्म पुत्रः शिष्यश्च भृत्यवत्
न प्रेरयेद्गुरुं तातं पुत्र. शिष्यश्च कर्मसु । पित्रे च गुरवे नित्यं सर्वस्वं च समर्पयेत् ॥
न कुर्यान्नरबुद्धिं च गुरौ पितरि संततम् । कृत्वा च नरबुद्धिं च ब्रह्महत्या लभेद्ध्रुवम् ॥
मातरं पूजयेद्भक्त्या पितुश्चाप्यधिका तथा । मातु. परं गुरुं चैव पूजयेद्भक्तियोगत. ॥२१॥
पिता माता गुरुर्भार्या शिष्य. पुत्र. सदाऽक्षमः । अनाथा भगिनी कन्या नित्यं पोष्या गृहप्रिया
एवं च कथितं तात सर्वेषां धर्ममुत्तमम् । स्त्रीणामिर्वाऽऽत्मनी शुद्धा ताश्च सर्वाः पतिव्रताः ॥
सर्वा जातिरेकविधा चाऽऽदौ सृष्टा च ब्रह्मणा । ताः सर्वाः प्रकृतेरंशा. पवित्राः पण्डिताश्चिराः
केदारकन्याशापेन स हि धर्मः क्षयं गतः, तदा कोपेन धात्रा च कृत्या स्त्री च विनिर्मिता ॥
कृत्या स्त्री त्रिविधा जातिर्ब्रह्मणा निर्मिता पुरा । उत्तमा प्रथमा सा च मध्यमा च परा नग
उत्तमा पतिभक्ता सा किंचिद्धर्मसमन्विता । प्राणान्तेऽपि न कुरुते तं जारमधमाध्वरम् ॥
पूजयेत्सा यथा कान्तं तथा देवद्विजातिकौन् । नतानि चोत्तमाश्च कुरुते सर्वपूजनम् ॥
गुरुणा रक्षिता यत्नाज्जारं च न मनेद्धयात् । सा कृत्रिमा मध्यमा च यथाकिंचित्पतिं भजेत्
स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः । तेन हे नन्द तासा च सतीत्वमुपजायते ॥
अधमा परमा दुष्टाऽत्यन्तामदंशजा तथा । अवर्मशीला दुःशीला दुर्मुखा कलहान्विता
पतिं भर्त्सयते नित्यं जारं च सेवते सदा । दु.खं ददाति कान्ताय विषतुल्यं च पश्यति ॥
जारद्वारमुपायेन हन्ति कान्तं मनोहरम् । धर्मिष्ठं च वरिष्ठं च गरिष्ठं च महीतले ॥१२॥
कामदेव समं चापि जारं पश्यति क मन. । शुभदृष्ट्या कटाक्षेण स्वकान्तापीयसी मुदा ।
सुवेषं पुरुषं दृष्ट्वा युवानं रतिशूकरम् । योनि. क्लियति नारीणां कामिनीनां निरन्तरम्॥

१ क. कामुका ।

ददाति मन्त्र नाऽऽहारं विपोक्तिं वक्ति संततम् । अधर्मं चिन्तयेच्छश्वज्जारं च परमं मुदा
गुरुभिर्भर्त्सिता सा च रक्षिता च शतेन च । तथाऽपि जारं कुरुते नापि साध्वा नृपेशपि
नास्ति तस्याः प्रियं किंचित्सर्वे कार्यवशेन च । गावस्तृणमिवारण्ये प्रार्थयन्ती नवं नवम्॥
विद्युद्दामा जले रेखा तस्याः प्रीतिस्तथैव च । अधर्मयुक्ता सततं कपटं वक्ति निश्चितम्॥
व्रते तपसि धर्मे च न मनो गृहकर्मणि । न गुरौ न च देवेषु जारे स्निग्धं च चञ्चलम्॥
स्त्रीजातित्रिविधानां च कथा च कथिता मया । भक्तानां त्रिविधानां च लक्षणं श्रूयतामिति
तृणशय्यारतो भक्तो मन्नामगुणकीर्तिषु । मनो निवेशयेत्यक्त्वा संसारसुखकारणम् ॥४॥
ध्यायते मत्पदाब्जं च पूजयेद्भक्तिभावतः । अहैतुकी तस्य देवाः संकल्परहितस्य च ॥
सर्वसिद्धिं न वाञ्छन्ति तेऽणिमादिकमीप्सितम् । ब्रह्मत्वममरत्वं वा सुरत्वं सुखकारणम्
दास्यं विना नहीच्छन्ति सालोक्यादिचतुष्टयम् । नैव निर्वाणमुक्तिं च सुधापानमभीप्सितम्
वाञ्छन्ति निश्चलां भक्तिं मदीयामतुलामपि । स्त्रीपुंविभेदो नास्त्येव सर्वजीवेषु भिन्नता ॥
तेषां सिद्धेश्वराणां च प्रवराणां व्रजेश्वर । क्षुत्पिपासादिकं निद्रालोभमोहादिकं रिपुम् ॥
त्यक्त्वा दिवानिशं मां च ध्यायन्ते च दिगम्बराः । स मद्भक्तोत्तमो नन्द श्रूयतां मध्यमादिकम्
नाऽऽसक्तः कर्मसु गृही पूर्वप्राक्तनतः शुचिः । करोति सततं चैव पूर्वकर्मनिकृन्तनम्॥
न करोत्यपरं यत्नात्संकल्परहितः स च । सर्वं कृष्णस्य किंचिन्नाहं कर्ता च कर्मणः॥
कर्मणा मनसा वाचा सततं चिन्तयेदिति । न्यूनभक्तश्च तन्न्यूनः स च प्राकृतिकः श्रुतौ
यमं वा यमदूतं वा स्वप्नेऽपि न च पश्यति । पुरुषाणां सहस्रं च पूर्वभक्तः समुद्धरेत् ॥
पुंसां शतं मध्यमश्च तच्चतुर्थं च प्राकृतः । भक्तश्च त्रिविधस्तात कथितश्च तवाऽऽज्ञया ॥
ब्रह्माण्डरचनाख्यानं श्रूयतां सावधानतः । ब्रह्माण्डरचनार्थं च भक्ता जानन्ति यत्नतः ॥
मुनयश्च सुराः सन्तः किंचिज्जानन्ति दुःखतः । जानामि विश्वं सर्वार्थं ब्रह्माऽनन्तो महेश्वरः
धर्मः सनत्कुमारश्च नरनारायणावृषी । कपिलश्च गणेशश्च दुर्गा लक्ष्मीः सरस्वती॥९६॥
वेदाश्च वेदमाता च सर्वज्ञा राधिका स्वयम् । एते जानन्ति विश्वार्थं नान्यो जानाति कश्चन
वैपम्यार्थं च सुधियः सर्वे विज्ञातुमक्षमाः । नित्याकाशो यथाऽऽत्मा च तथा नित्या दिशो दश
यथा नित्या च प्रकृतिस्तथैव विश्वगोलकः । गोलोकश्च यथा नित्यस्तथा वैकुण्ठ एव च॥
एकदा मयि गोलोके रासे नित्यं प्रकुर्वति । आविर्भूता च वामाङ्गाद्बाला षोडशवार्षिकी ॥
श्वेतचम्पकवर्णाभा शरच्चन्द्रसमप्रभा । अतीव सुन्दरी रामा रमणीनां परावरा ॥ ११ ॥
ईषद्धास्यप्रसन्नास्या किंचिद्रङ्गी मनोहरा । वह्निशुद्धांशुकाधाना रत्नाभरणभूषिता ॥

१ घ. कर्म । १ क. °रात्परा ।

यथा जलदपङ्क्तिश्च बलाकाभिर्विभूषिता । सिन्दूरबिन्दुना चारुचन्दचन्दनबिन्दुभिः ॥
कस्तूरीबिन्दुभिः सार्धं सीमन्ताधःस्थलोज्ज्वला । अमूल्यरत्ननिर्माणसुस्निग्धकिरणोज्ज्वला
रत्नकुण्डलयुग्मेन गण्डस्थलसमुज्ज्वला । कुङ्कुमालक्तकस्तूरीचारुचन्दनपत्रकैः ॥६९॥
विचित्रैश्च सुचित्रैश्च सुकपोलस्थलोज्ज्वला । खगेन्द्रचञ्चुविजितनासामौक्तिकशोभिता ॥
गजेन्द्रगण्डनिर्मुक्तमुक्ताभूषणभूषिता । शुक्ला विमुक्तमुक्ताभदन्तपङ्क्तिमनोहरा ॥
वलिताकलिताऽतीव पक्वबिम्बाधरा वरा । शश्वत्पूर्णेन्दुनिन्दास्या पद्मनिन्दितलोचना ॥
कृष्णसारनिर्मोक्षित्रसुचारुकज्जलोज्ज्वला । अमूल्यरत्ननिर्माणकेयूरकङ्कणोज्ज्वला ॥
मणीन्द्रराजराजीभिः शङ्खयुग्मकरोज्ज्वला । रत्नाङ्गुलीयकै रेभिरमूताङ्गुलिभूषिता ॥
रत्नेन्द्रराजराजेन क्वणन्मञ्जीररञ्जिता । रत्नपाशकराजीभिः पादाङ्गुलिविराजिता ॥
सुन्दरालक्तरागेण चरणाधःस्थलोज्ज्वला । गजेन्द्रगामिनी रामा कामिनी वामलोचना ॥
मां ददर्श कटाक्षेण रमणी रमणोत्सुका । रासे संभूय रामा सा दधार पुरतो मम ॥
तेन राधा समाख्याता पुराविद्भिः प्रपूजिता । प्रकृष्टा प्रकृतिश्चास्यास्तेन प्रकृतिरीश्वरी ॥
शक्ता स्यात्सर्वकार्येषु तेन शक्तिः प्रकीर्तिता । सर्वाधारा सर्वरूपा मङ्गलार्हा च सर्वतः ॥
सर्वमङ्गलदक्षा सा तेन स्यात्सर्वमङ्गला । वैकुण्ठे सा महालक्ष्मीर्मूर्तिभेदे सरस्वती ॥
प्रसूय वेदान्विदिता वेदमाता च सा सदा । सावित्री सा च गायत्री धात्री त्रिजगतामपि ॥
पुरा संहृत्य दुर्गं च सा दुर्गा च प्रकीर्तिता । तेजःसु सर्वदेवानामाविर्भूता पुरा सती ॥
तेनाऽऽद्या प्रकृतिर्ज्ञेया सर्वासुरविमर्दिनी । सर्वानन्दा च सानन्दा दुःखदारिद्र्यनाशिनी ॥
शत्रूणां भयदात्री च भक्तानां भयहारिणी । दक्षकन्या सती सा च शैलजातेति पार्वती ॥
सर्वाधारस्वरूपा सा कलया सा वसुंधरा । कलया तुलसी गङ्गा कलया सर्वयोषितः ॥
सृष्टिं करोमि च यया तात शश्वत्पुनः पुनः । दृष्ट्वा तां रासमध्यस्थां मम क्रीडा तया सह ॥ ८२ ॥
बभूव सुचिरं तात यावद्वै ब्रह्मणः शतम् । अत्यद्भुतं कौतुकं च महाशृङ्गारमीप्सितम् ॥
तयोर्द्वयोर्घर्मराशिः सुस्राव रासमण्डले । तस्मान्मनोहरं जज्ञे नानाकारसरोवरम् ॥
पपात धर्मधाराऽधो वेगेन विश्वगोलके । बभूव जलपूर्णं च ब्रह्माण्डानां च गोलकम् ॥
जलपूर्णं पुरा सर्वं सृष्टिशून्यं मनोधर । शृङ्गारान्ते च तस्यां च वीर्याधानं मया कृतम्
दधार गर्भं सा राधा यावद्वै ब्रह्मणः शतम् । सुस्राव सा तदन्ते च डिम्भं चपरमाद्भुतम् ॥
चुकोप देवी तं दृष्ट्वा रुरोद विषादसा । पादेन प्रेरयामास तमधो विश्वगोलके ॥८८॥
स पपात जले तात सर्वाधारो महाविराट् । दृष्ट्वाऽपत्यं जलस्थं च मया शप्ता च सा पुरा

अनपत्या च सा राधा मच्छापेन पुरा विभो। तेन प्रसूताः क्रमतो दुर्गा लक्ष्मी सरस्वती
ततश्च परिपूर्णास्ताः प्रसूताश्च सुनिश्चितम्। देव्योऽन्याश्चापि कामिन्यस्ताः प्रसूता व्रजेश्वर
कलया प्रभवो यासां कलांशांशेन वा व्रज। जज्ञे महान्विराडंशेन डिम्भेन कलयाऽऽश्रयः॥
अमृताद्गुष्टपीयूषं मया दत्तं पपौ च सः। जले स्थावररूपश्च शेते च निजकर्मणः॥
उपधानं जलं तल्पं तस्य योगबलेन च तस्य लोम्नां च कूपानि जलपूर्णानि संततम्
प्रत्येकं क्रमतस्तेषु शेते क्षुद्रविराट् पुनः। सहस्रपत्रं कमलं जज्ञे क्षुद्रस्य नाभितः॥९९॥
तत्र जज्ञे वरो ब्रह्मा तेनायं कमलोद्भवः। तत्राऽऽविर्भूय स विधिश्चिन्ताग्रस्तो बभूव सः॥
कस्माद्देहः क्व माता मे पिता वा क्व च बान्धवः। दिव्यं त्रिलक्षवर्षं च बभ्राम कमलान्तरे
ततो दिव्यं पञ्चलक्षं सस्मार तपसा च माम्। तदा मया दत्तमन्त्रं जजाप कमलान्तरे॥
दिव्यवर्षसहस्रं च नियतं संयतः शुचिः। तदा मत्तो वरं लब्ध्वा स्रष्टा सृष्टिं चकार सः
मायया प्रति ब्रह्माण्डे ब्रह्मविष्णुशिवात्मकाः। दिक्पाला द्वादशादित्या रुद्राश्चैकादशापि च
नवग्रहाष्टौ वसवो देवाः कोटित्रयं तथा। ब्राह्मणक्षत्रविट्शूद्रा यक्षगन्धर्वकिन्नराः॥१००॥
भूतादयो राक्षसाश्चाप्येवं सर्वं चराचरम्। विश्वे विश्वे विनिर्माणाः स्वर्गाः सप्त क्रमेण च
सप्तसागरसंयुक्ता सप्तद्वीपा वसुंधरा। काञ्चनीभूमिसंयुक्ता तमोयुक्तं स्थलं तथा॥
पातालश्च तथा सप्त ब्रह्माण्डमेभिरेव च। विश्वे विश्वे चन्द्रसूर्यौ पुण्यक्षेत्रं च भारतम्॥
तीर्थान्येतानि सर्वत्र गङ्गादीनि व्रजेश्वर। यावन्ति लोमकूपानि महाविष्णोः क्रमेण च॥
विश्वान्येव हि तावन्ति ह्यसंख्यातानि च ध्रुवम्। विश्वेषामूर्ध्वभागे च वैकुण्ठश्च निराश्रयः
मदिच्छया विनिर्माणो वेदा वर्णयितुमक्षमाः। कुयोगिनामदृष्टश्चाभक्तानां च विनिश्चितम्
तस्मादुपरि गोलोकः पञ्चाशत्कोटियोजनः। वायुना धार्यमाणश्च विचित्रः परमाश्रम॥
अतीव रम्यनिर्माणो नित्यरूपो मदिच्छया। शतशृङ्गेण शैलेन पुण्यवृन्दावनेन च
सुरासमण्डलेनापि नद्या विरजया युतः। कोटियोजनविस्तीर्णा प्रस्थेन विरजा व्रज॥
दैर्घ्यं तस्याः शतगुणं परितः परमा शुभा। अमूल्यरत्ननिकरैर्हीरमाणिक्ययोस्तथा॥
मणीनां पद्मरागादीनामसंख्यानां मनोहरा। अमूल्यरत्ननिर्माणं तत्रापि प्रतिमन्दिरम्॥
मनोहरं च प्राकारमदृष्टं विश्वकर्मणा। गोपीभिर्गोपनिकरैर्वेष्टितं कामधेनुभिः॥१२॥
कल्पवृक्षैः पारिजातरम्यपैश्च सरोवरैः। पुष्पोद्यानैः कोटिभिश्च संवृतं रासमण्डलम्॥
वेष्टितं वेष्टितैर्गोपैर्गोपीभिः शतकोटिभिः। रत्नप्रदीपयुक्तैश्च पुष्पतल्पसमन्वितैः॥१४॥
सुगन्धिचन्दनामोदैः कस्तूरीकुङ्कुमान्वितैः। क्रीडोपयुक्तैर्भोगैश्च ताम्बूलैर्वासितैर्युतैः॥
धूपैः सुगन्धैश्च माल्यैश्च रत्नदर्पणैः। रक्षितं रक्षितं दासदासीभिः कोटिभिः॥

अमूल्यरत्नाभरणैर्वह्निशुद्धांशुकैरपि । लक्षमत्तगजेन्द्राणां वेष्टितं च बलैः क्रमात् ॥
नवयौवनसंपन्नै रूपैर्निरुपमैरपि । रम्यं च वर्तुलाकारं चन्द्रबिम्बं यथा व्रज ॥ १९ ॥
अमूल्यरत्नरचितं दशयोजनविस्तृतम् । कस्तूरीकुङ्कुमै रम्यैः सुगन्धिचन्दनार्चितम् ॥
आवृतं मङ्गलघटैः फलपल्लवसंयुतैः । दधिलाजैश्च पर्णैश्च स्निग्धदूर्वाङ्कुरैः फलैः ॥
श्रीरामकदलीस्तम्भैरसंख्यैश्च मनोहरैः । पट्टसूत्रनिबद्धैश्च स्निग्धैश्चन्दनपल्लवैः ॥२२॥
चन्दनासक्तमाल्यैश्च भूषणैश्च विभूषितम् । अमूल्यरत्नरचितं शतशृङ्गमनोहरम् ॥२३॥
कोटियोजनमूर्ध्वं च दैर्घ्यं शतगुणोत्तरम् । शैलस्यपरिमितं पञ्चाशत्कोटियोजनम् ॥
अतीव कमनीयं च वेदानिर्वचनीयकम् । प्राकारमिव तस्यापि गोलोकस्य मनोहरम् ॥
परितो वेष्टितं रम्यं हीरहारसमन्वितम् । तत्र वृन्दावनं रम्यं युक्तं चन्दनपादपैः ॥
कल्पवृक्षैश्च रम्यैश्च मन्दारैः कामधेनुभिः । शोभितं शोभनाढ्यैश्च पुष्पोद्यानैर्मनोहरैः ॥
क्रीडासरोवरै रम्यैः सुरम्यै रतिमन्दिरैः । अतीव रम्यं रहसि रासयोग्यस्थलान्वितम् ॥
रक्षितं रक्षकै रम्यैरसंख्यैर्गोपिकागणैः । परितो वर्तुलाकारं त्रिलक्षयोजनं वनम् ॥ २९॥
षट्पदध्वनिसंयुक्तं पुंस्कोकिलरुतान्वितम् । तत्राक्षयो वटो रम्यो रहस्ये बहुविस्तृतः ॥
सहस्रयोजनोर्ध्वश्च परितश्च चतुर्गुणः । गोपीनां कल्पवृक्षश्च सर्ववाञ्छाफलप्रदः ॥३१॥
क्रीडान्वितैरावृतश्च राधादासीत्रिलक्षकैः । विरजातीरनीराणां वायुना शीतलेन च ॥
पुष्पान्वितेन मन्देन पवित्रश्च सुगन्धिना । दासीगणैरसंख्यैश्च वृन्दावनविनोदिनी ॥
तत्र क्रीडति राधा सा मम प्राणाधिदेवता । सेयं श्रीदामशापेन वृषभानुसुताऽधुना ॥
ब्रह्मादिदेवैः सिद्धेन्द्रैर्मुनीन्द्रैः पूजिता व्रज । सिद्धैर्मुनिभिर्बलैर्बुद्ध्या ज्ञानयोगैश्च विघया
तात सर्वप्रकारेण वन्द्या मत्सदृशी प्रिया । इत्येवं कथितं नन्द ब्रह्माण्डानां च वर्णनम्
यथोचितं परिमितं किं भूयः श्रोतुमिच्छसि ॥ १३६ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं० चतुराशीतितमोऽध्यायः ॥ ८४ ॥

---

अथ पञ्चाशीतितमोऽध्यायः ।

नन्द उवाच—
वर्णानां च चतुर्णां च भक्ष्याभक्ष्यं च सांप्रतम् । विपाकं कर्मणा चैव सर्वेषां प्राणिनामपि

कथयस्व महाभाग कारणानां च कारणम्। त्वत्तोऽन्यं कं च पृच्छामि नितान्तं सन्तमीश्वरम्

श्रीभगवानुवाच—

भक्ष्याभक्ष्यं चतुर्णां च वर्णानां च यथोचितम्। वेदोक्तं श्रूयतां तात सावधानं निशामय
अयःपात्रे पयःपानं गव्यं सिद्धान्नमेव च। भृष्टादिकं मधु गुडं नालिकेरोदकं तथा॥
फलं मूलं च यत्किंचिदभक्ष्यं मनुरब्रवीत्। दग्धान्नं तप्तसौवीरमभक्ष्यं ब्रह्मनिर्मितम्॥
नालिकेरोदकं कांस्ये ताम्रपात्रे स्थितं मधु। गव्यं च ताम्रपात्रस्थं सर्वं मद्यं घृतं विना॥
ताम्रपात्रे पयःपानमुच्छिष्टे घृतभोजनम्। दुग्धं सलवणं चैव सद्यो गोमांसभक्षणम्॥
अभक्ष्यं मधुमिश्रं च घृतं तैलं गुडं तथा। आर्द्रकं गुडसंयुक्तमभक्ष्यं श्रुतिसंमतम्॥८॥
पीतशेषजलं चैव माघे च मूलकं तथा। जपादिकं च शयने सदा प्राज्ञः परित्यजेत्॥
द्विर्भोजनं च दिवसे संध्ययोर्भोजनं तथा। भक्ष्यं च रात्रिशेषे च ध्रुवं प्राज्ञः परित्यजेत्
पानीयं पायसं चूर्णं घृतं लवणमेव च। स्वस्तिकं गुडकं चैव क्षीरं तक्रं तथा मधु॥
हस्ताद्धस्तगृहीतं च सद्यो गोमांसमेव च। कर्पूरं रौप्यपात्रस्थमभक्ष्यं श्रुतिसंमतम्॥
परिवेषणकारी चेद्गोत्सारं स्पृशते यदि। अभक्ष्यं च तदन्नं च सर्वेषामेव संमतम्॥१३॥
नकुलानां गण्डकानां महिषाणां च पक्षिणाम्। सर्पाणां सूकराणां च गर्दभानां विशेषतः॥ १४॥
मार्जाराणां सृगालानां कुक्कुटानां व्रजेश्वर। व्याघ्राणामपि सिंहानां त्याज्यं मांसं नृणां सदा
जलौकसां च नक्राणां गोधिकानां तथैव च। मण्डूकानां कर्कटानां चुञ्चुकानां च निश्चितम्
गवां च चमरीणां च न वक्ष्ये मांसभक्षणम्। हस्तिनां घोटकानां च नृणामेव च रक्षसाम्
दंशश्च मशकश्चैव मक्षिका च पिपीलिका। अन्येषां च निषिद्धानां लोके वेदे व्रजेश्वर॥
वानराणां भल्लुकानां शरभाणां तथैव च। निषिद्धं मृगनाभीनां गर्दभानां च मांसकम्॥
अभक्ष्यं महिषीणां च दुग्धं दधि घृतं तथा। स्वस्तिकं च तथा तत्र विप्राणां नवनीतकम्
मांसमुच्चैःश्रवसकं तस्य दुग्धादिकं तथा। वर्णानां च चतुर्णां चाप्यभक्ष्यं च श्रुतौ श्रुतम्
अभक्ष्यमार्द्रकं चैव सर्वेषां च रवेर्दिने। पर्युषितं जलं चान्नं विप्राणां दुग्धमेव च॥२२॥
वर्णानां च चतुर्णां चाप्यवीरान्नस्य भक्षणम्। तदन्नं च सुरातुल्यं गोमांसाधिकमेव च॥
अवीरान्नं च यो भुङ्क्ते ब्राह्मणो ज्ञानदुर्बलः। पितृदेवार्चनं तस्य निष्फलं मनुरब्रवीत्॥
ब्राह्मणानां वैष्णवानामभक्ष्यं मात्स्यमेव च। इतरेषामभक्ष्यं च पञ्चपर्वसु निश्चितम्॥
पितृदेवावशेषे च भक्ष्यं मांसं न दूषितम्। पञ्चपर्वसु त्याज्यं च सर्वेषां मनुरब्रवीत्॥
असंस्कृतं च लवणं तैलं चाभक्ष्यमेव च। भक्ष्यं पवित्रं सर्वेषां स्वजनं वह्निसंस्कृतम्॥

एकहस्ते घृतं तोयमभक्ष्यं सर्वसंमतम् । आविलं कृमियुक्तं च परिशुद्धं च निर्मलम् ॥
अभक्ष्यं ब्राह्मणानां च वैष्णवानां विशेषतः । अनिवेद्यं हरेरेव यतीनां ब्रह्मचारिणाम् ॥
पिपीलिकामिश्रितं च मधु गव्यं गुडं तथा । यत्किंचिद्वस्तु वा तात न भक्ष्यं च श्रुतौ श्रुतम्
पक्षिभक्ष्यं कीटभक्ष्यं शुद्धं पक्वफलं तथा । काकभक्ष्यमभक्ष्यं च सर्वेषां द्रव्यमेव च ॥
घृतपक्वं तैलपक्वं मिष्टान्नं शूद्रसंस्कृतम् । अभक्ष्यं ब्राह्मणानां च शूद्रभक्ष्यं च पीठकम् ॥
सर्वेषामशुचीनां च जलमन्नं परित्यजेत् । आशौचान्तात्परदिने शुद्धमेव न संशयः ॥
विपाकं कर्मणामेव दुष्करं श्रुतिसंमतम् । भक्ष्याभक्ष्यं च कथितं यथाज्ञानं व्रजेश्वर ॥
कथाचतुर्षु वेदेषु चोक्तं मतचतुष्टयम् । सर्वेषां सारभूतं च कथयामि पितः शृणु ॥३९॥
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥
तीर्थानां च सुराणां च सहायेन नृणामपि । किंचिद्भवति साहाय्यं कायव्यूहेन सर्वतः ॥
प्रायश्चित्तानि चीर्णानि निश्चितं मत्पराङ्मुखम् । न निष्पुनन्ति हे तात सुराकुम्भमिवाऽऽपगाः
प्रायश्चित्तेन पुण्येन न हि शुध्यन्ति मानवाः । सर्वारम्भेण वैश्येन्द्र दानेन योगतोऽपि वा ॥
शुभाशुभं च यत्कर्म विना भोगान्न च क्षयः । भोगेन शुद्धिमाप्नोति ततो मुक्तिर्भवेन्नृणाम्
न नष्टं दुष्कृतं कर्म सुकृतेन च कर्मणा । न नष्टं सुकृतं कर्म कृतेन दुष्कृतेन च ॥४१॥
यज्ञेन तपसा वाऽपि व्रतेनानशनेन च । तीर्थस्नानेन दानेन जपेन नियमेन च ॥ ४२ ॥
भुवः प्रदक्षिणेनैव पुराणश्रवणेन च । उपदेशेन पुण्येन पूजया गुरुदेवयोः ॥ ४३ ॥
स्वधर्माचरणेनैवातिथीनां पूजनेन च । ब्रह्मणां पूजनेनैव भोजनेन विशेषतः ॥ ४४ ॥
यद्दत्तमपि विप्राय तत्सर्वं पूर्णरूपतः । बीजरूपं च तद्दानं क्षेत्ररूपं च ब्राह्मणः ॥४५॥
एकेन कर्मणा तात स्वर्गं प्राप्नोति मानवः । कर्मणा न हि मोक्षं च तदेव मम सेवया ॥
स्वर्गं च सुकृतेनैव नरकं दुष्कृतेन च । दशाधिजन्म च योनौ च कुत्सिते च ततः शुचिः
गोघ्नो यो ब्राह्मणानां च कामतश्चोपपातकी । दन्दशूकत्वमाप्नोति गोलोमसमवर्षकम् ॥
सर्पेण भक्षितस्तेन ज्वालया गरलस्य च । तृषितो क्षुधितश्चैव निराहारः कृशोदरः ॥
ततः कुण्डात्समुत्थाय गोर्भवेल्लोमवर्षकम् । ततः कुष्ठी च चाण्डालो वर्षलक्षं ततो नरः
सदा भवेद्ब्राह्मणश्च कुष्ठयुक्तो हि कर्मणा । भोजयित्वा विप्रलक्षं निष्पापश्च भवेच्छुचिः
अकामतस्तदर्धं च क्षत्रियस्यापि कामतः । अकामतस्तदर्धं च तदर्धं च विशस्तथा ॥
तदर्धं शूद्रगोघ्नश्च भुङ्क्ते पापं न संशयः । प्रायश्चित्तेन शुद्धश्च भुङ्क्ते शेषं च कर्मणः
अनुकल्पे चतुर्थं च पापं भुङ्क्ते न संशयः । चतुर्गुणं च गोघ्नानां ब्राह्मणानां च पातकम्

१ ख. चाप° । २ क. भृष्टं विपी° । ३ क. यत्नतः ।

भुङ्क्ते पापं च ब्रह्मघ्नो ब्राह्मणश्चेन्नरोऽपि वा । क्रमेणानेन बोध्यं च कामतोऽकामतोऽपि वा
प्रायश्चित्तं जन्म कर्म व्याधिरेव न संशयः । गोघ्नो भवति गोश्चापि यावद्वर्षं च निश्चितम्
चतुर्गुणं च तेषां च ब्रह्मघ्नो विट्क्रिमिर्भवेत् । ततो भवति म्लेच्छश्च तावद्वर्षचतुर्गुणम् ॥
ततश्चान्धो भवेद्विप्रः पूर्वेषां च चतुर्गुणम् । ब्राह्मणानां चतुर्लक्षं भोजयित्वा शुचिर्भवेत् ॥
चक्षुष्मांश्च यशस्वी च भवेत्सोऽप्यतिपातकात् । स्त्रीघ्नश्चतुर्णां वर्णानां वेदे सोऽप्यतिपातकी
कालसूत्रं च प्राप्नोति स्त्रीलोमसमवर्षकम् । भक्षितः क्रिमिणा तत्र निराहारो व्यथायुतः
ततो भवति लोके च तावद्वर्षं च पातकी । ततः पापी भवेत्सोऽपि यक्ष्मग्रस्तश्च कर्मणा ॥
वर्षाणां शतकं चैव विप्रलक्षं च भोजयेत् । ततः शुद्धो ब्राह्मणश्च विद्वांस्तपसि संयतः ॥
किंचिद्भुङ्क्ते पापशेषं स्वर्णदानाच्छुचिर्भवेत् । गर्भघ्नश्च महापापी संप्राप्नोति शुनीमुखम् ।
वर्षाणां शतकं चैव घोटकश्च भवेद्ध्रुवम् । वर्षाणां शतकं चैव सूक्ष्मशस्त्रेण पीडितः ॥
ततः पापी भवेद्वैश्यो द्रव्ययुक्तो हि कर्मणा । पञ्चाशद्वर्षपर्यन्तं स्वर्णदानाद्भवेच्छुचिः ॥
ततः स्वकुलजातोऽपि निर्व्याधिर्ब्राह्मणः शुचिः । ब्राह्मणः क्षत्रियघ्नश्च क्षत्रियो वा विना रणात्
तप्तशूलं च प्राप्नोति वर्षाणां च सहस्रकम् । कथितं तप्तलोहेन चाऽऽर्तनादं करोति च
ततो भवेन्मत्तगजो वर्षाणां शतकं तथा । ततो रक्तविकारी च शूद्रो वर्षशतं तथा ॥
गजदानेन मुक्तश्च व्याधितश्च ततो द्विजः । वैश्यघ्नश्चापि वैश्यश्च शूद्रघ्नो वैश्य एव च ॥
वैश्यघ्नश्चापि शूद्रश्च समं पापं लभेद्ध्रुवम् । कृमिकुण्डं च प्राप्नोति वर्षाणां शतकं तथा ॥
कृमिभिर्भक्षितो दुःखी किरातश्च भवेत्ततः । वर्षाणां शतकं चैव कृमिव्याधिसमन्वितः ॥
ततो मन्दाग्नियुक्तश्च ब्राह्मणो दैन्यवान्व्रज । पञ्चाशद्वर्षपर्यन्तं दुर्बलश्च कृशोदरः ॥७२॥
मुक्तिर्भवति युक्तेन तीर्थे चाश्वप्रदानतः । शूद्रघ्नो ब्राह्मणश्चैव कामतोऽकामतोऽपि वा ॥
सावित्रीलक्षजाप्येन तदर्धेन शुचिर्भवेत् । चतुर्वर्णैः कुक्कुरघ्नो ह्यभिशप्तश्च शंभुना ॥७४॥
वर्षाणां शतकं चैव प्राप्नोति रौरवं नरः । ततो भवेत्कुक्कुरश्च वर्षाणामपि षोडश ॥७५॥
ततः शुद्धो भवेद्विप्रो भक्षितः कुक्कुरेण च । गङ्गास्नानेन दानेन स्वर्णस्यापि भवेच्छुचिः
मार्जारघ्नश्चतुर्वर्णो गङ्गास्नानाद्भवेच्छुचिः । विप्राय लवणं दत्त्वा पट्टलं च प्रमुच्यते ॥
हत्वा सर्पांश्चतुर्वर्णो मम पादेन निहनितान् । ब्रह्महत्याचतुर्थं च पातकं च लभेद्ध्रुवम्
असिपत्रं च नरकं वर्षाणां शतकं तथा । प्राप्नोति यातनायुक्तो विच्छिन्नाङ्गश्च धारया ॥
ततो भवति सर्पश्च दुर्लभो वर्षपञ्चकम् । नरेण ताडितो दुःखी मृत्योर्भवति पीडितः
ततो भवेन्नरः पापी ज्वरयुक्तो हि दुर्बलः । वर्षाणां पञ्चकेनैव मृतो भवति कर्मणा ॥८१॥

१ क. ०र्विमु॰ । २ क. ०दासु॰ । ३ ध. ०दृत्ता । ४ ध. मुद्गले ज्ञाप्य । ५ ध. ०पट्टे॰ ।

अश्वघ्नश्च गजघ्नश्च चतुर्वर्णश्च पातकी । वर्षाणां दशकं पापान्मूत्रकुण्डं प्रयाति च ॥
ततो भवति हस्ती च घोटको वा व्रजेश्वर । यावद्विंशतिवर्षाणि ततः शूद्रो भवेद्ध्रुवम् ॥
श्लेष्मी व्याधियुक्तो रौप्यदानेन मुच्यते । ब्राह्मणानां च शतकं भोजयित्वा शुचिर्भवेत् ॥
क्षुद्रजन्तुवधेनैव क्षुद्रजन्तुर्भवेन्नरः । वर्षाणां शतकं चैव क्षुद्रव्याधिं तरेत्ततः ॥ ८९ ॥
कृपा कार्या सता शश्वद्धिंस्रेषु च जन्तुषु । हिंसायां न हि दोषश्च हिंस्राणां च व्रजेश्वर
अश्वत्थघ्नश्चतुर्वर्गो ब्रह्महत्याचतुर्थकम् । पापं च लभते तान चासिपत्रं व्रजेद्ध्रुवम् ॥
स तीक्ष्णेनासिशस्त्रेण विच्छिन्नश्च दिवानिशम् । वर्षाणां शतकं चैव भुङ्क्ते परमयातनाम्
ततो भवति वृक्षश्च शाल्मलिर्वर्षलक्षकम् । ततो भवति शूद्रश्च छिन्नाङ्गो व्याधिसंयुतः ॥
यावज्जीवनपर्यन्तं ततो विप्रो भवेद्ध्रुवम् । व्रणव्याधिसमायुक्तो मुच्यते स्वर्णदानतः ॥
मिथ्यासाक्ष्यप्रदाता च कन्याघ्नोऽतिकृतघ्नकः । विश्वासघाती मित्रघ्नो विप्राणां धनहारकः
शूद्रश्राद्धान्नभोजी च शूद्राणां शवदाहकः । शूद्राणां सूपकारश्च वृषवाहकपातकी ॥
याचको देवलश्चापि चैतेऽतिपापिनस्तथा । कुम्भीपाकं प्रयान्त्येव वर्षाणां च सहस्रकम् ॥
तत्रैव तप्ततैलेन संतप्तश्च दिवानिशम् । भक्षितो व्यथितश्चैव सर्पाकारेण जन्तुना ॥९३॥
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः । श्वापदः शतजन्मानि शूद्रो रोगी भवेत्ततः
मन्दाग्निज्वरसंयुक्तः पश्चाद्वर्षकं तथा । सुवर्णानां शतपलं दत्त्वा शुद्धो भवेद्ध्रुवम् ॥
चतुर्वर्णो वस्त्रहारी गव्यहारी च मानवः । रौप्यमुक्ताहारी च शूद्रद्रव्यापहारकः ॥
वर्षाणां च सहस्रं च बकजातिर्भवेद्ध्रुवम् । मूत्रकुण्डं च वै भुक्त्वा वर्षाणां शतकं तथा
ततो भवेच्छूद्रजातिर्वर्षाणां शतकं व्रज । कुष्ठव्याधिसमायुक्तो गलितश्चैव पातकी ॥९८॥
ततो भवेद्ब्राह्मणश्च कुष्ठावशेषसंयुतः । स्वर्णपञ्चपलदानेन व्याधितो मुच्यते शुचिः ॥
शाकापहारकश्चैव फलापहारकस्तथा । यश्च पृथिव्यां संभूतो लीलाद्रव्यापहारकः ॥
वर्षाणां शतकं चैव च.पत्रकी भवेद्ध्रुवम् । ततो भवेत्कृष्णवर्णः शूद्रश्च भारते भुवि ॥
ततो भवेद्ब्राह्मणश्चाप्यधिकाङ्गोऽपि जन्मनि । पुनर्जन्मद्विजो भूत्वा मुच्यते विप्रभोजनात्
पक्वद्रव्यापहारी च पशुयोनिर्भवेद्ध्रुवम् । यस्याण्डकोशो गन्धाक्तः कस्तूरी यस्य नाम च ॥
सप्तजन्ममृगो भूत्वा ततो भवति गन्धकः । जन्मैकं च ततः शूद्रो गलत्कुष्ठी च जन्मनि ॥
ततो रोगावशेषेण संयुतो ब्राह्मणः कृशः । स्वर्णपञ्चपलदानेन मुच्यते नात्र संशयः ॥१॥
धान्यापहारी दुःखी च कृपणः सप्तजन्मसु । विष्ठाकुण्डं वर्षशतं संप्राप्य मुच्यते मिथः ॥
स्वर्णापहारी कुष्ठी च मानवः पतितो भवेत् । स्वर्णदानप्रतिग्राही विट्कुण्डं च प्रयाति च ॥

१ ख. दोषाय° । २ ख. °न्माभेः ।

ततो वर्षशतं भुक्त्वा पुरीषं च दिवानिशम्  ततो व्याधो भवेच्छूद्रो रक्तदोषेण संयुतः।
तज्जन्मपातकं भुक्त्वा ब्राह्मणश्च पुनर्भवेत्। व्याधिदोषावयुक्तश्च मुच्यते स्वर्णदानतः॥९॥
अगम्यानां च गामी च पूर्वोक्तं रौरवं व्रजेत्। कुम्भीपाकं महाघोरं वर्षाणां चाप्ययुतकम्॥
ततो भवेत्पुंश्चलीनां योनीनां च कृमिस्तथा। वर्षाणां च सहस्रं च विट्कृमिर्वर्षलक्षकम्॥
पशुयोनिर्भवेत्तस्मात्तस्माच्च क्षुद्रजन्तवः। ततो भवेन्म्लेच्छजातिस्ततः शूद्राधमस्तदा॥
ततो भवति विप्रश्च व्याधियुक्तो नपुंसकः। पुनश्च ब्राह्मणो भूत्वा तीर्थपर्यटनेन च॥१३॥
क्रमेण शुद्धो भवति वंशहीनश्च पातकात्। भोजयित्वा विप्रलक्षं पुत्रं च लभते शुचिः॥
मानवः क्रोधयुक्तश्च गर्दभः सप्तजन्मसु। मानवः कलहाविष्टः सप्तजन्मसु वायसः॥१५॥
शालग्रामप्रतिग्रही कालसूत्रं व्रजेद्ध्रुवम्। वर्षाणां शतकं चैव खञ्जरीटो भवेत्ततः॥१६॥
लोहचोरश्च निर्वंशो मधुचोरश्च कोकिलः। शुकोऽप्यञ्जनचोरश्च मिष्टचोरः कृमिर्भवेत्॥
विप्रद्वेषी गुरुद्वेषी शिरसा च कृमिर्भवेत्। पुंश्चलीं कामिनीं तात भुक्त्वा च रौरवं व्रजेत्॥
ततो वृथा कृमिश्चैव वर्षाणां शतकं तथा। ततोऽपि विधवा चैव वन्ध्या च सप्तजन्मसु॥
अस्पृश्या जातिहीना च छिन्ननासा भवेत्क्रमात्। रक्तद्रव्यापहारी च रक्तदोषान्वितो भवेत्॥
आचारहीनो यवनः खञ्जो भवति हिंसकः। अदीक्षितो वञ्चकश्च दुष्टदर्शी च काणकः॥
अहंकारी कर्णहीनो बधिरो वेदनिन्दकः। वाक्यहर्ता च मूकश्च हिंसकः केशहीनकः॥
मिथ्यावादी श्मश्रुहीनो दुर्वाक्यो दन्तहीनकः। जिह्वाहीनः सत्यहारी दुष्टोऽप्यङ्गुलिहीनकः॥
अन्यापहारी मूर्खश्च व्याधियुक्तो भवेद्ध्रुवम्। अश्वप्रतिग्रही च तच्चोरो लालामूत्रं व्रजेदिति॥
वर्षाणां च शतं स्थित्वा घोटकश्च भवेद्ध्रुवम्। गजचोरो गजग्राही विट्कुण्डे च सहस्रकम्
स्थित्वा वर्षं भवेद्धस्ती तत्पश्चाद्वृषलो भवेत्। अयज्ञे छागहन्ता च च्छागचोरप्रतिग्रही॥
पूयकुण्डे वर्षशतं स्थित्वा चाण्डालतां व्रजेत्। छागश्च वर्षपर्यन्तं तदा भवति मानवः॥
शम्भुशापेन छिन्नश्च तदा मुक्तो भवेद्द्विजः। दत्तापहारी वाग्दानं कृत्वाऽपहरते पुनः॥
स भवेन्म्लेच्छयोनौ च भुक्त्वा च नरकं व्रजेत्। एकाकी मिष्टमश्नाति कालसूत्रं व्रजेद्ध्रुवम्
तत्र वर्षशतं स्थित्वा प्रेतो वर्षसहस्रकम्। तदा भवति जन्मैकं मक्षिका च पिपीलिका॥
जन्मैकं भ्रमरश्चैव जन्मैकं मधुमक्षिका। जन्मैकं वरटश्चैव जन्मैकं दंश एव च॥ २१॥
जन्मैकं मशकश्चैव जन्मैकं पूतिकं स्मृतम्। जन्मैकं तरुकीटश्च तदा शूद्रो भवेद्ध्रुवम्॥
अमद्बुद्धिर्व्याधियुक्तस्तदा मुक्तो भवेद्द्विजः। तत्रोरस्वर्णकारो मूर्ध्नि कीटत्रिजन्मकम्
तदा भवेत्स्वर्णकारो जन्मैकं दुष्टमानसः। विश्वेरटिविफर्ता च भक्ष्यदातुर्धनं हरेत्॥२४॥

१ क. ॰लघोटो। २ क. वंधर।

तमःकुण्डे वर्षशतं स्थित्वा स्वर्णवणिग्भवेत् । जन्मैकं च दुराचारो जन्मैकं करणो भवेत् ।
कायस्थेनोदरस्थेन मातुर्मांसं न खादितम् । तत्र नास्ति कृपा तस्य दन्ताभावेन केवलम् ॥
स्वर्णकारः स्वर्णवणिक् कायस्थश्च व्रजेश्वर । नरेषु मध्ये ते धूर्ताः कृपाहीना महीतले ॥
हृदयं क्षुरधाराभं तेषां नास्ति च सादरम् । शतेषु सज्जनः कोऽपि कायस्थो नेतरौ च तौ ॥
सुबुद्धिः शिवयुक्तश्च श सज्जो धर्ममानसः । न विश्वसेत्तेषु तात स्वात्मकल्याणहेतवे ॥३९॥
सीमापहारी दुष्टश्च भूमिचोरश्च हिंसकः । भूमिदानापहारी च कालसूत्रं व्रजेद्ध्रुवम् ॥४०॥
षष्टिवर्षसहस्राणि क्षुत्पिपासार्दितः स्थितः । ततोऽपि तानि मासानि विष्ठायां जायते कृमिः
ततो भवेदसच्छूद्रो जन्मैकं च ततः शुचिः । तस्माज्ज्ञानैः सावधानं भवेत्प्राज्ञश्च यत्नतः ॥
रक्तवस्त्रापहारी च जन्मैकं रक्तकीटकः । ततः शूद्रश्च जन्मैकं ततो विप्रो भवेच्छुचिः ॥
त्रिसंध्यहीनो विप्रश्च प्रातःशायी च यो नरः । संध्याशायी दिवाशायी यज्ञसूत्रापहारकः ॥
अशुद्धः संध्याचारी च वेदवेदाङ्गनिन्दकः । तद्विरुद्धः स्वर्गमार्गात्त्रिजन्मपतितो द्विजः ॥
यः शूद्रो ब्राह्मणीगामी कुम्भीपाके व्रजेद्ध्रुवम् । वर्षाणां च त्रिलक्षं च पच्यते तत्र पीडितः
दिवानिशं प्रदग्धश्च तप्ततैले च दारुणे । ततो भवेद्योनिकीटः पुंश्चलीनां च पातकी ॥
षष्टिवर्षसहस्राणि चाऽऽहारं तस्य तन्मलम् । ततो भवति चाण्डालो जन्मलक्षं क्रमेण च ॥
ततः शूद्रो गलत्कुष्ठी जन्मैकं च ततः शुचिः । सोऽपि विप्रो व्याधिशेषस्तीर्थपर्यटनाच्छुचिः
असच्छूद्रश्च भवति सोऽस्थानेऽसुरपूजिते । दत्त्वा देवाय नैवेद्यमपवित्रं च मानवः ॥५०॥
सकेशं पार्थिवं लिङ्गं संपूज्य यवनो भवेत् । दुर्बलेन भवेदन्धः कुत्सितेन च कुत्सितः ॥
अङ्गहीनो दरिद्रश्च व्याधियुक्तश्च मानवः । अश्रद्धया च निर्माणे निर्माणसदृशं फलम्
मृद्भस्मगोशकृत्पिण्डैस्तथा वालुकयाऽपि वा । कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि ॥
ततो भवति विप्रश्च महाप्राज्ञश्च भूमिमान् । राजा भवेद्भारते च लिङ्गानां शतपूजनात् ॥
सहस्रपूजनात्सोऽपि लभते निश्चितं फलम् । स्थित्वा च सुचिरं स्वर्गे राजेन्द्रो भारते भवेत्
अयुते च तद्विगुणश्च लभे च पृथिवीश्वरः । पूजने चातिभक्त्या चाप्यतिरिक्तं फलं लभेत् ॥
तीर्थस्नानेन दानेन विप्राणां भोजनेन च । नारायणार्चया चैव विप्रजातिश्च कर्मणा ॥
अतिरिक्तेन तपसा पण्डितो ब्राह्मणो भवेत् । पण्डितो ब्राह्मणश्चैव वैष्णवश्च जितेन्द्रियः ॥
अनेकजन्मपुण्येन जायते भारते भुवि । तस्याङ्घ्रिस्पर्शनेनैव सद्यः पूता वसुंधरा ॥५९॥
तीर्थाः कुर्वन्ति तीर्थानि जीवन्मुक्ताश्च वैष्णवाः । स्वपुंसां च सहस्रं च पुनन्तीति श्रुतौ श्रुतम्
पापेन वेदजन्मैव दुश्चिकित्सोऽपि ब्राह्मणः । दुश्चिकित्स्यस्तथा वैद्यो व्यालग्राही त्रिजन्मसु
अतिक्रूरो दुराचारो द्वेष्टा च सुरविप्रयोः । स भवेत्कुटिलः शालो वर्षाणां च सहस्रकम् ॥

पुंश्चलीलम्पटानां च दूती या कामिनी व्रज। कालसूत्रे वर्षशतं स्थित्वा च गोधिका भवेत्
जन्मैकं गोधिका भूत्वा हरिणश्च त्रिजन्मसु। जन्मैकं महिषश्चैव जन्मैकं मल्लुकी भवेत्॥
जन्मैकं गण्डकश्चैव सृगालश्च त्रिजन्मसु। परकीयतडागं च लुप्त्वा सस्य ददाति च ॥
स भवेन्नक्रजातिश्च कच्छपश्च त्रिजन्मसु। वृथा मांसं च यो भुङ्क्ते स एककुष्ठश्च ब्राह्मणः
भुङ्क्ते मासमदत्तं च स मीनश्च मृगो भवेत्। वर्षाणां च सहस्रं च तात भुक्त्वा च किल्बिषम्
कर्मभोगाच्छुचिर्भूत्वा स पुनर्ब्राह्मणो भवेत्। एकादशीविहीनश्च ब्राह्मणः पतितो भवेत्।
भक्ष्यस्य द्विगुणं दत्त्वा तेन पापेन मुच्यते। मम जन्मदिने चैव यो भुङ्क्ते मानवोऽधम.॥
त्रैलोक्यजनितं पापं सोऽपि भुङ्क्ते न संशयः। भुक्त्वा च नरकं सर्वं पश्चाच्चाण्डालतां व्रजेत्॥
एवं च शिवरात्रौ च श्रीरामनवमीदिने। उपवासासमर्थश्च हविष्यान्नं समाचरेत्। ७१॥
ततोऽशक्तो दुर्बलश्च भोजयेद्ब्राह्मणानपि। कृत्वा महोत्सवं पुण्यं मदीयं पातकाच्छुचिः॥
तस्माद्यत्नेन कर्तव्यं नामसंकीर्तनं मम। गृध्रः कोटिसहस्राणि शतजन्मानि सूकर ।७२॥
श्वापदः शतजन्मानि कुल्हा च निशि भोजनं त्। अदीक्षितो द्विजश्चैव शङ्खश्चिल्लः शुकी भवेत्
अनुद्राही द्विजश्चैव राजहंसो भवेद्ध्रुवम्। चित्रवस्त्रापहारी च मयूरश्च त्रिजन्मसु ॥
तेजःपात्रापहारी च भवेत्काण्डवाश्चिरम्। सुराणां प्रतिमाचोरोऽन्धश्च सप्तजन्मसु ॥
दरिद्रो व्याधियुक्तश्च बधिरश्चापि कुब्जकः। स्त्रीतैलमधुमांसानि रवौ वा पञ्चपर्वसु ॥
सेवते यो महामूढो वज्रदंष्ट्रं व्रजेद्ध्रुवम्। पातकी दुःखितस्तत्र वर्षाणां च सहस्रकम्॥
ततो भवति म्लेच्छश्च चाण्डालः सप्तजन्मसु। व्याधियुक्तस्ततः शूद्रो ब्राह्मणश्च ततः शुचिः
तस्माद्यत्नान्न भोक्तव्यं भारते धर्मभीरुणा। ब्राह्मणं च सुरं दृष्ट्वा न नमेद्यो नराधम.॥
यावज्जीवनपर्यन्तमशुचिर्यवनो भवेत्। अभ्युत्थानं न कुरुते दृष्ट्वा चाऽऽगतब्राह्मणम्॥
स भवेद्ब्रह्मघाती च सप्तजन्मसु निश्चितम्। शिवद्वेषी कुक्कुटश्च देवलः सप्तजन्मसु॥८२॥
पितृदेवार्चनं हन्ति वेदोक्तं ज्ञानदुर्बलः। स याति नरकं पापी वर्षाणां च सहस्रकम्॥८३॥
ततश्च रौरवं भुक्त्वा तीर्थकाकस्त्रिजन्मसु। त्रिजन्मसु शृगालश्च तीर्थे भुङ्क्ते शवं व्रज॥
त्रिजन्मसु भवेत्सोऽपि तीर्थेषु शवरक्षकः। शवानां करमादत्ते कर्मणा कृतपातकी॥८५॥
नित्यं सुरार्चनं कृत्वा दाम्भिको ज्ञानदुर्बलः। गुरुं च नार्चयेद्भक्त्या तस्मै नान्नं ददाति यः
स भवेद्देवलो दुःखी देवशापेन पातकी। नित्यं सुरार्चनं कृत्वा दाम्भिको ज्ञानदुर्बलः ॥
पूजाफलं न लभते देवद्रोही स दारुणः। दीपनिर्वाणकर्ता च खद्योतः सप्तजन्मसु॥
१जीव मत्स्यकुण्डपश्चाप्यदत्त्वैवं च खादति। स भवेन्मत्स्यरङ्गश्च मार्जारः सप्तजन्मसु॥

१ ख. ङ्घस०। २ ख. भवेच्चा।

गोणीहर्ता कपोतश्च मालाहर्ता विहंगमः । चटको धान्यचोरश्च मांसचोरश्च कुंजरः ॥
कविः प्रहर्ता विदुषां मण्डूकः सप्तजन्मसु । असत्कविर्ग्रामविप्रो नकुलः सप्तजन्मसु ॥
कुष्ठी भवेच जन्मैकं कृकलासस्त्रिजन्मसु । जन्मैकं वल्कश्चैव ततो वृक्षपिपीलिका ॥
ततः शूद्रश्च वैश्यश्च क्षत्रियो ब्राह्मणस्तथा । कन्याविक्रयकारी च चतुर्वर्णो हि मानवः
सद्यः प्रयाति तामिस्रं यावच्चन्द्रदिवाकरौ । ततो भवति व्याधश्च मांसविक्रयकारकः ॥
ततो व्याधि(धो)र्भवेत्पश्चाद्यो यथा पूर्वजन्मनि । मन्त्रामविक्रयी विप्रो न हि मुक्तो भवेद्ध्रुवम्
मृत्युलोके च मन्त्रामस्त्वनिमात्रं न विद्यते । पश्चाद्भवेत्स गोयोनौ जन्मैकं ज्ञानदुर्बलः ॥
ततश्छागस्ततो मेषो महिषः सप्तजन्मसु । महाचक्री च कुटिलो धर्महीनस्तु मानवः ॥
जन्मैकं तैलकारश्च कुम्भकारस्ततैव च । मिथ्याकलङ्कवक्ता च देवब्राह्मणनिन्दकः ॥
स भवेत्स्वर्णकारश्च रजकः सप्तजन्मसु । ब्राह्मणक्षत्रविट्शूद्राः कुत्सिताः शौचवर्जिताः
जन्म तेषां म्लेच्छयोनौ वर्षाणामयुतं तथा । अतीव कामिनीलुब्धः कामुकः स्त्रीरतः सदा ॥
यक्ष्मग्रस्तो भवेत्सद्यः परत्रापि नपुंसकः । कामतो योषितां श्रोणीस्तनास्ये यश्च पश्यति
स भवेद्दृष्टिहीनश्च परत्रापि नपुंसकः । विप्रोऽभिचारकर्ता च हिंसको ज्ञानदुर्बलः ॥
यात्येवमन्धतामिस्रं वर्षाणामयुतं तथा । तदा भवति दैवज्ञोऽप्यप्रदानी च दुर्मतिः ॥
ततः शूद्रो भवेद्विप्रो भोगेन कर्मणस्तथा । शास्त्रज्ञाता च दैवज्ञो मिथ्या वदति लोभतः
स भवेच ध्रुवं ज्येष्ठी वानरः सप्तजन्मसु । अनेकजन्मतपसा भारते ब्राह्मणो भवेत् ॥
सुबुद्धिरतिधर्मिष्ठो धर्महीनश्च पातकी । स्वधर्मनिरतो विप्रः परमाच हुताशनात् ॥१॥
पवित्रश्चातितेजस्वी तस्माद्भीताः सुराः सदा । नदीषु च यथा गङ्गा तीर्थेषु पुष्करं यथा ॥
पुरीषु च यथा काशी यथा ज्ञानिषु शंकरः । शास्त्रेषु च यथा वेदा यथाऽश्वत्थश्च पादपे
मम पूजा तपस्यासु व्रतेष्वनशनं यथा । तथा जातिषु सर्वासु ब्राह्मणः श्रेष्ठ एव च ॥
विप्रपादेषु तीर्थानि पुण्यानि च व्रतानि च । विप्रपादरजः शुद्धं पापव्याधिविमर्दनम् ।
शुभाशीर्वचनं तेषां सर्वकल्याणकारणम् । एतत्ते कथितं तात विपाकः कर्मणामहो ॥
यथाश्रुतं यथाज्ञानं तदशेषं निशामय । श्रुत्वा धर्मविपाकं च वाचकाय सुवर्णकम् ॥
दद्याद्धेमं च रौप्यं च वस्त्रं ताम्बूलमेव च । सुवर्णशतकं दद्यात्सद्यो देही च गोकुलम्
रौप्यं वस्त्रं च ताम्बूलं मत्प्रीत्या ब्राह्मणाय च ॥ २१२ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं०
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

१ क. गोणाट'। २ क. 'हतं ।

अथ षडशीतितमोऽध्यायः ।

नन्द उवाच--

केदारकन्याप्रस्तावात्कथितं कर्मकीर्तनम् । कृत्यास्त्रीणां प्रसङ्गेन तद्व्यासेन वद प्रभो ॥
केदारकन्या सा का वा को वा केदारभूपतिः । कस्य वंशे च तज्जन्म तन्मे व्याख्यातुमर्हसि

श्रीकृष्ण उवाच—

पुरा तु ब्रह्मणः पुत्रो मनुः स्वायंभुवस्तथा । तस्य स्त्री शतरूपा च धन्या मान्या च योषिताम्
प्रियव्रतोत्तानपादौ तयोः पुत्रौ बभूवतुः । उत्तानपादपुत्रश्च ध्रुव एव महायशाः ॥४॥
तत्पुत्रो नन्दसावर्णिः केदारश्च तदात्मजः । सप्तद्वीपपतिः श्रीमान्केदारो वैष्णवः स्वयम् ॥
तस्य रक्षानिमित्तेन तत्सभायां सुदर्शनम् । गवां लक्षं नवं शुद्धं स्वर्णशृङ्गं च भूषितम्
वह्निशुद्धानि वस्त्राणि दत्तानि वरुणेन च । सुवर्णानां तथा लक्षं सर्वसस्यां वसुंधराम् ॥
मणिरत्नं च मुक्ताश्च हीरकं परमं तथा । माणिक्यमश्वरत्नानां लक्षं लक्षं च हस्तिनाम्
रौप्यं प्रवालं शिष्टाश्च शतधान्याचलं वरम् । नित्यं नित्यं ब्राह्मणेभ्यो ददौ च रत्नभूषणम्
शतलक्षं ब्राह्मणानां भोजयामास नित्यशः । जलभोजनपात्राणि सुवर्णानां ददौ नृपः ॥
सुवर्णानां यज्ञसूत्रमङ्गुलीयकमुत्तमम् । आसनं स्वर्णरत्नानां ब्राह्मणेभ्यो ददौ मुदा ॥
ब्राह्मणानां च लक्षं च सूपकारं नृपस्य च । ब्राह्मणानां द्विलक्षं च परिवेषणकारकम् ॥
घृतकुल्या मधुकुल्या दधिकुल्या मनोहराः । गुडकुल्या दुग्धकुल्या नित्यं प्रार्थनमीप्सितम्
प्रातरारभ्य संध्यान्तं विप्राणां भोजनं तथा । दुःखिनां भिक्षुकाणां च धनदानं यथोचितम्
फलमूलाशनो राजा वैष्णवश्च जितेन्द्रियः । सर्वं मदर्पणं कृत्वाऽजपन्मां च दिवानिशम् ॥
एकदा सूपकारश्च तमुवाच नृपेश्वरम् । विप्राणां भोजनायैव दशलक्षमुपस्थितम् ॥१६॥
भुङ्क्ते ब्राह्मणश्चाद्य स्वल्पमन्नं वद प्रभो । कुर्वन्तु भक्षणं ते वै विप्राः सूपादिना नृप ॥
चतुर्योजनपर्यन्तमधिकारो नृपस्य च । यो राजा तच्छतगुणः स एव मण्डलेश्वरः ॥१८॥
तत्तद्दशगुणो राजा राजेन्द्रः परिकीर्तितः । राजेन्द्राणां पञ्चलक्षं नित्यं केदारसंसदि ॥
अमूल्यरत्नमाणिक्यं मुक्ताहारं मणीश्वरम् । गजरत्नमश्वरत्नं केदाराय करं ददौ ॥२०॥
कमलाकलया जाता यज्ञकुण्डसमुद्भवा । वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता ॥२१॥
सुमुखी कामिनीश्रेष्ठा कन्या कमललोचना । कन्याऽस्मि ते महाराजेत्युवाच नृपतिं च सा
राजा संपूज्य तां भक्त्या तस्यै पत्नीं समर्प्य च । सा विज्ञाय प्रसूं तातं कृत्वा च विनयं मुदा
ययौ पुण्यवनं रम्यं तपसे यमुनान्तिकम् । तत्तपस्यावनं यस्मात्तस्माद्वृन्दावनं स्मृतम् ॥

१ क. 'दायदः : २ क. 'यास' । ३ ख. 'हारं ।

तपसा वरयामास मां वरं च वरं वरम् । ब्रह्मा ददौ वरं तस्यै पश्चात्कृष्णं लभिष्यसि ॥
स चैकदा नदीतीरे वसन्ते सस्मिता सती । शयाना पुष्पशय्यायां रत्नाभरणभूषिता ॥
ब्रह्मा परीक्षितुं यातः साध्वीं च सुमनोहराम् । ददर्श कन्या रहसि युवानं पुरुषं परम् ॥
चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम् । सस्मितं कामुकं रम्यं रमणीनां च वाञ्छितम् ॥
यथा षोडशवर्षीयं कुमारं कनकप्रभम् । कोटिकन्दर्पलीलाभं पीताम्बरधरं वरम् ॥२९॥
शरत्पार्वणचन्द्रास्यं शरत्पद्मसुलोचनम् । दृष्ट्वा तं च समुत्थाय वासयामास संनिधौ ॥
पूजां चकार भक्त्या च फलं मूलं ददौ मुदा । सुवसितं जलं दत्त्वा प्रणनाम मुदाऽन्विता
पूजां गृहीत्वा मुदितः सादरं तामुवाच ह । विप्ररूपी च भगवान्प्रज्वलन्ब्रह्मतेजसा ॥
कामुकीनां च काम्यं च सतीनां दुष्करं व्रज ॥ ३२ ॥

धर्म उवाच—

भवती कस्य कन्या वा किं ते नाम मनोहरे । किं करोषि रहस्येव तन्मे कथितुमर्हसि ॥
कस्य हेतोस्तपस्या ते किं वा वाञ्छसि सुन्दरि । वरं वृणीष्व भद्रं ते यत्ते मनसि वाञ्छितम्

वृन्दोवाच—

विप्र केदारकन्याऽहं वृन्दा वृन्दावने स्थिता । तपः करोमि रहसि चिन्तया मे हरिं पतिम्
यदि दातुं समर्थोऽसि देहि मे वाञ्छितं वरम् । असमर्थोऽसि चेद्गच्छ किं ते प्रश्नेन ब्राह्मण

धर्म उवाच—

निरीहमवितर्क्यं च परमात्मानमीश्वरम् । निर्गुणं च निराकारं भक्तानुग्रहविग्रहम् ॥३७॥
का क्षमा तं पतिं कर्तुं विना लक्ष्मीं सरस्वतीम् । चतुर्भुजस्य द्वे भार्ये हरेर्वैकुण्ठशायिनः ॥
गोलोके द्विभुजस्यापि श्रीवंशीवदनस्य च । किशोरगोपवेषस्य परिपूर्णतमस्य च ॥३९॥
तस्य भार्या स्वयं राधा महालक्ष्मीः परात्परा । ब्रह्मस्वरूपा परमा परमात्मानमीश्वरम् ॥
भजते सततं शान्तं सुरम्यं श्यामसुन्दरम् । कोटिकन्दर्पसौन्दर्यनिन्दितं सुकलेवरम् ॥४१॥
अमूल्यरत्नाभरणं सत्यं च नित्यविग्रहम् । पीताम्बरधरं रम्यं दातारं सर्वसंपदाम् ॥४२॥
श्रीकृष्णश्च द्विधारूपो द्विभुजश्च चतुर्भुजः । चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम् ॥
पतिमेवो भवेद्वृन्दे ब्रह्मणः पतनेन च । पञ्चविंशत्सहस्रेण युगेनेन्द्रस्य पातनम् ॥४४॥
चतुर्दशेन्द्रावच्छिन्नकालेन ब्रह्मणो दिनम् । तावतीति निशा तस्य विधातुर्भगनामपि ॥
एवं त्रिंशद्दिनैर्मासि द्विषट्के मासि वर्षकम् । एवं शतायुस्तस्यैव निबोध वोवनत्परम् ॥
यावज्जीवनपर्यन्तं सेवन्ते सनकादयः । कल्पानां कोटिकोटिं च तत्र मा पश्च यो विभुः ॥
सहस्रवक्त्रः शेषश्च सेवते च जगन्मदा । दिवानिशं च यं भक्त्या कल्पकोटिशतं शतम्

तत्र साध्यो हितकरो दुराराध्यः परात्परः । ब्रह्मा ब्रह्मस्वरूपं तं भजे जन्मनि जन्मनि
चवैश्चतुर्भिः सततं स्तौति नित्यं सनातनम् । वेदेऽनिर्वचनीयश्च वेदानां जनको विधिः ॥
विधाता फलदाता च दाता च सर्वसंपदाम् । तत्र साध्यो हि भगवान्कालः कालान्तकान्तकः
संहारकर्ता जगतां कलया रुद्ररूपतः । स स्तौति पञ्चवक्त्रेण कोऽन्योऽन्यस्यापि का कथा
तत्परश्च प्रियो नास्ति वृन्दे भगवतः शृणु । सर्वशक्तिस्वरूपा सा दुर्गा दुर्गतिनाशिनी ॥
ब्रह्मस्वरूपा परमा मूलप्रकृतिरीश्वरी । नारायणी विष्णुमाया वैष्णवी सा सनातनी ॥
यन्मायया जगद्भ्रान्तमनित्ये भ्रमते सदा । सा स्तौति भक्त्या यं देवं वृन्देऽप्यह्नि दिवानिशम्
स्तौति भक्त्या स्वशक्त्या च गजवक्त्रः षडाननः । ध्यायते यं गणेशश्च सर्वादौ यस्य पूजनम्
भगवान्सर्वदेवेशो ज्ञानिनां च गुरोर्गुरुः । सिद्धेन्द्रेषु च देवेन्द्रे योगीन्द्रे ज्ञानिनां गुरौ ॥
न गणेशात्परो विद्वान्गणेशश्च सुराधिपः । सरस्वती च यं स्तोतुमशक्ता परमेश्वरी ॥
दिवानिशं पादपद्मं भक्त्या पद्मा निषेवते । यत्कष्ट क्षाजगत्सर्वं परिपूर्णतमं शिवम् ॥
यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् । वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति जन्तुषु ॥
पृथिवी सेवया यस्य सर्वाधारा वसुंधरा । समुद्रा निश्चलाः शैला यस्य भीताश्च सुन्दरि ॥
तीर्थसारा च सा गङ्गा पवित्रा मुक्तिदायिनी । जगतां पावनी देवी यस्य पादाब्जसेवया ॥
पवित्रा तुलसी देवी स्मरणाद्यस्य सेवनात् । नवग्रहाश्च दिक्पाला भीता यस्य प्रतापतः ॥
ब्रह्माण्डेषु च सर्वेषु ब्रह्मविष्णुशिवात्मकाः । अन्ये ये ये सुरेशाश्च शेषाद्या मुनयस्तथा ॥
केचित्कलास्वरूपाश्चाप्यंशरूपाश्च केचन । केचित्कलांशाः कृष्णस्य केचिच्च परमात्मन ॥
पतिमिच्छसि कल्याणि प्रकृतेः परमीश्वरम् । गोलोके राधिका साध्वी न त्वेषा च कदाचन
मा भजस्व महाभागे नृपाणामीश्वरं पतिम् । बलवन्तं च देवेभ्यो दैत्येभ्यश्च वरानने ॥६७॥
सुखानि यानि कल्याणि त्रिषु लोकेषु सन्ति वै । भुङ्क्ष्व तान्येव सर्वाणि मत्प्रसादान्न संशयः
समुद्रस्य पारे च काञ्चनी रुचिरा वरे । देवानां क्रीडनार्थाय विधात्रा निर्मिता पुरी ॥६९॥
तत्रैव गच्छ भद्रं ते रम रामे मया सह । महेन्द्रस्य प्रियवनं पुष्पोद्यानसमन्वितम् ॥७०॥
गच्छ स्वर्णमयीं लङ्कां नानारत्नविभूषिताम् । तत्रैव गच्छ भद्रं ते रम० ॥ ७१ ॥
विद्यन्दकं सुवसनं नन्दकं पुष्पभद्रकम् । तत्रैव गच्छ भद्रं ते रम० ॥ ७२ ॥
सुमेरुगह्वरं वाऽपि क्षीरोदं वा मनोहरम् । तत्रैव गच्छ भद्रं ते रम० ॥ ७३ ॥
सत्यलोकं ब्रह्मलोकं रम्यं सद्म रहःस्थलम् । तत्रैव गच्छ भद्रं ते रम० ॥ ७४ ॥

---

१ क. °यामास ।

मलये निलयं रम्यं रत्नेन्द्रसारनिर्मितम् । सुगन्धियुक्तं सततं शुद्धं चन्दनवायुना॥७६॥
मालती यूथिका रम्या केतकी माधवी तथा । चारुचम्पकपुष्पाणां गन्धेन सुमनोहरम् ॥
पिकानां भ्रमराणां च मधुरध्वनिसंयुतम् । तत्रैव गच्छ भद्रं ते रम० ॥ ७७ ॥
इन्द्रस्य वरुणस्यैव वायोरपि यमस्य च । धनेश्वरस्य वह्नेश्च धर्मस्य शशिनस्तथा ॥७८॥
सुरम्यं लोकमेतेषां मध्ये देवि यथेच्छसि । तत्रैव गच्छ भद्रं ते रम० ॥७९॥
रत्नद्वीपं मणिद्वीपं रम्यं चन्द्रसरोवरम् । तत्रैव गच्छ भद्रं ते रम० ॥८०॥
इत्येवमुक्त्वा संभोक्तुं गच्छन्तं तं छलेन च । न वास्तवपरीक्षार्थं सतीत्वं बोधितुं मन॥
उवाच सा नृपसुता कोपवक्त्रास्यलोचना । हितं सत्यं योगयुक्तं धर्मार्थं च यशस्करम्

वृन्दोवाच—

धैर्यं कुरु महाभाग श्रेष्ठो जातिषु ब्राह्मणः । ब्राह्मणानां तपो मूलं सत्यं वेदवनं धृतिः ॥
परस्त्रीसहसंभोगः स्वभावश्चाप्यधर्मिणाम् । अधर्मेणैव हे विप्र दुष्टोऽभद्राणि पश्यति ॥
ततः सपत्ने जयति समूलस्यो विनश्यति । पतिव्रतानां गमने बलात्कारेण निश्चितम् ॥
मातृगामी भवेत्सद्यो ब्रह्महत्याशतं भवेत् । कुम्भीपाके पच्यते च यावच्चन्द्रदिवाकरौ ॥
प्रदग्धस्तैलतप्तेषु न मृतः सूक्ष्मदेहतः । ताडितो यमदूतैश्च लोहदण्डेन मूर्धनि ।८१॥
क्षणं सुखं चिरं दुःखं सर्वनाशस्य कारणम् । अगम्यागमनं दुःखं धर्मिष्ठो नैव वाञ्छति
क्षमस्व गच्छ भद्रं ते ब्राह्मण ज्ञानदुर्बल । यथा दीपशिखां दृष्ट्वा कीटः पतति निश्चितम्
मिष्टं दृष्ट्वा बडीशाग्रे लुब्धमीनो मृगो यथा । यथा विषाक्तं मधुरं च मुद्के भोक्ता बुभुक्षितः
गृहाणि दुष्टो दुष्टं च विषकुम्भं पयोमुखम् । तथा दृष्ट्वा परस्त्रीणां मुखपद्मं मनोहरम् ॥
विनाशबीजं मोहेन भ्रान्तो भवति लम्पटः । मुखं च रुचिरं स्त्रीणां श्रोणियुग्मं स्तनौ तथा
कामाधारं नाशबीजमधर्मस्थलमेव च । भगं नरककुण्डं च ज्वालामूत्रसमन्वितम् ॥८२॥
दुर्गन्धियुक्तं पापं च यमदण्डस्य कारणम् । यथा लिङ्गं विशत्येव पापयोनौ च योषिताम्
तथा पुमान्विशत्येव रौरवे च युगे युगे । रहस्यं चाऽऽश्रदं दृष्ट्वा मां त्वं धर्षितुमिच्छसि
अत्रैव सर्वदेवाश्च लोकपालाश्च ब्राह्मण । जाज्वल्यमानो धर्मश्च साक्षी शास्ता च कर्मणाम्
यमश्च दण्डकर्ता च स्थापितो हरिणा स्वयम् । स्वयं कृष्णश्च धर्मात्मा ज्ञानरूपो महेश्वरः
दुर्गा बुद्धिर्मनो ब्रह्मा चेन्द्रियाणि सुरास्तथा । सर्वप्राणिषु तिष्ठन्ति साक्षिणः कर्मणां द्विज
क गुप्तं क रहस्यं वा ब्राह्मण ज्ञानदुर्बल । क्षमस्व गच्छ भद्रं ते अवध्याश्च द्विजातयः॥
शक्ताऽहं भस्मसात्कर्तुं गच्छ वत्स यथासुखम् । तपस्यासु मम गतमष्टोत्तरशतं युगम् ॥

१ ग. महेन्द्र° । २ क वेद° । ३ क. सर्वदा° ।

नास्ति गोत्रं मत्पितुश्च न माता न पिता मम। सर्वान्तरात्मा भगवान्कृष्णो रक्षति मां द्विज॥
कृष्णेन स्थापितो धर्मो मां च रक्षति नित्यशः। आदित्यश्च तथा चन्द्रः पवनश्च हुताशनः
ब्रह्मा शंभुर्भगवती दुर्गा रक्षति मां सदा। येन शुक्लीकृता हंसाः शुकाश्च हरिताः कृताः
मयूराश्चित्रिता येन स मे रक्षां करिष्यति। अनाथबालवृद्धानां रक्षकाः सर्वदेवताः॥३॥
नारीबुद्ध्या न मां धर्मस्त्यक्त्वा गच्छेद्धि सर्वदा। मां मातरं परित्यज्य गच्छ वत्स यथा-सुखम्॥ १०४॥

इत्येवमुक्त्वा देवी सा तस्थौ तत्र धरा यथा। आगच्छन्तं च संमोक्तुं मा यान्तं बोधनेन च
शशापेति च सा कोपाद्ब्रह्मबन्धो क्षयो भव। क्षयो भव दुराचार हे पापिष्ठ क्षयो भव॥
पुनः शप्तं स्वयं सूर्यो वारयामास यत्नतः। एतस्मिन्नन्तरे तात तत्रैव जगदीश्वराः॥
आजग्मुरतिसंत्रस्ता ब्रह्मविष्णुशिवादयः। धर्मं दृष्ट्वा कलारूपं रुरुदुस्त्रिदशेश्वराः॥
कृत्वा क्रोडेऽतीव कृशं क्रुद्धा भीतं यथा विधुम्। निश्चेष्टं मलिनं दग्धं सतीकोपाग्निना भ्रम

श्रीभगवानुवाच—

क्षमस्व वृन्दे मद्भक्ते जन्ममृत्युजराहरे। धर्मं जीवय मद्भक्तं रक्ष धर्मं पतिव्रते॥११०॥

ब्रह्मोवाच—

ध्वान्तपूर्णं जगत्सर्वं विना धर्मं बभूव ह। कम्पितौ चन्द्रसूर्यौ च शेषश्चापि वसुंधरा॥

महादेव उवाच—

प्रनष्टं च जगत्सर्वं विना धर्मेण सुन्दरि। धर्मं जीवय भद्रं ते स्वस्ति तेऽस्तु वरानने॥

सूर्य उवाच—

वरं वृणीष्व भद्रं ते यत्ते मनसि वाञ्छितम्। धर्मं जीवय भद्रं ते रक्ष सृष्टिं पतिव्रते॥

अनन्त उवाच—

धर्मं करोषि तपसा कथं धर्मं विहंसि च। धर्मं जीवय भद्रं ते सर्वधर्मो भवेत्तव॥१४॥

चन्द्र उवाच—

द्विजरूपधरो धर्मस्त्वां परीक्षितुमागतः। ब्रह्मणा प्रेरितश्चैव निर्दोषश्च विहिंसितः॥१५॥

महेन्द्र उवाच—

तपसोपार्जितो धर्मो धर्मेण च फलं नृणाम्। कथं फलं च तपसां यदि धर्मः क्षयं गतः॥

वरुण उवाच—

धर्मं जीवय धर्मिष्ठे धर्मं रक्ष सनातनम्। निष्फलं कर्मिणां कर्म विना धर्मेण धार्मिके॥

पवन उवाच—

जगत्पूतं कुरु शुभे धर्मं जीवय सांप्रतम्। धर्मे प्रनष्टे तपसां तथापूर्वं विनङ्क्ष्यति॥१८॥

वह्निरुवाच—

स्वधर्मोपार्जनं कर्तुमागताऽसि च भारतम् । विहंसि धर्ममज्ञात्वा पुनर्जीवय सुन्दरि ॥

यम उवाच—

वेदोक्तकर्मकर्तॄणामहं विश्वे वरानने । धर्मानुसारात्फलदो धर्मं जीवय सत्वरम् ॥१२०॥
देवानां वचनं श्रुत्वा समुत्थाय पतिव्रता । नमस्कृत्य सुरेशांश्च तानुवाच तपस्विनी ॥

वृन्दोवाच—

अहं देवा न जानामि धर्मं ब्राह्मणरूपिणम् । कृतः क्षयो मया कोपान्मां परीक्षितुमागतः ॥
जीवयामि ध्रुवं धर्मं युष्माकं च प्रसादतः । इत्येवमुक्त्वा सा वृन्दा चेत्युवाच व्रजेश्वर ॥
तपः सत्यं यदि मम सत्यं च विष्णुपूजनम् । तेन पुण्येन सद्योऽत्र द्विजो भवतु विज्वरः ॥
यदि मे च भवेत्सत्यं व्रतं सत्यं तपः शुचि । तेन पुण्येन सत्येन द्विजो भ० ॥ २४ ॥
यदि नारायणः सत्यः सर्वात्मा नित्यविग्रहः । ज्ञानात्मकः शिवः सत्यो द्विजो भ० ॥
ब्रह्म सत्यं च ते देवाः प्रकृतिः परमा यदि । यज्ञः सत्यस्तपः सत्यं द्विजो भ० ॥ २७ ॥
इत्येवमुक्त्वा सा वृन्दा धर्मं क्रोडे चकार च । तं दृष्ट्वा च कलारूपं रुरोद कृपया सती ॥
एतस्मिन्नन्तरे मूर्तिर्धर्मभार्या शुचाऽऽकुला । निपत्य विष्णुपादे च शिरसा चेत्युवाच सा ॥

मूर्तिरुवाच—

हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु । तूर्णं जीवय कान्तं मे जगन्नाथ कृपामय ॥
पतिहीना च या नारी पापिनी सा भवार्णवे । यथाऽऽस्यं चक्षुर्विरतं प्राणहीना यथा तनूः ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः । मितं बन्धुर्मितं माता सर्वदाता पतिः प्रभुः ॥
इत्येवमुक्त्वा सा देवी तत्र तस्थौ रुरोद च । उवाच वृन्दां भगवान्सर्वात्मा प्रकृतेः परः ॥

श्रीभगवानुवाच—

त्वयाऽऽयुस्तपसा लब्धं यावदायुश्च ब्रह्मणः । तदेव देहि धर्माय गोलोकं गच्छ सुन्दरि ॥
त्वयाऽनया च तपसा पश्चान्मां च लभिष्यसि । पश्चाद्गोलोकमागत्य वाराहे च वरानने ॥
वृषभानसुता त्वं च राधाच्छाया भविष्यसि । मत्कलांशश्च रायाणस्त्वां विवाहे ग्रहीष्यति
मां लभिष्यसि रासे च गोपीभी राधया सह । राधा श्रीदामशापेन वृषभानसुता यदा ॥
सा चैव वास्तवी राधा त्वं च च्छायास्वरूपिणी । विवाहकाले रायाणस्त्वां च च्छाया ग्रहीष्यति
त्वां दत्त्वा वास्तवी राधा साऽन्तर्धाना भविष्यति । राधैवेति विमूढाश्च विज्ञास्यन्ति च गोकुले
स्वप्ने राधापदाम्भोजं न हि पश्यन्ति बल्लवाः । स्वयं राधा मम क्रोडे छाया रायाणकामिनी

१ ख. 'श्रेष्ठानने । २ ख. स्वयम् ।

विभाण्डको मरीचिश्च शुक्रोऽत्रिश्च बृहस्पतिः । गार्ग्यश्चापि तथा वात्स्यो व्यासश्च जैमिनि-स्तथा ॥ ७ ॥
मितवागृष्यशृङ्गश्च याज्ञवल्क्यः शुकस्तथा । सौभरिः शुद्धजटिलो भरद्वाजः सुभद्रकः ॥
मार्कण्डेयो लोमशश्च आसुरिश्च विटङ्कणः । अष्टावक्रः शतानन्दो वामदेवश्च भागुरिः ॥
संवर्तश्चाप्युतथ्यश्च नगोऽहं चापि नारद । जाबालिः पर्शुरामश्चाप्यगस्त्यः पैल एव च ॥
सुधामन्युर्गौरमुखोऽप्युपमन्युः श्रुतश्रवाः । मैत्रेयश्च्यवनश्चैव वररुच्यर्पिरेव च ॥ ११ ॥
तान्दृष्ट्वा सहसोत्थाय नमस्कृत्य पुटाञ्जलिः । सिंहासनेषु रम्येषु वासयामास सादरम् ॥
पूजयामास विविधकुशलप्रश्नपूर्वकम् । परस्परं च संभाष्य मध्ये कृष्ण उवास सः ॥
एतस्मिन्नन्तरे कृष्णस्तेजोराशिं ददर्श सः । ददृशुस्ते च मुनयोऽप्याकाशे च समुज्ज्वलम्
तेजसोऽभ्यन्तरे वत्स कुमारं कनकप्रभम् । यथैवं पञ्चवर्षीयं नग्नं बालकमीप्सितम् ॥ १९॥
आविर्बभूव सहसा सभामध्ये च नारद । उत्तिष्ठमानं सहसा तं दृष्ट्वा मुनिपुंगवाः ॥ ११॥
प्रणेमुर्मुनयः सर्वे शौरिश्च प्रणनाम तम् । सस्मितं स्निग्धनेत्रं च कृत्वा युक्तिं च सादरम् ॥
स सर्वानाशिषं कृत्वा समुवास च संसदि । उवाच तांश्च शौरिं च भगवन्तं सनातनम् ॥

सनत्कुमार उवाच—

भद्रं वो मुनयः शश्वत्तपसां फलमीप्सितम् । कृष्णस्य कुशलप्रश्नं शिवबीजस्य निष्फलम् ॥
सांप्रतं कुशलं वश्च दर्शनं परमात्मनः । भक्तानुरोधाद्देहस्य परस्य प्रकृतेरपि ॥ २० ॥
निर्गुणस्य निरीहस्य सर्वबीजस्य तेजसा । भारावतरणायैव चाऽऽविर्भूतस्य सांप्रतम्॥२१॥

श्रीकृष्ण उवाच—

शरीरधारिणश्चापि कुशलप्रश्नमीप्सितम् । तत्कथं कुशलप्रश्नं मयि विप्र न विद्यते ॥

सनत्कुमार उवाच—

शरीरे प्राकृते नाथ संततं च शुभाशुभम् । नित्यदेहे क्षेमबीजे शिवप्रश्नमनर्थकम् ॥२३॥

श्रीभगवानुवाच—

यो यो विग्रहधारी च स च प्राकृतिकः स्मृतः । देहो न विद्यते विप्र तां नित्यां प्रकृतिं विना

सनत्कुमार उवाच—

रक्तबिन्दूद्भवा देहास्ते च प्राकृतिकाः स्मृताः । कथं प्रकृतिनाथस्य बीजस्य प्राकृतं वपुः॥
सर्वबीजस्य सर्वादिर्भवांश्च भगवान्नवदम् । सर्वेषामवताराणां प्रधानं बीजमव्ययम्॥२६॥
त्वया वदन्ति वेदाश्च नित्यं सत्यं सनातनम् । ज्योतिःस्वरूपं परमं परमात्मानमीश्वरम् ॥

१ क. तनोग्र्य° ।

विष्णोश्च वचनं श्रुत्वा ददावायुश्च सुन्दरी । उत्तस्थौ पूर्णो धर्मश्च तप्तकाञ्चनसंनिभः ॥
पूर्वस्मात्सुन्दरः श्रीमान्प्रणनाम परात्परम् ॥ ४१ ॥

वृन्दोवाच--

देवाः शृणुत मद्वाक्यं दुर्लक्ष्यं सावधानतः । न हि मिथ्या भवेद्वाक्यं मदीयं च निशामय ॥
क्षयो भवेति वाक्यं च मयोक्तं कोपभीतया । वारप्रयं पुनर्वक्तुं वारयामास भास्करः ॥
सत्ये च परिपूर्णोऽयं यथापूर्वो यथाऽधुना । त्रिपादश्चापि त्रेतायां द्विपादो द्वापरे तथा ॥
एकपादश्च धर्मोऽयं कलेश्च प्रथमे हरे । शेषे कलापे ष्डशांशः पुन. सत्ये यथा पुरा ॥
विनिर्गत मम मुखात्क्षयस्तेन तत. क्रम तु । पुनरुक्तं च मनसि वारयामास भास्करः ॥
तेनैव हेतुनाऽय च कलिशेषे कलामय. । तथा शप्तः स्थितो दुर्गे कलिशेषे तथा ध्रुवम् ॥
एतस्मिन्नन्तरे नन्द ददृशुर्देवता रथम् । गोलोकादागतं वेगादतीव सुन्दरं शुभम् ४८॥
अमूल्यरत्ननिर्माणं हीरहारपरिष्कृतम् । मणिमाणिक्यमुक्ताभिर्वस्त्रैश्च श्वेतचामरैः॥४९॥
विभूषितं भूषणैश्च रचितै रत्नदर्पणै. । नत्वा हरिं हरं वृन्दा ब्रह्माणं सर्वदेवता.॥५०॥
सम रुह्य रथं दृष्ट्वा गोलोकं च जगाम सा । देवा जग्मुश्च स्वस्थानं किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं०
षडशीतितमोऽध्यायः ॥ ८६ ॥

---

अथ सप्ताशीतितमोऽध्यायः ।

---

नन्द उवाच—

त्वां ज्ञातुं नहि शक्ताश्च वेदा वेदप्रभुं स्वयम् । सुरा ब्रह्मेशशेष वा मुनिसिद्धादयस्तथा ॥
को भवानिति विज्ञातुं परं कौतूहलं मम । तत्सर्वं स्वात्मयाथार्थ्यं निर्जने कथय प्रभो ॥

नारायण उवाच—

एतस्मिन्नन्तरे तत्र कृष्णं द्रष्टुं मुनीश्वरा. । आ जग्मुः सहसा वत्स ज्वलन्तो ब्रह्मतेजसा ॥
पुलहश्च पुलस्त्यश्च क्रतुश्च भृगुरङ्गिराः । प्रचेताश्च वसिष्ठश्च दुर्वासाः कण्व एव च ॥
कात्यायनः पाणिनिश्च कणादो गौतमस्तथा । सनकश्च सनन्दश्च तृतीयश्च सनातन. ॥
कपिलश्चाऽऽसुरिश्चैव वायुः पञ्चशिखस्तथा । विश्वामित्रो वाल्मीकिश्च कश्यपश्च पराशरः ॥

---

१ क °द्विदः प्रभो ।

विभाण्डको मरीचिश्च शुक्रोऽत्रिश्च बृहस्पतिः । गार्ग्यश्चापि तथा वात्स्यो व्यासश्च जैमिनि-
स्तथा ॥ ७ ॥
मितवाग्ऋष्यशृङ्गश्च याज्ञवल्क्यः शुकस्तथा । सौभरिः शुद्धजटिलो भरद्वाजः सुभद्रकः ॥
मार्कण्डेयो लोमशश्च आसुरिश्च विटङ्कणः । अष्टावक्रः शतानन्दो वामदेवश्च भागुरिः ॥
संवर्तश्चाप्युतथ्यश्च नगोऽहं चापि नारद । जाबालिः परशुरामश्चाप्यगस्त्यः पैल एव च ॥
सुधामन्युर्गौरमुखोऽप्युपमन्युः श्रुतश्रवाः । मैत्रेयश्च्यवनश्चैव वररुच्यर्पिरेव च ॥ ११ ॥
तान्दृष्ट्वा सहसोत्थाय नमस्कृत्य पुटाञ्जलिः । सिंहासनेषु रम्येषु वासयामास सादरम् ॥
पूजयामास विविधकुशलप्रश्नपूर्वकम् । परस्परं च संभाष्य मध्ये कृष्ण उवास सः ॥
एतस्मिन्नन्तरे कृष्णस्तेजोराशिं ददर्श सः । ददृशुस्ते च मुनयोऽप्याकाशे च समुज्ज्वलम्
तेजसोऽभ्यन्तरे वत्स कुमारं कनकप्रभम् । पञ्चवर्षीयं नग्नं बालकमीप्सितम् ॥ १५ ॥
आविर्बभूव सहसा सभामध्ये च नारद । उत्तिष्ठमानं सहसा तं दृष्ट्वा मुनिपुंगवाः ॥ १६ ॥
प्रणेमुर्मुनयः सर्वे शौरिश्च प्रणनाम तम् । सस्मितं स्निग्धनेत्रं च कृत्वा युक्तिं च सादरम् ॥
स सर्वानाशिषं कृत्वा समुवास च संसदि । उवाच तांश्च शौरिं च भगवन्तं सनातनम् ॥

सनत्कुमार उवाच—

भद्रं वो मुनयः शश्वत्तपसां फलमीप्सितम् । कृष्णस्य कुशलप्रश्नं शिवबीजस्य निष्फलम् ॥
सांप्रतं कुशलं वश्च दर्शनं परमात्मनः । भक्तानुरोधाद्देहस्य परस्य प्रकृतेरपि ॥ २० ॥
निर्गुणस्य निरीहस्य सर्वबीजस्य तेजसा । भारावतरणायैव चाऽऽविर्भूतस्य सांप्रतम् ॥ २१ ॥

श्रीकृष्ण उवाच—

शरीरधारिणश्चापि कुशलप्रश्नमीप्सितम् । तत्कथं कुशलप्रश्नं मयि विप्र न विद्यते ॥

सनत्कुमार उवाच—

शरीरे प्राकृते नाथ संततं च शुभाशुभम् । नित्यदेहे क्षेमबीजे शिवप्रश्नमनर्थकम् ॥ २३ ॥

श्रीभगवानुवाच—

यो यो विग्रहधारी च स च प्राकृतिकः स्मृतः । देहो न विद्यते विप्र तां नित्यां प्रकृतिं विना

सनत्कुमार उवाच—

रक्तबिन्दूद्भवा देहास्ते च प्राकृतिकाः स्मृताः । कथं प्रकृतिनाथस्य बीजस्य प्राकृतं वपुः ॥
सर्वबीजस्य सर्वादिर्भवांश्च भगवन्वदम् । सर्वेषामवताराणां प्रधानं बीजमव्ययम् ॥ २६ ॥
इत्या वदन्ति वेदाश्च नित्यं सत्यं सनातनम् । ज्योतिःस्वरूपं परमं परमात्मानमीश्वरम् ॥

---

१ क. दमोघ्न° ।

मायया सगुणं चैव मायेशं निर्गुणं परम् । प्रवदन्ति च वेदाङ्गास्तथा वेदविदः प्रभो ॥२८॥

श्रीकृष्ण उवाच--

सांप्रतं वासुदेवोऽहं रक्तवीर्याश्रितं वपुः । कथं न प्राकृतो विप्र शिवप्रश्नमभीप्सितम् ॥

सनत्कुमार उवाच—

वासुः सर्वनिवासश्च विश्वानि यस्य लोमसु । तस्य देवः परं ब्रह्म वासुदेव इतीरितः ॥

वासुदेवेति तन्नाम वेदेषु च चतुर्षु च । पुराणेष्वितिहासेषु यात्रादिषु च दृश्यते ॥३१॥

रक्तवीर्याश्रितो देहः क्व ते वेदे निरूपितः । साक्षिणो मुनयश्चैव धर्मः सर्वत्र एव च॥

साक्षिणो मम वेदाश्च रविचन्द्रौ च सांप्रतम् ॥ ३२ ॥

भृगुरुवाच—

सत्यं वदसि विप्रेन्द्र त्वमेव वैष्णवाग्रणीः । स्वागतं कुशलं शश्वत्किंनिमित्तमिहाऽऽगतः

सनत्कुमार उवाच—

श्रूयतां मुनयः सर्वे श्रूयतां कृष्ण सांप्रतम् । अहो येन निमित्तेन चातिशीघ्रमिहाऽऽगतः

श्रीकृष्ण उवाच—

भगवन्सर्वधर्मज्ञ किंनिमित्तमिहाऽऽगतः । सर्वं जानासि सर्वज्ञ त्वमेव विदुषां वरः ॥

सनत्कुमार उवाच—

धन्योऽसि भगवञ्छश्वन्मान्योऽसि जगतामपि । सर्वेश्वरेश्वरोऽसि त्वं त्वत्परो नास्ति विश्वतः

श्रीकृष्ण उवाच--

यज्ञानां च व्रतानां च तपस्यानां द्विजेश्वर । सततं फलदाताऽहं दक्षिणाभिः सहेति च

इति श्रुत्वा कुमारश्च जवेन प्रययौ वने । मत्वाऽऽश्चर्यं च वचनं वारयामास तेऽपि तम्

ऋषय ऊचुः—

हे सिद्धेन्द्र महाभाग कुमार करुणामय । का शाङ्कितकथा प्रोक्ता भगवत्कृष्णसंनिधौ ।

किं पुत्र दृष्टमाश्चर्यं श्रुतं किमपि कुत्रचित् । अतीव कृत्वा विस्तीर्णमस्माकं वक्तुमर्हसि

एतस्मिन्नन्तरे ब्रह्मा पार्वत्या सह शंकरः । अनन्तश्चापि धर्मश्च श्रीसूर्यश्च निशाकरः॥

आदित्या वसवो रुद्रा दिक्पालाद्याश्च देवता । श्रीकृष्णः सहसोत्थाय संभाव्य च पृथक्पृथक्

मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः । प्रणेमुर्ऋषयः सर्वे शेषं शंभुं विधिं शिवाम्

परस्परं च संभाषा बभूव द्विजदेवयोः । समुवासाऽऽसने मध्ये कुमारः कनकप्रभः ॥

कथां कथितुमारेभे संसदि द्विजदेवयोः ॥ ४४ ॥

---

१ घ °र्णं । २ क. °भाष्य ।

सनत्कुमार उवाच—

मया गतश्च गोलोको न दृष्टो राधिकापतिः । ततो गतं च वैकुण्ठं तत्र नास्ति चतुर्भुजः
ततो गतश्च क्षीरोदस्तत्र नास्ति हरिः स्वयम् । परिश्रान्तो विपन्नश्च स्नातं क्षीरोदधेस्तटे
विस्तीर्णवालुकामध्ये कच्छपः शतयोजनः । भीतश्च कम्पितस्तत्र दृष्टो दुःखी च शुष्किनः
निःसारितो राघवेण मीनेन च महात्मना । धन्योऽसीति मयोक्तश्च नाहं धन्य उवाच सः
क्षीरोदः सागरो धन्यो जन्तवो यत्र मद्विधाः । मत्तो महत्तराश्चापि ह्यसंख्याश्च महामुने ॥
भवान्धन्योऽस्ति क्षीरोद तेनोक्तो नाहमेव च । धन्या वसुंधरा देवी यत्रैव सप्तसागराः ॥
धन्याऽसि वसुधेत्युक्ता नाहमेवेत्युवाच मा । धन्योऽनन्तो ममाऽऽधारः कृष्णांशो नागराड्विभुः
सहस्रमूर्ध्नां मध्येऽहं मूर्ध्नि शूर्पे च सर्षपः । धन्योऽसि शेषेत्युक्तोऽयं धन्यो नाहमुवाच वै
धन्यः कूर्मो ममाऽऽधारो गच्छ तत्रैव वै मुने । धन्योऽसि कूर्मेत्युक्तोऽयं नाहं धन्योऽस्मि वै मुने
वायुना धार्यमाणोऽहं मत्तो धन्यतमश्च सः । धन्योऽसीत्युक्तः पवनो धन्यो नाहमुवाच सः
धन्यश्च भगवान्ब्रह्मा विधाता जगतामपि । धन्योऽसि तत्र धाता च धन्यो नाहमुवाच सः
धन्यो महेश्वरो देवो योगीन्द्राणां गुरोर्गुरुः । सर्वाराध्यः सर्वपूज्यो धर्मरूपः सनातनः ॥
कालकालश्च संहर्ता स्वयं मृत्युंजयः प्रभुः । धन्योऽसि तत्र शंभुश्च धन्यो नाहमुवाच सः
सर्वादौ पूजनं यस्य ज्ञानिनां च गुरोर्गुरुः । धन्यो गणेश्वरो देवो देवानां प्रवरः परः ॥
सिद्धेन्द्रेषु मुनीन्द्रेषु देवेन्द्रेषु श्रुतौ श्रुतम् । योगीन्द्रेषु च प्राज्ञेषु न गणेशात्परः पुमान्
निम्नगासु यथा गङ्गा तीर्थेषु पुष्करं यथा । वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥६४॥
वेदो नारायणः साक्षाद्धर्मं पूज्या व्यवस्थया । तस्माच्छास्त्राणि सर्वाणि पुराणानि च सन्ति वै
यस्मान्निरूपितो धर्मश्चेतिहासश्च संहिताः । तस्माद्धन्याश्च ते वेदा वदन्त्यत्र मनीषिणः
यूयं धन्याश्च मान्याश्चेत्युक्ता वेदा मया ततः । ऊचुस्ते न वयं धन्या यज्ञसंघश्च सांप्रतम्
वयं व्यवस्थाकर्तारो यज्ञौघः फलदः स्वयम् । तस्माद्धन्यः स एवापि गच्छ गच्छ महामुने
धन्योऽसि यज्ञसंघोऽसीत्युक्तस्तत्र मया विभो । ऊचुस्ते न वयं धन्या धन्यं कर्म शुभं मुने
शुभकर्मासि धन्यं त्वं नाहं धन्यमुवाच तत् । कर्मणां फलदाता यः कर्महेतुश्च सांप्रतम् ॥
धातुर्विधाता भगवान्सर्वादिः सर्वकारकः । श्रीकृष्णः परमात्मा च धन्यो मान्यश्च निश्चितम्
धर्मालयं ततो गत्वा न दृष्ट्वा जगदीश्वरम् । मथुरामागतो द्रष्टुं परिपूर्णतमं प्रभुम् ॥
यज्ञानां तपसां चैव व्रतानां शुभकर्मणाम् । ईश्वरं फलदातारं परमात्मानमेव च ॥६८॥
कारणं कारणानां च ब्रह्मादीनां पुरःसरम् । धन्योऽसीति मयोक्तश्च दक्षिणामि. सहेति च
इत्युक्तेन भगवता कथितं सर्वकारणम् । दक्षिणाभिश्च फलदो ह्ययज्ञो ह्यदक्षिणः ॥

---

१ क. °त्युक्तो भगवांस्तत्र क° ।

दक्षिणा विप्रमुद्दिश्य तत्काले तु न दीयते । एकरात्रे व्यतीते तु तद्दानं द्विगुणं भवेत् ॥
मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम् । संवत्सरे व्यतीते तु स दाता नरकं व्रजेत् ॥
वर्षाणां च सहस्रं च मूत्रकुण्डे निपत्य च । ततश्चाण्डालतां याति व्याधियुक्तश्च पातकी
दात्रा न दीयते दानं ग्रहीत्रा चेन्न गृह्यते । उभौ तौ नरकं प्राप्तौ वर्षाणां च सहस्रकम् ॥
यजमानश्च चाण्डालो ब्राह्मणस्तत्पुरोहितः । व्याधियुक्तावुभौ तौ च पापिनौ कर्मणः फलात्
सर्वे देवाश्च मुनयो जहसुर्विस्मयं ययुः । विस्मयं च ययौ नन्दस्तत्याज पुत्रभावकम् ॥
रुरोद च सभामध्ये लज्जाहीनः शुचाऽऽकुलः । त्यज मोहमिती त्युक्त्वा बोधयामास पार्वती

नन्द उवाच—

अमूल्यरत्नं माणिक्यं यथा कुजन्मनो गृहे । स्थितं तेन च देवेश तथाऽहं वञ्चितः प्रभो॥
ममापराधं भगवन् क्षमस्व प्रकृतेः पर । यास्यामि न पुनर्गेहं गोकुलं यमुनातटम् ॥७९॥
वृन्दावनं तथाऽऽवासं क्रीडावासं गदाग्रज । तत्सर्वं च यशोदाया गोपिकान्तिकमेव च ॥
किं ब्रवीमि यशोदा च प्रेयसीं राधिकामपि । प्रेमपात्रं च बालौघं वद भोः कथयामि किम्
इत्युक्त्वा च सभामध्ये मूर्छां संप्राप नारद । क्रोडे कृत्वा जगन्नाथो बोधयामास तत्क्षणम्

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं०
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

अथाष्टाशीतितमोऽध्यायः ।

श्रीकृष्ण उवाच—

चेतनं कुरु हे तात हे तात चेतनं कुरु । जलबुद्बुदवत्सर्वं संसारं सचराचरम् ॥ १ ॥
त्यज मोहं महाभाग माया स्तौहि परात्पराम् । ब्रह्मस्वरूपा परमा सर्वमोहनिकृन्तनीम्
मुक्तिप्रदा महाभागा विष्णुमाया सनातनीम् । त्रिपुरस्य वधे घोरे महायुद्धे भयाकुले ॥
येन स्तोत्रेण शम्भुश्च तया दैत्यं जघान सः । स्तोत्रराजं प्रदास्यामि सर्वमोहनिकृन्तनम्
सर्ववाञ्छाप्रदं नन्द श्रूयतामत्र संसदि ॥ ४ ॥

नन्द उवाच—

सर्वविघ्नविनाशाय दुःखप्रशमनाय च । विभूतये च यशसे नृणां वाञ्छितसिद्धये॥ ५ ॥
स्तोत्रमेकं महादेवेश जगन्मातुर्जगत्प्रभो । परं दुर्गतिनाशिन्या गोपनीयं सुदुर्लभम् ॥६॥
देहि मह्यं विनीताय भक्ताय भक्तवत्सल । वेदानां जनकस्त्वं च निर्गुणश्च परात्परः ॥

श्रीभगवानुवाच—
शृणु वक्ष्यामि वैश्येन्द्र स्तोत्रं यत्परमाद्भुतम् । सर्वविघ्नविनाशार्थं मोहपाशनिकृन्तनम् ॥
रणत्रस्तेन विभुना शंकरेण पुरा कृतम् । नारायणोपदेशेन प्रेरितेन च ब्रह्मणा ॥ ९ ॥
शत्रुग्रस्तं शिवं दृष्ट्वा स ब्रह्मा गमुवाच ह । उवाच शंकरं ब्रह्मा रथस्थं पतितं रणे ॥१०॥
सुरसंकटशान्त्यर्थं दुर्गां दुर्गतिनाशिनीम् । मूलप्रकृतिमाद्यां तां स्तौ(स्तु)हि ब्रह्मस्वरूपिणीम्
हरिणा प्रेरितोऽहं च त्वां वदामि सुरेश्वर । विना शक्तिसहायेन को वा कं जेतुमीश्वरः
ब्रह्मणश्च वचः श्रुत्वा दुर्गां सस्मार शंकरः । पुटाञ्जलिपरो भूत्वा भक्तिनम्रात्मकंधरः ॥
स्नातः पादौ च प्रक्षाल्य धृत्वा धौते च वाससी । आचान्तः कुशहस्तश्च शुचिर्विष्णुं च संस्मरन्

महादेव उवाच—
रक्ष रक्ष महादेवि दुर्गे दुर्गतिनाशिनि । मां भक्तमनुरक्तं च शत्रुग्रस्तं कृपामयि॥ १९ ॥
विष्णुमाये महाभागे नारायणि सनातनि । ब्रह्मस्वरूपे परमे नित्यानन्दस्वरूपिणि ॥१९॥
त्वं च ब्रह्मादिदेवानामम्बिके जगदम्बिके । त्वं साकारे च गुणतो निराकारे च निर्गुणात्
मायया पुरुषस्त्वं च मायया प्रकृतिः स्वयम् । तयोः परं ब्रह्म परं त्वं बिभर्षि सनातनि
वेदानां जननी त्वं च सावित्री च परात्परा । वैकुण्ठे च महालक्ष्मीः सर्वसंपत्स्वरूपिणी
मर्त्यलक्ष्मीश्च क्षीरोदे कामिनी शेषशायिनः । स्वर्गेषु स्वर्गलक्ष्मीस्त्वं राजलक्ष्मीश्च भूतले
नागादिलक्ष्मीः पाताले गृहेषु गृहदेवता । सर्वशस्यस्वरूपा त्वं सर्वैश्वर्यविधायिनी ॥२१॥
रागाधिष्ठातृदेवी त्वं ब्रह्मणश्च सरस्वती । प्राणानामधिदेवी त्वं कृष्णस्य परमात्मनः ॥
गोलोके च स्वयं राधा श्रीकृष्णस्यैव वक्षसि । गोलोकाधिष्ठिता देवी वृन्दा वृन्दावने वने
श्रीरासमण्डले रम्या वृन्दावनविनोदिनी । शतशृङ्गाधिदेवी त्वं नाम्ना चित्रावलीति च ॥
दक्षकन्या कुत्रकल्पे कुत्रकल्पे च शैलजा । देवमाताऽदितिस्त्वं च सर्वाधारा वसुंधरा ॥
त्वमेव गङ्गा तुलसी त्वं च स्वाहा स्वधा सती । त्वदंशांशांशकलया सर्वदेवादियोषितः ॥
स्त्रीरूपं चापि पुंरूपं देवि त्वं च नपुंसकम् । वृक्षाणां वृक्षरूपा त्वं सृष्टा चाङ्कुररूपिणी ॥
वह्नौ च दाहिका शक्तिर्जले शैत्यस्वरूपिणी । सूर्ये तेजःस्वरूपा च प्रभारूपा च संततम् ॥
गन्धरूपा च भूमौ च आकाशे शब्दरूपिणी । शोभास्वरूपा चन्द्रे च पद्मसंघे च निश्चितम्
सृष्टौ सृष्टिस्वरूपा च पालने परिपालिका । महामारी च संहारे जले च जलरूपिणी ॥३०॥
क्षुत्त्वं दया त्वं निद्रा त्वं तृष्णा त्वं बुद्धिरूपिणी । तुष्टिस्त्वं चापि पुष्टिस्त्वं श्रद्धास्त्वं च
क्षमा स्वयम् ॥ ३१ ॥
शान्तिस्त्वं च स्वयं भ्रान्तिः कान्तिस्त्वं कीर्तिरेव च । लज्जा त्वं च तथा माया भुक्तिमुक्ति-
स्वरूपिणी ॥ ३२ ॥

सर्वशक्तिस्वरूपा त्वं सर्वसंपत्प्रदायिनी । वेदेऽनिर्वचनीया त्वं त्वां न जानाति कश्चन ॥
सहस्रवक्त्रस्त्वां स्तोतुं न च शक्तः सुरेश्वरि । वेदा न शक्ता को विद्वान्न च शक्ता सरस्वती
स्वयं विधाता शक्तो न न च विष्णुः सनातनः । किं स्तौमि पञ्चवक्त्रैस्तु रणत्रस्तो महेश्वरि
कृपां कुरु महामाये मम शत्रुक्षयं कुरु । इत्युक्त्वा च सकरुणं रथस्थे पतिते रणे ॥३६॥
आविर्बभूव सा दुर्गा सूर्यकोटिसमप्रभा । नारायणेन कृपया प्रेरिता परमात्मना ॥३७॥
शिवस्य पुरतः शीघ्रं शिवाय च जयाय च । इत्युवाच महादेवी मायाशक्त्याऽसुरं जहि ॥

दुर्गोवाच—

वरं वृणीष्व भद्रं ते यत्ते मनसि वाञ्छितम् । भवान्वरः सुराणां च जयं तुभ्यं ददाम्यहम्

महादेव उवाच—

क्षयो भवतु दैत्यस्य इति मे वरमीश्वरि । देहीति वाञ्छितं दुर्गे परमाद्ये सनातनि ॥४०॥

भगवत्युवाच—

हरिं स्मर महाभाग जय दैत्यं जगद्गुरो । स्वयं विधाता भगवांस्त्वमेव ज्योतिरीश्वरः ॥
एतस्मिन्नन्तरे विष्णुर्वृषरूपो बभूव ह । दधार कलया मूर्ध्ना शूलपाणे रथं विभुः ॥४२॥
ऊर्ध्वचक्रमधोम्रं च प्रकृतिं च चकार सः । शस्त्रं ददौ मन्त्रपूतमुद्दधार ततो रथम् ॥४३॥
शिवः शस्त्रं गृहीत्वा च ध्यात्वा विष्णुं महेश्वरीम् । जघान त्रिपुरं शीघ्रं स पपात महीतले
तुष्टुवुः शंकरं देवाश्चक्रुश्च पुष्पवर्षणम् । दुर्गा तस्मै ददौ शूलं पिनाकं विष्णुरेव च ॥
ब्रह्मा शुभाशिषं चैव मुनयश्चापि हर्षिताः । ननृतुर्देवताः सर्वा जगुर्गन्धर्वकिंनराः ॥४६॥
एतस्मिन्नन्तरे तात स्तवराजमनुत्तमम् । विघ्नविघ्नकरं शीघ्रं शत्रुसंहारकारणम् ॥४७॥
परमैश्वर्यजनकं सुखदं परमं शुभम् । निर्वाणमोक्षदं चैव हरिभक्तिप्रदं ध्रुवम् ॥ ४८ ॥
गोलोकवासदं चैव सर्वसिद्धिप्रदं वरम् । स्तोत्रराजप्रपठनात्प्रसन्ना पार्वती सदा॥४९॥
लोभमोहकामक्रोधकर्ममूलनिकृन्तनम् । बलबुद्धिकरं चैव जन्ममृत्युविनाशनम् ॥५०॥
धनपुत्रप्रियाभूमिसर्वसंपत्प्रदं नृणाम् । शोकदुःखहरं चैव सर्वसिद्धिप्रदं वरम् ॥५१॥
स्तोत्रराजप्रपठनान्महावन्ध्या प्रसूयते । बन्धनान्मुच्यते दुःखी भयान्मुच्येत निश्चितम्॥
रोगाद्विमुच्यते रोगी दरिद्रश्च धनी भवेत् । दावाग्निमध्ये न मृतो मग्नपोतो महार्णवे॥
दस्युग्रस्तो रिपुग्रस्तो हिंस्रजन्तुसमन्वितः । स्तोत्रेणानेन दैत्येन्द्र कल्याणं लभते नरः॥
तेजस्वीनां यथा स्वमाश्रमाणां द्विजो यथा । नदीनां च यथा गङ्गा मन्त्राणां प्रणवो यथा
तुलसी सर्वपत्राणां पुष्पाणां च वर्धगंगं । पुष्पाणां पारिजातं च काष्ठानां चन्दनं यथा ॥

१ क. °वमेन । २ क. मया प्र° । ३ क. दुष्पार ।

विष्णुपूजा च तपसां व्रतेष्वेकादशी यथा । ज्ञानिनां च यथा शंभुः सिद्धानां च गणेश्वरः
देवानां च यथा विष्णुर्वेदाः शास्त्रेषु तत्त्वतः । देवीनां च यथा दुर्गा शान्तानां कमला यथा
सरस्वती च विदुषां राधिका सुन्दरीषु च । तथा स्तोत्रेष्विदं स्तोत्रं नातः परतरं व्रज ॥
पुरा दत्तं ब्रह्मणे च पुष्करे सूर्यपर्वणि । दैत्यग्रस्ताय भीताय सर्वदुर्गहरं परम् ॥ ६० ॥
शिवाय शत्रुग्रस्ताय ददौ ब्रह्मा मदाज्ञया । शिवश्च सनकादिभ्यः पुरा दुर्वाससे ददौ ॥
सनत्कुमारो भगवान्कृपया गौतमाय च ; पुलहाय पुलस्त्याय ददौ चाङ्गिरसे मुदा ॥
तथा चन्द्राय सूर्याय सूर्यश्चापि यमाय च । यमश्च चित्रगुप्ताय कृपया च पुरा ददौ ॥
नित्यं पठिष्यसि स्तोत्रं गोलोकगमनाय वै । साक्षात्पश्यसि भो तात तामेव पार्वतीमिह
यस्मै कस्मै न दातव्यं पापिने गोपनं कुरु । नारायणस्य भक्ताय शान्ताय विदुषे तथा ॥
सर्वज्ञाय च विप्राय दातव्यं च यत्नतः । विप्राय वृषवाहाय वृषलीपतये तथा ॥ ६६ ॥
शूद्राणां सूपकाराय शूद्रश्राद्धान्न भोजिने । कन्याविक्रयिणे चैव ब्राह्मणाय विशेषतः ॥
सर्वसिद्धिं च लभते सिद्धस्तोत्रो भवेद्यदि । दशायुतजपेनैव सिद्धस्तोत्रो भवेन्नरः ॥ ६८ ॥
अग्निस्तम्भं जलस्तम्भं मृत्स्तम्भं मनसस्तथा । अश्वमेधसहस्राच्च पृथिव्याश्च प्रदक्षिणात् ॥
स्नानाच्च सर्वतीर्थानां स्तोत्रमेतच्च पुण्यदम् । दत्तं तुभ्यं मया तात मम प्राणसमं व्रज ॥
स्तवनं कुरु पार्वत्याश्चेदानीं मम संसदि । श्रीकृष्णस्य वचः श्रुत्वा नन्दस्तुष्टाव पार्वतीम् ॥
स्तोत्रेणानेन विप्रेन्द्र सर्वसंपत्प्रदायिनीम् । वरं तस्मै ददौ दुर्गा गोलोकवासमीप्सितम् ॥
दुर्लभं परमं ज्ञानं वेदे यन्न श्रुतं मुने । राजेन्द्रत्वं गोकुले च कृष्णभक्तिं सुदुर्लभाम् ॥
तद्दास्यं चापि परतो महत्त्वं सिद्धमेव च । वरं दत्त्वा ययौ दुर्गा संभाष्य शंभुना सह ॥
जग्मुर्देवाश्च मुनयः स्तुत्वा च नन्दनन्दनम् । उवाच नन्दं श्रीकृष्णो व्रज नन्द व्रजान्वितः
प्रहृष्टस्त्यक्तमोहश्च बोधेन दुर्लभेन च ॥ ७५ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं० अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

अथ नवाशीतितमोऽध्यायः ।

श्रीकृष्ण उवाच—

गच्छ गच्छ गृहं गच्छ व्रजराज व्रजं व्रज । सर्वं तत्त्वं त्वया ज्ञातं दृष्टाश्च मुनयः सुराः

१ ख. चाऽऽप प° ।

श्रुतं मे धन्यमाख्यानं नानाख्यानं सुदुर्लभम् । दुर्गायाः स्तोत्रराजं च जन्मयात्रानिकृन्तनम् ॥
स्थितं तत्ते निगदितं हर्षेण च सुखेन च । मत्कृतं बाल्यभावेन चापराद्धं च तत्क्षम ॥
यत्सुखं न कृतं तात विप्रोक्ष्य नृपमन्दिरे । कृतं सुखं तत्परं च स्वर्गादपि सुदुर्लभम् ॥
मदीयं प्रियवाक्यं च प्रहुत्वं विनयं नयम् । परिहासं बहुतरं यशोदां गोपिकागणम् ॥
बालकानां समूहं च राधां चापि विशेषतः । एकत्र च स्थितं तेषु बन्धुवर्गेषु कर्मणा ॥
इहैवापि सुखं भुक्त्वा गच्छ गोलोकमुत्तमम् । सार्धं यशोदया तात रोहिण्या गोपिकागणैः
गोपानां बालकैः सार्धं वृषभानेन गोपकैः । राधामात्रा कलावत्या राधया सह यास्यसि
रथानां शतलक्षं च गोलोकादागतं पितः । अमूल्यरत्ननिर्माणं हीरहारपरिष्कृतम् ॥
मणिमाणिक्यमुक्तानां मालाजालविभूषितम् । वह्निशुद्धांशुकै रम्यैराच्छन्नं पीतवर्णकैः ॥
पार्षद्प्रवरै रम्यैर्वेष्टितं श्वेतचामरैः । सद्रत्नदर्पणै रम्यैर्गोपिकामिश्च गोपकैः ॥ ११ ॥
वेष्टितं च तदारुह्य कौतुकाद्यास्यसि ध्रुवम् । त्यक्त्वा च पार्थिवं देहं दिव्यदेहं विधाय च ॥
अयोनिसंभवा राधा राधामाता कलावती । यास्यत्येव हि तेनैव नित्यदेहेन निश्चितम् ॥
पितॄणां मानसी कन्या धन्या मान्या कलावती । धन्या च सीतामाता च दुर्गामाता च मेनका
अयोनिसंभवा दुर्गा तारा सीता च सुन्दरी । अयोनिसंभवास्ताश्च धन्या मेना कलावती ॥
इत्येवं कथितं तात गोपनीयं सुदुर्लभम् । वरोऽयं दत्तस्तुभ्यं च मया च दुर्गया तथा ॥
श्रीकृष्णस्य वचः श्रुत्वा प्रत्युवाच व्रजेश्वरः । पुनरेव जगन्नाथं तद्भक्तो भक्तवत्सलम् ॥

नन्द उवाच—

युगानां च चतुर्णां च यं यं धर्मं सनातनम् । क्रमेण कृष्ण विस्तीर्णं कृत्वा मां कथय प्रभो ॥
कलिशेषे भवेद्यद्यद्गुणदोष कलेस्तथा । का गतिर्वा पृथिव्याश्च धर्मस्य प्राणिनां तथा ॥
नन्दस्य वचनं श्रुत्वा हृष्टः कमललोचनः । कथा कथितुमारेभे विचित्रा मधुरान्विताम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं० एकोननवतितमोऽध्यायः ॥ ८९ ॥

अथ नवतितमोऽध्यायः ।

श्रीकृष्ण उवाच—

शृणु नन्द प्रवक्ष्यामि सानन्दं मानसं यथा । कथा रम्या सुमधुरा पुराणेषु [1]परिष्कृतम्[2] ॥

१ क. °कमन्तत. । २ क परिश्रुताम् ।

परिपूर्णतमो धर्मो धार्मिकाश्च कृते युगे । परिपूर्णतमं सत्यं परिपूर्णतमा दया ॥ २ ॥
अतीव प्रज्वलद्रूपा वेदाश्चत्वार एव च । वेदाङ्गाश्चापि विविधाश्चेतिहासाश्च संहिताः ॥
पुराणानि सुरम्याणि पञ्चरात्राणि पञ्च च । रुचिराणि सुभद्राणि धर्मशास्त्राणि यानि च ॥
विप्रा वेदविदः सर्वे पुण्यवन्तस्तपस्विनः । नारायणं ते ध्यायन्ति तन्मन्त्रं च जपन्ति च ॥
ब्राह्मणाः क्षत्रिया वैश्याश्चतुर्वर्णाश्च वैष्णवाः । शूद्रा ब्राह्मणभृत्याश्च सत्यधर्मपरायणाः ॥
राजानो धार्मिकाश्चैव प्रजापालनतत्पराः । गृह्णन्त्येव प्रजानां च षोडशांशकरान्नृपाः ।
करशून्याश्च विप्राश्च पूज्याः स्वच्छन्दगामिनः । संततं सर्वसस्याढ्या रत्नाधारा वसुंधरा
गुरुभक्ताश्च शिष्याश्च पितृभक्ताः सुतास्तथा । योषितः पतिभक्ताश्च पतिव्रतपरायणाः ॥
ऋतौ संभोगिनः सर्वे न स्त्रीलुब्धा न लम्पटाः । न भयं दस्युचौराणां न तत्र पारदारिकाः
तरवः पूर्णफलिनः पूर्णक्षीराश्च धेनवः । बलवन्तो जनाः सर्वे दीर्घाः सौन्दर्यसंयुताः ।
लक्षवर्षायुषः केचित्पुण्यवन्तो ह्यरोगिणः । यथा विप्रा विष्णुभक्तास्त्रिवर्णा विष्णुसेविनः ॥
जलपूर्णा नदा नद्यः संततं कंदरास्तथा । तीर्थपूताश्चतुर्वर्णास्तपःपूता द्विजातयः ॥ १३ ।
मनःपूताश्च निखिलाः खलहीनं जगत्त्रयम् । सत्कीर्तिपरिपूर्णं च यशस्यं मङ्गलान्वितम् ॥
पितरः सर्वकालेषु तिथिकालेषु देवताः । सर्वकालेष्वतिथयः पूजिताश्च गृहे गृहे ॥ १५ ॥
त्रिवर्णा विप्रभक्ताश्च विप्रभोजनतत्पराः । ब्राह्मणस्य मुखं क्षेत्रमनूषरमकण्टकम् ॥ १६ ॥
नारायणोत्कीर्तनेन हर्षयुक्तास्तदुत्सवे । न देवानां द्विजानां च विदुषां तत्र निन्दकाः ॥ १७ ॥
नाऽऽत्मप्रशंसकाः केचित्सर्वे परगुणोत्सुकाः । न शत्रवो जनानां च सर्वे सर्वहितैषिणः
पुरुषा योषितश्चापि न हि मूर्खाश्च पण्डिताः । न दुःखिनो जनाः सत्ये सर्वेषां रत्नमन्दिरम्
मणिमाणिक्यरत्नौघरत्नस्वर्णसमन्वितम् । न भिक्षुका न रोगार्ताः शोकहीनाश्च हर्षिताः
न हि भूषणहीनाश्च नरा नार्यश्च केचन । न पापिनो न धूर्ताश्च न क्षुधार्ता न कुत्सिताः
जराहीनाः प्राणिनश्च शश्वद्यौवनसंस्थिताः । आधिव्याधिविहीनाश्च निर्विकाराश्च देहिनः
इत्युक्तो यः सत्ययुगे धर्मः सत्यं दयादिकम् । पादहीनश्च त्रेतायां सत्यार्धं द्वापरेऽपि च ॥
धर्मकपाद प्रथमे कलेश्चातिक्रमोऽबलः । दुष्टानां दस्युचौराणामङ्कुरः प्रभवेद्भ्रम ॥
अधर्मनिरताः केचिद्भीताः संगोपिनस्तथा । भीता गुप्ताश्च पुंश्चल्यो भीताश्च पारदारिकाः
धर्मिष्ठानां भयं शश्वदधर्मिष्ठाश्च कल्पिताः । स्वल्पधर्मरता भूपाः स्वल्पवेदरता द्विजाः ॥
व्रतधर्मरताः केचित्सर्वे स्वच्छन्दगामिनः । यावत्तिष्ठन्ति तीर्थानि यावत्तिष्ठन्ति साधवः ॥
यावत्तिष्ठन्ति ग्रामाणां देवाः शास्त्राणि पूजनम् । तावत्तिष्ठति तपः सत्यं स्वर्गवर्त्मादि एव च

१ ख. °न्मनस्का ज° । २ क. °धार्मिकम् ।

श्रुतं मे धन्यमाख्यानं नानाख्यानं सुदुर्लभम् । दुर्गायाः स्तोत्रराजं च जन्मपाशनिकृन्तनम् ॥
स्थितं तत्ते निगदितं हर्षेण च सुखेन च । मत्कृतं बालभावेन चापराद्धं च तत्क्षम ॥
यत्सुखं न कृतं तात पित्रोश्च नृपमन्दिरे । कृतं सुखं तत्परं च स्वर्गादपि सुदुर्लभम् ॥
मदीय प्रियवाक्यं च प्रह्वत्वं विनय नयम् । परिहासं बहुतरं यशोदा गोपिकागणम् ॥
बालकाना समूहं च राधा चापि विशेषत. । एकत्र च स्थितं तेषु बन्धुवर्गेषु कर्मणा ॥
इहैवापि सुखं भुक्त्वा गच्छ गोलोकमुत्तमम् । सार्धं यशोदया तात रोहिण्या गोपिकागणैः
गोपाना बालकै. सार्धं वृषभानेन गोपकै । राधामात्रा कलावत्या राधया सह यास्यसि
रथाना शतलक्षं च गोलोकादागतं पितः । अमूल्यरत्ननिर्माणं हीरहारपरिष्कृतम् ॥
मणि माणिक्यमुक्ताना गालाजालविभूषितम् । वह्निशुद्धांशुकै रम्यैराच्छन्नं पीतवर्णकैः ॥
पार्षदप्रवरै रम्यैर्वेष्टित श्वेतचामरैः । सद्रत्नदर्पणै रम्यैर्गोपिकामिश्च गोपकै ॥ ११ ॥
वेष्टित च तदारुह्य कौतुकाद्यास्यसि ध्रुवम् त्यक्त्वा च पार्थिवं देहं दिव्यदेहं विधाय च ॥
अयोनिसंभवा राधा राधामाता कलावती । यास्यत्येव हि तेनैव नित्यदेहेन निश्चितम् ॥
पितृणा मानसी कन्या धन्या मान्या कलावती । धन्या च सीतामाता च दुर्गामाता च मेनका
अयोनिसभवा दुर्गा तारा सीता च सुन्दरी । अयोनिसंभवास्ताश्च धन्या मेना कलावती ॥
इत्येवं कथितं तात गोपनीयं सुदुर्लभम् । वरोऽयं दत्तस्तुभ्यं च मया च दुर्गया तथा ॥
श्रीकृष्णस्य वचः श्रुत्वा प्रत्युवाच व्रजेश्वर । पुनरेव जगन्नाथं तद्भक्तो भक्तवत्सलम् ॥

नन्द उवाच—

युगाना च चतुर्णां च यं यं धर्मं सनातनम् । क्रमेण कृष्ण विस्तीर्णं कृत्वा मा कथय प्रभो ॥
कालशेषे भवेद्यद्गुणदोष कलेस्तथा । का गतिर्वा पृथिव्याश्च धर्मस्य प्राणिना तथा ॥
नन्दस्य वचन श्रुत्वा हृष्टः कमललोचनः । कथा कथितुमारेभे विचित्रा मधुरान्विताम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं० एकोननवतितमोऽध्याय ॥ ८९ ॥

अथ नवतितमोऽध्याय ।

श्रीकृष्ण उवाच—

शृणु नन्द प्रवक्ष्यामि सानन्दं मानसं यथा । कथा रम्या सुमधुरां पुराणेषु परिष्कृतं म ॥

१ क ˚कमन्ततः । २ क परिश्रुताम् ।

कपर्दकघटाध्यक्षो राजेन्द्रो हि घटेश्वरः । वृद्धाङ्गुष्ठसमा लोका वृक्षाः शाकसमास्तथा ॥
तालानां नारिकेलानां पनसानां तथैव च । फलानि सर्षपाण्येव तत्क्षुद्रं च ततः परम् ॥
जलभाजनपात्रेण सस्येन वाससा तथा । विहीनं मन्दिरं सर्वं गृहाणामपरिष्कृतम् ॥ ६९ ॥
गन्धकेन परिवृतं दीपहीनं तमोयुतम् । हिंस्रजन्तुभयाद्भीता जना. सर्वे च पापिनः ॥
सर्वे च कलहाविष्टा पुंश्चल्यः कलहप्रियाः । रूपवत्यो न कामिन्यो नराश्चापि न रूपिणः ॥
नद्यो नदाः कंदराश्च तडागाश्च सरोवराः । जलपद्मविहीनाश्च जलहीना घनास्तथा ॥
अपत्यहीना नार्यश्च कामुक्यो जारसंयुताः । अश्वत्थच्छेदिनः सर्वे वृक्षहीना वसुंधरा ॥
फलहीनाश्च तरवः शाखा स्कन्धविहीनकाः । फलानि स्वादुहीनानि चान्नानि च जलानि च
मानवाः कटुवक्तारो निर्दया धर्मवर्जिताः । तदन्ते द्वादशादित्याः संहरिष्यन्ति मानवान्
सर्वाञ्जन्तूंश्च तापेन बहुवृष्ट्या व्रजेश्वर । अवशिष्टा च पृथिवी कणामात्रावशेषिता ॥ ६६ ॥
कलौ गते च पृथिवी क्षेत्रं वर्षागते तथा । पुनः सत्यप्रवृत्तिश्च भविष्यति क्रमेण वै ॥
इत्येवं कथितं सर्वं गच्छ तात व्रजं सुखम् । अहं दुग्धमुखो बालः पुत्रस्ते कथयामि किम्
नवनीतं घृतं दुग्धं दधि तक्रं परिष्कृतम् । स्वस्तिकं शुभकर्माहं मिष्टान्नं च सुधोपमम् ॥ ६९ ॥
मिष्टद्रव्यं च यत्किंचित्पितृदेवनिमित्तकम् । भुक्तं बलाच्च तत्सर्वं बालानां रोदनं बलम् ॥
तत्क्षमस्वापराधं मे बालदोषः पदे पदे । त्वं पिता तव पुत्रोऽहं यशोदा जननी मम ॥
मदीयं परिहारं च यशोदां रोहिणीं वद । कुमारास्याच्छुतं सर्वं सोऽहमित्येवमीप्सितम् ॥
कीर्तयिष्यसि तत्सर्वं सर्वं गोकुलवासिनम् । कालः करोति संसर्गं बन्धूनां बन्धुभिः सह
कालः करोति विच्छेदं विरोधं प्रीतिमेव च । काल. सृष्टिं च कुरुते कालश्च परिपालनम् ॥
कालः करोति सानन्दं कालः संहरते प्रजाः । सुखं दुःखं भयं शोकं जरां मृत्युं च जन्म च
सर्वं कर्मानुरोधेन काल एव करोति च । सर्वं कालकृतं तात विस्मयं न व्रजं मम ॥ ७२ ॥
कुतस्त्वं गोकुले वैश्यो नन्दो वैश्याधिपो नृपः । वसुदेवसुतोऽहं च मथुरावासिनो कुतः ॥
पित्रा मे कंसभीतेन त्वद्गृहे च समर्पित. । पितुः परः पिता त्वं च माता मातुः पराऽपि वा
मया दत्तेन ज्ञानेन पार्वत्या च व्रजेश्वर । त्यज मोहं महाभाग गच्छ तात सुखं गृहम् ॥

नन्द उवाच—

स्मर वृन्दावनं तात रम्यं पुण्यं महोत्सवम् । गोकुलं गोकुलं रम्यं सुन्दरं यमुनातटम् ॥
रमणीनां सुरम्यं च स्वप्रियं रासमण्डलम् । गोपालिका गोपबालान्यशोदां रोहिणीं प्रियाम्
प्राणाधिकां राधिकां न कथं स्मरसि पुत्रक । वारमेकं स्वत्पदिनं गोकुले गच्छ वत्सक

१ ख. कन्दर्भिन्नाः ।

फलेदोंपानिपेरतात गुण एको महानपि। मानसं संभवेत्पुण्यं सुकृतं न हि दुष्कृतम् ॥१९॥
तीर्थादिके गते तात नष्टो धर्मांश एव च। कलारूपश्च धर्मश्च यथा कुहूां निशाकरः ॥

नन्द उवाच —

तीर्थान्येतानि सर्वाणि तिष्ठन्त्येव कियद्दिनम्। साधवो ग्राम्यदेवाश्च शास्त्राण्येतानि वत्सक

श्रीकृष्ण उवाच —

कलौ दशसहस्राणि हरिस्तिष्ठति मेदिनीम्। देवानां प्रतिमा पूज्या शास्त्राणि च पुराणकम्
तदर्धमपि तीर्थानि गङ्गादीनि सुनिश्चितम्। तदर्धं ग्रामदेवाश्च वेदाश्च विदुषामपि ॥३३॥
अधर्मः परिपूर्णश्च तदन्ते च कलौ पितः। एकवर्णा भविष्यन्ति वर्णाश्चत्वार एव च ॥३४॥
न मन्त्रपूतोद्वाहश्च न हि सत्यं न च क्षमा। स्त्रीस्वीकाररतो नित्यं ग्राम्यधर्मप्रधानतः ॥
न यज्ञसूत्रं तिलकं ब्राह्मणानां च नित्यशः। संध्याशास्त्रविहीनाश्च विप्रवंशाः श्रुता अपि
सर्वे साधं च सर्वेषां भक्षणं नियमच्युतम्। अभक्ष्यभक्षा लोकाश्च चतुर्वर्णाश्च लम्पटाः ॥
नारीषु न सती काचित्पुंश्चली च गृहे गृहे। करोति तर्जनं कान्तं भृत्यतुल्यं च कम्पितम् ॥
जाराय दत्त्वा मिष्टान्नं ताम्बूलं वस्त्रचन्दनम्। न ददात्येव चाऽऽहारं स्वामिने दुःखिने पितः
पुत्रेण भर्त्सितस्तातः शिष्येण भर्त्सितो गुरुः। प्रजाभिस्ताडितो भूपो भूपेन पीडिताः प्रजाः
दस्युचोरैश्च दुष्टैश्च शिष्टाश्च परिपीडिताः। सस्यहीना च वसुधा क्षीरहीनाश्च धेनवः ॥४१॥
स्वल्पक्षीरे घृतं नास्ति नवनीतं च नित्यशः। सत्यहीना जनाः सर्वे नित्यं मिथ्या वदन्ति च
शौचसंध्याशास्त्रहीना ब्राह्मणा वृषवाहकाः। सूपकाराश्च शूद्राणां शूद्राणां शवदाहकाः ॥
शूद्रस्त्रीनिरताः शश्वच्छूद्रा विप्रवधूरताः। खादन्ति यस्य विप्रस्य भक्ष्यं च परिपाचकाः ॥
मातुः परां तस्य पत्नीं शूद्रा गृह्णन्ति लम्पटाः। भृत्यश्च हत्वा राजानं स्वयं राजा भविष्यति
नारी हत्वा पतिं कामाद्भजेज्जारं च कौतुकात्। पुत्रश्च पितरं हत्वा स्वयं भूपो भविष्यति ॥
सर्वे स्वच्छन्दनिरताः शिश्नोदरपरायणाः। बहुखरा व्याधियुक्ताश्च कुत्सिताश्च कुचैलकाः
विक्षुण्णमन्त्रलिप्ताश्च मिथ्यायन्त्रप्रचारकाः। जातिहीनाश्च गुरवो वयोहीनाश्च निन्दकाः॥
राजानश्चापि म्लेच्छाश्च यवना धर्मनिन्दकाः। सत्कीर्तिमपि साधूनां कुर्वन्त्युन्मूलनं मुदा ॥
पितृदेवद्विजातीनामतिथीनां च नित्यशः। पूजा नास्ति गुरूणां च पित्रोश्च पूजनं स्त्रियाः ॥
स्त्रीबन्धूनां गौरवं च स्त्रीणां च सततं पितः। चोरः सत्कुलजातिश्च ब्रह्मदेवस्वहारकः ॥
मानं वहन्ति लोभेन दुर्गधर्मेण कौतुकात्। देवायतनहीनं च जगत्सर्वं भयाकुलम् ॥ ५२ ॥
अराजकं च दुर्नीतं संततं कलिदोषतः। बुभुक्षिताः कुचैलाश्च दरिद्रा व्याधिनो नराः ॥

---

१ क. 'न्मक्षिता'।

कपर्दकघटाध्यक्षो राजेन्द्रो हि घटेश्वरः । वृद्धाङ्गुष्ठसमा लोका वृक्षाः शाकसमास्तथा ॥
तालानां नारिकेलानां पनसानां तथैव च । फलानि सर्षपाण्येव तत्क्षुद्रं च ततः परम् ॥
जलभाजनपात्रेण सस्येन वाससा तथा । विहीनं मन्दिरं सर्वं गृहाणामपरिष्कृतम् ॥ ६९ ॥
गन्धकेन परिवृतं दीपहीनं तमोयुतम् । हिंस्रजन्तुभयाक्रान्ता जना. सर्वे च पापिनः ॥
सर्वे च कलहाविष्टा पुंश्चल्यः कलहप्रियाः । रूपवत्यो न कामिन्यो नराश्चापि न रूपिणः ॥
नद्यो नदाः कंदराश्च तडागाश्च सरोवराः । जलपद्मविहीनाश्च जलहीना वनास्तथा ॥
अपत्यहीना नार्यश्च कामुक्यो जारसंयुताः । अश्वत्थच्छेदिनः सर्वे वृक्षहीना वसुंधरा ॥
फलहीनाश्च तरवः शाखा स्कन्धविहीनकाः । फलानि स्वादुहीनानि चान्नानि च जलानि च
मानवाः कटुवक्तारो निर्दया धर्मवर्जिताः । तदन्ते द्वादशादित्याः संहरिष्यन्ति मानवान्
सर्वाञ्जन्तूंश्च तापेन बहुवृष्ट्या व्रजेश्वर । अवशिष्टा च पृथिवी कथामात्रावशेषिता ॥ ६१ ॥
कलौ गते च पृथिवी क्षेत्रं वर्षागते तथा । पुनः सत्यप्रवृत्तिश्च भविष्यति क्रमेण वै ॥
इत्येवं कथितं सर्वं गच्छ तात व्रजं सुखम् । अहं दुग्धमुखो बालः पुत्रस्ते कथयामि किम्
नवनीतं घृतं दुग्धं दधि तक्रं परिष्कृतम् । स्वस्तिकं शुभकर्मार्हं मिष्टान्नं च सुधोपमम् ॥ ६६ ॥
मिष्टद्रव्यं च यत्किंचित्पितृदेवनिमित्तकम् । भुक्तं बलाच्च तत्सर्वं बालाना रोदनं बलम् ॥
तत्क्षमस्वापराधं मे बालदोषः पदे पदे । त्वं पिता तव पुत्रोऽहं यशोदा जननी मम ॥
मदीयं परिहारं च यशोदां रोहिणीं वद । कृपावस्थाच्छुतं सर्वं सोऽहमित्येवमीप्सितम् ॥
कीर्तयिष्यसि तत्सर्वं सर्वं गोकुलवासिनम् । कालः करोति संसर्गं बन्धूनां बन्धुभिः सह
कालः करोति विच्छेदं विरोधं प्रीतिमेव च । काल. सृष्टिं च कुरुते कालश्च परिपालनम् ॥
कालः करोति सानन्दं कालः संहरते प्रजाः । सुखं दुःखं भयं शोकं जरां मृत्युं च जन्म च
सर्वं कर्मानुरोधेन काल एव करोति च । सर्वं कालकृतं तात विस्मयं न व्रजं व्रज ॥ ७२ ॥
कुतस्त्वं गोकुले वैश्यो नन्दो वैश्याधिपो नृपः । वसुदेवसुतोऽहं च मथुरायामहो कुतः ॥
पित्रा मे कंसभीतेन त्वद्गृहे च समर्पित. । पितुः परः पिता त्वं च माता मातुः पराऽपि वा
मया दत्तेन ज्ञानेन पार्वत्या च व्रजेश्वर । त्यज मोहं महाभाग गच्छ तात सुखं गृहम् ॥

नन्द उवाच—

स्मर वृन्दावनं तात रम्यं पुण्यं महोत्सवम् । गोकुलं गोकुलं रम्यं सुन्दरं यमुनातटम् ॥
रमणीनां सुरम्यं च त्वत्प्रियं रासमण्डलम् । गोपालिका गोपबालान्यशोदां रोहिणीं प्रियाम्
प्राणाधिकां राधिकां न कथं स्मरसि पुत्रक । वारमेकं स्वल्पदिनं गोकुलं गच्छ वत्सक

१ ख. फलदीभिन्नाः ।

इत्येवमुक्त्वा नन्दश्च क्रोडे कृष्णं चकार स. । नेत्राश्रुणा च पूर्णेन तं सिषेच शुचाऽन्वित.
चुचुम्ब तद्गण्डयुगं कृत्वा वक्षसि मोहतः । सानन्दः परमानदो भगवांस्तमुवाच सः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवन्नन्दसं०
नवतितमोऽध्यायः ॥ ९० ॥

अथैकनवतितमोऽध्यायः ।

श्रीभगवानुवाच—

निषेकेन परिच्छन्नो विभेदस्तेन वा भवेत् । क्षणेन दर्शनं तेन निषेक. केन वार्यते॥ १॥
गमनागमनार्थं चाप्युद्धवः कथयिष्यति । प्रस्थापयामि तं शीघ्रं विज्ञास्यसि ततः पितः॥
यशोदां रोहिणीं चैव गोपिकां गोपबालकान् । प्राणाधिकां राधिकां तां गत्वा संबोधयिष्यति
एतस्मिन्नन्तरे तत्र वसुदेवश्च देवकी , बलदेवश्चोद्धवश्च तथाऽक्रूरश्च सत्वरम् ॥ ४ ॥

वसुदेव उवाच—

नन्द त्वं बलवाञ्ज्ञानी सद्बन्धुश्च सखा मम । त्यज मोहं गृहं गच्छ वत्सस्तेऽयं यथा मम
दूरीभूता गोकुलाच्च मथुरा नास्ति बान्धव । महोत्सवे सदानन्दे नन्द द्रक्ष्यसि पुत्रकम्

देवक्युवाच—

यथाऽयमावयोः पुत्रस्तथैव भवतो ध्रुवम् । साक्षतः केन हे नन्द शुचा देहो हि लक्ष्यते
एकादशाब्दं सबलः स्थित्वा ते मन्दिरे सुखम् । कथं स्वल्पदिनेनैव शोकग्रस्तो भविष्यसि
तिष्ठ पुत्रेण सार्धं च मथुरायां कियद्दिनम् । पूर्णचन्द्राननं पश्य जन्म त्वं सफलं कुरु ॥

श्रीभगवानुवाच—

गच्छोद्धव सुखं भद्रं भविष्यति तव प्रियम् । प्रहर्षे गोकुलं गत्वा यशोदां रोहिणीं प्रसूम्
गोपबालसमूहं च राधिकां गोपिकागणम् । प्रबोधयाऽऽध्यात्मिकेन मद्त्तेन शुचान्वितम्
नन्दस्तिष्ठतु सानन्दं मथुरायां शुचा । नन्दस्थितिं मद्विनयं यशोदां कथयिष्यसि ॥
इत्येवमुक्त्वा श्रीकृष्णः पित्रा मात्रा बलेन च । अक्रूरेण समं तूर्णं ययावभ्यन्तरं गृहम् ॥
उद्धवो रजनीं स्थित्वा मथुरायां च नारद । प्रभाते प्रययौ शीघ्रं रम्यं वृन्दावनं वनम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० एकनव-
तितमोऽध्यायः ॥ ९१ ॥

अथ द्विनवतितमोऽध्यायः ।

---

नारायण उवाच—

श्रीकृष्णप्रेरितो हृष्टः प्रणम्य च गणेश्वरम् । स्मरन्नारायणं शंभुं दुर्गां लक्ष्मीं सरस्वतीम्
गङ्गां च मनसि ध्यात्वा द्विगीशं तं महेश्वरम् । प्रजगामोद्धवश्चैव दृष्ट्वा मङ्गलसूचकम्॥
शुश्राव दुंदुभिं घण्टानादं शङ्खध्वनिं तथा । हरिशब्दं च संगीतं शुश्राव मङ्गलध्वनिम्॥२॥
पतिपुत्रवतीं साध्वीं प्रदीपं माल्यदर्पणम् । परिपूर्णतमं कुम्भं दधिलाजफलानि च॥ ४ ॥
दूर्वाङ्कुरं शुक्लधान्यं रजतं काञ्चनं मधु । ब्राह्मणानां समूहं च कृष्णसारं वृषं घृतम् ॥
सद्योमांसं गजेन्द्रं च नृपेन्द्रं श्वेतघोटकम् । पताकां नकुलं चापं शुक्लं पुष्पं च चन्दनम् ॥
दृष्ट्वैवं पथि कल्याणं प्राप वृन्दावनं वनम् । ददर्श पुरतो वृक्षं भाण्डीरे वटमक्षयम् ॥
स्निग्धपर्णं रक्तवर्णं पुण्यदं तीर्थमीप्सितम् । सुवेशान्बालकांश्चैव रत्नभूषणभूषितान् ॥
यदतो बलकृष्णेति रुदतश्च क्षुधाऽन्वितान् । तानाश्वास्य ययौ दूरं प्रविश्य नगरं मुदा ॥
ददर्श नन्दशिबिरं रचितं विश्वकर्मणा । मणिरत्नविनिर्माणं मुक्तामाणिक्यहीरकैः ॥१०॥
परिच्छिन्नं मनोरम्यं सद्रत्नकलशान्वितम् । द्वारं चित्रं विचित्राढ्यं दृष्ट्वा च प्रविवेश सः॥
अवरुह्य रथात्तूर्णं तस्थौ तत्प्राङ्गणे मुदा । यशोदा रोहिणी शीघ्रं पप्रच्छ कुशलं परम्॥
आसनं च जलं गां च मधुपर्कं ददौ मुदा । क्व नन्दः क्व बलः कृष्णः सत्यं तत्कथयोद्धव
उद्धवः कथयामास सर्वं मङ्गं क्रमेण च । सार्धं च बलकृष्णाभ्यां नन्दः सानन्दपूर्वकम् ॥
आगमिष्यति विलम्बेन कृष्णोऽनयनावधि । युष्माकं कुशलं तत्त्वं विज्ञाय विधिपूर्वकम् ॥
अहं यास्यामि मथुरां यशोदे शृणु सांप्रतम् । श्रुत्वा मङ्गलवार्तां च यशोदा रोहिणी मुदा॥
ब्राह्मणाय ददौ रत्नं सुवर्णं वस्त्रमीप्सितम् । उद्धवं भोजयामास मिष्टान्नं च सुधोपमम् ॥
मणिश्रेष्ठं च रत्नं च ददौ तस्मै च हीरकम् । वाद्यं च वादयामास मङ्गं नानाविधं तथा ॥
ब्राह्मणान्भोजयामास कारयामास मङ्गलम् । वेदांश्च पाठयामास परमानन्दपूर्वकम्॥१९॥
शंकरं पूजयामास विप्रद्वारा परं विभुम् । नानोपहारैर्नैवेद्यैः पुष्पधूपप्रदीपकैः ॥ २० ॥
चन्दनैर्वस्त्रताम्बूलैर्मधुगव्यघृतादिभिः । भवानीं पूजयामास श्रीवृन्दारण्यदेवताम् ॥२१॥
षोडशोपचारैर्द्रव्यैर्बलिभिर्विविधैर्मुने । महिषाणां शतं शुद्धं छागलानां सहस्रकम्॥२२॥
मेषाणामयुतं शुद्धं युक्तमादाय पञ्चकम् । ब्राह्मणेभ्यः स्वर्णशतं धेनूनां च शतं तथा ॥
प्रददौ दक्षिणां तूर्णं कृष्णकल्याणहेतवे । उद्धवं पूजयामास सादरं च पुनः पुनः ॥
समाश्वास्य यशोदां च रोहिणीं गोपवत्सकान् । वृद्धान्गोपालिकाः सर्वाः प्रययौ रासमण्डलम्

दर्दर्श रासं रुचिरं चन्द्रमण्डलवर्तुलम् । श्रीरामकदलीस्तम्भशतकैरपशोभितम् ॥२६॥
युक्तैश्च स्निग्धवसनैश्चन्दनानां च पल्लवैः । पट्टसूत्रनिबद्धैश्च श्रीयुक्तमाल्यजालकैः ॥
दधिलाजफलैः पट्टैः पुष्पैर्दूर्वाङ्कुरैरपि । चन्दनागुरुकस्तूरीकुङ्कुमैः परिसंस्कृतम् ॥
वेष्टितं रक्षितं यत्नाद्गोपिकानां त्रिकोटिभिः । विलसैः सुन्दरै रम्यैः संसक्तं रतिमन्दिरैः ॥
लक्षगोपैः परिवृतं कृष्णागमनशङ्कितैः । यमुना दक्षिणा कृत्वा प्रययौ मालतीवनम् ॥
चन्दनानां चम्पकानां यूथिकानां तथैव च । केतकीमाधवीनां च वनं कृत्वा प्रदक्षिणम् ॥
बकुलानां वञ्जुलानामशोकानां च काननम् । मल्लिकानां पलाशानां शिरीषाणां तथैव च
धात्रीणां काञ्चनानां च कर्णिकानां वनं तथा । नागेश्वराणां विपिनं लवङ्गानां तथैव च ॥
वनं च शालतालानां हिन्तालानां वनं तथा । पनसानां रसालानां लाङ्गलीनां मनोहरम्॥
मन्दारकाननं रम्यं वामं कृत्वा च सत्वरम् । दृष्ट्वा कुन्दवनं रम्यं संप्राप्य मधुकाननम् ।
पुंस्कोकिलानां शब्देन मधुरेण समन्वितम् । मधुव्रतसमूहानां मधुरध्वनिपूरितम् ।३६॥
वन्यवृक्षैः परिवृतं मा वीकाधारमीप्सितम् । वातेन वन्यपुष्पाणां परितः सुरभीकृतम् ॥
तद्दृष्ट्वा राजमार्गेण यशोदोक्तेन साम्प्रतम् । ययौ शीघ्रं निरुद्विग्नं रहस्यं बदरीवनम्।
श्रीफलानां च निम्बानां नारिङ्गाणां वनं तथा । पद्मानां करवीराणां तुलसीनां च काननम्
दृष्ट्वा रक्तिमवर्णं च सुपक्वफलमीप्सितम् । तदेव वामतः कृत्वा विवेश कदलीवनम् ॥
अतीव निर्जने रम्ये ददर्श राधिकाश्रमम् । मणीन्द्राणां च प्राकारं परिखादुर्गवेष्टितम्॥
अत्यगम्यं रिपूणां च मित्राणां सुगमं सुखम् । गोप्यं सकेतमार्गं च रक्षकैः परिरक्षितम्॥
नानाचित्रविचित्राढ्यं निर्मितं विश्वकर्मणा । मणीन्द्रमुक्तामाणिक्यहीरहारोज्ज्वलं परम्॥
रत्नेन्द्रसाररचितं रत्नस्तम्भैः सुशोभितम् । रत्नसोपानसंसक्तमन्दिरेण मनोहरम् ॥४४॥
अमूल्यरत्नरचितं कलशैः परिशोभितम् । वह्निशुद्धांशुकाभिश्च पताकाभिः परिष्कृतम् ॥
सद्रत्नदर्पणोत्कृष्टं चर्चितं श्वेतचामरैः । ददर्श सिंहद्वारं च युक्तं रत्नकपाटकैः ॥४६॥
द्वारोपरि विचित्रं च रम्यं वृन्दावनं वनम् । कदम्बकाननं रम्यं तद्वस्त्रहरणादिकम् ॥
विश्वकर्मविरचितं सुरम्यं रासमण्डलम् । नानारत्नकुटीरं च गोपगोपीसमन्वितम् ॥४८॥
रचितं गोपिकाजलैर्वेवरहस्तैर्मनोहरैः । स्वच्छन्दाचरणैः शश्वदमितैर्बालिभिर्मुदा ॥ ४९ ॥
तद्द्वारं पुरतो दृष्ट्वा विलङ्घ्य च जगाम सः । द्वितीयं द्वारमुल्लङ्घ्य तस्मादुत्तममीप्सितम्
द्वारं चतुर्थं संप्राप्य सर्वस्मात्स विलक्षणम् । तत्पश्चात्पञ्चमं द्वारं ददर्श चित्रमुत्तमम् ॥
द्वारषट्कं च प्रययौ सर्वत्र रुचिरं परम् । रामरावणयोर्युद्धं भित्तिचित्रं मनोहरम् ॥
दशावतारं विष्णोश्च कृत्रिम रासमण्डलम् । यमुनामध्ये स्थितं च रचितं विश्वकर्मणा ॥

गोपिकानां सहस्रेण षष्ठं द्वारं च रक्षितम् । रत्नेन्द्रसारनिर्माणभूषणैर्भूषितेन च ॥ ५४ ॥
सद्रत्नदण्डहस्तेन हीरकैर्भूषितेन च , मणीन्द्रमुक्तामाणिक्यहीरहारान्वितेन च ॥ ५५ ॥
माधवी तत्प्रधाना सा पप्रच्छ सांप्रतं शिवम् । ददौ प्रत्युत्तरं सर्वं क्रमेण च स उद्धवः ॥
गत्वा विज्ञापयामास राधाप्रियसखीगणम् । सा माधवी महाहृष्टा तत्र संस्थाप्य तं मुदा ॥
श्रुत्वा मङ्गलवार्तां च राधाप्रियसखीगणैः । कृत्वा शङ्खध्वनिं घण्टामृदङ्गपटहस्वनम् ॥
कृत्वा निर्मञ्छनं शीघ्रमुद्धवं प्रियमागतम् । हृष्टा प्रवेशयामास राधाभ्यन्तरमुत्तमम् ॥
अमूल्यरत्ननिर्माणं गत्वा मन्दिरमुत्तमम् । ददर्श पुरतो राधां कुह्वां चन्द्रकलोपमाम् ॥
शुष्कपद्मनेत्रां च शयानां शोकमूर्छिताम् । रुदतीं रक्तवदनां क्लिष्टां च त्यक्तभूषणाम् ॥
निश्चेष्टां च निराहारां सुवर्णवर्णकुण्डलाम् । शुष्किताधरकण्ठां च किंचिच्छ्वासासंयुताम् ॥
प्रणनाम च तां दृष्ट्वा भक्तिनम्रात्मकंधरः । पुलकाञ्चितसर्वाङ्गो भक्त्या भक्तः स उद्धवः

उद्धव उवाच—

वन्दे राधापदाम्भोजं ब्रह्मादिसुरवन्दितम् । यत्कीर्तिः कीर्तनेनैव पुनाति भुवनत्रयम् ॥
नमो गोकुलवासिन्यै राधिकायै नमो नमः । शतशृङ्गनिवासिन्यै चन्द्रावत्यै न० ॥ ६१ ॥
तुलसीवनवासिन्यै वृन्दारण्यै न० । रासमण्डलवासिन्यै रासेश्वर्यै न० ॥ ६२ ॥
विरजातीरवासिन्यै वृन्दायै च न० । वृन्दावनविलासिन्यै कृष्णायै च न० ॥ ६७ ॥
नमः कृष्णप्रियायै च शान्तायै च न० । कृष्णवक्षःस्थितायै च तत्प्रियायै न० ॥ ६८ ॥
नमो वैकुण्ठवासिन्यै महालक्ष्म्यै न० । विद्याधिष्ठातृदेव्यै च सरस्वत्यै न० ॥ ६९ ॥
सर्वैश्वर्याधिदेव्यै च कमलायै न० । पद्मनाभप्रियायै च पद्मायै च न० ॥ ७० ॥
महाविष्णोश्च मात्रे च पराद्यायै न० । नमः सिन्धुसुतायै च मर्त्यलक्ष्म्यै न० । ७१ ॥
नारायणप्रियायै च नारायण्यै न० । नमोऽस्तु विष्णुमायायै वैष्णव्यै च न० ॥ ७२ ॥
महामायास्वरूपायै संपदायै न० । नमः कल्याणरूपिण्यै शुभायै च न० ॥ ७३ ॥
मात्रे चतुर्णां वेदानां सावित्र्यै च न० । नमोऽस्तु बुद्धिरूपायै ज्ञानदायै न० ।७४।
नमो दुर्गविनाशिन्यै दुर्गादेव्यै न० । तेजःसु सर्वदेवानां पुरा कृतयुगे मुदा ॥ ७५ ॥
अधिष्ठानकृतायै च प्रकृत्यै च न० । नमस्त्रिपुरहारिण्यै त्रिपुरायै न० ॥ ७६ ॥
सुन्दरीषु च रम्यायै निर्गुणायै न० । नमो निद्रास्वरूपायै निर्गुणायै न० ॥ ७७ ॥
नमो दक्षसुतायै च नमः सत्यै न० । नमः शैलसुतायै च पार्वत्यै च न० ॥ ७८ ॥
नमो नमस्तपस्विन्यै ह्युमायै च न० । निराहारस्वरूपायै ह्यपर्णायै न० ॥ ७९ ॥

१ क. °सार° । २ क °मीप्सितम् ।

उद्धव उवाच—

उद्धवेत्यभिधानं मे क्षत्रियोऽहं वरानने । प्रेषितः शुभवार्तार्थं कृष्णेन परमात्मना ॥७॥
तवान्तिकं समायातः पार्षदोऽहं हरेरपि । कृष्णस्य बलदेवस्य शिवं नन्दस्य सांप्रतम् ॥

राधिकोवाच—

अस्ति तद्यमुनाकूलं सुगन्धिपवनोऽस्ति सः । तस्य केलिकदम्बानां मूलमस्त्येव सांप्रतम्
पुण्यं वृन्दावनं रम्यं तद्विद्यमानमीप्सितम् । पुंस्कोकिलानां विरुतं तल्पं चन्दनचर्चितम् ॥
चतुर्विधं च भोज्यं च मधुपानं च सुन्दरम् । दुरन्तो दु खदोऽप्यस्ति पापिष्ठो मन्मथस्तथा
ते च रत्नप्रदीपाश्च ज्वलन्ति रासमण्डले । मणीन्द्रसारनिर्माणमस्त्येव रतिमन्दिरम् ॥
गोपाङ्गनागणोऽस्त्येव पूर्णचन्द्रोऽस्ति शोभित. । सुगन्धिपुष्परचितं तल्पं चन्दनचर्चितम्॥
ताम्बूलं रतिभोगार्हं कर्पूरादिसुसंस्कृतम् । सुगन्धिमालतीमाल्यं श्वेतचामरदर्पणम् ॥
मुक्तामाणिक्यसंसक्तहीरहारमनोहरम् । कस्तूरीकुङ्कुमाक्तं च पात्रपूर्णं च चन्दनम् ॥
स्नानोपकाननं रम्यं रम्यक्रीडासरोवरम् । सुगन्धिपुष्पोद्यानं च पद्मश्रेणीमनोहरम् ॥
अस्त्येवं सर्वविभवः प्राणनाथः कुतो मम । हा कृष्ण हा रमानाथ क्वासि मे प्राणवल्लभ
क्व वाऽपराधो दास्याश्च दासीदोषः पदे पदे । इत्येवमुक्त्वा सा देवी पुनर्मूर्छामवाप सा
चेतनां कारयामास पुनरेव स उद्धवः । तां दृष्ट्वा परमाश्चर्यं मेने क्षत्रियपुंगवः ॥
सखीभिः सप्तभिः शश्वत्सेवितां श्वेतचामरैः । गोपीनां च त्रिलक्षैश्च सुप्रियैः प्रियसेविताम्
दिवानिशं वेष्टितां च गोपीनां शतकोटिभिः । काचित्कज्जलहस्ता च काचिन्माल्यधराऽपरा
काचित्सिन्दूरहस्ता च काचिद्गोरोचनाकरा । काचिच्चन्दनपात्रं च हस्ते कृत्वा च तिष्ठति॥
काचिद्दर्पणहस्ता च काचित्कुङ्कुमवाहिका । कस्तूरीपात्रमिष्टं च काचिद्वहति तत्र वै ॥
काचिच्चम्पकपात्रं च करे धृत्वा च तिष्ठति । मधुभिर्मधुरैः पूर्णं पात्रं धृत्वा शुचाऽन्विता
काचित्सुगन्धितैलं च गृहीत्वा परितिष्ठति । काचिद्वहति ताम्बूलं कर्पूरादिसुवासितम्॥
काचिद्वासितमच्छं च जलं धृत्वा च तिष्ठति । क्रीडापुत्तलिका काचिच्चित्राढ्या परिरक्षति
काचिद्वहति कन्दुकं काचिच्च रत्नभूषणम् । वह्निशुद्धांशुकं काचिदमूल्यं परिरक्षति
काचिद्भक्ष्योपहारं च गृहीत्वा परिवर्तते । काचिच्च केशवेशार्थं करोति माल्यमीप्सितम्
काचित्कङ्कतिका धृत्वा पुरतः परितिष्ठति । काचिद्व्यजनहस्ता च काचिद्धात्रीरसं मुदा ॥
दूरतोऽपि वहत्येवं भीता च परितिष्ठति । काचिद्गीता भिया स्तौति काचिद्रोदिति शोकतः
काचित्तां बोधयत्येवं विदग्धा विरहातुराम् । काचित्तालतया च स्निग्धतल्पे मनोहरे

गौरीलोकविलासिन्यै नमो गौर्यै न० । नमः कैलासवासिन्यै: माहेश्वर्यै न० ॥ ८० ॥
निद्रायै च दयायै च श्रद्धायै च न० । नमो धृत्यै क्षमायै च लज्जायै च न० ॥ ८१ ॥
तृष्णायै क्षुत्स्वरूपायै स्थितिकर्त्र्यै न० । नमः संहाररूपिण्यै महामार्यै न० ॥ ८२ ॥
भयायै चाभयायै च मुक्तिदायै न० । नमः स्वधायै स्वाहायै शान्त्यै कान्त्यै न० ॥८३॥
नमस्तुष्ट्यै च पुष्ट्यै च दयायै च न० । नमो निद्रास्वरूपायै श्रद्धायै च न० ॥ ८४ ॥
क्षुत्पिपासास्वरूपायै लज्जायै च न० । नमो धृत्यै क्षमायै च चेतनायै न० ॥ ८५ ॥
सर्वशक्तिस्वरूपिण्यै सर्वमात्रे न० । अग्नौ दाहस्वरूपायै भद्रायै च न० ॥ ८६ ॥
शोभायै पूर्णचन्द्रे च शारत्पद्मे न० । नास्ति भेदो यथा देवि दुग्धधावल्ययोः सदा॥८७॥
यथैव गन्धभूम्योश्च यथैव जलशैत्ययोः । यथैव शब्दनभसोर्ज्योतिःसूर्यकयोर्यथा ॥८८॥
लोके वेदे पुराणे च राधामाधवयोस्तथा । चेतनं कुरु कल्याणि देहि मामुत्तरं सति ॥
इत्युक्त्वा चोद्धवस्तत्र प्रणनाम पुनः पुनः । इत्युद्धवकृतं स्तोत्रं यः पठेद्भक्तिपूर्वकम् ॥
इह लोके सुखं भुक्त्वा यात्यन्ते हरिमन्दिरम् । न भवेद्बन्धुविच्छेदो रोगः शोकः सुदारुणः
प्रोषिता स्त्री लभेत्कान्तं भार्याभेदी लभेत्प्रियाम् । अपुत्रो लभते पुत्रान्निर्धनो लभते धनम् ॥
निर्भूमिर्लभते भूमिं प्रजाहीनो लभेत्प्रजाम् । रोगाद्विमुच्यते रोगी बद्धो मुच्येत बन्धनात्
भयान्मुच्येत भीतस्तु मुच्येताऽऽपन्न आपदः । अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० राधास्तोत्रं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

अथ त्रिनवतितमोऽध्यायः ।

---

नारायण उवाच—

उद्धवस्तवनं श्रुत्वा चेतनां प्राप्य राधिका । विलोक्य कृष्णाकारं च तमुवाच शुचाऽन्विता ॥

राधिकोवाच—

किंनाम भवतो वत्स केन वा प्रेरितो भवान् । आगतो वा कुत इति ब्रूहि मा केन हेतुना ॥
कृष्णाकृतिस्त्वं सर्वाङ्गैर्मन्ये त्वां कृष्णपार्षदम् । कृष्णस्य कुशलं ब्रूहि बलदेवस्य सांप्रतम्॥
नन्दस्तिष्ठति तत्रैव हेतुना केन तद्वद । समागमिष्यति गोविन्दो रम्यं वृन्दावनं वनम्॥४॥
पुनर्द्रक्ष्यामि तस्यैव पूर्णचन्द्रमुखं शुभम् । पुनः क्रीडां करिष्यामि तेनाहं रासमण्डले ॥
जले च विहरिष्यामि पुनर्वा सखिभिः सह । श्रीनन्दनन्दनाङ्गे च पुनर्दास्यामि चन्दनम्॥

उद्धव उवाच—

उद्धवेत्यभिधानं मे क्षत्रियोऽहं वरानने । प्रेषितः शुभवार्तार्थं कृष्णेन परमात्मना ॥७॥
तवान्तिकं समायातः पार्षदोऽहं हरेरपि । कृष्णस्य बलदेवस्य शिवं नन्दस्य सांप्रतम् ॥

राधिकोवाच—

अस्ति तद्यमुनाकूलं सुगन्धिपवनोऽस्ति सः । तस्य कोकिलकदम्बानां मूलमस्त्येव सांप्रतम्
पुण्यं वृन्दावनं रम्यं तद्विद्यमानमीप्सितम् । पुंस्कोकिलानां विरुतं तल्पं चन्दनचर्चितम् ॥
चतुर्विधं च भोज्यं च मधुपानं च सुन्दरम् । दुरन्तो दुःखदोऽप्यस्ति पापिष्ठो मन्मथस्तथा
ते च रत्नप्रदीपाश्च ज्वलन्ति रासमण्डले । मणीन्द्रसारनिर्माणमस्त्येव रतिमन्दिरम् ॥
गोपाङ्गनागणोऽस्त्येव पूर्णचन्द्रोऽस्ति शोभितः । सुगन्धिपुष्परचितं तल्पं चन्दनचर्चितम् ॥
ताम्बूलं रतिभोगार्हं कर्पूरादिसुसंस्कृतम् । सुगन्धिमालतीमाल्यं श्वेतचामरदर्पणम् ॥
मुक्तामाणिक्यसंसक्तहीरहारमनोहरम् । कस्तूरीकुङ्कुमाक्तं च पात्रपूर्णं च चन्दनम् ॥
नानोपकाननं रम्यं रम्यक्रीडासरोवरम् । सुगन्धिपुष्पोद्यानं च पद्मश्रेणीमनोहरम् ॥
अस्त्येवं सर्वविभवः प्राणनाथः कुतो मम । हा कृष्ण हा रमानाथ क्वासि मे प्राणवल्लभ
क्व चाऽपराधो दास्याश्च दासीदोषः पदे पदे । इत्येवमुक्त्वा सा देवी पुनर्मूर्छामवाप सा
चेतनां कारयामास पुनरेव स उद्धवः । तां दृष्ट्वा परमाश्चर्यं मेने क्षत्रियपुंगवः ॥
सखीभिः सप्तभिः शश्वत्सेवितां श्वेतचामरैः । गोपीनां च त्रिलक्षैश्च सुप्रियैः प्रियसेविताम्
दिवानिशं वेष्टितां च गोपीनां शतकोटिभिः । काचित्कज्जलहस्ता च काचिन्माल्यधराऽपरा
काचित्सिन्दूरहस्ता च काचिद्गोरोचनाकरा । काचिच्चन्दनपात्रं च हस्ते कृत्वा च तिष्ठति ॥
काचिद्दर्पणहस्ता च काचित्कुङ्कुमवाहिका । कस्तूरीपात्रमिष्टं च काचिद्वहति तत्र वै ॥
काचिच्चम्पकपात्रं च करे धृत्वा च तिष्ठति । मधुभिर्मधुरैः पूर्णं पात्रं धृत्वा शुचाऽन्विता
काचित्सुगन्धितैलं च गृहीत्वा परितिष्ठति । काचिद्वहति ताम्बूलं कर्पूरादिसुवासितम् ॥
काचिद्वासितमच्छं च जलं धृत्वा च तिष्ठति । क्रीडापुत्तलिकां काचिच्चित्राढ्यां परिरक्षति
काचिद्वहति कन्दुकं काचिच्च रत्नभूषणम् । वह्निशुद्धांशुकं काचिदमूल्यं परिरक्षति
काचिद्भक्ष्योपहारं च गृहीत्वा परिवर्तते । काचिच्च केशवेशार्थं करोति मानसमीप्सितम्
काचित्कङ्कतिकां धृत्वा पुरतः परितिष्ठति । काचिद्यावकहस्ता च काचिद्धात्रीरसं मुदा ॥
दूरतोऽपि वहत्येवं भीता च परितिष्ठति । काचिद्गीता भिया स्तौति काचिद्रोदिति शोकतः
काचित्तां बोधयत्येवं विदग्धा विरहातुराम् । काचित्तु तापतप्ता च स्निग्धतल्पे मनोहरे

स्थापयेद्वाहदूरार्थं स्निग्धपद्मदले शुभे । एवंभूतां च तां दृष्ट्वा चोवाच पुनरुद्धवः ॥
सुप्रियं कर्णपीयूषं विनयेन च नीतिवत् ॥ २१ ॥

उद्धव उवाच—

जाने त्वां देवदेवीशां सुस्निग्धां सिद्धयोगिनीम् । सर्वशक्तिस्वरूपां च मूलप्रकृतिमीश्वरीम्
श्रीदामशापोद्धरणीं माद्यां गोलोकवासिनीम् । कृष्णप्राणाधिकां देवीं तद्वक्षःस्थलवासिनीम्
शृणु देवि प्रवक्ष्यामि शुभवार्तामभीप्सिताम् । सुस्थिरं सखिभिः सार्धं हृदयस्निग्धकारिणीम्
दुःखदावाग्निदग्धायाः सुधावर्षणरूपिणीम् । विरहव्याधियुक्ताया रसायनसमां शुभाम् ॥
तत्र तिष्ठति नन्दोऽयं सानन्दो मुदितः सदा । निमन्त्रितश्च वसुना कृष्णोपनयनावधि ॥
गृहीत्वा स्वबलं कृष्णं साङ्गे मङ्गलकर्मणि । स नन्दः परमानन्दो मुदाऽऽयास्यति गोकुलम् ॥
आगत्य कृष्णो मुदितः प्रणम्य मातरं पुनः । नक्तमायास्यति मुदा पुण्यं वृन्दावनं वनम् ॥
अचिराद्द्रक्ष्यसि सति श्रीकृष्णमुखपङ्कजम् । सर्वं विरहदुःखं च संत्यक्ष्यसि च सांप्रतम् ॥
सुस्थिरा भव मातस्त्वं त्यज शोकं सुदारुणम् । वह्निशुद्धांशुकं रम्यं परिधाय महर्षिता ॥
अमूल्यरत्ननिर्माणभूषणग्रहणं कुरु , गृहाण चन्दनं स्निग्धं कस्तूरीकुङ्कुमान्वितम् ॥ ४२ ॥
कुरुष्व केशसंस्कारं मालतीमाल्यभूषितम् । सुवेषं कुरु कल्याणि गण्डे च चित्रपत्रकम् ॥
सिन्दूरबिन्दुं सीमन्ते कस्तूरीचन्दनान्वितम् । अलक्तकाक्तं चरणं युक्तं यावकभूषणैः ॥
कुरुष्व तिष्ठ चोत्तिष्ठ रत्नसिंहासने वरे । सण्कङ्कलं तरत्नं त्यज सार्धं शुचा सति ॥ ४१ ॥
भुङ्क्ष्व कृष्णेन मनसा विशुद्धं मधुरं मधु । संस्कृतं वासितं तोयं ताम्बूलं च सुवासितम् ॥
रत्नेन्द्रसारनिर्माणपर्यङ्के सुमनोहरे । वह्निशुद्धांशुकाक्ते च मालतीमाल्यभूषिते ॥ ४७ ॥
सुगन्धियुक्ते कस्तूरीजातीचम्पकचन्दनैः । परितो मालतीमाल्यहीरहारविभूषिते ॥ ४८ ॥
मणीन्द्रमुक्तमाणिक्यमुन्दरैश्च परिष्कृते । पुष्पमाल्योपधाने च मङ्गलार्हे मुदाऽन्विता ॥
शयनं कुरु देवेशि गोपीभिः सेविता सदा । करोतु सेवनं शश्वत्प्रियालिः श्वेतचामरैः ॥
पादारविन्दसेवां च गोपीभक्ता मनोहरे । सद्रत्नसारनिर्माणपर्यङ्के सुमनोहरे ॥ ५१ ॥
इत्येवमुक्त्वा स मुने पुनस्तूष्णीं बभूव ह । प्रणम्य पादपद्मं च ब्रह्मादिसुरवन्दितम् ॥ ५२ ॥
उद्धवस्य वचः श्रुत्वा सस्मिता राधिका सती । यौतुकं च ददौ तस्मै रत्नसाराङ्गुलीयकम्
अपूर्वं सुन्दरं रम्यं विश्वकर्मविनिर्मितम् । सुवर्णदर्पणं पीतवर्णं सुदीप्तं सुप्रदीपवत् ॥ ५४ ॥
कृष्णाय वह्निना दत्तमपूर्वं रासमण्डले । मणिकुण्डलयुग्मं चामूल्यरत्नविनिर्मितम् ॥
अमूल्यरत्ननिर्माणं सर्वभूषणभीप्सितम् । वह्निशुद्धांशुकयुगं रत्ननिर्माणनापकम् ॥ ५६ ॥

१ क. सुने । २ घ. 'शोभं ।

हीरहारविनिर्माणं हारं च सुमनोहरम् । पुरा दत्तं च सुप्रीत्या कृष्णाय वरुणेन च ॥
श्रीसूर्येण च यद्दत्तं श्रीकृष्णाय स्यमन्तकम् । प्रदत्तं कौ(कौ)तुकं तस्मै यद्दत्तं हरिणा पुरा
यद्दत्तं च महेन्द्रेण रत्नसिंहासनं वरम् । तत्प्रदत्तं मुदा देव्या तस्मै प्रीत्या च राधया ॥
मणीन्द्रसारनिर्माणं छत्ररत्नं मनोहरम् । मुक्तामाणिक्यसारेण हीरहारसमन्वितम् ॥
विचित्ररत्नपद्मेन चित्रितं वीरणं सदा । शोभितं परितश्चान्यैः रत्ननिर्माणदर्पणैः ॥६१॥
यद्दत्तं ब्रह्मणा प्रीत्या हरये रासमण्डले । सुप्रीत्या राधया तत्र प्रदत्तमुद्धवाय च ॥६२॥
मणिसारविनिर्माणं मणिराजविराजितम् । जपामाल्यं सम्कृतं च यद्दत्तं शंभुना पुरा ॥
तदेव दत्तं तस्मै चाप्यमूल्यं पुण्यदं शुभम् । जन्ममृत्युजराव्याधिहरं चातिमनोहरम् ॥
चन्द्रकान्तमणिं रम्यं चन्द्रदत्तं परिष्कृतम् । चन्द्रावली ददौ तस्मै मुदीप्तं पूर्णचन्द्रवत् ॥
विशुद्धं मधुपूर्णं च मधुपात्रे यदक्षयम् । धर्मेण यत्प्रदत्तं च तद्दत्तं प्रियया हरेः॥६६॥
जलभोजनपात्रं च शुद्धं स्वर्णविनिर्मितम् । मिष्टान्नं परमान्नं च ददौ सुस्वादुमिष्टकम् ॥
भोजनं कारयित्वा च कर्पूरादिसुवासितम् । ताम्बूलं च ददौ शीघ्रं माल्यं सुस्निग्धचन्दनम्
शुभाशिषं च प्रददौ वाञ्छितं प्रवरं वरम् । ज्ञानं कृष्णेन यद्दत्तं गोलोके रासमण्डले ॥
पुरुषाणां शतं यावन्निश्चलां कमलां ददौ । विद्यां यशस्करीं शुद्धां यशः कीर्तिं सुनिर्मलाम्
सर्वसिद्धिं हरेर्दास्यं हरिभक्तिं च निश्चलाम् । पार्षदप्रवरत्वं च पार्षदं च हरेरिति ॥७१॥
वरं प्रसादं दत्त्वा च समुत्थाय मुदाऽन्वितम् । वह्निशुद्धांशुके धृत्वा चामूल्यं रत्नभूषणम्
हीरहारं रत्नमालां परिधाय मनोहराम् । सिन्दूरं कज्जलं पुष्पमाल्यं सुस्निग्धचन्दनम् ।
रत्नसिंहासनस्थं तं पूजिता पूजितं मुदा । वेष्टिता हर्षनिरतं गोपीनां शतकोटिभिः ॥
तप्तकाञ्चनवर्णाभा शतचन्द्रसमप्रभा ॥ ७४ ॥

राधिकोवाच—

सत्यमायास्यति हरिः सत्यं निष्कपटं वद ; वद तथ्यं भयं त्यक्त्वा सत्यं ब्रूहि सुसंसदि
वरं कूपशताद्वापी वरं वापीशतात्क्रतुः । वरं क्रतुशतात्पुत्रः सत्यं पुत्रशतात्किल ॥
न हि सत्यात्परो धर्मो नानृतात्पातकं परम् ॥ ७७ ॥

उद्धव उवाच—

सत्यमायास्यति हरिः सत्यं द्रक्ष्यसि सुन्दरि । ध्रुवं त्यक्ष्यसि संतापं दृष्ट्वा चन्द्रमुखं हरेः
मद्दर्शनान्महाभागे गतस्ते विरहज्वरः । नानाभोगसुखं भुक्त्वा त्यज चिन्तां दुरत्ययाम्
अहं प्रस्थापयिष्यामि गत्वा मधुपुरीं हरिम् । विधाय तत्प्रबोधं च कार्यमन्यत्करिष्यति

१ क. चारुणा । २ क 'पिष्ट' ।

* विदायं कुरु मे मातर्यास्यामि हरिसंनिधिम्  सर्वं तं कथयिष्यामि त्वद्वृत्तान्तं यथोचितम्

**राधिकोवाच––**

गमिष्यसि यदा वत्स मथुरां सुमनोहराम्। शृणु दुःखकथां काचित्तिष्ठ वत्स स्थिरो भव
मां विस्मृतो न भवसि विरहज्वरकातराम्। कथयिष्यसि मत्कान्तं ध्रुवं प्रत्यापयिष्यसि
नारीणां मनसो वार्तां को वा जानाति पण्डितः। किंचिच्छास्त्रानुसारेण प्रकरोति निरूपणम्
वेदा वक्तुं न शक्ताश्च शास्त्राणि किं वदन्ति च। कथयिष्यामि तत्सर्वं पुत्र कृष्णं च वक्ष्यसि
गेहे वने न भेदो मे पश्वादिषु तथा नृषु। किं वा जलं किमु स्थलमज्ञानं च दिवानिशम्
आत्मानं च न जानामि चोदयं चन्द्रसूर्ययोः। क्षणं प्राप्य हरेर्वार्तां चेतनं मे बभूव ह॥
कृष्णाकृतिं च पश्यामि शृणोमि मुरलीध्वनिम्। कुलं लज्जां भयं त्यक्त्वा चिन्तयामि हरेः पदम्
संप्राप्य सर्वजगतामीश्वरं प्रकृतेः परम्। न ज्ञानं मायया तस्य ज्ञात्वा गोपपतेर्मम॥८८॥
ध्यायन्ते यत्पदाम्भोजं वेदा ब्रह्मादयः सुराः। स भर्त्सितो मया कोपाद्धृदि शल्यमिदं मम
तत्पदाम्भोजसेवाभिर्गुणपस्तावतोऽपि वा। तद्भक्त्या तत्क्षणो नीतो ध्यानो ध्यानेन पूजया
तथापि मङ्गलं सर्वं हर्षमायुर्यवर्धितम्। विघ्नं च हृदि संतापस्तद्विच्छेदे सदोद्धव॥
क्रीडापीतिर्न भविता तादृशीष्टा पुनर्मम। तादृशं प्रेमसौभाग्यं निर्जने नैव संगमः॥९२॥
वृन्दावने न यास्यामि तत्सङ्गे पुनरुद्धव। चन्दनं वा न दास्यामि नन्दनन्दनवक्षसि॥
मालां तस्मै न दास्यामि न द्रक्ष्यामि मुखाम्बुजम्। मालतीनां केतकीनां चम्पकानां च काननम्
पुनरेव न यास्यामि सुन्दरं रासमण्डलम्। हरिसङ्गे न यास्यामि रम्यं चन्दनकाननम्॥
पुनरेव न यास्यामि मलयं रत्नमन्दिरम्। माधवीनां वनं रम्यं रहस्यं मधुकाननम्॥९६॥
श्रीखण्डकाननं रम्यं स्वच्छं चन्द्रसरोवरम्। विस्पन्दकं सुरवनं नन्दनं पुष्पभद्रकम्॥
भद्रकं हरिणा सार्धं न यास्यामि पुनः पुनः। क्व सा रम्या निरसिता माधवे माधवीलता॥
क्व गता माधवी रात्रिः क्व मधुः क्व नु माधवः। इत्येवमुक्त्वा सा राधा ध्यात्वा कृष्णपदा-
म्बुजम्॥९९॥ पुनर्मूर्छां च संप्राप्य उद्धवो पुरतो निता॥१००॥

इति श्रीब्रह्म० महा० नारदना० श्रीकृष्णजन्मख० उत्तर० राधोद्धवसं०
त्रिनवतितमोऽध्यायः॥९३॥

---

* स्थानान्तुर्गतिम्।

१ क. इति मायया ... ।२ क. नवर्ध।

अथ चतुर्नवतितमोऽध्यायः ।

---

नारायण उवाच—

उद्धवो विस्मयं प्राप्य भयं च विपुलं मुने । चेतनं कारयामास तामुवाच मृतामिव ॥१॥
तद्भक्तिं समभिज्ञाय स्वात्मानं भक्तसंज्ञकम् । तुच्छं मेने जगत्सर्वं दृष्ट्वा भाग्यवतीं सतीम्

उद्धव उवाच—

चेतनं कुरु कल्याणि जगन्मातर्नमोऽस्तु ते । त्वमेव प्राक्तनं सर्वं कृष्णं द्रक्ष्यसि सांप्रतम्॥
त्वत्तो विश्वं पवित्रं च त्वत्पादरजसा मही । सुपवित्रं त्वद्‌दर्शनं पुण्यवत्यश्च गोपिकाः ॥
लोकास्त्वामेव गायन्ति संगीतैर्मङ्गलस्तवैः । त्वत्सुकीर्तिं च देवाश्च सनकाद्याश्च संततम्॥
कृतपापहरां पुण्यां तीर्थपूतां च निर्मलाम् । हरिभक्तिप्रदां भद्रां सर्वविघ्नविनाशिनीम् ॥
त्वमेव राधा त्वं कृष्णस्त्वं पुमान्प्रकृतिः परा । राधामाधवयोर्भेदो न पुराणे श्रुतौ तथा ॥
राधिका मूर्छितां दृष्ट्वा पश्चात्कृत्वा तमुद्धवम् । उवाच माधवी गोपी राधायाः पुरतः स्थिता

माधव्युवाच—

किं वा चोरस्य कृष्णस्य रूपं वा वेषमुत्तमम् । किं सुखं विभवं किं वा गौरवं चाप्यनुत्तमम्॥
किं वा तद्धीर्धैर्यमैश्वर्यं शौर्यं वा दुरतिक्रमम् । किं वा सिद्धं प्रसिद्धं वा किं वा तुल्यं गुणोत्तमम्
इतो वा कुत्र आयातः पुनरेव कुतो गतः । बालको गोपवेषश्च न हि राजात्मजः पुमान्॥
त्वं किं स्मरसि कल्याणि गोपालं नन्दनन्दनम् । आत्मानं रक्ष यत्नेन कः प्रियः स्वात्मनः परः

मालत्युवाच—

धिक्त्वां राधेऽतिनिर्लज्जां तवैव जीवनं वृथा । जगतो युवतीनां च करोषि[3] सुयशःक्षयम्
नारीणां गोपनं कार्यं सुव्यक्ते स्वयशःक्षयम् । यत्नेन चक्षुषो वाऽहं सखि संचरणं कुरु॥
अन्तरे पतिभावं च संगोप्य भावनं कुरु । न वै जातिश्च शत्रूणां मित्राणां च सुरेश्वरि ॥
शत्रुः कार्यवशेनैव मित्रं च कर्मणा भवेत् । स्वकार्यमुद्धरेत्प्रज्ञः कार्यध्वंसेन मूर्खता॥१६॥
कः कस्य वल्लभो राधे कः कस्याप्रिय एव च । कार्यं च समयं ज्ञात्वा सन्तः कुर्वन्ति संततम्
शत्रुर्धनापहारी च प्राणहर्ता ततः परः । कटुवक्ता दुःखदाता शत्रूणां लक्षणं शृणु ॥१७॥
स्वकुलात्त्वां बहिष्कृत्य विसृज्य शोकसागरे । गृहीत्वा चेतनं प्राणान्निष्ठुरो दारुणो गतः ॥
किं किं स्मरसि मूढे हि त्यज शोकं सुदारुणम् । आत्मानं रक्ष यत्नेन कः प्रियः स्वात्मनः परः

---

१ क. भागव॰ । २ क वेदाश्च सनकश्चापि सं॰ । ३ क. संवरणं ।

पद्मावत्युवाच—

भवता कथितं पूर्णं यमुनाजलसंनिधौ। नरस्य रतिदूरं नारीणां न सुखं प्रिये॥२१॥
विद्युज्ज्वाला जले रेखा खलानां प्रीतिरेव च। न नीतिर्नीतिशास्त्रेषु सुविश्वासः खलेषु च॥
यदा त्वं यमुनाकूले मुखं वीक्ष्य हरेरहो। सस्मितं सकटाक्षं च पुनः कृत्वाऽस्य गोपनम्॥
पुनः पुनस्त्वं संवीक्ष्य त्वया त्यक्तं च चेतनम्। गृहं त्यक्त्वा गुरुमयं सखीनां वचनं शुभम्
संततं ध्यायसे कृष्णं नाऽऽहारं जीवनं तथा। क कृष्णो मथुरायां च कापि त्वं कदलीवने॥
त्वं यदि त्यजसि प्राणांश्चाऽऽविर्भवति सोऽधुना। काले द्रक्ष्यसि स्वात्मानं यदि रक्षसि सुन्दरि

चन्द्रमुख्युवाच—

प्राक्तनेन शुभं सर्वं सुखं च विभवश्चिरम्। दुःखं शोको प्राक्तनेन विपत्संपच्च सांप्रतम्॥
भारते पुण्यभूमौ च सर्वेषामीप्सिते वरे। लभेत्पतिं हरिं कान्तं तपसा प्रकृतेः परम्॥
तथाऽपि प्रदहेद्गात्रं कामबाणेन सांप्रतम्। अस्या शत्रुः कथं चन्द्रो मधुर्वा मधुमाधवौ॥
शंकरेण प्रदग्धोऽभूत्पुनरेव स मन्मथः। चन्द्रं भक्षतु राहुश्च पुनश्चोद्गमनं तथा॥३०॥
मधुश्च मित्रशोकेन प्राणांस्त्यक्त्वा ययौ यमम्। सुधासिन्धुश्च चेन्दुर्वा विषसिन्धुश्च मां प्रति
सुवेपः स्वाउज्ज्वलद्वह्निश्चन्दनं तद् घृताहुतिः। संततं प्रदहेद्गात्रं सुगन्धिश्च समीरणः॥
त्यक्ताहारा मम सखी पश्य श्वसिति जीवति। प्रशंसा कुरु कृष्णस्य मुखेन कुरुनन्दन॥
तन्नामस्मृतिमात्रेण तद्गुणश्रवणेन च। तद्वार्तया च शुभया सहसा चेतनं भवेत्॥३३॥

शशिकलोवाच—

त्वं किं भावनि जानासि कृष्णमात्मानमीश्वरम्। यं तं ब्रह्मादयो देवा वेदाश्चत्वार एव च॥
ध्यायन्ति संततं सन्तः पादपद्मं सुरेप्सितम्। पद्मा सरस्वती दुर्गा सोऽनन्तोऽपि महेश्वरः॥
यं न जानन्ति सिद्धेन्द्रा मुनीन्द्रा मनवस्तथा। सर्वात्मनः कुतो रूपं निर्गुणस्य कुतो गुणाः॥
सत्यमुक्तं च सत्यस्य यत्तदेव यथोचितम्। धत्ते भारावतरणे पृथिव्याश्च मनोहरम्॥
सु माहात्म्यं रम्यं भक्तानुग्रहविग्रहम्। किंतु निर्वचनीयं च रूपं जनमनोहरम्॥३९॥
कोटिकन्दर्पलावण्यं लीलाधाम शुभाश्रयम्। यत्पादपद्ममधुरं मधु मन्दाकिनीजलम्॥
दधे शिरसि भक्त्या च सर्वदा शंकरः परः। शश्वत्करोति वैरागी तीर्थकीर्तेश्च कीर्तनम्॥
क्षणं नृत्यति भक्त्या च पञ्चवक्त्रेण गायति। आहारं भूषणं वस्त्रं परित्यज्य दिगम्बरः॥
ब्रह्म ज्योतिःस्वरूपं च ध्यात्वा शुभ्रं सुनिर्मलम्। ब्रह्मा च तपसा जन्म नयत्येव हि सेवया
शेषः सनत्कुमारश्च सिद्धसंघश्च योगवित्॥ ४६॥

---

१ क. 'हं वायं गु'। २ ख. 'वगम्।

सुशीलोवाच—

निर्मञ्छनार्हं न भवेत्तस्य वामशतं शतम्। चन्द्रोऽश्विनीकुमारो वा रूपेषु केन गण्यते ॥
असंख्येषु च विश्वेषु ब्रह्मविष्णुशिवादयः। मुनयो मनवः सिद्धा भक्ताः सन्तश्च संततम्
ध्यायन्ते यत्पदाम्भोजं निर्गुणस्याऽऽत्मनश्च वै। वेदाः स्तोतुं न शक्ताश्च यमीशं च सरस्वती
जडीभूता च भीता च स्तवनेन क्षमापयेत्। सहस्रवक्त्रः स्तवने कम्पितश्च निरन्तरम् ॥
वेदानां जनको ब्रह्मा स्तोत्रेण तस्य हीश्वरः. तं सत्यं नित्यमीशं च माधवी परिनिन्दति ॥
अपवित्रा सभा भूना गोपीनां जीवनं वृथा। तासु पुण्यवती राधा ध्यायते यं दिवानिशम् ॥
यन्नामस्मृतिमात्रेण कोटिजन्मार्जितं सखि। कृतपापमयं शोकः प्रणश्यति न संशयः ॥

रत्नमालोवाच—

दधार वामहस्तेन शैलं गोवर्धनं हरिः। ततः किं तद्यशः शौर्यं जगतां जनकस्य च ॥
शैलानां च सहस्रं यो भेत्तुं शक्तश्च दैत्यराट्। लीलामात्रेण तेषां च लक्षं हन्तुं क्षमो हरिः
यदंशकलया जातः सूकरो विष्णुरीश्वरः। वसुधां दशनाग्रेण चोद्दधार च लीलया ॥
शैलानां च सहस्राणि यत्र सन्ति महीतले। दैत्याश्च वाऽप्यसंख्याश्च वीराः शूरास्तथैव च
तेनैव कर्मणा तस्य न शौर्यं न च पौरुषम्। न यशश्च प्रशंसा वा सखि सर्वात्मनाऽऽत्मना

पारिजातोवाच—

सप्तद्वीपा च वसुधरा सशैलवनसागरा। काञ्चनीभूमिसहिता सर्वाधारा मनोहरा ॥ ९६ ॥
सप्त स्वर्गाश्च विविधा ब्रह्मलोकावधि प्रिये। विचित्राः सुन्दराश्चैव पातालानां च सप्त च ॥
एतैः परिमितं विश्वं ब्रह्माण्डं ब्रह्मणा कृतम्। महद्विष्णोर्लोमकूपे तदेवं चाणुवत्स्थितम् ॥
तस्य यावन्ति लोमानि तानि विश्वानि सन्ति च. स एव षोडशांशश्च कृष्णस्य परमात्मनः
तस्यैव किं यशः शौर्यं महिमानमनूपमम्। धैर्मरी गोपकन्या च किं वा जानाति माधवी ॥

माधव्युवाच—

मया यदुक्तं न ज्ञात्वा मूढा जल्पन्ति गोपिकाः। उद्धव शृणु मे वाक्यं यन्मया कथितं शुभम्
स्वेच्छया सगुणो विष्णुः स्वेच्छया निर्गुणो भवेत्। भुवो भारावतरणे गोपवेषः शिशुर्विभुः ॥
यदि वेदाः पुराणानि सिद्धाः सन्तश्च संततम्. ब्रह्मेशशेषभक्ताश्च न जानन्ति यमीश्वरम् ॥
तं किं जानामि मूढाऽहं धैर्मरी गोपकन्यका। तथाऽपि मद्वचः सत्यं श्रूयतां वत्स तत्क्षणम्
किमनिर्वचनीयं च रूपं शौर्यं यशो बलम्। वीर्यं वेषं च सिद्धिं चाप्यन्यो वा यो गुणो हरेः[3]
स्वेच्छामयस्य तस्यैव सगुणस्य च सांप्रतम्। किमनिर्वचनीयं च वर्तते तद्विशेषणम् ॥

---

१ ख. 'यत्सरी'। २ ख. यत्म'। ३ क. योऽगुणो हरिः।

निर्गुणस्य च विष्णोश्च देहहीनस्य स्वात्मनः यत्ते च किमाख्येयं तस्य रूपादिकं च किम्
मां निन्दति महामूढा न बुद्ध्वा वचनं मम। एषा जानाति किं मूढा तं सत्यं प्रकृतेः परम्॥
ज्योतिःस्वरूपं परमं परमात्मानमीश्वरम्। ममनिर्वचनीयं च भक्तानुग्रहविग्रहम्॥
यत्पादपद्मं पद्मा सा त्रैलोक्यजननी परा। सेवते कम्पिता भीता द सेवितसततं भिया॥७०॥
विष्णुमाया च प्रकृतिर्मूलरूपा सनातनी। ब्रह्मस्वरूपा परमा भीता दक्षिणपार्श्वतः॥७१॥
सरस्वती जडीभूता भीता च परमेश्वरी। स्तोतुं न शक्ता वेदा, किं स्तुवन्ति परमेश्वरम्॥
तासां तद्वचनं श्रुत्वा चोद्धवो भक्तिविह्वलः। पुलकाञ्चितसर्वाङ्गो रुरोद च पपात च॥
मूर्छां संप्राप्य भक्त्या च ध्यात्वा तं परमेश्वरम्। तुच्छं मेने स चाऽऽत्मानं गोपीं
भक्त्याऽप्युवाच सः॥ ७४॥

उद्धव उवाच—

धन्यं यशस्यं द्वीपानां जम्बूद्वीपं मनोहरम्। यत्र भारतवर्षं च पुण्यदं शुभदं तथा॥७५॥
वणिजां च पुण्यकृतं वाणिज्यस्थलमीप्सितम्। अत्र कृत्वा सुपुण्यं च भुङ्क्तेऽन्यत्र शुभं फलम्
धन्यं भारतवर्षं तु पुण्यदं शुभदं वरम्। गोपीपादाब्जरजसा पूतं परमनिर्मलम्॥ ७७॥
ततोऽपि गोपिका धन्या मान्या योषित्सु भारते। नित्यं पश्यन्ति राधायाः पादपद्मं सु-
पुण्यदम्॥ ७८॥

षष्टिवर्षसहस्राणि तपस्तप्तं च ब्रह्मणा। राधिकापादपद्मस्य रेणूनामुपलब्धये॥ ७९॥
गोलोकवासिनी राधा कृष्णप्राणाधिका परा। तत्र श्रीदामशापेन वृषभानुसुताऽधुना॥
ये ये भक्ताश्च कृष्णस्य देवा ब्रह्मादयस्तथा। राधायाश्चापि गोपीनां कलां नार्हन्ति षोडशीम्
कृष्णभक्तिं विजानाति योगीन्द्रश्च महेश्वरः। राधा गोप्यश्च गोपाश्च गोलोकवासिनश्च ये
किंचित्सनत्कुमारश्च ब्रह्मा च द्विपर्धी तथा किंचिदेव विजानन्ति सिद्धा भक्ताश्च निश्चितम्
धन्योऽहं कृतकृत्योऽहमागतो गोकुलं यतः। गोपिकाभ्यो गुरुभ्यश्च हरिभक्तिं लभेऽचलाम्
मथुरां च न यास्यामि तीर्थकीर्तेश्च कीर्तनम्। श्रोष्यामि किंकरो भूत्वा गोपीनां जन्मजन्मनि
न गोपीभ्यः परो भक्तो हरेश्च परमात्मनः। यादृशीं लेभिरे गोप्यो भक्तिं नान्ये च तादृशीम्

कलावत्युवाच—

पितॄणां मानसी कन्या धन्या मेना कलावती। वयं तिस्रो भगिन्यश्च भ्रमामः पृथिवीतले
धन्या जनकपत्नी न सीतामाता पतिव्रता। अयोनिसंभवा राधा अहं चायोनिसंभवा॥
राधा श्रीदामशापेन वृषभानुसुता भुवि। सनत्कुमारशापेन वयमेव महीतले॥ ८९॥
क्षीरोदसागरं रम्यं श्वेतद्वीपं मनोहरम्। तिस्रो भगिन्यो भक्त्या च विष्णुं द्रष्टुं गता वयम्

अभ्युत्थानादि न कृतं कोपादस्मान्छशाप ह । सनत्कुमारो भगवान्योगीन्द्राणां गुरोर्गुरुः॥

सनत्कुमार उवाच—

मूढास्तिष्ठत भूमौ च पुन. स्वर्गं न यास्यथ । मर्त्यप्राणिप्रिया भूत्वा चाहंकारेण हेतुना ॥
पुनर्वरं च प्रत्येकं ददौ तुष्टो द्विजेश्वरः विष्णोर्वैशम्य शैलस्य हिमाधारस्य कामिनी ॥
ज्येष्ठा भवतु त्वत्कन्या भविष्यत्येव पार्वती । धन्या प्रिया तु भवतु योगिनो जनकस्य च
तस्य कन्या महालक्ष्मीः सीतादेवी भविष्यति । वृषभानस्य वैश्यस्य योगिनां प्रवरस्य च॥
दुर्वाससश्च शिष्यस्य कनिष्ठा च कलावती । भविष्यति प्रिया साध्वी द्वापरान्ते च गोकुले
कलावतीसुता राधा देवी गोलोकवासिनी । श्रीदामगोपशापेन भविष्यति न संशयः ॥
ईशो महेशशेषाणां भारावतरणेन च । आगमिष्यति पृथ्वीं च पुण्यक्षेत्रं च भारतम् ॥
कलावती वृषभानः कौतुकात् कन्यया सह । जीवन्मुक्तश्च गोलोकं गमिष्यति न संशयः
धन्या च सतिया सार्धं वैकुण्ठं च गमिष्यति । मेनका योगिनी सिद्धा पार्वत्याश्च वरेण च
कल्पान्ते विष्णुलोके च लक्ष्मीवन्मोदते चिरम् । विना विपत्त्या महिमा केषां कुत्र भविष्यति
कर्मणा च गते दु.खे प्रभवेद्दुर्लभं सुखम् । पुरा पितॄणां कन्याश्च स्वर्गभोगविलासिकाः
लक्ष्मीसमा वरेणापि विप्रस्य विष्णुदर्शनात् । कर्मक्षयं चाप्यस्माकं बभूव विष्णुदर्शनात् ॥
पुण्येन तेन रमेण कुमारस्यापि दर्शनम् । श्रुतं तत्र कुमारास्य.ज्ज्ञानं परमदुर्लभम् ॥
ब्रह्मविष्णुशिवादीनां सिद्धानां जगतामपि । ईश्वरः परमात्मा च श्रीकृष्ण. प्रकृतेः परः
निर्गुणश्च निरीहश्च पर. स्वेच्छामयो वरः ॥ ९ ॥

तुलस्युवाच—

सर्वभागेषु देवाश्च तिष्ठन्त्येव पृथक्पृथक् । प्राणो विष्णुश्च विषयी मनो ब्रह्मा च चेतना
प्रकृतिर्बुद्धिरूपा च सर्वशक्त्यधिदेवता । ज्ञानस्वरूपः शंभुश्च स्वयं धर्मश्च पूरुषः ॥
निर्गुणः परमात्मा च तद्ब्रह्म प्रकृतेः परम् । स एव कृष्ण. साक्षी च कर्मणां जीविनामपि
मोक्ता च सुखदुःखानां जीवस्तत्प्रतिबिम्बकः , चक्षुषोश्चन्द्रसूर्यौ च जिह्वायां च सरस्वती
वसुंधरा त्वचि सदा बाहोस्ते लोकपालकाः । आत्मनश्चापि ते सर्वे परिचारकरूपिणः ।
आत्मन्येव प्रियास्ते च सर्वे गच्छन्ति जीविनः । यथा संसारि संसारे नरदेह(व)मिवानुगाः॥
तस्मात्सर्वात्मनाऽऽत्माने भजन्ति संततं सदा । सन्तश्च परया भक्त्या ध्यायन्ते योगिनो मुदा
कर्मिणां कर्मणा साक्षी कुतः कर्म च गोपनम् । अन्तर्यामी च कृष्णश्च प्रचारं कुरुते मुदा

कालिकोवाच—

नरा बालाश्च वृद्धाश्च युवानस्त्रिविधास्तथा । देवादयश्च ये सिद्धाः सर्वे जानन्ति तं परम्

सांप्रतं मूर्छितां राधां युक्तो बोधयितुं बुधः । अत्र युक्तिः प्रधाना त्वं तां प्रबोधय चोद्धव

उद्धव उवाच—

चेतनं कुरु कल्याणि जगन्मातर्निबोध माम् । उद्धवं कृष्णभक्तस्य किंकरस्यापि किंकरम्
प्रसादं कुरु मातर्मा यास्यामि मथुरा पुनः । न स्वतन्त्रः पराधीनो योषा दारुमयी यथा
यथा वृषो वशीभूतो वृषवाहस्य संततम् । तथा मातर्जगत्सर्वं जगन्नाथस्य निश्चितम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० राधोद्धवसं०
चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

अथ पञ्चनवतितमोऽध्यायः ।

नारायण उवाच—

उद्धवस्य वचः श्रुत्वा चेतनं प्राप्य राधिका । सा चोवाच समुत्थाय रत्नसिंहासने वरे
उवाच मधुरं देवी हृदयेन विदूयता । गोपीभिः सखिभिर्भक्त्या सेविता श्वेतचामरैः ॥

राधिकोवाच—

मथुरां गच्छ वत्स त्वं मां च(न) विस्मर संपदा । अतोऽप्यधर्मो नास्त्येव भवतो भवसागरे
मदीयं वचनं सर्वं गत्वा कथय सांप्रतम् । श्रीकृष्णं परमानन्दं शीघ्रमानय मत्प्रभुम् ॥
योषिज्जन्मनि योषित्सु संप्राप्य तादृशं पतिम् । भेदो बभूव कस्या वा मदन्या काऽपि दुःखिनी
किं ददासि प्रबोधं मे नास्ति मे बोधनोचितम् । निष्फलो देहिना देहो विनाऽऽत्मानं सदोद्धव
संप्रीत्या सह सौभाग्यं गौरवं नित्यनूतनम् । अतीव दुर्लभं प्रेम रहस्यं नवसंगमम् ॥७॥
स्मरामि मनसा शश्वन्नान्यो मनसि वर्तते । रात्रौ निद्रां परित्यज्य स्मरणं शोकवर्धनम् ।
मामुद्धर ध्रुवं वत्स निमग्नां शोकसागरे । जीवाभयप्रदानेन तीर्थे स्नानफलं नृणाम् ॥
प्रबोधितुं न शक्नोमि दुर्निवारं च मानसम् । चिन्तये चरणाम्भोजं कृष्णस्य परमात्मनः
तद्गुणं महिमानं च प्रीतिं च प्रेमसागरम् । स्मारं स्मारं च सौभाग्यं मनो मे न स्थिरं चलम्
जगतां युवतीनां च कासां वा दुःखमीदृशम् । श्रीकृष्णभेददुःखं च का वा जानाति मां विना
किंचिज्जानाति सीता साऽप्यहं च विधिबोधितम् । मत्परा दुःखिनी नास्ति कामिनीषु जगत्त्रये
का वा याति प्रतीतिं मे श्रुत्वा च मानसीं व्यथाम् । कासां वा मत्समं दुःखं युवतीनां सुतोद्धव

१ क. °चिता । २ ख °धर्मोऽपि° ।

राधिकासदृशी स्त्रीषु न भूता न भविष्यति । दुःखिनी विरहात्तस्य सुखसौभाग्यवर्जिता
संप्राप्य कल्पवृक्षं च पतिं च जगतां पतिम् । वञ्चिताऽहं विधात्रा च निर्दयेन च पापिना
जीवनं सफलं जन्म सुस्निग्धं चक्षुषी मनः । तत्पादपद्मवक्त्रेन्दुरूपवेषप्रदर्शनात् ॥ १७ ॥
यन्नामश्रुतिमात्रेण पञ्च प्राणाः प्रहर्षिताः । स्मृतिमात्रात्प्रफुल्लघन आत्मा सुनिग्ध एव च
यश्च पस्पर्श सुगतौ यशस्त्रिभुवनेष्वपि । कया वा संपदा वत्स विस्मरामि तमीश्वरम् ॥
त्रैलोक्यविजयं रूपं गुणमेव बिभर्ति यः । न निर्मितो यो विधिना तेनैव निर्मितो विधिः
तं विधेश्च विधातारं दातारं सर्वसंपदाम् । कल्पवृक्षात्परं शान्तं लक्ष्मीकान्तं मनोहरम्
सर्वेशं सर्वबीजं च परमात्मानमीश्वरम् । कया वा संपदा तात विस्मरामि च तं पतिम्
यस्य निर्मञ्छनार्हश्च न चन्द्रो न च मन्मथः । नैवाश्विनीकुमारश्च गुणसाम्यं न विश्वतः
ध्यायन्ते यत्पदाम्भोजं ब्रह्मेशशेषसंज्ञकाः । कया वा संपदा तात विस्मरामि च तं प्रभुम्
स्वप्ने पश्यन्ति ये रूपमतुलं च मनोहरम् । तेऽपि सर्वं परित्यज्य ध्यायन्ते तमहर्निशम् ॥
गुणेन शैलः सलिलं शुष्ककाष्ठ द्रवेदिति । स्तब्धो मुकुलितः स्तम्भितश्च समीरणः ॥
सूर्यश्च जलधिश्चैव स्थगितो भक्तिभावतः । कया वा संपदा पुत्र विस्मरामि च तं प्रियम्
यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् । वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति जन्तुषु ॥
यद्भयात्फलिनो वृक्षाः पुष्पिताः समयेऽपि च । समुद्राः स्वात्मविषये ब्रह्माश्च मनवः सुराः
कालस्य कालः संहर्तुः संहर्ता सद्गुरीश्वरः । स्वाधीनश्च स्वतन्त्रश्च स्वयमेवाऽऽत्मसंज्ञकः
कया वा संपदा भक्त विस्मरामि च तं प्रभुम् । प्रबोधो नास्ति तद्भेदे येन मां बोधयेद्बुधः
मां च बोधयितुं शक्ता न सावित्री सरस्वती । न वेदा न च वेदाङ्गाः के वा सन्तश्च के सुराः
सहस्रवक्त्रोऽनन्तश्च वेदानां जनको विधिः । न शंभुर्न गणेशश्च योगीन्द्राणां गुरोर्गुरुः ॥
स्थितेर्गतिश्चिन्तनीया मार्गशून्ये कुतो गतिः । कालसाध्यं च सर्वं च सुखं दुःखं शुभाशुभम्
दुर्निवारः स कालश्च कालसाध्यं जगत्सु च । उत्तिष्ठ मथुरां गच्छ सुखं वत्स मनोहरम्
मनवासं परित्यज्य भवांश्च गमनोत्सुकः । सुचिरं कृष्णविच्छेदो दुःखाय न सुखाय च ॥
पश्य चन्द्रमुखं तस्य जन्ममृत्युजरापहम् । राधिकावचनं श्रुत्वा रुरोद भृशमुद्धवः ॥
रुदतीं राधिकां दृष्ट्वा बन्धुविच्छेदकातराम् ॥ ३७ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० राधोद्धवसं०
पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

१ क. °पिनी । २ क. °नोन्मुखः ।

अथ षण्णवतितमोऽध्याय. ।

नारायण उवाच—

श्रीकृष्णस्मरणं कृत्वा गमनोन्मुखमुद्धवम् । नतं राधापदाम्भोजे शिरसा पुलकाञ्चितम् ॥
उवाच माधवी गोपी रुदती प्रेमविह्वला । भक्तं रुदन्तमुच्चैश्च राधाविच्छेदकातरम् ॥

माधव्युवाच—

उद्धव शृणु वक्ष्यामि क्षणं तिष्ठ यथोचितम् । निगूढं परमं ज्ञानं यत्ते मनसि वाञ्छितम्
सुदुर्लभं पुराणेषु वेदेषु गोपनीयकम् । प्रश्नं कुरु महाभाग राधिकां त्रिजगत्प्रसूम् ॥
इत्युक्त्वा सा च गोपीशा समुवास सुसंसदि । उवाच मधुरं शान्तामुद्धवश्चापि राधिकाम्

उद्धव उवाच—

एकाकी भवमायाति यात्येकाकी पुनः पुनः । प्राणी कर्मानुरोधेन स्वकर्मफलभुक्पुमान्
कर्मणा जायते जन्तुः कर्मणैव प्रलीयते । सुखं दुःखं भयं शोकं कर्मणैवाभिपद्यते ॥७॥
जन्तुर्भोगावशेषेण भोगं भुङ्क्ते भवेषु च । पुनश्च कर्मणो भोगात्समायाति च याति च ॥
रत्नादिकं च यत्किंचिन्मह्यं दत्तं त्वया सति । मया सार्धं न यात्येव तेन मे किं प्रयोजनम्
भवाब्धिभारणे देवि भवती तैरणिर्वरा । कर्णधारः स्वयं कृष्णः सर्वेषां पारकारकः ॥
किंचिद्दानं देहि मह्यं भवाब्धिपारकारणम् । प्राप्य प्रसादं यास्यामि मथुरां कृष्णमूलकम् ॥
यां यां कालगतिं मातः सुराणां च नृणामपि । पितॄणां ब्रह्मलोकस्य तदूर्ध्वस्य च तां वद
तामेव दुस्तरां घोरां तीर्त्वा यामि हरेः पदम् । एवंभूतमुपायं च देहि मे कमलालये ॥
दूरतो यत्पदाम्भोजं ध्यायन्ते च दिवानिशम् । देवा ब्रह्मेशशेषाद्यास्त्वं तद्वक्षःस्थलस्थिता
उद्धवस्य वचः श्रुत्वा जहास कमलालया । योसमा नेत्रनीरं च संमार्ज्य तमुवाच सा ॥

राधोवाच—

माधवीवचनेनैव करोषि प्रश्नमुद्धव । स्त्रीमातिरधमा लोके किं वा ज्ञानं ददामि ते ॥
शुद्धां कालगतिं वत्स जानाति भगवान्हरिः । ब्रह्मा महेशः शेषश्च वेदाश्चत्वार एव च ॥
किंचिद्वेदानुसारेण सन्तो जानन्ति पुत्रक । श्रुयतां कृष्णवक्त्रेण गोलोके रासमण्डले ॥
गोलोके चापि वैकुण्ठे ब्रह्मलोके च सांप्रतम् । या च दृष्टा कालगतिस्तामेव कथयामि ते
नृणां पितॄणां देवानां ब्रह्मलोकादिकस्य च । महिर्लोकस्य ब्रह्माण्डादिपातालानां च निश्चितम्
दुस्तरां कालगतिं येनोपायेन पण्डिताः । निस्तरन्ति सुपथेष्ट कथयामि निदानमप ॥

भजन्ति जगतां नाथं कालकालं जगद्गुरुम् । निर्गुणं च निरीहं च परमात्मानमीश्वरम् ॥
सद्यः पतति देहोऽयं विना येन सदात्मना । तं निषेव्य कालगतिं तरत्येव हि केवलम् ॥
आयुर्हरति सर्वेषां प्राणिनां रविरेव च । श्रीहरेः शुद्धभक्तानां सतां पुण्यवतां विना ॥
विधेर्मानसिकांश्चतुरः पश्य पुत्रक । सनकादीन्मगवतामेषां च सुस्थिरं वयः ॥
रुद्राद्यानवयसा नित्यान्ज्ञानिनां च गुरोर्गुरून् । बालाननुपनीतांश्च पञ्चवर्षीशिशून्यथा ॥
अभ्यन्तरे महाप्रीतान्सस्मितांश्च दिगम्बरान् । श्रीकृष्णध्यानपूतांश्च तीर्थपूतांश्च वैष्णवान् ॥
वेदवेदाङ्गशास्त्राणां चिन्ताहीनान्प्रफुल्लितान् । भक्त्या दिवानिशं शश्वद्धरिभावेन तत्परान् ॥
बाह्यपूजाविहीनांश्च पूजामानसिकांस्तथा । मृत्युञ्जयान्महाभागान्कालव्यालजितस्तथा ॥
सनकं च सनन्दं च तृतीयं च सनातनम् । परं सनत्कुमारं च ये स्मरन्ति च सर्वशः ॥
तीर्थस्नानफलं लब्ध्वा मुच्यन्ते कृतपातकात् । हरिभक्तिर्भवेत्तेषां हरिदास्यं लभन्ति च ॥
मृकण्डुबालकं पश्य कर्मणा च द्विजोत्तमम् । दशवर्षायुषं तीव्रं ज्वलन्तं ब्रह्मतेजसा ॥
हरिसेवनतः पश्चात्सप्तकल्पान्तजीविनम् । वोढुं पञ्चशिखं पश्य लोमशं चाऽऽसुरिं तथा ॥
सर्वकर्मविहीनं च हरिसेवनतत्परम् । शतकल्पायुषं चैव ध्यायमानं हरेः पदम् ॥३९॥
जमदग्नेः सुतं पश्य रामं तं चिरजीविनम् । हनुमन्तं बलिं व्यासमश्वत्थामानमेव च ॥
विभीषणं कृपं विप्रं जाम्बवन्तं च भल्लुकम् । हरिभावनया चैते शुद्धाः सुचिरजीविनः ॥
सिद्धेन्द्रेषु मुनीन्द्रेषु नरेष्वन्येषु चोद्धव । हरिभावनशुद्धाश्च सर्वे ते चिरजीविनः ॥
प्रह्लादं पश्य दैत्येषु हिरण्यकशिपोः सुतम् । हरिद्विषो दुरन्तस्य हरिभावनतत्परम् ॥
चिरायुषं कालजितं पश्यान्यं चाप्यसंख्यकम् । अनेकजन्मतपसा लब्ध्वा जन्म च भारते ॥
ये हरिं तं न सेवन्ते ते मूढाः कृतपापिनः । वासुदेवं परित्यज्य विषये निरतो जनः ॥
*त्यक्त्वाऽमृतं महामूढो विषं भुङ्क्ते निजेच्छया । कस्य स्त्री कस्य वा पुत्रः कस्य वा बान्धवास्तथा ॥ ४१ ॥*
कः कस्य बन्धुर्विपदि श्रीकृष्णेन विना भुवि । तस्मात्सन्तः सदा कृष्णं भजन्त्येव दिवानिशम् ॥
जन्ममृत्युजराव्याधिहरं सर्वहरं परम् । कालस्य तरणोपायं भजनं परमात्मनः ॥४३॥
आनन्दनन्दनस्यैव परिपूर्णतमस्य च । शृणु कालगतिं वत्स मदीयज्ञानगोचराम् ॥४४॥
नराणां च पितॄणां च सुराणां चापि ब्रह्मणः । नागानां राक्षसादीनां तत्परेषां च पुत्रक ॥
कथयामि निगूढार्थं सावधानं निशामय । सर्वस्माच्च परं स्थानं सर्वाधारो महान्विराट् ॥
यस्य लोमसु विश्वानि चासंख्यानि च तानि च । सर्वस्माच्च परं सूक्ष्मं परमाणुं निशामय ॥

१ क. पूजामा° ।

कालारम्भात्मकं सर्वमनूह्ं परमीप्सितम् । चरमः सद्विशेषाणामनेकोऽसंयुतः सदा ॥
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः । परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः ॥४९॥
त्रसरेणुत्रिकेणापि त्रुटिरुक्ता मनीषिभिः । वेधस्त्रुटिशतेनैव त्रिवेधेन लवस्तथा ॥ ५० ॥
त्रिलवेन निमेषश्च त्रिनिमेषेण च क्षणः । काष्ठा पञ्चक्षणेनैव लघुश्च दशकाष्ठया ॥५१॥
लघुपञ्चदशो दण्डस्तत्प्रमाणं निशामय । द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ॥५२॥
स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम् । दण्डद्वये मुहूर्तः स्यात्षष्टिदण्डात्मिका तिथिः
तदष्टभागः प्रहरः प्रमाणं च निरूपणम् । चतुर्भिः प्रहरै रात्रिश्चतुर्भिर्दिनमुच्यते ॥५४॥
तिथिपञ्चदशेनैव पक्षमानं प्रकीर्तितम् । पक्षद्वयेन मासः स्याच्छुक्लकृष्णाभिधेन च ॥
ऋतुर्मासद्वयेनैव तत्षट्केनैव वत्सरः । वसन्तग्रीष्मवर्षाश्च शरद्धेमन्तशीतकाः ॥ ५६ ॥
वर्षाः पञ्चविधा ज्ञेयाः कालविद्भिर्निरूपिताः । संवत्सरः द्वत्सर इलावत्सर एव च ॥
अनुवत्सरो वत्सरोऽयमिति कालविदो विदुः । अब्दो द्विषट्कमासैश्च तन्नाम शृणु चोद्धव
वैशाखो ज्येष्ठ आषाढः श्रावणो भाद्र एव च । आश्विनः कार्तिको मार्गः पौषो माघस्तु
फाल्गुनः ॥ ५९ ॥
चैत्रस्तु चरमो ज्ञेयो वर्षशेषो निरूपितः । वसन्तश्चैत्रवैशाखमासयुग्मेन कीर्तितः ॥६०॥
ज्येष्ठाषाढद्वयेनैव ग्रीष्मस्तु परिकीर्तितः । वर्षा श्रावणभाद्रे च ह्याश्विने कार्तिके शरत् ॥
मार्गे पौषे च हेमन्तः शिशिरो माघफाल्गुने । अब्दस्तु चायने द्वे वै चोत्तरे दक्षिणायने
माघादिषड्भिर्मितमुत्तरायणमीप्सितम् । श्रावणादिमासषट्कं दक्षिणायनमेव च ॥६३॥
माघादाषाढपर्यन्तं दिनं वृद्धं क्रमेण वै । नक्तं वृद्धं श्रावणाच्च पौषपर्यन्तमेव च ॥६४॥
प्रतिपत्पूर्णिमान्तश्च शुक्लपक्षः प्रकीर्तितः । पूर्णिमायाः प्रतिपदश्चामावास्यान्त एव च ॥
कृष्णपक्षस्तु विज्ञेयो वेदविद्भिर्निरूपितः । द्वितीया च तृतीया च चतुर्थी पञ्चमी तथा ॥
षष्ठी च सप्तमी चैव अष्टमी नवमी तथा । दशम्येकादशी चापि द्वादशी च त्रयोदशी ॥
चतुर्दशी कुहूर्वाद्दिनं तु गणनं स्मृतम् । अश्विनी भरणी चापि कृत्तिका रोहिणी तथा
मृगशिरस्तथाऽऽर्द्रा च नक्षत्रे द्वे पुनर्वसू । पुष्याश्लेषे मघा चैव पूर्वा चोत्तरफाल्गुनी ॥
हस्तश्चित्रे तथा स्वाती विशाखा चानुराधिका । ज्येष्ठा मूलं तथा ज्ञेया पूर्वाषाढोत्तरा तथा
श्रवणाभिजिती चैव धनिष्ठा च प्रकीर्तिता । ततः शतभिषा ज्ञेया पूर्वाभाद्रपदा तथा ॥
तथोत्तरा तु विज्ञेया रेवती चरमा स्मृता । अष्टाविंशति नक्षत्रं कथ्यं शशिनस्तथा ॥
क्रमेण ताभिः सार्धं च चन्द्रस्तिष्ठति नित्यशः । सप्तविंशति नक्षत्रं कथ्यं च श्रुतौ श्रुतम्॥

---

१ क 'स्यान्' । ६ ख 'पर' ।

अभिजिच्छ्रवणच्छाया तेनाष्टाविंशतिः स्मृता । एकदा च मधौ चन्द्रो रोहिण्या वामया सह
रेमे दिवानिशं नित्यं श्रवणा च चुकोप सा । छायां च दत्त्वा चन्द्राय ययौ तातान्तिकं भिया
ततः पितरमादाय सा चक्रे च विभागकम् । बभूव तेन नक्षत्रमभिजिन्नामकं पुरा ॥७९॥
एतच्छ्रुत्वा कृष्णमुखाच्छतशृङ्गे च पर्वते नक्षत्रं कथितं वत्स तिथ्या भ्रमति नित्यशः ॥
योगं च करणं चैव मद्वक्त्रेण निशामय । विष्कम्भः प्रीतिरायुष्मान्सौभाग्यः शोभनस्तथा ॥
अतिगण्डः सुकर्मा च धृतिः शूलस्तथैव च । गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ॥
वज्रं सिद्धिर्व्यतीपातो वरीयान्परिघः शिवः । सिद्धिः साध्यः शुभः शुक्लो ब्रह्मेन्द्रौ वैधृतिस्तथा
कीर्तितस्ते योगगणः करणं श्रूयतामिति । बवश्च बालवश्चैव कौलवस्तैतिलस्तथा ॥७९॥
गरश्च वणिजश्चापि विष्टिश्च शकुनिस्तथा । चतुष्पाच्चापि नागश्च किंस्तुघ्न इति कीर्तितम् ॥
नराणां चापि मासेन पितॄणां च दिवानिशम् । शुक्ले चापि दिनं तेषां कृष्णे नक्तं प्रकीर्तितम्
वत्सरेण नराणां च सुराणां च दिवानिशम् । दिनं तेषामुत्तरे च नक्तं च दक्षिणायने ॥
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः । मनोरायुःपरिमितं शक्रस्याऽऽयुः प्रकीर्तितम् ॥
पञ्चविंशत्सहस्रं च तथा पञ्चशतं परम् । तत्र सूर्यगतिर्नास्ति शक्रपातानुसारतः ॥८९॥
दिवानिशं च जानन्ति ब्रह्मलोकनिवासिनः । दण्डद्वयं नरफलं शक्रपातेन तत्फलम् ॥८६॥
एवं त्रिंशद्दिनेनैव धातुर्मासः प्रकीर्तितः । अब्दो द्वादशभिर्मासैरेवं तस्य शतायुषः ॥
ब्रह्मणः पतनेनैव निमेषाच्छ्रीहरेरपि । धातुः पातानुसारेण वैकुण्ठे न दिवानिशम् ॥८८॥
तत्र सूर्यगतिर्नास्ति चैवं गोलोकतः स्मृतम् । वैकुण्ठवासिनः सर्वे न वै जानन्त्यहर्निशम् ॥
चन्द्रस्यापि ग्रहाणां च गतिर्नास्ति च तत्र वै । चक्रं नैव भ्रमत्येव राशीनामिच्छया हरेः ॥
दिनं च तेजसा दीप्तं कृष्णस्य परमात्मनः । नक्तं तेजोविहीनं च हरौ च मन्दिरं गते ॥९१॥
एवं कालगतिस्तत्र विष्णुलोकेऽस्ति संततम् । कालस्वरूपो भगवान्परमात्मा निराकृतिः ॥
चन्द्रसूर्यगतिर्नास्ति पातालेषु च सप्तसु । तद्वासिनश्च जानन्ति शङ्कन्ते न दिवानिशम् ॥
दिने च मूर्ध्नि नागानां मणिर्ज्वलति नित्यशः । संध्यायां दीपयुक्तश्च रात्रिश्च तमसाऽऽवृता ॥
काले ब्राह्मप्रमाणेन जानन्ति तन्निवासिनः । यथा भुवि तथा तत्र परिमाणं प्रकीर्तितम् ॥
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । दिव्यैर्द्वादशसाहस्रैर्वत्सरैश्चापि तन्मितम् ॥
अष्टौ शतान्यप्यधिकं सहस्राणां चतुष्टयम् । दिव्यैर्वर्षैः कृतयुगं कालविद्भिर्निरूपितम् ॥
अष्टाविंशत्सहस्राण्यप्यधिकं परिमाणकम् । लक्षाणां च सप्तदश नृमानं परिकीर्तितम् ॥
अधिकं षट्शतान्येव सहस्राणां त्रयं तथा । दिव्यैर्वर्षैश्च त्रेतेति वत्स कालविदो विदुः ॥

१ ख. घर्तं ।

षण्णवतिसहस्राणि लक्षैर्द्वादशभिः ६६ । नृणां वर्षेश्च त्रेतेति कालविद्भि. प्रकीर्तितः ॥
चतुष्टयं शतानां चाप्यधिकं द्विसहस्रकम् । वर्षं दिव्यं द्वापरं च कालज्ञैः परिकीर्तितम् ॥
चतुःषष्टिसहस्राणि लक्षैरष्टभिरेव च । नृणां वर्षैर्द्वापरं च कालज्ञै. परिकीर्तितम् ॥ २ ॥
अधिकं द्विशतं चैव दिव्यं वर्षसहस्रकम् । एवंमितं कलियुगं वत्स प्राज्ञैर्निरूपितम् ॥ ३ ॥
द्वात्रिंशच्च सहस्रं च चतुर्लक्षं नृमानकम् । वर्षं चेति कलियुगे चकार कालकोविदः ॥ ४ ॥
लक्षैर्द्विचत्वारिंशद्भिः सह विंशत्सहस्रकैः । नृमानवर्षं. कालज्ञैर्व्यक्तमेव चतुर्युगम् ॥ ५ ॥
इति ते कथितं वत्स कालसंख्यानिरूपणम् । यथाश्रुतं यथाज्ञानं गच्छ वत्स हरेः पुरम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० राधोद्धवसं०
कालनिरूपणं नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

अथ सप्तनवतितमोऽध्यायः ।

नारायण उवाच—
गच्छन्तमुद्धवं दृष्ट्वा संत्रस्ता श्रीहरेः प्रिया । समुत्थायाऽऽसनाच्छीघ्रं हृदयेन विदूयता
गोपीभिः सहिता शीघ्रं समुद्विग्ना सहासती । ददौ शुभाशिषं तस्मै तस्य मूर्ध्नि करं तथा
स्निग्धदूर्वाक्षतं शुक्लधान्यं पुष्पं च मङ्गलम् । प्रेरयामास राजाश्च फलं पर्णं तथा दधि ॥
दर्पणं दर्शयामास पूर्णकुम्भं सपल्लवम् । सफलं गन्धसिन्दूरकस्तूरीचन्दनान्वितम् ॥ ४ ॥
पुष्पमाल्यं प्रदीपं च रत्नं गन्ध द्विजोत्तम । पतिपुत्रवती साध्वी काञ्चनं रजतं तथा ॥
तमुवाच महासाध्वी हितं सत्यं च मङ्गलम् । संगोप्य साश्रुनेत्रं च पतितं दुःखिता हृदि ॥

राधिकोवाच—
शुभं भवतु मार्गेते कल्याणमस्तु संततम् । ज्ञानं लभ हरेः स्थानात्कृष्णस्य सुप्रियो भव ॥
कृष्णभक्तिः कृष्णदास्यं वरेषु च वरं वरम् । श्रेष्ठा पञ्चविधा मुक्तेर्हरिभक्तिर्गरीयसी ॥ ८ ॥
ब्रह्मत्वादपि देवत्वादिन्द्रत्वादमरादपि । अमृतात्सिद्धिलाभाच्च हरिदास्यं सुदुर्लभम् ॥ ९ ॥
अनेकजन्मतपसा संभूय भारते द्विजः । हरिभक्तिं यदि लभेत्तस्य जन्म सुदुर्लभम् ॥ १० ॥
सफलं जीवनं तस्य कुर्वीत. कर्मणः क्षयम् । पितॄणां च सहस्राणि स्वस्य मातुश्च निश्चितम्
मातामहानां पुंसां च दासानां सोदरस्य च । बान्धवस्यापि पत्न्याश्च गुरूणां शिष्यभृत्ययोः
तावत्सु शोभनं तस्य यच्च कृष्णे समर्पणम् । तदर्थं शोभनं शुद्धं कृष्णसंतोषणं यत. ॥
ईश्वरस्यमापनं कर्म मत्प्रीतिविधिपूर्वकम् । तदेव मङ्गलं भव्यं परिणामसुखावहम् ॥ १४ ॥
तद्दर्भं तपः सत्यं तद्भक्तिः पूजनं तथा । तदुद्देशनशनं फेन्त्रं दारयत्रारणम् ॥ १५ ॥

१ क 'दास्यमीढि' ।

समस्तपृथिवीदानं प्रादक्षिण्यं भुवस्तथा । समस्ततीर्थस्नानं च समस्तं च व्रतं तपः ॥ १६॥
समस्तयज्ञकरणं सर्वदानफलं तथा । समस्तवेदवेदाङ्गपठनं पाठनं तथा ॥ १७ ॥
मतिरर्थं रक्षणं चैव ज्ञानदानं सुदुर्लभम् । अतिथीनां पूजनं च शरणागतरक्षणम् ॥ १८॥
सर्वदेवार्चनं चैव वन्दनं जपनं मनोः । भोजनं विप्रदेवानां पुरश्चरणपूर्वकम् ॥ १९ ॥
गुरुशुश्रूषणं चैव पित्रोर्भक्तिश्च पोषणम् । सर्वं श्रीकृष्णदास्यस्य कलां नार्हति षोडशीम् ॥
तस्मादुद्धव यत्नेन भज कृष्णं परात्परम् । निर्गुणं च निरीहं च परमात्मानमीश्वरम् ॥
नित्यं सत्यं परं ब्रह्म भक्तेः परमीश्वरम् । परिपूर्णतमं शुद्धं भक्तानुग्रहविग्रहम् ॥२३॥
कर्मिणां कर्मणां साक्ष्यप्रदं निर्लिप्तमेव च । ज्योतिःस्वरूपं परमं कारणानां च कारणम् ॥
सर्वस्वरूपं सर्वेशं सर्वसंपत्प्रदं शुभम् । भक्तिदं दास्यदं स्वस्य निजसंपत्प्रदप्रदम् ॥२४॥
विसृज्य ज्ञातिबुद्धिं च मात्सर्यमशुभप्रदम् । भज तं परमानन्दं सानन्दं नन्दनन्दनम् ॥
वेदे कौथुमिशाखायां तस्य नाम्नां सहस्रकम् । नन्दनन्दननामोक्तं कृतौ विघ्नं सुदुर्लभम् ॥
उद्धवः सर्वमाकर्ण्य परमं विस्मयं ययौ । ज्ञानं संप्राप्य संपूर्णं परिपूर्णो बभूव ह ॥२८॥
स्ववस्त्रं च गले बद्ध्वा दण्डवत्प्रणनाम ताम् । मूर्ध्ना केशैश्च तत्पादं निबध्य च पुनः पुनः ॥
पुलकाञ्चितसर्वाङ्गः साश्रुनेत्रश्च भक्तिनः । तद्विच्छेदशुना प्रेम्णा रुरोदोच्चैश्च नारद ॥
रुरोद राधा तत्प्रेम्णा रुरोद बल्लवीगणः । उद्धवस्य गलं धृत्वा स्थापयामास लोमतः ॥
उद्धवं मूर्छितं दृष्ट्वा जृम्भितं त्यक्तचेतनम् । शीघ्रमुत्थापयामास राधिका कृष्णमानसम् ।
चेतनं कारयामास जलं दत्त्वा मुखाम्बुजे । शुभाशिषं च प्रददौ वत्स जीवेति नारद ॥
उद्धवश्चेतनां प्राप्य तामुवाच सुसंसदि । रुदतीनां च गोपीनां पुरतः परमार्थदम् ॥३३॥

उद्धव उवाच—

धन्यो यशस्यो द्वीपानां जम्बूद्वीपः सुदुर्लभः । तत्र भारतवर्षं तु सर्वेषामीप्सितं वरम् ॥
अहो भारतवर्षे तु पुण्यं वृन्दावनं वनम् । राधापादाब्जसंस्पर्शरजःपूतं सुरेप्सितम् ॥
धन्या मान्या च पृथिवी त्रिषु लोकेषु पूजिता । राधायास्तीर्थपूतायाः पादाब्जरजसा वरा ॥
षष्टिवर्षसहस्राणि दिव्यानि पुष्करे पुरा । ब्रह्मणा च तपस्तप्तं वेदोक्तं भक्तिपूर्वकम् ॥
गोलोके राधिकाकृष्णदर्शनार्थं मनोरथात् । गोलोके राधिकाकृष्णौ न दृष्टः स्वमतस्तदा
श्रुता तेनाऽऽकाशवाणी सत्यरूपा च लीलया । वाराहे भारते वर्षे पुण्ये वृन्दावने वने ॥
रासोत्सवे महारम्ये तत्रैव रासमण्डले । द्रक्ष्यसीति च देवानां मध्ये सुरयो न संशयः ॥
श्रुत्वा च विरतो ब्रह्मा तपसः स्वगृहं गतः । कृष्णो दृष्टश्च हृष्टश्च परिपूर्णमनोरथः ॥४१॥

१ क. °मोक्षिम् ।

अथाऽष्टनवतितमोऽध्यायः ।

नारायण उवाच—
अथोद्धवो यशोदां च प्रणम्य त्वरया मुदा । खर्जूरकाननं वामे कृत्वा च यमुनां ययौ
स्नात्वा भुक्त्वा च तत्रैव जगाम मथुरां पुनः। ददर्श वटमूले च गोविन्दं रहसि स्थितम्
प्रफुल्लोऽप्युद्धवं दृष्ट्वा सस्मितं तमुवाच सः । रुदन्तं शोकदग्धं च साश्रुनेत्रं च कातरम्

श्रीभगवानुवाच—
आगच्छोद्धव कल्याणं राधा जीवति जीवति । कल्याणयुक्ता गोप्यश्च जीवन्ति विरहज्वरात्
शुभं गोपशिशूनां च वत्सानां च गवामपि । माता मे पुत्रविरहाद्यशोदा कीदृशी च सा
वद बन्धो यथार्थं तत्त्वां दृष्ट्वा किमुवाच सा । त्वयोक्ता जननी किं वा पुनः सा किमुवाच माम्
दृष्टं तद्यमुनाकूलं पुण्यं वृन्दावनं वनम् । निर्जनोपवनौघैश्च सुरम्यं रासमण्डलम् ॥७॥
रम्यं कुञ्जकुटीरौघै रम्यं क्रीडासरोवरम् । पुष्पोद्यानं विकसितं संकुलं च मधुव्रतैः ॥
भाण्डीरे च वटो दृष्टः सुस्निग्धो बालकान्वितः । दृष्टो गोष्ठो गवां दृष्टं गोकुलं गोकुलप्रजम्
यदि जीवति राधा सा दृष्ट्वा त्वां किमुवाच माम् । तत्सर्वं वद हे बन्धो चाऽऽन्दोलयति मे मनः
किमूचुर्गोपिकाः सर्वाः किमूचुर्गोपबालकाः । गोपाश्च वृद्धाः किंवोचुर्नन्दस्य जनकस्य मे
बलदेवस्य जननी किमूचे रोहिणी सती । किमूचुरपरा तान् बन्धुवल्लभबल्लवाः ॥१२॥
किं भुक्तं किमपूर्वं वा दत्तं मात्रा च राधया । कीदृग्वाक्यं सुमधुरं संभाषा कीदृशीति च
गोपानां गोपिकानां च शिशूना मातुरेव च । राधायाश्चापि कीदृग्वा मयि प्रेमोद्धवाधिकम्
मां च स्मरति माता मे मां च स्मरति रोहिणी । मां च स्मरति सा राधा मत्प्रेमविरहाकुला
मां च स्मरन्ति गोप्यश्च गोपाश्च गोपबालकाः । भाण्डीरे वटमूले च बालाः क्रीडन्ति मां विना
दत्तमन्नं ब्राह्मणीभिर्यन्न भुक्तं सुबोधभम् । प्रमदाबालकैः सार्धं तद्दृष्टं पदमीप्सितम् ॥
इन्द्रयागस्थलं दृष्टं दृष्टो गोवर्धनो वरः । ब्रह्मणा च हृता गावो यत्र तद्दृष्टमुत्तमम् ॥
श्रीकृष्णस्य वचः श्रुत्वा शोकार्त्तं मधुरान्वितम् । उद्धवः समुवाचेदं भगवन्तं सनातनम्

उद्धव उवाच—
यद्यदुक्तं त्वया नाथ सर्वं दृष्टं यथेप्सितम् । सफलं जीवनं जन्म कृतमत्रैव भारते ॥
दृष्टं भारतसारं च पुण्यं वृन्दावनं वनम् । तत्सारं व्रजभूमौ च सुरम्यं रासमण्डलम् ॥
तत्सारभूता गोलोकवासिन्यो गोपिका वराः । दृष्टा तत्सारभूता च राधा रासेश्वरी परा

१ क. °शी वरा ।

गोपानां गोपिकानां च सफलं जन्म जीवनम्। नित्यं पश्यन्ति ते पादपद्मं ब्रह्मादिदुर्लभम्
मानिनीं राधिकां सन्तः सदा सेवन्ति नित्यशः। योगीन्द्राश्च मुनीन्द्राश्च सिद्धेन्द्रा वैष्णवास्तथा
सतीं पुण्यां तीर्थपूतां स्वतः शुद्धां सुदुर्लभाम्। सुलभं यत्पदाम्भोजं ब्रह्मादीनां सुदुर्लभम्॥
यत्पादपद्मनखरं कृतं यावकचिह्नितम्। सर्वेश्वरेश्वरेणैव कृष्णेन परमात्मना॥४९॥
चकार यस्याः पूजां च स्तोत्रराजं सुदुर्लभम्। शतशृङ्गे स्वयं कृष्णो गोलोके रासमण्डले
पारिजातप्रसूनानामञ्जलिं गन्धचन्दनम्। ददौ दूर्वाक्षतं स्निग्धं यस्याः पादारविन्दयोः॥
त्रिंशत्सहस्रकोटीनां गोपीनामीश्वरी च या। तत्पट्त्रिंशत्सखीनां च ईश्वरी राधिकाभिधा
ये वा द्विषन्ति निन्दन्ति पापिनश्च हसन्ति च। कृष्णप्राणाधिकां देवदेवीं च राधिकां वराम्
ब्रह्महत्याशतं ते च लभन्ते नात्र संशयः। तत्पापेन च पच्यन्ते कुम्भीपाके च रौरवे॥
तप्ततैले महाघोरे ध्वान्ते कीटे च यन्त्रके। चतुर्दशेन्द्रावच्छिन्नं पितृभिः सप्तभिः सह
ततः परं च जायन्ते जन्मैकं कोलजन्मतः। दिव्यं वर्षसहस्रं च विष्ठाकीटाश्च पापतः॥
पुंश्चलीनां योनिकीटास्तद्रक्तमलभक्षकाः। मलकीटाश्च तन्मानवर्षं च पूयभक्षकाः॥९३॥
वेदे च काण्वशाखायामित्याह कमलोद्भवः। इत्युक्तवन्तं तं यान्तमुवाच राधिका पुनः
रुदन्तं च रुदन्ती सा कृष्णविच्छेदकातरा॥ ९४॥

राधिकोवाच —

गच्छ वत्स मधुपुरीं सर्वं बोधय माधवम्। यथा पश्यामि गोविन्दं प्रयत्नेन तथा कुरु
निष्फलं च गतं जन्म गच्छ मिथ्यादुराशया। आशा हि परमं दुःखं नैराश्यं परमं सुखम्
पश्चाद्विचिन्त्य गोविन्दं जीवन्मुक्ता बभूव सा। इत्युक्त्वा राधिका तत्र रुरोद च भृशं पुनः
*प्रणम्य तां रुदन्तीं च यशोदाभवनं ययौ। अथोद्धवे गते राधा मूर्छां संप्राप नारद॥*
तत्याज चेतनां शश्वद्बभूव ध्यानतत्परा। पङ्कस्थे पङ्कजदले सजले शयने मुने॥९९॥
गोप्यस्तां स्थापयामासुः साश्रुनेत्रोत्पला वरा। तत्स्पर्शमात्राच्छयनं भस्मीभूतं बभूव ह
पुनः स्निग्धस्थले स्निग्धनिचोले चन्दनाङ्किते। पुनस्तां स्थापयामासुर्विरहज्वरकातराम्
सहसा शुष्कतां प्राप सुगन्धि चन्दनोदकम्। निमेषेण शतयुगं तद्बभूवोद्धवं विना॥
हा होद्धवोद्धव हरिं शीघ्रं गत्वा वदेति च। समानय हरिं शीघ्रं मत्प्राणेश्वरमित्यपि
इत्युक्तवचनां दीनां संतापहृतचेतनाम्। रुरुदुर्गोपिकाः सर्वा राधां कृत्वा स्ववक्षसि॥
चेमनां धारयामासुर्बोधयामासुरीप्सितम्॥ ९६॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० राधोद्धवसं० सप्तनवतितमोऽध्यायः॥ ९७॥

१ क. "बभौ षद्‌गा सदर्दं हृ"।

अथाष्टनवतितमोऽध्यायः ।

नारायण उवाच—

अथोद्धवो यशोदां च प्रणम्य त्वरया मुदा । खर्जूरकाननं वामे कृत्वा च यमुनां ययौ
स्नात्वा भुक्त्वा च तत्रैव जगाम मथुरां पुनः। ददर्श वटमूले च गोविन्दं रहसि स्थितम्
प्रफुल्लोऽप्युद्धवं दृष्ट्वा सस्मितं तमुवाच सः । रुदन्तं शोकदग्धं च साश्रुनेत्रं च कातरम्

श्रीभगवानुवाच—

आगच्छोद्धव कल्याणं राधा जीवति जीवति । कल्याणयुक्ता गोप्यश्च जीवन्ति विरहज्वरात्
शुभं गोपशिशूनां च वत्सानां च गवामपि । माता मे पुत्रविरहाद्यशोदा कीदृशी च सा
वद बन्धो यथार्थं तत्त्वां दृष्ट्वा किमुवाच सा । त्वयोक्ता जननी किं वा पुनः सा किमुवाच माम्
दृष्टं तद्यमुनाकूलं पुण्यं वृन्दावनं वनम् । निर्जनोपवनौघैश्च सुरम्यं रासमण्डलम् ॥७॥
रम्यं कुञ्जकुटीरौघै रम्यं क्रीडासरोवरम् । पुष्पोद्यानं विकसितं संकुलं च मधुव्रतैः ॥
भाण्डीरे च वटो दृष्टः सुस्निग्धो बालकान्वितः। दृष्टो गोष्ठो गवां दृष्टं गोकुलं गोकुलव्रजम्
यदि जीवति राधा सा दृष्ट्वा त्वां किमुवाच माम्। तत्सर्वं वद हे बन्धो चाऽऽन्दोलयति मे मनः
किमूचुर्गोपिकाः सर्वाः किमूचुर्गोपबालकाः। गोपाश्च वृद्धाः किंवोचुर्नन्दवस्या जनकस्य मे
बलदेवस्य जननी किमूचे रोहिणी सती । किमूचुरपरा तात बन्धुवल्लभबल्लवाः॥१२॥
किं भुक्तं किमपूर्वं वा दत्तं मात्रा च राधया। कीदृग्वाक्यं सुमधुरं संभाषा कीदृशीति च
गोपानां गोपिकानां च शिशूना मातुरेव च। राधायाश्चापि कीदृग्वा मयि प्रेमोद्धवाधिकम्
मां च स्मरति माता मे मा च स्मरति रोहिणी। मां च स्मरति सा राधा मत्प्रेमविरहाकुला
मां च स्मरन्ति गोप्यश्च गोपाश्च गोपबालकाः। भाण्डीरे वटमूले च बालाः क्रीडन्ति मां विना
दत्तमन्नं ब्राह्मणीभिर्यन्न भुक्तं सुधोपमम् । प्रमदाबालकैः सार्धं तद्दृष्टं पदमीप्सितम् ॥
इन्द्रयागस्थलं दृष्टं दृष्टो गोवर्धनो वरः । ब्रह्मणा च हृता गावो यत्र तद्दृष्टमुत्तमम्॥
श्रीकृष्णस्य वचः श्रुत्वा शोकार्तं मधुरान्वितम्। उद्धवः समुवाचेदं भगवन्तं सनातनम्

उद्धव उवाच—

यद्यदुक्तं त्वया नाथ सर्वं दृष्टं यथेप्सितम् । सफलं जीवनं जन्म कृतमत्रैव भारते ॥
दृष्टं भारतसारं च पुण्यं वृन्दावनं वनम् । तत्सारं व्रजभूमौ च सुरम्यं रासमण्डलम् ॥
तत्सारभूता गोलोकवासिन्यो गोपिका वराः। दृष्टा तत्सारभूता च राधा रासेश्वरी परा

---

१ क. °शी वरा ।

कदलीवनमध्ये च निर्जने सुहृदस्थले । पङ्कस्थे पङ्कजदले सजले चन्दनार्चिते ॥२३॥
शयनेऽतिविषण्णा सा रत्नभूषणवर्जिता । अतीव मलिना क्षीणाऽऽच्छादिता शुक्लवाससा
सेविता सखिभिस्तत्र सततं श्वेतचामरैः । कृशोदरी निराहारा क्षणं श्वसिति च क्षणम्
क्षणं जीवति किं वा सा विरहज्वरपीडिता । किं वा जलं स्थलं किं वा नक्तं किं वा दिनं हरे
नरं पशुं न जानाति किं परं किमु बान्धवम् । बाह्यज्ञानविरहिता ध्यायमाना पदं तव ॥
त्रैलोक्ये यशसा भाति तन्मृत्युर्यशसंभवः । स्त्रीहत्यां नैव वाञ्छन्ति ज्ञानहीनाश्च दस्यवः
गच्छ शीघ्रं जगन्नाथ कदलीवनमीप्सितम् । बहिर्भूता न जगतां सा राधा त्वत्परायणा
अतीव भक्ता न त्याज्या प्रभुणा रक्षिता सदा । न हि राधापरा भक्ता न भूता न भविष्यति
मन्मथः शंकराद्भीतो भवांश्च तत्पुरःसरः । भवद्विधं पतिं प्राप्य कामदग्धा च राधिका ।
तस्मात्सर्वपरं कर्म तच्च केनापि वार्यते । मधुर्दहति चन्द्रश्च सततं किरणेन च ॥ ३२ ॥
शश्वत्सुगन्धिवायुश्चाप्यनाथा सर्वपीडिता । तप्तकाञ्चनवर्णाभा साऽधुना कज्जलोपमा ॥
सुवर्णवर्णकेशी च वासोवेषविवर्जिता । स्वयं विधाता त्वद्भक्तः सुराणां प्रवरो विभुः ॥
त्वद्भक्तः शंकरो देवो योगीन्द्राणां गुरोर्गुरुः । सनत्कुमारस्त्वद्भक्तो गणेशो ज्ञानिनां वरः
मुनीन्द्राश्च कतिविधास्त्वद्भक्ता धरणीतले । त्वद्भक्ता यादृशी राधा न भक्तस्तादृशोऽपरः
ध्यायते यादृशी राधा स्वयं लक्ष्मीर्न तादृशी । हरिराधाति चेत्येवं राधाग्रे स्वीकृतं मया
शीघ्रं गच्छ महाभाग तदेव सार्थकं कुरु । उद्धवस्य वचः श्रुत्वा जहसोवाच माधवः ॥
वेदोक्तं कथयामास सहितं सत्यसुन्दरम् ॥ ३८ ॥

श्रीभगवानुवाच —

स्त्रीषु धर्मविवाहेषु वृत्त्यर्थे प्राणसंकटे । • । ब्राह्मणार्थे नानृतं स्याज्जुगुप्सितम् ॥
तत्स्वीकारविहीनेन कुतस्त्वं नरकः कुतः । गोलोकं याति मद्भक्तो नरकं न हि पश्यति
त्वद्द्वारा साफल्यं करिष्यामि तथाऽपि च । यास्यामि स्वप्ने तन्मूलं गोपिना मातुरेव च
इत्याकर्ण्य ययौ गेहमुद्धवश्च महायशाः । हरिर्जगाम स्वप्ने च गोकुलं विरहाकुलम् ॥
स्वप्ने राधां समाश्वास्य ददौ ज्ञानं सुदुर्लभम् । संतोष्य क्रीडया तां च गोपिकाश्च यथोचितम्
बोधयित्वा यशोदां च स्तनं पीत्वा च निद्रिताम् । गोपान्गोपशिशूंश्चैव बोधयित्वा ययौ पुनः

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० अष्टनव-
तितमोऽध्यायः ॥ ९८ ॥

=====

१ क. पुरः ।

अथ नवनवतितमोऽध्यायः।

---

नारायण उवाच—

एतस्मिन्नन्तरे गर्गो वसुदेवाश्रमं ययौ। दण्डी छत्री च जटिलो दीप्तश्च ब्रह्मतेजसा ॥१॥
शुक्लयज्ञोपवीती च तपस्वी संयतः सदा। शुक्लदन्तः शुक्लवासा यदोः कुलपुरोहितः ॥२॥
तं दृष्ट्वा सहसोत्थाय देवकी प्रणनाम च। वसुदेवश्च भक्त्या च रत्नसिंहासनं ददौ ॥३॥
मधुपर्कं कामधेनुं वह्निशुद्धांशुकं तथा। दत्त्वा गन्धं पुष्पमाल्यं पूजयामास भक्तितः ॥४॥
मिष्टान्नं परमान्नं च पिष्टकं मधुरं मधु। भोजयामास यत्नेन ताम्बूलं वासितं ददौ ॥५॥
प्रणम्य कृष्णं मनसा सबलं तं विलोक्य च। उवाच वसुदेवं च देवकीं च पतिव्रताम् ॥६॥

गर्ग उवाच—

वसुदेव निबोधेनं सबलं पश्य पुत्रकम्। उपनीतोचितं शुद्धं वयसा सांप्रतं वरम् ॥७॥

वसुदेव उवाच—

शुभक्षणं कुरु गुरो यदूनां पूज्यदैवत। उपनीतोचितं शुद्धं प्रशंस्यं च सतामपि ॥८॥

गर्ग उवाच—

सर्वेभ्यो बान्धवेभ्योऽपि देह्यामन्त्रणपत्रिकाम्। संभारं कुरु यत्नेन वसुदेव वसूपम ॥९॥
परश्वः शुभमेवास्ति चोपनेतुमिहार्हसि। दिनं सतामपि मतं विशुद्धं चन्द्रतारयोः ॥१०॥
गर्गस्य वचनं श्रुत्वा वसुदेवो वसूपमः। प्रस्थापयामास सर्वान्बन्धून्मङ्गलपत्रिकाम् ॥११॥
घृतकुल्यां दुग्धकुल्यां दधिकुल्यां मनोहराम्। मधुकुल्यां गुडकुल्यां प्रचकार समन्वितः॥
राशिं नानोपहाराणां मणिरत्नं सुवर्णकम्। नानालंकारवस्त्रं च मुक्तामाणिक्यहीरकम् ॥
श्रीकृष्णो देववर्गांश्च मुनीन्द्रसिद्धपुंगवान्। सस्मार मनसा भक्त्या भक्तांश्च भक्तवत्सलः
शुभे दिने च संप्राप्ते ते च सर्वे समाययुः। मुनीन्द्रा बान्धवा देवा राजानो बहुशस्तथा ॥
देवकन्या नागकन्या राजकन्याश्च सर्वशः। विद्याधर्यश्च गन्धर्व्यश्चाऽऽययुर्गोपभाण्डकाः
ब्राह्मणा भिक्षुका भट्टा यतयो ब्रह्मचारिणः। संन्यासिनश्चावधूता योगिनश्च समाययुः ॥
स्त्रीबान्धवाः स्वबन्धूना वर्गो मातामहस्य च। बन्धूनां बान्धवाः सर्वे स्वाययुः शुभकर्मणि
भीष्मो द्रोणश्च कर्णश्चाप्यश्वत्थामा कृपो द्विजः। सपुत्रो धृतराष्ट्रश्च सभार्यश्च समाययौ
कुन्ती सपुत्रा विधवा हर्षशोकसमाप्लुता। नानादेशोद्भवा योग्या राजानो राजपुत्रकाः ॥
अत्रिर्वसिष्ठश्च्यवनो भरद्वाजो महातपाः। याज्ञवल्क्यश्च भीमश्च गार्ग्यो गर्गो महातपाः
वत्सः सपुत्रश्च धर्मो जैगीषव्यः पराशरः। पुलहश्च पुलस्त्यश्चाप्यगस्त्यश्चापि सौभरिः

सनकश्च सनन्दश्च तृतीयश्च सनातनः। सनत्कुमारो भगवान्वोढुः पञ्चशिखस्तथा ॥२३॥
दुर्वासाश्चाङ्गिरा व्यासो व्यासपुत्रः शुकस्तथा॥ कुशिकः कौशिको राम ऋष्यशृङ्गो विभाण्डकः
शृङ्गी च वामदेवश्च गौतमश्च गुणार्णवः। क्रतुर्यतिश्चाऽऽरुणिश्च शुक्राचार्यो बृहस्पतिः॥
अष्टावक्रो वामनश्च वाल्मीकिः पारिभद्रकः। पैलो वैशंपायनश्च प्रचेताः पुरुमित्तथा ॥
भृगुर्मरीचिर्मधुजित्कश्यपश्च प्रजापतिः। अदितिर्देवमाता च दितिर्दैत्यप्रसूस्तथा ॥२७॥
सुमन्तुश्च सुभानुश्च कण्वः कात्यायनस्तथा। मार्कण्डेयो लोमशश्च कपिलश्च पराशरः॥
पाणिनिः पारियात्रश्च पारिभद्रश्च पुंगवः। संवर्तश्चाप्युतथ्यश्च नरोऽहं चापि नारद ॥
विश्वामित्रः शतानन्दो जाबालिस्तैतिलिस्तथा। सांदीपनिश्च ब्रह्मांशो योगिनां ज्ञानिनां गुरुः
उपमन्युर्गौरमुखो मैत्रेयश्च श्रुतश्रवाः। कठः कचश्च करखो भरद्वाजश्च धर्मवित् ॥३१॥
सशिष्या मुनयः सर्वे वसुदेवाश्रमं ययुः वसुदेवश्च तान्दृष्ट्वा ववन्दे दण्डवद्भुवि॥३२॥
अथास्मिन्नन्तरे ब्रह्मा सस्मितो हंसवाहनः। रत्ननिर्माणयानेन पार्वत्या सह शंकरः ॥
नन्दी स्वयं महाकालो वीरभद्रः सुभद्रकः। मणिभद्रः पारिभद्रः कार्तिकेयो गणेश्वरः ॥
गजेन्द्रेण महेन्द्रश्च धर्मश्चन्द्रो रविस्तथा। कुबेरो वरुणश्चैव पवनो वह्निरेव च ॥३५॥
यमः संयमिनीनाथो जयन्तो नलकूबरः। सर्वे ग्रहाश्च वसवो रुद्राश्च सगणास्तथा॥३६॥
आदित्याश्च तथा शेषो नानादेवाः समाययुः। वसुदेवश्च भक्त्या च ववन्दे शिरसा भुवि
तुष्टाव परया भक्त्या देवेन्द्रांश्च तथा सुरान्। भक्तिनम्रात्ममूर्धा च पुलकाञ्चितविग्रहः॥

वसुदेव उवाच—

परं ब्रह्म परं धाम परमेशः परात्परः। स्वयं विधाता मद्गेहे जगतां परिपालकः ॥३९॥
वेदानां जनकः स्रष्टा सृष्टिहेतुः सनातनः। सुराणां च मुनीन्द्राणां सिद्धेन्द्राणां गुरोर्गुरुः
स्वप्ने यत्पादपद्मं च क्षणं द्रष्टुं सुदुर्लभम्। शिवस्मरणमात्रेण सर्वानिष्टाः पलायिताः।
सर्वमङ्गलकल्याणं लभते नरः। सर्वाग्रे पूजनं यस्य देवानामग्रणीः परः ॥४२॥
घटेषु मङ्गलं मन्त्रैर्भक्त्या चाऽऽवाहनेन च। स्वयं गणेशो भगवान् साक्षाद्विघ्नविनाशकः
कार्तिकेयश्च भगवान्देवादीनां च पूजितः। देवानां प्रवरा पूज्या महालक्ष्मीः परात्परा॥
मद्गेहे पार्वती माता जगतामादिरूपिणी। सर्वशक्तिस्वरूपा च मूलप्रकृतिरीश्वरी ॥४५॥
परात्पराणां परमा परब्रह्मस्वरूपिणी। यस्याः पादौ समाराध्य वाञ्छितं लभते नरः॥
शरत्काले च भक्त्या च सा साक्षान्मम मन्दिरे। सर्वदेवैश्च सहिता सगणा भक्तवत्सला ॥
दयामयी च कृपया चाऽऽविर्भूता च भारते। धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम

१ क. 'त्तिलि'

आगताऽसि यतो दुर्गे परमाद्या च मद्गृहे। एवं सर्वांश्च तुष्टाव क्रमेण च परस्परम् ॥
सर्वान्मुनीन्द्रान्विप्रांश्च गले बद्ध्वांऽशुकं मुदा। प्रत्येकं वासयामास रत्नसिंहासने वरे ॥
पूजयामास विधिवत्क्रमेण च पृथक्पृथक्। प्रत्येकं वरयामास ब्रह्मादींश्च सुरानपि ॥९१॥
मुनिवर्गान्ब्राह्मणांश्च भक्त्या गर्गं पुरोहितम्। रत्नैः प्रवालैर्मणिभिर्मुक्तामाणिक्यहीरकैः॥
भूषणैर्वसनैश्चैव माल्यैश्च गन्धचन्दनैः। रत्नसिंहासने रम्ये सर्वेषां मध्यदेशतः ॥९३॥
गणेशं वासयामास पूजार्थं शुभकर्मणि। सप्ततीर्थोदकेनैव सुवर्णकलशेन च ॥ ९४ ॥
पुष्पचन्दनयुक्तेन शीतेन वासितेन च। स्वर्गगङ्गाजलेनैव पुष्करोदकपुण्यतः ॥९५॥
पञ्चामृतेन शुद्धेन पञ्चगव्येन भक्तितः। हेरम्बं स्नापयामास समुद्रोदेन मन्त्रतः ॥
वरयामास माल्येन पारिजातस्य नारद। रत्नेन्द्रभूषणेनैव वह्निशुद्धेन वाससा ॥९७॥
गन्धचन्दनपुष्पैश्च रत्नमाल्याङ्गुलीयकम्। तुष्टाव पार्वतीपुत्रं सर्वदेवाधिपं शुभम् ॥
विघ्ननिघ्नकरं शान्तं भगवन्तं सनातनम् ॥ ९८ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवद्गुणवर्णने गणेशाभिषेको नाम नवनवतितमोऽध्यायः ॥ ९९ ॥

---

## अथ शततमोऽध्यायः।

नारायण उवाच—

अथादितिर्दितिश्चैव देवकी रोहिणी रतिः। सरस्वती च सावित्री यशोदा च पतिव्रता
लोपामुद्राऽरुन्धती च अहल्या तारका तथा। प्रयुक्ताः पार्वतीं दृष्ट्वा वेगेन मन्दिरादपि॥
परस्परं च संभाष्य समाश्लिष्य पुनः पुनः। प्रणम्य वेशयामासुर्मन्दिरं रत्ननिर्मितम्[1]॥
रत्नसिंहासने रम्ये वासयामासुरीश्वरीम्। वरयामासुर्माल्येन वाससा रत्नभूषणैः ॥४॥
पारिजातस्य पुष्पं च शक्रानीतं मनोहरम्। ददौ तत्पादपद्मे च देवकी भक्तिपूर्वकम् ॥
सिन्दूरबिन्दुं सीमन्ते भाले चन्दनबिन्दुकम्। कस्तूरीकुङ्कुमाढ्यं च प्रददौ परितस्तयोः।
मिष्टान्नं भोजयामास शीततोयं सुवासितम्। ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् ॥
अलक्तकं च प्रददौ नखेषु पादपद्मयोः। कुङ्कुमस्यापि रागं च सिषेवे श्वेतचामरैः ॥८॥
संपूज्य पार्वतीं देवीं मुनिपत्नीः क्रमेण च। पूजयामास विधिवत्पतिपुत्रवतीः सतीः ॥ ९॥
राजकन्या देवकन्या नागकन्या मनोहराः। मुनिकन्या बन्धुकन्याः पूजयामास सुव्रता ॥
वाद्यं नानाविधं रम्यं वादयामास कौतुकात्। मङ्गलं कारयामास भोजयामास बालकान्॥

---

१ क. °पुरःसरम्। २ क. °रत्नशोभितम्।

भैरवीं पूजयामास मधुराग्रामदेवताम्। उपचारैः षोडशभिः षष्ठीं मङ्गलचण्डिकाम् ॥
पुण्यं स्वस्त्ययनं शुद्धं कारयामास मङ्गलम्। वेदांश्च पाठयामास वसुदेवस्य वल्लभा॥१३॥
स्वर्गङ्गासुजलेनैव सुवर्णकलशेन च। स्नापयामास सबलं श्रीकृष्णं पुत्रवत्सला ॥ १४ ॥
वस्त्रचन्दनमाल्यैश्च तयोर्वेषं चकार सा। रत्नेन्द्रसारनिर्माणभूषणैश्च मनोहरैः ॥ १५ ॥
मातृभूषणभूषाढ्यः सबलः कृष्ण एव च। आययौ च सभां देवमुनीन्द्राणां च नारद ॥
दृष्ट्वा तं जगतां नाथमुत्तस्थौ प्रजवेन च। स्वयं विधाता शम्भुश्च शेषो धर्मश्च भास्करः ॥
देवाश्च मुनयश्चैव कार्तिकेयो गणेश्वरः। पृथक्पृथक् क्रमेणैव तुष्टाव परमेश्वरम् ॥१८॥

ब्रह्मोवाच—

नाथानिर्वचनीयोऽसि भक्तानुग्रहविग्रहः। वेदानिर्वचनीयं च क स्वां स्तोतुमिहेश्वरः ॥

महादेव उवाच—

देहेषु देहिनां शश्वत्स्थितं निर्लिप्तमेव च। कर्मिणां कर्मणां शुद्धं साक्षिणं साक्षतं विभुम्॥
किं स्तौमि रूपशून्यं च गुणशून्यं च निर्गुणम् ॥ २० ॥

अनन्त उवाच—

किंवा जानाम्यहं नाथ त्वामहोऽनन्तमीश्वरम्। अनन्तकोटिब्रह्माण्डकारणं दुःखवारणम्॥
महाविष्णोश्च लोम्नां च विवरेषु जलेषु च। सन्ति विश्वान्यसंख्यानि चित्राणि कृत्रिमाणि च
सन्ति सन्तश्च देवाश्च ब्रह्मविष्णुशिवात्मकाः त्वदंशाः प्रतिबिम्बेषु तीर्थानि भारतं तथा॥
ब्रह्माण्डैकस्थितोऽहं च सूक्ष्मनागस्वरूपकः स्थापितश्च त्वया कूर्मे गजेन्द्रे मशको यथा ॥
परमाणुपरं सूक्ष्मं विश्वेषु नास्ति कुत्रचित्। महाविष्णोः परं स्थूलं समो नास्ति च कुत्रचित्
महाविष्णोः परस्त्वं च त्वत्परो नास्ति कश्चन। स्थूलात्स्थूलतरो देव सूक्ष्मात्सूक्ष्मतमो महान्
आधारश्च महाविष्णोर्जलरूपो भवान्स्वयम्। जलाधारो हि गोलोकस्त्वं च स्थावररूपधृक्
सर्वाधारो महान्वायुः श्वासनिःश्वासरूपकः। भक्तानुग्रहदेहस्य नित्यस्य भवतो विभो ॥
भवनैर्बहुतरैर्वाऽपि त्वया दत्तैः पुरैव च। स्तोतुमिच्छामि त्वद्योगं न दत्तं ज्ञानमीश्वरम् ॥

देवा ऊचुः—

त्वामनन्तं यदि स्तोतुं देवोऽनन्तो न हीश्वरः। न हि स्वयं विधाता च न हि ज्ञानात्मकः शिवः
सरस्वती जडीभूता किं कुर्मः स्तवनं वयम् ॥ २१ ॥

मुनीन्द्रा ऊचुः—

वेदा न शक्ताः स्तोतुं चेदशक्ताश्चैव शारदा परम्। वयं वेदविदः सन्तः किं कुर्मः स्तवनं तव॥
इदं स्तोत्रं महापुण्यं देवैश्च मुनिभिः कृतम्। यः पठेत्संयतः शुद्धः पूजाकाले च भक्तिमान् ॥

इह लोके सुखं भुक्त्वा लब्ध्वा ज्ञानं निरञ्जनम् । रत्नयानं समारुह्य गोलोकं स च गच्छति॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० भगवदुपनयने शततमोऽध्यायः । १०० ॥

अथैकाधिकशततमोऽध्यायः ।

नारायण उवाच—

संस्तूय देवा मुनयो विरेमुर्नहि मानसे । ददृशुः प्राङ्गणे कृष्णं शोभितं पीतवाससा ॥ १ ॥
यथा सौदामिनीयुक्तं नवीनजलदं मुने । बकपङ्क्तियुतं चैव मालतीमालया तथा ॥२॥
कपाले मण्डलाकारकस्तूरीयुक्तचन्दनम् । सकलङ्कं मृगाङ्कं च शोभितं जलदे तथा ॥३॥
द्विभुजं श्यामलं कान्तं राधाकान्तं मनोहरम् । ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहविग्रहम् ॥
रत्नकेयूरवलयरत्नमञ्जीररञ्जितम् । रुदन्त पितुरुत्सङ्गे बलेन सहितं परम् ॥ ५ ॥
अथ मङ्गलकाले च शुभलग्ने मनोरमे । सर्वाक्षिते ग्रहैः सौम्यैर्जीवग्रहग्रासिधिपे स्थिते ॥
असद्ग्रहैरदृष्टे च सद्ग्रहैरीक्षित एव च शुभकर्मसमारम्भं स्वस्तिवाचनपूर्वकम् ॥ ७ ॥
चकार वसुदेवश्चाप्याज्ञया सुरविप्रयोः । दत्त्वा सुवर्णशतकं ब्राह्मणाय च सादरम्॥८॥
देवेन्द्रांश्च मुनीन्द्रांश्च नमस्कृत्य पुरोहितम् । गणेशं च दिनेशं च वह्निं च शंकरं शिवाम्
संपूज्य देवषट्कं च साक्षतैर्देवसंसदि । उपचारैः षोडशभिः संयतो भक्तिपूर्वकम् ॥
पुत्राधिवासनं चक्रे वेदमन्त्रेण संसदि । संपूज्य नानादेवांश्च दिक्पालांश्च नवग्रहान् ॥
दत्त्वा पञ्चोपचारांश्च मत्स्या षोडश मातृकाः । दत्त्वा च वसुधारां च सप्तवाराम्घृतेन च ॥
वेदिराजं वसुं नत्वा संपूज्य प्रययौ पुनः । वृद्धिश्राद्धं सुनिर्वाप्य यत्किंचिद्दैविकं तथा ॥
यज्ञं कृत्वा तु वेदोक्तं यज्ञसूत्रं ददौ मुदा । बलदेवाग्रजायैव कृष्णाय परमात्मने ॥
गायत्रीं च ददौ ताभ्यां मुनिः सांदीनिपनिस्तथा । भिक्षां ददौ च प्रथमं पार्वती परमादरात्
अमूल्यरत्नपात्रस्थं मुक्तामाणिक्यहीरकम् हीरसारविनिर्माणं भिक्षां दत्तं च हारकम्॥
शुभाशिषं च प्रददौ शुक्लपुष्पेण दूर्वया । ततोऽदितिर्दितिश्चैव मुनिपत्न्यश्च देवकी ॥
यशोदा रोहिणी हृष्टा सावित्री च सरस्वती । प्रत्येकं प्रददौ भिक्षां मणिकाञ्चनभूषिताम्
देवकन्या नागकन्या राजकन्याः पतिव्रताः । कामिन्यो बान्धवानां च सस्मिताः स्निग्धलोचनाः
इन्द्राणी वरुणानी च पवनानी च रोहिणी । कुबेरपत्नी स्वाहा च रतिः कामस्य कामिनी ॥
प्रत्येकं प्रददौ भिक्षां रत्नभूषणभूषिताम् । भिक्षां गृहीत्वा भगवान्सवज्ञो भक्तिपूर्वकम् ॥

किंचिद्ददौ च गर्गाय किंचित्स्वगुरवे तथा । वैदिकं कर्म निर्वाप्य गर्गाय दक्षिणां ददौ
देवांश्च भोजयामास ब्राह्मणांश्चापि सादरम् । ये ये समाययुर्यज्ञे ते च दत्त्वा शुभाशिषम्
कृष्णाय बलदेवाय प्रहृष्टाः प्रययुर्गृहम् । नन्दः सभार्यो निर्वाप्य शुभकर्म सुतस्य वै॥
क्रोडे कृत्वा बलं कृष्णं चुचुम्ब वदनं तयोः । उच्चै रुरोद नन्दश्च यशोदा च पतिव्रता
श्रीकृष्णस्तं समाश्वास्य बोधयामास यत्नतः ॥ २९ ॥

श्रीकृष्ण उवाच—

सानन्दं गच्छ हे मातर्यशोदे तात सत्वरम् । त्वमेव माता पोष्ट्री त्वं पिता च परमार्थतः
अवन्तिनगरं तात यास्यामि सबलोऽधुना । मुनेः सांदीपनेः स्थानं वेदपाठार्थमीप्सितम्
तत आगत्य सुचिरं काले भवति दर्शनम् । कालः करोति कलनं स च भेदं करोति च ॥
सर्वं कलिकृतं मातर्भेदं संमिलनं नृणाम् । सुखं दुःखं च हर्षं च शोकं च मङ्गलालयम्
मया दत्तं च तत्त्वं च योगिनामपि दुर्लभम् । सर्वं नन्दश्च सानन्दं त्वामेव कथयिष्यति॥
इत्युक्त्वा जगतां नाथो वसुदेवसभां ययौ । तदाज्ञया क्षणं प्राप्य ययौ सांदीपनेर्गृहम्
वसुदेवं देवकीं च संभाष्य विनयेन च । नन्दः सभार्यः प्रययौ हृदयेन विदूयता ॥
मुक्तामणिं सुवर्णं च माणिक्यं हीरकं तथा । वह्निशुद्धांशुकं रत्नं नन्दाय देवकी ददौ
श्वेताश्वं च गजेन्द्रं च सुवर्णरथमुत्तमम् । नन्दाय कृष्णः प्रददौ वसुदेवश्च सादरम् ॥
तयोरनुव्रजन्त्यश्च देवकीप्रमुखाः स्त्रियः । वसुदेवस्तथाऽक्रूरोऽप्युद्धवश्च ययौ मुदा ॥
कालिन्दीनिकटं गत्वा ते सर्वे रुरुदुः शुचा । परस्परं च संभाष्य ते सर्वे स्वालयं ययुः॥
कुन्ती सपुत्रा विधवा वसुदेवाज्ञया मुने । नानारत्नमणिं प्राप्य प्रययौ स्वालयं मुदा ॥
वसुदेवो देवकी च पुत्रकल्याणहेतवे । नानारत्नमणिं वस्त्रं सुवर्णं रजतं तथा ॥३८॥
मुक्तामाणिक्यहारं च मिष्टान्नं च सुधोपमम् । भट्टेभ्यो ब्राह्मणेभ्यश्च प्रददौ सादरं मुदा
महोत्सवं वेदपाठं हरेर्नामैकमङ्गलम् । विप्राणां भोजनं चैव कारयामास यत्नतः॥४०॥
ज्ञातीनां बान्धवानां च पुरस्कारं यथोचितम् । चकार मणिमाणिक्यमुक्तावस्त्रैर्मनोहरैः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० नारदना० उत्त० भगवदुपनयनं
नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

अथ द्व्यधिकशततमोऽध्यायः ।

---

नारायण उवाच—

कृष्णः सांदीपनेर्गेहं गत्वा च सबलो मुदा । ननमश्चकार स्वगुरुं गुरुपत्नीं पतिव्रताम् ॥

शुभाशिषं गृहीत्वा च दत्त्वा रत्नमणिं हरिः । गुरवे तस्य भार्यायै तमुवाच यथोचितम्

श्रीकृष्ण उवाच--

त्वत्तो विद्यां लभिष्यामि वाञ्छितां वाञ्छितं मम । कृत्वा शुभक्षणं विप्र मां पाठय यथोचितम्

ओमित्युक्त्वा मुनिश्रेष्ठः पूजयामास तं मुदा । मधुपर्कप्राशनेन गवा वस्त्रेण चन्दनैः ॥

मिष्टान्नं भोजयामास ताम्बूलं च सुवासितम् । सुप्रियं कथयामास तुष्टाव परमेश्वरम् ॥

सांदीपनिरुवाच—

परं ब्रह्म परं धाम परमीश परात्पर । स्वेच्छामयं स्वयंज्योतिर्निर्लिप्तैको निरङ्कुशः॥

भक्तैकनाथ भक्तेष्ट भक्तानुग्रहविग्रह । भक्तवाञ्छाकल्पतरो भक्तानां प्राणवल्लभ ॥

मायया बालरूपोऽसि ब्रह्मेशशेषवन्दितः । मायया भुवि भूपाल भुवो भारक्षयाय च ॥

योगिनो यं विदन्त्येवं ब्रह्मज्योतिः सनातनम् । ध्यायन्ते भक्तनिवहा ज्योतिरभ्यन्तरे मुदा

द्विभुजं मुरलीहस्तं सुन्दरं श्यामरूपकम् । चन्दनोक्षितसर्वाङ्गं सस्मितं भक्तवत्सलम् ॥

पीताम्बरधरं देवं वनमालाविभूषितम् । लीलाभङ्गतरङ्गैश्च निन्दितानङ्गमूर्छितम् ॥

अलक्तभवनं तद्वत्पादपद्मं सुशोभनम् । कौस्तुभोद्भासिताङ्गं च दिव्यमूर्तिं मनोहरम् ॥

ईषद्धास्यप्रसन्नं च सुवेषं प्रस्तुतं सुरैः । देवदेवं जगन्नाथं त्रैलोक्यमोहनं परम् ॥ १३ ॥

कोटिकन्दर्पलीलाभं कमनीयमनीश्वरम् । अमूल्यरत्ननिर्माणभूषणौघेन भूषितम् ॥ १४ ॥

वरं वरेण्यं वरदं वरदानामभीप्सितम् । चतुर्णामपि वेदानां कारणानां च कारणम् ॥ १५ ॥

पाठार्थं मत्प्रियस्थानमागतोऽसि च मायया । पाठं ते लोकशिक्षार्थं रमणं गमनं रणम् ॥

स्वात्मारामस्य च विभोः परिपूर्णतमस्य च ॥ १६ ॥

त्यक्त्वा प्राकृतिकं मिथ्या नश्वरं च कलेवरम् विधाय निर्मलं देहं जन्ममृत्युजराहरम्
इत्युक्त्वा चतुरो वेदान्पाठित्वा मुनिपुंगवात् । मासेन परया भक्त्या दत्त्वा पुत्रं मृतं पुरा
रत्नानां च त्रिलक्षं च मणीनां पञ्चलक्षकम् । हीरकाणां चतुर्लक्षं मुक्तानां पञ्चलक्षकम् ॥
माणिक्यानां द्विलक्षं च वस्त्रं त्रैलोक्यदुर्लभम् । हारं च दुर्गया दत्तं हस्तरत्नाङ्गुलीयकम्
दशकोटिं सुवर्णानां गुरवे दक्षिणां ददौ । अमूल्यरत्ननिर्माणं नारीसर्वाङ्गभूषणम् ॥२८॥
गुरुप्रियायै प्रददौ वह्निशुद्धांशुकं वरम् । मुनिर्दत्त्वा च पुत्राय तत्सर्वं प्रियया सह ॥२९॥
सद्रत्नरथमारुह्य ययौ गोलोकमुत्तमम् । तमद्भुतं हरिं दृष्ट्वा प्रययौ स्वालयं मुदा ॥३०॥
एवं ब्रह्मण्यदेवस्य चरित्रं शृणु नारद । इदं स्तोत्रं महापुण्यं यः पठेद्भक्तिपूर्वकम् ॥३१॥
श्रीकृष्णे निश्चलां भक्तिं लभते नात्र संशयः । अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः
इह लोके सुखं प्राप्य यात्यन्ते श्रीहरेः पदम् । तत्र नित्यं हरेर्दास्यं लभते नात्र संशयः

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० मुनिपत्नीस्तोत्रं नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

अथ त्र्यधिकशततमोऽध्यायः ।

नारायण उवाच—

अथाऽऽगत्य मधुपुरीं प्रणम्य पितरं विभुः । सबलो वटमूले च सस्मार गरुडं हरिः ॥१॥
सादरं लवणोदं च विश्वकर्माणमीप्सितम् । तत्याज गोपवेषं च नृपवेषं दधार सः ॥ २ ॥
एतस्मिन्नन्तरे चक्रमाजगाम हरिं स्वयम् । परं सुदर्शनं नाम सूर्यकोटिसमप्रभम् ॥ ३ ॥
तेजसा हरिणा तुल्यं परं वैरिविमर्दनम् । अव्यर्थमस्त्रमस्त्राणां प्रवरं परमं परम् ॥ ४ ॥
रत्नयानं पुरः कृत्वा गरुडो हरिसंनिधिम् । विश्वकर्मा सशिष्यश्च जलधिः कम्पितस्तथा
हरिं प्रणेमुस्ते सर्वे मूर्ध्ना च भक्तिपूर्वकम् । सस्मितः सादरं यत्नात्तानुवाच कृपानिधिः ॥

श्रीकृष्ण उवाच—

हे समुद्र महाभाग स्थलं च शतयोजनम् । देहि मे नगरार्थं च पश्चाद्दास्यामि निश्चितम्
नगरं कुरु हे कारो त्रिषु लोकेषु दुर्लभम् । रमणीयं च सर्वेषां कमनीयं च योषिताम् ॥
वाञ्छितं चापि भक्तानां वैकुण्ठसदृशं परम् । सर्वेषामपि स्वर्गाणां परं पारमभीप्सितम् ॥
दिवानिशं गणश्रेष्ठ संनिधौ विश्वकर्मणः । स्थितिं कुरु महाभाग यावन्निर्माति द्वारकाम्

दिवानिशं च मत्पार्श्वे चक्रश्रेष्ठ स्थितिं कुरु । ओमित्युक्त्वा तु प्रययुः सर्वे चक्रं विना मुने
कंसस्य पितरं भद्रमुग्रसेनं महाबलम् । नृपं चकार नगरे क्षत्रियाणां सतामपि ॥ १२ ॥
विजित्य च जरासंधं निहत्य यवनं तथा । उपायेन महाभाग निर्माणकममीश्वरः ॥ १३ ॥

श्रीभगवानुवाच—

शतयोजनपर्यन्तं नगरं सुमनोहरम् । पद्मरागैर्मरकतैरिन्द्रनीलैरनुत्तमैः ॥ १४ ॥
रुचकैः पारिभद्रैश्च पेलवैश्च स्यमन्तकैः । गन्धकैर्गोलिभैश्चैव चन्द्रकान्तादिभिस्तथा ॥
सूर्यकान्तादिभिश्चैव पुत्रैश्च स्फटिकाकृतैः । हरिद्वर्णैश्च मणिभिः श्यामैर्गौरमुखैश्चपैः ॥
गोरोचनाभिः पीतैश्च दाडिमीबीजरूपकैः । पद्मबीजनिभैश्चैव नीलैः कमलवर्णकैः ॥ १७ ॥
मणिभिः कज्जलाकारैरुज्ज्वलैश्च परिष्कृतैः । श्वेतचम्पकवर्णाभैस्तप्तकाञ्चनसंनिभैः ॥ १८ ॥
स्वर्णमूल्यशतगुणैरपि दृक्कैः सुशोभनैः । गरिष्ठैश्च वरिष्ठैश्च मणिश्रेष्ठैश्च पूजितैः ॥ १९ ॥
यथाविधानं यद्योग्यं यत्र यन्मुक्तमीप्सितम् । मणीनां हरणं चैव यक्षसंघा हिमालयात् ॥
दिवानिशं करिष्यन्ति यावन्निर्माणपूर्वकम् । यक्षैश्च सप्तभिर्लक्षैः कुबेरप्रेरितैरपि ॥ २१ ॥
वेतालक्षैः कूष्माण्डलक्षैः शंखयोनिजैः । दानवैर्ब्रह्मरक्षोभिः शैलकन्यानियोजितैः ॥
कुरु दिव्यं च पत्नीनां सहस्राणां च षोडश । अन्यपत्नीजनस्यापि चाष्टाधिकशतस्य च
शिबिरं परिखायुक्तमुच्चैःप्राकारवेष्टितम् । युक्तद्वादशशालं च सिंहद्वारपरिष्कृतम् ॥ २४ ॥
युक्तं चित्रैर्विचित्रैश्च कृत्रिमैश्च कपाटकैः । निषिद्धवृक्षरहितं प्रसिद्धैश्च परिष्कृतम् ॥
सुलक्षणं चन्द्रवेधं प्राङ्गणं च तथैव च । यदूनामाश्रमं दिव्यं किंकराणां तथैव च ॥
सर्वत्र सिद्धं निलयमुग्रसेनस्य भूभृतः । आश्रमं सर्वतोभद्रं वसुदेवस्य मत्पितुः ॥ २७ ॥

विश्वकर्मोवाच—

के ते वृक्षाः प्रशस्ताश्च निषिद्धाश्चापि केचन । भद्राभद्रपदाश्चापि तान्वदस्व जगद्गुरो
केषामपि विनियुक्तं च शिबिरं च शुभाशुभम् । दिशि कुत्र जलं भद्रमभद्रं च वद प्रभो
भद्रदश्च को वृक्षो दिशि कुत्र प्रवर्तते । किं प्रमाणं गृहाणां च प्राङ्गणानां सुरेश्वर ॥
मङ्गलं कुसुमोद्यानं दिशि कुत्र तरोस्तथा । प्राकाराणां किं प्रमाणं परिखाणां सुरेश्वर ॥
द्वाराणां च गृहाणां च प्राकाराणां प्रमाणकम् । कस्य कस्य तरोः काष्ठं प्रशस्तं शिबिरे प्रभो
अमङ्गलं वा केषां च सर्वं मां वक्तुमर्हसि ॥ ३२ ॥

श्रीभगवानुवाच—

आश्रमे नारिकेलश्च गृहिणां च धनप्रदः । शिबिरस्य यदीशाने पूर्वे पुत्रप्रदस्तरुः ॥

१ क. पलवैः । २ क °नाभैः । ३ क. जगद्गुरो ।

सर्वत्र मङ्गलार्हश्च तरुराजो मनोहरः। रसालवृक्षः पूर्वस्मिन्नृणां संपत्प्रदस्तथा ॥३५॥
शुभप्रदश्च सर्वत्र सुखकारो निशामय। बिल्वश्च पनसश्चैव गम्भीरी बदरी तथा ॥३६॥
प्रजाप्रदश्च पूर्वस्मिन्दक्षिणे धनदस्तथा। संपत्प्रदश्च सर्वत्र यतो हि वर्धते गृही ॥३७॥
जम्बूवृक्षश्च दाडिम्बः कदल्याम्रातकस्तथा। बन्धुप्रदश्च पूर्वस्मिन्दक्षिणे मित्रदस्तथा ॥
सर्वत्र शुभदश्चैव धनपुत्रशुभप्रदः। हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा ॥ ३९ ॥
ईशाने सुखदश्चैव सर्वत्रैव निशामय। सर्वत्र चम्पकः शस्तो भुवि भद्रप्रदस्तथा ॥४०॥
अलाबुश्चापि कूष्माण्डमाराम्बुश्च सकिंशुकः। खर्जूरी कर्कटी चापि शिबिरे मङ्गलप्रदा
वार्त्ताककार बिल्वश्च वार्ताकश्च शुभप्रदः। लताफलं च शुभदं सर्वं सर्वत्र निश्चितम् ॥
प्रशस्तं कथितं सर्वं निषिद्धं च निशामय। वन्यवृक्षो निषिद्धश्च शिबिरे नगरेऽपि च
वटो निषिद्धः शिबिरे नित्यं चोरभयं यतः। नगरेषु प्रसिद्धश्च दर्शनात्पुण्यदस्तथा ॥
निषिद्धः शाल्मलिश्चैव शिबिरे नगरे पुरे। दुःखप्रदश्च सततं भूमिगानां सदाऽपि च ॥
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च। विग्रामतिनिषिद्धस्तु सततं दुःखदस्तदा ॥
हे कारो तिन्तिडीवृक्षो यत्नाच्च परिवर्जयेत्। शतेन धनहानिः स्यात्प्रजाहानिर्भवेद्ध्रुवम्
शिबिरेऽतिनिषिद्धश्च नगरे किंचिदेव च। न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ॥
विग्रामतिनिषिद्धश्च प्राज्ञस्तं परिवर्जयेत्। खर्जूरश्च गेहश्चैव निषिद्धः शिबिरे तथा ॥
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च। वृक्षश्च चणकादीनां धान्यं च मङ्गलप्रदम् ॥
ग्रामेषु नगरे चापि शिबिरे च तथैव च। इक्षुवृक्षश्च शुभदः संततं शुभदस्तथा ॥५१॥
अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदः। कांचिद्वारिदा शुभदा शुभदश्चार्द्रकस्तथा ॥
हरीतकी च शुभदा ग्रामेषु नगरेषु च। न वाद्या मङ्गदा नित्यं तथा चाऽऽर्द्रकी ध्रुवम्
गजानामस्ति शुभदमश्वानां च तथैव च। कल्याणमुच्चैःश्रवसां वास्तौ स्थापनकारिणाम् ॥
न शुभप्रदमन्येषामुच्छिन्नकारणं परम्। वानराणां नराणां च गर्दभानां गवामपि ॥५५॥
कुर्कुराणां शृगालानां मार्जाराणामभद्रकम्। भेटकानां सूकराणां सर्वेषां च शुभप्रदम्।
ईशाने चापि पूर्वस्मिन्पश्चिमे च तथोत्तरे। शिबिरस्य जलं भद्रमन्यत्राशुभमेव च ॥५७॥
दीर्घे प्रस्थे समानं च न कुर्यान्मन्दिरे बुधः। चतुरस्रे गृहे कारो गृहिणां धननाशनम्
दीर्घप्रस्थः परिमितो नेत्राङ्केनापि संहतम्। शून्येन रहितं भद्रं शून्यं शून्यप्रदं नृणाम् ॥
प्रस्थे हस्तद्वयात्पूर्वं दीर्घे हस्तत्रयं तथा। गृहाणां शुभदं द्वारं प्राकारस्य गृहस्य च ॥
न मध्यदेशे कर्तव्यं किंचिन्न्यूनाधिके शुभम्। चतुरस्रं चन्द्रवेधं शिबिरं मङ्गलप्रदम् ॥

१ क. वाद्या°। २ क. गुडश्चै°। ३ क. °धरक°। ४ क. °कुटाना।

अमद्रदं सूर्यवेधं शिबिरं मङ्गलप्रदम् । अमद्रदं सूर्यवेधं प्राङ्गणं च तथैव च ॥ ६२ ॥
शिबिराभ्यन्तरे भद्रा स्थापिता तुलसी नृणाम् । धनपुत्रप्रदात्री च पुण्यदा हरिभक्तिदा
प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत् । मालती यूथिका कुन्दं माधवी केतकी तथा
नागेश्वरं मल्लिकां च काञ्चनं बकुलं शुभम् । अपराजिता च शुभदा तेषामुद्यानमीप्सितम्
पूर्वे च दक्षिणे चैव शुभदं नात्र संशयः । ऊर्ध्वे षोडशहस्तेभ्यो नैव कुर्याद्गृहं गृही ॥
ऊर्ध्वे विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम् । सूत्रधारं तैलकारं स्वर्णकारं च हीरकम् ॥
वाटीमूले ग्राममध्ये न कुर्यात्स्थापनं बुध । ब्राह्मणं क्षत्रियं वैश्यं सच्छूद्रं गणकं शुभम् ॥
भट्टं वैद्यं पुष्पकारं स्थापयेच्छिबिरान्तिके । प्रस्थे च परिखामानं शतहस्तं प्रशस्तकम् ॥
पारतः शिबिराणां च गम्भीरं दशहस्तकम् । संकेतपूर्वकं चैव परिखाद्वारमीप्सितम् ॥
शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च । शाल्मलीनां तिन्तिडीनां छिन्नाङ्गानां तथैव च ॥
निम्बानां सिन्धुवाराणां बदरीणाममद्रकम् । धत्तूराणां वटानां चाप्येरण्डानामशङ्कितम् ॥
एतेषामतिरिक्तानां शिबिरे काष्ठमीप्सितम् । वृक्षं च वज्रहस्तं च भूधरो वर्जयेद्बुधः ॥
पुत्रदारधनं हन्यादित्याह कमलोद्भवः । कथितं लोकशिक्षार्थं कुरु काष्ठं विना पुरीम् ॥
शुभक्षणं चाप्यधुना गच्छ वत्स यथासुखम् । विश्वकर्मा हरिं नत्वा जगाम पक्षिणा सह ॥
समुद्रस्य समीपं च वटमूलं मनोहरम् । सुष्वाप तत्र नक्तं च कारुश्च पक्षिणा सह ॥
स्वप्ने द्वारवतीं रम्यां ददर्श गरुडस्तथा । यत्किंचित्कथितं कारुं कृष्णेन परमात्मना ॥
तदेव लक्षणं सर्वं ददर्श नगरे मुने । कारुं हसन्ति स्वप्ने च सर्वे ते शिल्पकारिणः ॥
गरुडं गरुडाश्चान्ये वदन्तश्च पक्षिणः । बुद्धो ददर्श गरुडो विश्वकर्मा च तत्क्षणात् ॥
अतीव द्वारकां रम्यां शतयोजनविस्तृताम् । ब्रह्मादीनां च नगरं विजित्य च विराजिताम् ॥
तेजसाऽऽच्छादितां सूर्यं रत्नानां च परिष्कृताम् ॥ ८१ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० द्वारकानि-
र्माणारम्भे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

====

अथ चतुरधिकशततमोऽध्यायः ।

---

नारायण उवाच—

एतस्मिन्नन्तरे ब्रह्मा भवान्या च भवः स्वयम् । अनन्तश्चापि धर्मश्च भास्करश्च हुताशनः ॥

---

१ ख. 'राणामुम्बरा' ।

कुबेरो वरुणश्चैव पवनश्च यमस्तथा । महेन्द्रश्चापि चन्द्रश्च रुद्राश्चैकादशैव ते ॥ २ ॥
अन्ये देवाश्च मुनयो वसवः सप्त एव च । आदित्याश्चापि दैत्याश्च गन्धर्वाः किंनरास्तथा ॥
आययुर्द्वारकां द्रष्टुं श्रीकृष्णं च बलं तथा । आगच्छन्तं च सहसा वटमूलं मनोहरम् ॥
दृष्ट्वा च देवताः सर्वास्तुष्टुवुः पुरुषोत्तमम् आकाशाच्च विमानैश्च संप्राप्य वटमूलकम् ॥
ददृशुर्द्वारकां रम्यामतीव सुमनोहराम् । मुक्तामाणिक्यहीरेण रत्नराजिविराजिताम् ॥६॥
परितश्चतुरस्रां च शतयोजनसंमिताम् । सप्तभिः परिखाभिश्च गम्भीराभिश्च वेष्टिताम् ॥
प्राकारैर्नगमिर्युक्तां लक्षैः क्रीडासरोवरैः । मनोहरैः सपद्मैश्च रहितैश्च मधुव्रतैः ॥ ८ ॥
शोभितां सर्वतोभद्रैः पुष्पोद्यानत्रिलक्षकैः । प्रफुल्लपुष्पैः पवनैः सर्वत्र सुरभीकृताम् ॥९॥
आमोदितां च शीतेन मन्दचन्दनवायुना । तरुभिर्नारिकेलानां शोभितां शतकोटिभिः ॥
गुवाकानां च वृक्षैश्च भूषितां तच्चतुर्गुणैः । चतुर्गुणैर्गुवाकानां युक्तामाम्रमहीरुहैः ॥ ११ ॥
परीतां पनसानां च वृक्षैराम्रसमैर्मुने । सुशोभितां च तालानां द्रुमैराम्रसमैर्मुने ॥ १२ ॥
अश्वत्थैर्बदरीभिश्च बिल्वैराम्रातकैर्वटैः । शाल्मलीभिश्च जम्बूभिः कदम्बैश्चापि शोभिताम् ॥
वंशैश्च तिन्तिडीभिश्च चम्पकैर्बकुलैस्तथा । नागेश्वरैर्नागरङ्गैर्जम्बीरैर्दाडिमैर्युताम् ॥ १४ ॥
खर्जूरैरर्जुनैः पिष्टैरिक्षुभिः काञ्चनैरपि । हरीतकीभिर्धात्रीभिरिन्दुभिः परितः प्लुताम् ॥
शालैः प्रियालैर्हिन्तालैः शिरीषैः सप्तपर्णकैः । अन्यैर्नानाद्रुमैरष्टैरिष्टां युक्तां परिप्लुताम् ॥
असंख्यैर्मन्दिरै रम्यैरत्युच्चैरपि संस्कृताम् । रत्नेन्द्रसारनिर्माणैर्मुक्तामाणिक्यभूषितैः ॥
माणिक्यहीरकैश्चित्रैः सद्रत्नकलशान्वितैः । मणिभिर्निर्मितैरिष्टैः सोपाननिकरैर्वरैः ॥
कपाटैः कठिनैर्दिव्यैरर्गलाकीलकैर्युताम् । हरिन्मणीनां स्तम्भानां कदम्बैरपि संयुतैः ॥
नानाचित्रैर्विचित्रैश्च सुचित्रैश्च परिष्कृतैः । दर्पणैः सूक्ष्मवस्त्रैश्च शोभितैः श्वेतचामरैः ॥
प्राङ्गणैः पद्मरागाद्यैरिन्द्रनीलपरिष्कृताम् । वीथीभी रत्नखचितै राजमार्गैः समन्विताम् ॥
ग्रीष्ममध्याह्नसूर्याभां ज्वलितां रत्नतेजसा । गजासङ्घैः संयुक्तां वाजिशालापरिष्कृताम् ॥
दृष्ट्वा च द्वारकां रम्यां ते देवा विस्मयं ययुः । सहस्रवदनो देवो लाङ्गली भगवानज. ॥
सस्मार यदुवंशानां समूहमुग्रसेनकम् । वसुदेवं देवकीं च पाण्डवांश्च समातृकान् ॥२४॥
नन्दं यशोदां गोपालान्राजेन्द्रमुनिपुंगवान् । गन्धर्वान्किंनरांश्चैव सहितो यदुपुंगवैः ॥
नन्दो यशोदा गोपाश्च जनन्या सह पाण्डवाः । गन्धर्वाः किंनराश्चैव विद्याधर्यश्च नारद ॥
विद्याधर्यश्चापि नर्तक्यो गायका वाद्यभाण्डकाः । भिक्षुका भाण्डकाश्चैव भट्टाश्च गणकास्तथा ॥
नानादेशोद्भवा भूपा वैद्याश्चान्ये च मानवाः । संन्यासिनश्च यतयोऽवधूता ब्रह्मचारिणः ॥

---

१ क. रत्नचित्रै ।

आययुर्मुनयः सर्वे सशिष्याः सिद्धपुंगवाः । सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥
सनत्कुमारो भगवाञ्ज्ञानिनां च गुरोर्गुरुः । शिष्यैस्त्रिकोटिभिः सार्धं पञ्चवर्षो दिगम्बरः
शिष्यैस्त्रिलक्षैः सहितो दुर्वासा भगवानज. । लक्षशिष्यैः कश्यपश्च वाल्मीकिश्च त्रिलक्षकैः
लक्षशिष्यैर्गौतमश्च कोटिभिश्च बृहस्पतिः । शुक्रस्त्रिकोटिभि सार्धं भरद्वाजश्च लक्षकैः ॥
शिष्यैस्त्रिकोटिभिः सार्धमङ्गिरा भगवानजः । वसिष्ठः कोटिभिः शिष्यैः प्रचेताः कोटिभिस्तथा
त्रिलक्षैश्च पुलस्त्यश्चाप्यगस्त्यः कोटिभिः सह । पुलहो लक्षशिष्यैश्च क्रतुर्लक्षैस्तथैव च ॥
अत्रिस्त्रिकोटिभिः शिष्यैर्भृगुश्च पञ्चकोटिभि. । त्रिकोटिभिर्मरीचिश्च शतानन्दः सहस्रकैः
सार्धं त्रिकोटिभि शिष्यैर्ऋष्यशृङ्गो विभाण्डकः । पाणिनि. कोटिभि. शिष्यैर्लक्षैः कात्यायनस्तथा ॥ ३६ ॥
याज्ञवल्क्यः सहस्रैश्च व्यासः शिष्यत्रिकोटिभिः । शिष्यैर्लक्षैश्च सहितो गर्गः कुलपुरोहितः
गालवश्च सहस्रैश्च सहस्रैः सौभरिस्तथा । त्रिकोटिभिर्लोमशश्च मार्कण्डेयस्त्रिकोटिभिः ॥
कोटिभि र्मिदेवश्च जैगीषव्यस्त्रिकोटिभिः । सांदीपनिर्देवलश्च सच्छिष्यैश्च त्रिकोटिभिः ॥
वोढुः शिष्यैः कोटिभिश्च लक्षै. पञ्चशिखस्तथा । अहं नारायणश्चैव नरो मम सहोदरः ॥
शिष्यैस्त्रिकोटिभिः सार्धं विश्वामित्रश्च कोटिभि । त्रिकोटिभिर्जरत्कारुरास्तीकश्च त्रिकोटिभिः
त्रिकोटिभिः पर्शुरामो वत्सो लक्षैश्च शिष्यकैः । दक्षस्त्रिलक्षैः शिष्यैश्च कपिलः पञ्चकोटिभिः
संवर्तश्च त्रिलक्षैश्चाप्युतथ्यश्च तथैव च । सहस्रैर्जैमिनिश्चैव पैलो लक्षैस्तथैव च ॥४३॥
सुवर्णश्च सहस्रैश्च वैशम्पायन एव च । शिष्यैर्लक्षैः समेतश्च व्यासशिष्यः पुरोगमः ॥
लक्षैः शिष्यैस्तथा शृङ्गी चोपमन्युस्तथैव च । सहस्रैश्च गौतमसुतः कचो लक्षैर्गुरोः सुतः
अश्वत्थामा तथा द्रोणः कृपाचार्यः सशिष्यकः । भीष्मः कर्णश्च शकुनी राजा दुर्योधनस्तथा
नृपस्य भ्रातरः सर्वे चान्ये भूपा जगद्गुरुम् ॥ ४६ ॥

श्रीभगवानुवाच—

शुभकर्मणि निष्पन्ने यास्यन्ति ये समागताः । शिवब्रह्मादयो देवा मुनयश्च तथाऽपरे ॥
भवांश्च यादवैः सार्धं प्रविश द्वारकां पुरीम् । मत्पित्रा मातृभिः सार्धं माहेन्द्रे च क्षणे नृप
अपरे यदवोऽन्ये न यास्यन्ति मथुरां पुरीम् । श्रुत्वेति विरसो राजा तमुवाच भयाकुलः

उग्रसेन उवाच—

वसुदेव न यास्यामि भूमिं तां पैतृकीं पुनः । सर्वतीर्थवरां शुद्धां देवे कर्मणि पैतृके ॥५०॥
पावके भूमिदेशे च पितृणा निर्वृतस्तु यः । तद्भूमिः स्वामिपितृभिः श्राद्धकर्माणि इष्यते ॥

पितॄणां निष्फलं श्राद्धं देवानामपि पूजनम् । किंचित्फलप्रदं चैव संपूर्णं पैतृके स्थले ॥
पुत्रपौत्रकलत्रेभ्यः प्राणेभ्यः प्रेयसी सदा । दुर्लभा पैतृकी भूमिः पितुर्मातुर्गरीयसी ॥
तत्सत्यं च पवित्रं च दैवे कर्मणि पैतृके । क्रीतं च दत्तं दानं च परदत्तमशुद्धकम् ॥
म्रियते पैतृकीभूम्यां तीर्थतुल्यफलं लभेत् । गङ्गाजलसमं पूतं पितृखातोदकं हरे ॥
तत्र स्नात्वा जले पूते गङ्गास्नानफलं लभेत् । पितॄणां तर्पणं तत्र पवित्रं देवपूजनम् ॥
पैतृकी जन्मभूमिश्चेद्द्विगुणं तत्फलं लभेत् । पैतृकीभूमितुल्या च दानभूमिः सतामपि ॥

वासुदेव उवाच—

भोगास्ते वचनं किं वा निषेकः केन वार्यते । पैतृकी तीर्थतुल्या सा किं तीर्थं द्वारकापरम् ॥
सर्वतीर्थपरा श्रेष्ठा द्वारका बहुपुण्यदा । यस्याः प्रवेशमात्रेण नराणां जन्मखण्डनम् ॥
दानं च द्वारकायां च श्राद्धं च देवपूजनम् । चतुर्गुणं च तीर्थानां गङ्गादीनां च भूमिप ॥
गच्छ ब्रह्मादिभिः सार्धं मुनिभिर्यादवैः सह । राजेन्द्रभवनं तत्र गृहाणां सादरं पुनः ॥
करोति शश्वन्यत्कारं महेन्द्रस्यामरावतीम् । निवस त्वं सुधर्मायां माहेन्द्रे च क्षणे नृप ॥
जम्बुद्वीपस्थिता भूपा राजेन्द्रमण्डलेश्वराः । करं दास्यन्ति तुभ्यं च महेन्द्राय सुरा यथा ॥
भूपाजितः कुबेरश्च धनेन धनसंपदा । तेजसा भास्करश्चापि महेन्द्रः संपदा तथा ॥६४॥
देवा जिता रणेनैव पुण्येन मुनयो जिताः । तपस्विनश्च तपसा मतिनश्च मतेन च ॥६५॥
उग्रसेनसमो राजा न भूतो न भविष्यति । सभायां यस्य भगवान्बलदेवो महाबलः ॥६६॥
विश्वं च यस्य शिरसां सहस्राणां नरेश्वर । एकस्मिन्शिरसि न्यस्तं शूर्पे च सर्षपो यथा ॥
न ह्यनन्तसमो देवो बलेन बलवत्तरः । यद्गुणानां च नास्त्यन्तस्तेनानन्तं जगुर्बुधाः ॥
वसवोऽष्टौ महाभागा रुद्राश्च शंकरं विना बह्निर्नो द्वादशादित्या महेन्द्रश्च सुरैः समः
न समर्था ध्रुवं जेतुमुग्रसेनं नृपेश्वरम् । कृष्णस्य वचनं श्रुत्वा प्रसन्नवदनो नृपः ॥७१॥
प्रययौ यादवैः सार्धं महेन्द्रभवनात्परम् । स्वालयं द्वारकामध्ये ज्वलन्तं मणितेजसा ॥
सहस्रैर्द्वारपालैश्च शूलिभिर्दण्डहस्तकैः । नियुक्तै रक्षितं द्वारं ददर्श मानवेश्वरः ॥७२॥
अभ्यन्तरे च शिबिरं द्वारेभ्यः षड्भ्य एव च । मन्दिराणां च शतकै रत्नाना परिभूषणम्
कोटिं मत्तगजेन्द्राणां ददर्श गजमन्दिरे । चतुर्गुणं गजौघं च गजानां षड्गुणं तथा ॥
महाबलांश्च तुरगान्सूर्यांश्च च हसन्ति ये । गजेन्द्रराजं सर्वेषां वाहनानामपीश्वरम् ॥
हसत्यैरावतं शश्वन्महेन्द्रस्य च नारद । अत्युच्चैरुच्चैःश्रवसां ददर्श कोटिमीप्सितम् ॥
खराणां दशकोटिं च पादातं षड्गुणं तथा । निर्माणं रत्नसाराणां रथानां पञ्चलक्षकम्

१ क. श्रुत्वा । २ क. ह्याण ।

पञ्चलक्षं सारथीनां तन्नाश्वं षड्गुणं तथा । अश्ववाटं तत्समं च सुधर्मां च सभामपि ॥
ददर्शाभ्यन्तरे रम्ये देवौघमुनिसंयुताम् । वह्निशुद्धांशुकै रम्यैर्भूषितां रत्नकम्बलैः ॥७९॥
रत्नसिंहासनै रम्यैर्भूषितां रक्तपिङ्गलैः । अमूल्यरत्ननिर्माणवीथीनां तेजसोज्ज्वलाम् ॥
वेष्टितां च महाभीतैः किंकरैः शतकोटिभिः । प्रविवेश सभां रम्यां श्रुत्वा शङ्खध्वनिं शुभम् ॥
वाद्यं च दुंदुभीनां च मुनीनां वेदमन्त्रकम् । दृष्ट्वा नृपं समुत्तस्थौ वेगेन सबलो हरिः ॥
ब्रह्मा महेश्वरश्चैव शेषश्च देवपुंगवाः । समुत्तस्थुः सुराः सर्वे मुनयश्च महात्मनः ॥८३॥
राजेन्द्राश्चापि सिद्धेन्द्रा वसुदेवपुरोगमाः । रत्नसिंहासने रम्ये चोग्रसेनो महाबलः ॥
समुवास महेन्द्रस्य मुनीनामाज्ञया हरेः । देवानां च गुरूणां च गर्गस्यापि तथैव च ॥
सप्ततीर्थोदकेनैव पूर्णकुम्भेन नारद । चकार वेदमन्त्रैश्च नृपस्याप्यभिषेचनम् ॥ ८६ ॥
तस्मै वस्त्रयुगं दत्तं वह्निशुद्धं मनोहरम् । वरुणेन पुरा दत्तं कृष्णाय परमात्मने ॥८७॥
माल्यं च पारिजातानां चन्दनं रत्नभूषणम् । रत्नच्छत्रं ददौ तस्मै बलदेवो महाबलः ॥
ब्रह्मा कमण्डलुं चैव शूलं चापि महेश्वरः । पार्वती रत्नमाल्यं च हारं च मालती सती ॥
अन्ये देवाश्च मुनयो राजेन्द्राः सिद्धपुंगवाः । यौतकं च ददौ तस्मै क्रमेण च पृथक्पृथक् ॥
वसुदेवो ददौ तस्मै शुभदं श्वेतचामरम् । पवनेन पुरा दत्तं कृष्णाय परमात्मने ॥ ९१ ॥
नन्दो ददौ च सुरभिं कामधेनुं च पूजिताम् । यशोदा देवकी तस्मै रत्नश्रेष्ठं ददौ मुदा ॥
सप्तभिः किंकरैश्चापि सेवितः श्वेतचामरैः । दधार च्छत्रमक्रूरो भक्त्या चैवाऽऽज्ञया हरेः ॥
रत्नसिंहासने रम्ये ददर्श रत्नदर्पणम् । अतीव पुण्यवाण्यं च हरिणा च पुरस्कृतः ॥
चक्रुः स्तुतिं च भट्टाश्च भिक्षुका ब्राह्मणास्तथा । ददुः शुभाशिषं तस्मै देवाश्च मुनयस्तथा ॥
ब्राह्मणेभ्यो ददौ राजा रत्नकोटिं च भक्तितः । भट्टेभ्यो रत्नशतकं भिक्षुकेभ्यस्तथैव च ॥
अभिषिच्य नृपेन्द्रं च देवांश्च मुनिपुंगवान् । संपूज्य ब्राह्मणांश्चापि महानिमग्नं द्विजं गुरुम् ॥
स्वालयं च ययुः सर्वे यादवाश्च मुदाऽन्विताः । ये ये हरेः पार्षदाश्च ते सर्वे स्वालयं ययुः ॥
प्रभाते चाऽऽययुः सर्वे सुधर्मां च सभां हरेः । नमस्कृत्य नृपेन्द्रं च चोषुः सर्वे च संसदि ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० द्वारकाप्रवेश उग्र-
सेनाभिषेकोनाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

====

अथ पञ्चाधिकशततमोऽध्यायः ।

---

नारायण उवाच —
अथ वैदर्भराजेन्द्रो महाबलपराक्रमः । विदर्भदेशे पुण्यवता सत्यशीलश्च भीष्मकः ॥१

राजा नारायणांशश्च दाता च सर्वसंपदाम् । वसिष्ठश्च गरीयांश्च वरिष्ठश्चापि पूजितः ॥२॥
तस्य कन्या महालक्ष्मी रुक्मिणी योषितां वरा । अतीव सुन्दरी रम्या रमा रामासु पूजिता
नवयौवनसंपन्ना रत्नाभरणभूषिता । तप्तकाञ्चनवर्णाभा तेजसोज्ज्वलिता सती ॥ ४ ॥
शुद्धसत्त्वस्वरूपा सा सत्यशीला पतिव्रता । शान्ता दान्ता नितान्ता चाप्यनन्तगुणशालिनी
इन्द्राणी वरुणानी च चन्द्रनारी च रोहिणी । कुबेरपत्नी सूर्यस्त्री स्वाहा शान्ता कलावती
अन्यासु रमणीयासु श्रेष्ठा च सुमनोहरा । रुक्मिण्या भीष्मकन्यायाः कलां नार्हति षोडशीम्
तां दृष्ट्वा राजराजेन्द्रो बालक्रीडारतां पराम् । बाला सुशोभा कुर्वन्तीं यथाऽभ्रेषु विधोः कलाम्
शरत्पूर्णेन्दुशोभाढ्या शरत्कमललोचनाम् । विवाहयोग्यां युवतीं लज्जानम्राननां शुभाम्
सहसा चिन्तितो धर्मो धर्मशीलश्च सुव्रतः । सुता पप्रच्छ पुत्राश्च ब्राह्मणांश्च पुरोहितान्

भीष्मक उवाच—

कं वृणोमि सुतार्थं च वरार्हं प्रवरं वरम् । मुनिपुत्रं देवपुत्रं राजेन्द्रसुतमीप्सितम् ॥११॥
विवाहयोग्या कन्या मे वर्धमाना मनोहरा । शीघ्रं पश्य वरं योग्यं नवयौवनसंस्थितम् ॥
धर्मशीलं सत्यसंधं नारायणपरायणम् । वेदवेदाङ्गविज्ञं च पण्डितं सुन्दरं शुभम् ॥
शान्तं दान्तं क्षमाशीलं गुणिनं चिरजीविनम् । महाकुलप्रसूतं च सर्वत्रैव प्रतिष्ठितम् ॥
करोषि राजपुत्रं चेद्रणशास्त्रविशारदम् । महारथं प्रतापार्हं रणमूर्ध्नि च सुस्थिरम् ॥
करोषि देवपुत्रं चेद्देवं गुणयुतं तथा । करोषि मुनिपुत्रं चेच्चतुर्वेदविशारदम् ॥ १६ ॥
यावदुक्तं विचारज्ञं सिद्धान्तेषु नितान्तकम् । नृपेन्द्रवचनं श्रुत्वा तमुवाच मुनेः सुतः ॥
गौतमस्य शतानन्दो वेदवेदाङ्गपारगः । आद्यः प्रवक्ता विज्ञश्च धर्मी कुलपुरोहितः ॥
पृथिव्यां सर्वतत्त्वज्ञो निष्णातः सर्वकर्मसु ॥ १८ ॥

शतानन्द उवाच—

राजेन्द्र त्वं च धर्मज्ञो धर्मशास्त्रविशारदः । *पूर्वाख्यानं च वेदोक्तं कथयामि निशामय*
भुवो भारावतरणे स्वयं नारायणो भुवि । वसुदेवसुतः श्रीमान्परिपूर्णतमः प्रभुः ॥२०॥
विधातुश्च विधाता च ब्रह्मेशशेषवन्दितः । ज्योतिःस्वरूपः परमो भक्तानुग्रहविग्रहः ॥
परमात्मा च सर्वेषां प्राणिनां प्रकृतेः परः । निर्लिप्तश्च निरीहश्च साक्षी च सर्वकर्मणाम्
राजेन्द्र तस्मै कन्यां च परिपूर्णतमाय च । दत्त्वा यास्यसि गोलोकं पितॄणां शतकैः सह
क्षम सारूप्यमुक्तिं च कन्यां दत्त्वा परत्र च । इहैव सर्वपूज्यश्च भव विश्वगुरोर्गुरुः ॥२४॥
सर्वस्वं दक्षिणां दत्त्वा महालक्ष्मीं च रुक्मिणीम् । समर्पणं कुरु विभो कुरुष्व जन्मखण्डनम्
विधात्रा लिखितो राजन्संबन्धः सर्वसंमतः । द्वारकानगरे कृष्णं शीघ्रं प्रस्थापय द्विजम्॥

कृत्वा शुभक्षणं तूर्णं सर्वपापवि संमनम् । आनीय परमात्मानं भक्तानुग्रहविग्रहम् ॥
ध्यानानुरोधहेतुं च नित्यदेहमनुत्तमम् । दृष्टिमात्रात्कुरु नृप स्वजन्मकर्मखण्डनम् ॥
यं न जानन्ति चत्वारो वेदा. संतश्च देवताः । सिद्धेन्द्राश्च मुनीन्द्राश्च देवा ब्रह्मादयस्तथा ॥
ध्यायन्ते ध्यानपूताश्च योगिनो न विन्दति यम् । सरस्वती जडीभूता वेदाः शास्त्राणि यानि च
सहस्रवक्त्रः शेषश्च पञ्चवक्त्रः सदाशिवः । चतुर्मुखो जगद्धाता कुमारः कार्तिकस्तथा
ऋषयो मुनयश्चैव भक्ताः परमवैष्णवाः । अक्षमाः स्तवने यस्य ध्यानासाध्यश्च योगिनाम्
बालकोऽहं महाराज तद्गुणं कथयामि किम् । शतानन्दवचः श्रुत्वा प्रफुल्लवदनो नृपः॥
आलिङ्गनं ददौ तस्मै समुत्थाय जवेन च । नानारत्नं सुवर्णं च वस्त्रं च रत्नभूषणम् ॥
ददौ तस्मै प्रदानं च प्रसादसुमुखो नृपः । गजेन्द्रं तुरगं श्रेष्ठं रथं च मणिनिर्मितम् ॥
रत्नसिंहासनं रम्यं धनं च विपुलं तथा । भूमिं च सर्वसस्याढ्यां शश्वद्वृष्टिकरीं शुभाम्
अकृष्टसाध्यां पूज्यां च ग्रामं सर्वप्रशंसितम् । एतस्मिन्नन्तरे रुक्मिरचुकोप नृपनन्दनः ॥
कम्पितोऽधर्मयुक्तश्च रक्तास्यो रक्तलोचनः । उवाच पितरं विप्रं सभायामस्थिरस्तदा ॥
उत्थाय तिष्ठन्पुरतः सर्वेषां च सभासदाम् ॥ ३९ ॥

रुक्मिरुवाच—

*शृणु राजेन्द्र वचनं हितं तथ्यं प्रशंसितम् । त्यज वाक्यं भिक्षुकाणां योगिनां क्रोधिनामहो*
नर्तकानां च वैश्यानां भट्टानामर्थिनामपि । कायस्थानां च भिक्षूणामसत्यं वचनं सदा ॥
चारकानां नाटकानां खलुब्धानां च कामिनाम् । दरिद्राणां च मूर्खाणां स्तुतिपूर्वं वचः सदा
निहत्य कालयवनं राजेन्द्रं दूरतो भिया । उपायेन महाबाहो लब्धं कृष्णेन तद्धनम् ॥
द्वारकायां धनी कृष्णो यवनस्य धनेन च । जरासंधभयेनैव समुद्राभ्यन्तरे गृही ॥४४॥
जरासंधशतं चैव क्षणेनैव च लीलया । क्षमोऽहं हन्तुमेकाकी राज्ञश्चान्यस्य का कथा॥
दुर्वाससश्च शिष्योऽहं रणशास्त्रविशारदः । ध्रुवं भीष्मक तेनैव विश्वं संहर्तुमीश्वरः ॥
मत्समः पर्शुरामश्च शिशुपालश्च मत्समः । सखा च बल्वान्दूरः स्वर्गं जेतुं स च क्षमः
महेन्द्रं सगणं जेतुमहमीशः क्षणेन च । जित्वा युद्धे जरासंधं दुर्बलं योगिनं नृप ॥४८॥
अहंकारयुतः कृष्णो धीरं स्वं मन्यते भिया । यद्यायास्यति मद्ग्रामं विवाहं कर्तुमीप्सितम्
ध्रुवं प्रस्थापयिष्यामि क्षणेन यमवन्दिरम् । अहो नन्दस्य वैश्यस्य तस्मै गोरक्षकाय च ॥
साक्षाज्जाराय गोपीनां गोपालोच्छिष्टभोजिने । करोषि कन्यास्वीकारं देवयोग्यां च रुक्मिणीम्
दातुमिच्छसि वाक्येन भिक्षुकस्य द्विजस्य च । राजेन्द्र बुद्धिहीनोऽसि वचनाद्वद्र(दुर्वे)त्तस्य च

मा राजपुत्रो मा शूरो मा कुलीनश्च मा शुचिः । मा दाता मा धनाढ्यश्च मा योग्यो मा जितेन्द्रियः ॥ ६३ ॥
कन्यां देहि सुपुत्राय शिशुपालाय भूमिप । बलेन रुद्रतुष्टाय राजेन्द्रतनयाय च ॥६४॥
निमन्त्रणं कुरु नृप नानादेशभवान्नृपान् । बान्धवांश्च मुनीन्द्रांश्च पत्रद्वारा त्वरान्वितः ॥
अङ्गं कलिङ्गं मगधं सौराष्ट्रं वरकलं परम् । रीढं वरेन्द्रं वङ्गं च गुर्जराटिं च पेठरम् ॥६६॥
महाराष्ट्रं विराटं च मुद्गलं च मुरङ्ककम् । मल्लकं गल्लकं खर्वं दुर्गं प्रस्थापय द्विजम् ॥६७॥
घृतकुल्यासहस्रं च मधुकुल्यासहस्रकम् । दधिकुल्यासहस्रं च दुग्धकुल्यासहस्रकम् ॥
तैलकुल्यापञ्चशतं गुडकुल्याद्विलक्षकम् । शर्कराणां राशिशतं मिष्टान्नानां चतुर्गुणम् ॥
यवगोधूमचूर्णानां पिष्टराशिशतं शतम् । पृथुकानां राशिलक्षमन्नानां च चतुर्गुणम् ॥
गवां लक्षं छेदनं च हरिणानां द्विलक्षकम् । चतुर्लक्षं शशानां च कूर्माणां च तथा कुरु ॥
दशलक्षं छगलानां मेषानां तच्चतुर्गुणम् । पर्वणि ग्रामदेव्यै च बलिं देहि च भक्तितः ॥
एतेषां पक्वमांसं च भोजनार्थं च कारय । परिपूर्णं व्यञ्जनानां सामग्रीं कुरु भूमिप ॥ ६३॥
अथ श्रुत्वा च तद्वाक्यं राजेन्द्रः सपुरोहितः । चकार मन्त्रणं तूर्णं निर्जने मन्त्रिणा सह ॥
द्विजं प्रस्थापयामास द्वारकां योग्यमीप्सितम् । कृत्वा च शुभलग्नं च सर्वेषामभिवाञ्छितम् ॥
राजा संभृतसंभारो बभूव सत्वरं मुदा । निमन्त्रणं च सर्वत्र चकार च सुताज्ञया ॥
विप्रः सुधर्मां संप्राप्य नृपैर्देवैश्च वेष्टिताम् । प्रददौ पत्रिकां मङ्गमुग्रसेनाय भूभृते ॥६७॥
प्रफुल्लवदनो राजा श्रुत्वा पत्रं सुमङ्गलम् । सुवर्णानां सहस्रं च ब्राह्मणेभ्यो ददौ मुदा ॥
दुंदुभिं वादयामास द्वारकायां च सर्वतः । देवान्मुनीन्नृपांश्चैव ज्ञातिवर्गांश्च बान्धवान् ॥
भट्टांश्च भिक्षुकांश्चैव भोजयामास सादरम् । श्रीकृष्णस्य सुवेषं च कारयामास भूपतिः ॥
अतीव रम्यमतुलं त्रिषु लोकेषु दुर्लभम् । यात्रां च कारयामास जगतां प्रवरं वरम् ॥
वेदमन्त्रेण रम्येण माहेन्द्रे सुमनोहरे । आदौ ब्रह्मा रथस्थश्च सावित्र्या सहितो ययौ ॥
रथस्थश्च महाहृष्टो भवान्या च भवः स्वयम् । शेषश्चापि दिनेशश्च गणेशश्चापि कार्तिकः ॥
महेन्द्रश्च तथा चन्द्रो वरुणः पवनस्तथा । कुबेरश्च यमो वह्निरीशानोऽपि ययौ मुदा ॥
देवानां च त्रिकोटयश्च मुनीनां षष्टिकोटयः । राजेन्द्राणां त्रिलक्षं च श्वेतच्छत्रं त्रिलक्षकम् ॥
उग्रसेनो ययौ राजा नक्षत्रेषु यथा शशी । ययौ प्रसन्नवदनः कुण्डिनाभिमुखो बली ॥
रत्ननिर्माणयानेन बलदेवो महाबलः । वसुदेवश्चोद्धवश्च नन्दोऽक्रूरश्च सात्यकिः ॥७७॥
गोपाला यादवेन्द्राश्च चन्द्रवंशयाश्च ते ययुः । धृतराष्ट्रसुताः सर्वे दुर्योधनपुरोगमाः ॥७८॥

---

१ क. 'राठं २ ख. 'कराडम' । ३ ध. निभैन ।

युधिष्ठिरस्तथा भीम फाल्गुनो नकुलस्तथा । सहदेवश्च पत्निश्च प्रययु. पञ्च पाण्डवा ॥
भीष्मो द्रोणश्च कर्णश्चाप्यश्वत्थामा महाबलः कृपाचार्यश्च शकुनि शल्यश्च प्रययौ मुदा
मराना च त्रिकोटयश्च विप्राणा शतकोटयः । संन्यासिना सहस्रं च यतीना ब्रह्मचारिणाम् ॥
द्विसहस्रं जितक्रोधाश्चावधूतास्तथैव च । उत्पन्नाना सहस्रं च सहस्रं पुण्यकारिणम् ॥
नानाशिल्पकराश्चैव विचित्रं चित्रमेव च । लक्ष च वाद्यभाण्डाना नर्तकाना च लक्षकम् ॥
गन्धर्वाणा गायकाना लक्षमेव तु नारद । तत्र वत्से भवत्येव गन्धर्वश्चोपबर्हण ॥८४॥
पञ्चाशत्कामिनीभिश्च त्वमेव तेषु मध्यगः । विद्याधरीणा लक्षं च लक्षमप्सरसा तथा ॥
किन्नराणा त्रिलक्षं च गन्धर्वाणा त्रिलक्षकम् ॥ ८६ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० रुक्मिण्युद्वाहे पञ्चाधिकशततमोऽध्याय ॥ १०५ ॥

अथ षडधिकशततमोऽध्याय ।

नारायण उवाच—

एतस्मिन्नन्तरे राजा ककुद्मी च महाबल. । वरार्थं कन्यकायाश्च ब्रह्मलोकात्समागत. ॥
प्रददौ रेवतीं कन्या शश्वत्सुस्थिरयौवनाम् । अमूल्यरत्नभूषाढ्या त्रिषु लोकेषु दुर्लभाम् ॥
बलाय बलदेवाय संप्रदानेन कौतुकात् वयो यस्या गत सप्तविंशति युगाना सप्तविंशति ॥३॥
दत्त्वा कन्या विधानेन मुनिदेवेन्द्रसंसदि । गजेन्द्राणां त्रिलक्षं च जामात्रे यौतुकं ददौ ॥
दशलक्ष तुरङ्गाणा रथाना लक्षमेव च । रत्नालङ्कारयुक्ताना दासीना चापि लक्षकम् ॥
मणिलक्षं रत्नलक्षं स्वर्णकोटिं च सादरम् । वह्निशुद्धांशुकं रम्यं मुक्तामाणिक्यहीरकम् ॥
दत्त्वा कन्या च राजेन्द्रो बलाय बलशालिने । रत्नेन्द्रसारयानेन तै सार्धं कुण्डिनं ययौ ॥
अथान्तरे च निर्बन्धे साङ्गे मङ्गलकर्मणि । रेवतीं वेशयामास योषिता कमलकलाम् ॥
देवकी रोहिणी चैव यशोदा नन्दगेहिनी । अदितिश्च दितिः शान्तिर्मेष कृत्वा च मन्दिरम्
ब्राह्मणान्भोजयामास ददौ तेभ्यो धनं मुदा । मङ्गलं कारयामास वसुदेवस्य वल्लभा ॥१०॥
अथ देवाश्च मुनयो राजेन्द्राः कटके सह । संगापुरीसामान्येन कुण्डिनं नगरं मुदा ॥
ददृशुर्नगरं सर्वे स्वर्गमिव सुमनोहरम् । सप्तभि परिखाभिश्च गम्भीराभिश्च वेष्टितम् ॥१२॥
प्राकारै. सप्तभिर्युक्तं द्वाराणां शतकैस्तथा । नानारत्नैश्च मणिभिर्निर्मितं विश्वकर्मणा ॥
नगरस्य बहिर्द्वारि ददृशुर्वरयात्रिण । रक्षितं रक्षकै सार्धं चतुर्भिश्च महारथै ॥१४॥

१ क 'ल्पकारिणाम् ।

रुक्मिश्च शिशुपालश्च दन्तवक्त्रो महाबली । शाल्वो मायाविनां श्रेष्ठो युद्धशास्त्रविशारदः
नानाशस्त्रैस्तथाऽस्त्रैश्च रथस्थश्च रणोन्मुखः । विलोक्य कृष्णसैन्यं च चुकोप नृपनन्दनः
उवाच निष्ठुरं वाक्यं श्रुतितीक्ष्णं सुदुष्करम् । उपहास्य मुनीन्द्रांश्च देवांश्च मुनिपुंगवान्

रुक्मिरुवाच——

अहो कालकृतं कर्म दैवं च केन वार्यते । किंवाऽहं कथयिष्यामि देवेन्द्राणां च संसदि
ग्रहीतुं रुक्मिणीं कन्यां देवयोग्यां मनोहराम् । आयाति दैवैर्मुनिभिर्नन्दस्य पशुरक्षकः ॥
साक्षाज्जारश्च गोपीनां गोपोच्छिष्टान्नभोजनः । जातेश्च निर्णयो नास्ति भक्ष्यमैथुनयोस्तथा
किं नु राजेन्द्रपुत्रश्च किं नु वा मुनिपुत्रकः । वसुदेवः क्षत्रियश्च भक्षणं वैश्यमन्दिरे ॥
शिशुकाले च स्त्रीहत्या कृताऽनेन दुरात्मना । कुब्जा मृता च संभोगाद्ग्रामसा रजको मृतः
राजेन्द्रस्य वधे दुष्टो ब्रह्महत्या लभेद्ध्रुवम् । मथुरायां च धर्मिष्ठः सद्यः कंसो निपातितः

शाल्व उवाच——

यदुक्तं रुक्मिणा देवा. किमसत्यं च तत्र वै । को वाऽयं रुक्मिणीभर्ता नन्दस्य पशुरक्षकः

शिशुपाल उवाच——

अहो भुवि किमाश्चर्यं देवा ब्रह्मादयस्तथा । मुनीन्द्रा ब्रह्मणः पुत्राश्चाऽऽययुर्गोपवाज्ञया

दन्तवक्त्र उवाच——

संततं ब्राह्मणा लुब्धा देवाश्च भक्तवत्सलाः । आययुर्ब्रह्मपुत्राश्च नन्दपुत्राज्ञया कथम् ॥
तेषां च वचनं श्रुत्वा चुकोप देवसंघकः । मुनिराजेन्द्रसंघश्च लाङ्गलीत्यादयस्तथा ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० रुक्मिण्यु-
द्वाहे षडधिकशततमोऽध्यायः ॥ १०६ ॥

=====

अथ सप्ताधिकशततमोऽध्यायः ।

---

नारायण उवाच——

अथ कोपपरीतश्च बलदेवो महाबल । हलेन रुक्मिरथं च बभञ्ज मुनिपुंगव ॥ १ ॥
घोटकान्सारथिं चैव निहत्य जगतीपतिः । भूमिष्ठं चापि पापिष्ठं रुक्मिं हन्तुं जगाम सः
रुक्मी च शरजालेन वारयामास लीलया । नागास्त्रं योजयामास बद्धुं हलिनमीश्वरम्
नागास्त्रं गारुडेनैव संजहार हली स्वयम् । जग्राह कोपाद्रुक्मी च परं पाशुपतं मुने ॥
अव्यर्थं वैरिमर्दं च शतसूर्यसमप्रभम् । अभितो हलिना रुक्मी जृम्भणास्त्रेण जृम्भितः ॥
भूमिष्ठः स्थाणुवद्रुक्मी निद्रास्त्रेणैव निद्रितः । शाल्वस्तं निद्रितं दृष्ट्वा शरजालान्मुमोच तम्

शैलवृष्टिं शिलावृष्टिं जलवृष्टिं चकार सः। ज्वलदङ्गारवृष्टिं च शरवृष्टिं चकार ह॥७॥
बलाच्चास्त्रेण सर्वाणि वारयामास लाङ्गली। हलेन तद्रथं चूर्णं चकार रणमध्यतः॥
घोटकान्सारथिं चैव जघान चैव लीलया। कोपाद्धलेन तं हन्तुं चान्वभूवाशरीरिणी॥
त्यज शाल्वं कृष्णवध्यं तव किं पौरुषं रणे। यस्य मूर्ध्नि च ब्रह्माण्डं शूर्पे च सर्षपं यथा
तच्छ्रुत्वा बलदेवश्च हलेन तस्य मस्तकम्। चकार चूर्णं व्यथितः पपात रणमूर्धनि॥
शाल्वस्य पतनं दृष्ट्वा शिशुपालो महाबली चकार शरवृष्टिं च जलवृष्टिं यथा भुवि॥
हली तस्य रथं चूर्णं चकार लाङ्गलेन च। अर्धचन्द्रेण तद्बाणान्वारयामास लीलया॥
तं हन्तुं शंकरः साक्षान्निषेधं च चकार तम्। कृष्णवध्यं त्यज बल पार्षदप्रवरं हरेः॥
दन्तवक्त्रस्य दन्तं च बभञ्ज स हलेन च। सुप्रवृत्तस्य युद्धेन ते सर्वे जहसुश्च तम्॥
बलस्य विक्रमं दृष्ट्वा सर्वे वीराः पलायिताः। चक्रुः प्रवेशनं सर्वे कुण्डिनं वरयात्रिकाः॥
एतस्मिन्नन्तरे तत्र शतानन्दो महामुनिः। कोटिभिर्मुनिभिः सार्धमाजगाम हरेः पुरः॥
पुरं प्रवेशयामास रत्नद्वारं च दुर्गमम्। अगम्यं चापि शत्रूणां मित्राणां च सुखप्रदम्
देवकन्या नागकन्या राजकन्यास्तथैव च। मुनिकन्या वरं द्रष्टुं सस्मिताश्च समाययुः॥
ददृशुर्योषितः सर्वा निमेषरहितेन च। प्रसन्नं कारयामास सस्मितश्चन्द्रशेखरः॥२०॥
रत्नेन्द्रसारनिर्माणरथस्थं परमेश्वरम्। सर्वेषां परमात्मानं भक्तानुग्रहविग्रहम्॥२१॥
नवीननलदश्यामं शोभितं पीतवाससा। चन्दनोक्षितसर्वाङ्गं वनमालाविभूषितम्॥२२॥
रत्नकेयूरवलयरत्नमालाकुलोज्ज्वलम्। रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम्॥२३॥
रत्नेन्द्रसारनिर्माणक्वणन्मञ्जीररञ्जितम्। सस्मितं मुरलीहस्तं पश्यन्तं रत्नदर्पणम्॥२४॥
सप्तभिः पार्षदैर्गोपैः सेवितं श्वेतचामरैः। नवयौवनसंपन्नं शरत्कमललोचनम्॥२५॥
शरत्पूर्णेन्दुतुल्यास्यं भक्तानुग्रहकारकम्। कोटिकन्दर्पसौन्दर्यं सत्यं नित्यं सनातनम्॥
तीर्थपूतं कीर्तिपूतं ब्रह्मेशशेषवन्दितम्। परमाह्लादकं रूपं कोटिचन्द्रसमप्रभम्॥२७॥
ध्यानासाध्यं दुराराध्यं परमं प्रकृतेः परम्। दूर्वया पट्टसूत्रं च रत्नेन्द्रसारदर्पणम्॥२८॥
दधानं कर्तृशाखाभिः कदल्याः स्फुटमञ्जरीम्। चूडा विचित्रकुमाकारां मालतीमाल्यभूषिताम्
पुष्पं नारीप्रदत्तं च मुकुटं मस्तकोज्ज्वलम्। दृष्ट्वा वरं युवत्यश्च मूर्छां संप्रापुरीश्वरम्॥
रुक्मिणीजीवनं धन्यं श्लाघ्यमित्यूचुरीप्सितम्। जामातरं सा ददर्श राज्ञी भीष्मककामिनी
निमेषरहिता तुष्टा प्रसन्नवदनेक्षणा। राजा प्रसन्नवदनः सामात्यः सपुरोहितः॥३२॥
समागत्य सुगन्धिमाल्यांश्च प्रणनाम सः। ददौ षोडशप्रश्नं तेभ्यो मद्यपूर्णं सुधोपमम्॥

१ क. °निन्द्यस्त्वं। २ शाम्भं।

दिवानिशं चाप्युवाच दीयतां दीयतामिति । सुखं निनाय रजनीं देवैश्च बान्धवैः सह ॥
वसुदेवः प्रभाते च प्रातःकृत्यं चकार स । स्नात्वा संध्यादिकं कृत्वा धृत्वा धौते च वाससी ॥
चकार वेदमन्त्रेण शुभाधिवासनं हरेः । संपूज्य मातृकाः सर्वाः साक्षाच्च सर्वदेवताः ॥
प्रदाय वसुधारां च वृद्धिश्राद्धादिकं तथा । ब्राह्मणान्भोजयामास देवांश्च बान्धवांस्तथा ॥
वाद्यं च वादयामास कारयामास मङ्गलम् । सुवेषं कारयामास वरस्यापि प्रशंसितम् ॥
सज्जं च कारयामास नरयानं सुशोभनम् । एवं राजा भीष्मकश्च विवाहार्हं च मङ्गलम् ॥
पुरोहितैर्वेदमन्त्रैः सर्वं कर्म चकार सः । मणिरत्नं धनं चापि मुक्तामाणिक्यहीरकम् ॥
भक्ष्यद्रव्यं च वस्त्रं चाप्युपहारमनुत्तमम् । भट्टेभ्यो ब्राह्मणेभ्योऽपि भिक्षुकेभ्यो ददौ मुदा
वाद्यं च वादयामास कारयामास मङ्गलम् । सुवेषं कारयामास रुक्मिण्याश्च मनोहरम् ॥
राज्ञीभिर्मुनिपत्नीभिर्विधानं च यथोचितम् । ततः शुभे क्षणे प्राप्ते माहेन्द्रे परमोदये ॥
विवाहोचितलग्ने च लग्नाधिपतिसंयुते । सद्ग्रहेक्षणशुद्धे चाप्यसता दृष्टिवर्जिते ॥४४॥
शुभक्षणे शुभर्क्षे च विशुद्धे चन्द्रतारयोः । वेधदोषादिरहिते शलाकादिविवर्जिते । ४५॥
दंपत्योः शर्मयोग्ये च परिणामसुखप्रदे । एवंभूते च समये भीष्मकप्राङ्गणं हरिः ॥४६॥
आजगाम सुरैः सार्धं मुनिविप्रपुरोहितैः । ज्ञातिभिर्बान्धवैः सार्धं पित्रा मात्रा नृपैस्तथा
गोपालकैः पार्षदैश्च वयस्यैश्च मनोहरैः । भट्टैश्च गणकैर्ज्योतिःशास्त्रज्ञानविशारदैः ॥४८॥
वाद्यैर्नानाविधैश्चैव नर्तकैर्गायनैस्तथा । नानाशिल्पकरैश्चैव मालाकारैस्तथाऽपरैः ॥४९॥
विद्याधर्यप्सरोभिश्च किंनरीभिश्च सत्वरम् । स्थलं च ददृशुर्देवा मुनयश्च नृपेश्वराः ॥
सर्वे समागता ये च विवाहदर्शनोत्सुकाः । रम्भास्तम्भसहस्रैश्च पट्टसूत्रपरिष्कृतैः ॥५१॥
चम्पकानां चन्दनानां रसालानां च पल्लवैः । माल्यैर्नानाविधैश्चैव पीतरक्तसित न्वितैः ॥
परितो मङ्गलघटैः फलपल्लवसंयुतैः । कस्तूरीचन्दनाक्तैश्च कुङ्कुमेन विराजितैः ॥५३॥
पर्णजालैः फलैः पुष्पैर्दूर्वाभिरुपशोभितैः । मुनिभिर्ब्राह्मणैश्चैव राजेन्द्रैरपि वेष्टितम् ॥
रत्नेन्द्रसारनिर्माणवेदीयुक्तं मनोहरम् । चर्चितं चन्दनाद्यैः कस्तूरीकुङ्कुमान्वितैः ॥
सुगन्धिशीतमन्दैश्च पवनैः सुरभीकृतम् । रत्नानां च सहस्रैश्च ज्वलितैर्ज्वलदीपकैः ॥
नानाप्रकारधूपैश्च गन्धद्रव्यैः सुवासितम् । चित्रैर्विचित्रैर्विविधैः शिल्पिनां पुण्यकारिणाम्
परितः परितश्चैव शोभनार्हैः सुशोभनैः । गन्धर्वाणां च संगीतैर्मधुरैर्मधुरीकृतम् ॥५८॥
विद्याधरीणां नृत्यैश्च नर्तकीनां च शिल्पिनाम् । तत्र निश्चेष्टचित्रैश्च जनाजिविर जितम्
गुप्तद्वारैर्गवाक्षैश्च पुरस्त्रीभिश्च वीक्षितम् । मङ्गलेन घटेनैव विदुषा च पुरोधसा ॥ ६० ॥

१ ध. °रत्नांप्रतिमस्य च । २ क. चर° । ३ क. पुरिका° ।

कुशहस्तेन भूपेन दानेन दानवस्तुना । दृष्ट्वा च प्राङ्गणं राज्ञो देवा ब्रह्मादयस्तथा ॥
अवरुह्य रथात्तूर्णं तिष्ठन्ति प्राङ्गणे मुदा । राजेन्द्रा दानवेन्द्राश्च मुनयः सनकादयः ॥
श्रीकृष्णश्चापि भगवान्पार्षदप्रवरैः सह । तान्दृष्ट्वा सहसोत्थाय जवेन भीष्मकस्तथा ॥
मूर्ध्ना ववन्दे देवांश्च मुनीन्द्रांश्च नृपांस्तथा । रत्नसिंहासनेष्वेव सुरम्येषु पृथक्पृथक् ॥ ६४ ॥
क्रमतो वासयामास संपूज्य सादरेण च । राजा तुष्टाव भक्त्या च तान्सर्वान्भक्तिपूर्वकम् ।
वसुदेवं वासुदेवं साश्रुनेत्रः पुटाञ्जलिः ॥ ६९ ॥

भीष्मक उवाच—

अद्य मे सफलं जन्म जीवितं च सुजीवितम् । बभूव जन्मकोटीनां कर्ममूलनिकृन्तनम् ॥
स्वयं विधाता जगतां प्रदाता सर्वसंपदाम् । स्वप्ने यत्पादपद्मं च द्रष्टुं नैव क्षमः प्रभो ॥
तपसां फलदाता च संस्रष्टा प्राङ्गणे मम । स्वात्मारामेषु पूर्णेषु शुभपक्षमनीप्सितम् ॥
योगीन्द्रैरपि सिद्धेन्द्रैः सुरेन्द्रैश्च मुनीन्द्रकैः । ध्यानादृष्टश्च यो देवः स शिवः प्राङ्गणे मम
कालस्य कालो भगवान्मृत्योर्मृत्युश्च यः प्रभुः । मृत्युंजयश्च सर्वेशो नराणां दृष्टिगोचरः
यस्य मूर्ध्नि सहस्रेषु मूर्ध्नि विश्वं चराचरम् । नास्त्यन्तः सर्ववेदेषु सोऽयं च मम प्राङ्गणे ॥
सर्वकामप्रदो यो हि सर्वाग्रे यस्य पूजनम् । श्रेष्ठो देवगणानां च स गणेशो ममाङ्गणे ॥
मुनीनां वैष्णवानां च प्रवरो ज्ञानिनां गुरुः । सनत्कुमारो भगवान्ब्रह्मपुत्रः प्राङ्गणे मम ॥
ब्रह्मपुत्राश्च पौत्राश्च प्रपौत्राश्चापि वंशजाः । ते सर्वे मद्गृहेऽद्यैव ज्वलन्तो ब्रह्मतेजसा ॥
अहो कल्पान्तपर्यन्तं तीर्थीभूतो ममाऽऽश्रमः । येषां पादोदकैस्तीर्थं विशुद्धं तद्गृहे मम
पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे । सागरे यानि तीर्थानि विप्रपादेषु तानि च
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी । तावत्पुष्करपत्रेषु पिबन्ति पितरो जलम् ॥
विप्रपादोदकं भुक्त्वा दत्त्वा विप्राय दक्षिणाम् । स्नानानां सर्वतीर्थानां फलमाप्नोति निश्चितम्
निकृन्तनं च विपदां व्याधिनिर्मूलकारणम् । सुखदं शुभदं सारं विप्रपादोदकं नृणाम् ॥
न गङ्गासदृशं तीर्थं न देवो माधवात्परः । सनत्कुमाराद्भक्तो न न हि कल्पतरोस्तरुः ॥
न पुष्पं पारिजाताच्च न व्रतं हरिवासरात् । पूजने न हि पूज्यं च न पत्रं तुलसीपरम् ॥
न देवी प्रकृतेश्चापि नाऽऽधारः पवनात्परः । न हि स्थूलो महाविष्णोर्न सूक्ष्मं परमाणुतः
न ब्राह्मणात्परः पूतो नाऽऽश्रमश्च न तीर्थकम् । न देवो न परः कोऽपि चेत्याह कमलोद्भवः
ब्रह्मविष्णुशिवादीनां प्रकृतेश्च परः प्रभुः । ध्यानासाध्यो दुराराध्यो योगिनामपि निश्चितम्
निर्गुणश्च निराकारो भक्तानुग्रहविग्रहः । स एव भगवान्नृणां स साक्षीश्च मद्गृहे ॥ ८१ ॥

---

१ क. पात्रेण ।

देवैर्ब्रह्मेशशेषैश्च ध्यातं यत्पादपङ्कजम् । धनेशेन गणेशेन दिनेशेनापि दुर्लभम् ॥८६॥
इत्युक्त्वा भीष्मकः कृष्णं समानीय स्वयं पुरः । तुष्टाव सामवेदोक्तस्तोत्रेण परमेश्वरम्॥

भीष्मक उवाच—

सर्वान्तरात्मा सर्वेषां साक्षी निर्लिप्त एव च । कर्मिणा कर्मणामेव कारणानां च कारणम् ।
केचिद्वदन्ति त्वामेकं ज्योतीरूपं सनातनम् । केचिच्च परमात्मानं जीवो यत्प्रतिबिम्बकः
केचित्प्राकृतिकं जीवं सगुणं भ्रान्तबुद्धयः । केचिन्नित्यशरीरं च बुद्धा(धा)श्च सूक्ष्मबुद्धयः
ज्योतिरभ्यन्तरे नित्यं देहरूपं सनातनम् । कस्मात्तेजः प्रभवति साकारमीश्वरं विना ॥
एवं स्तुत्वा स चाऽऽचान्तः स्मरन्विष्णुं च नारद । पाद्यं पद्मार्चिते पादपद्मे चापि ददौ मुदा
अर्घ्यं च प्रददौ तत्र दूर्वापुष्पजलान्वितम् । मधुपर्कं च सुरभि सर्वाङ्गे गन्धचन्दनम्॥९३॥
यत्प्रदत्तं महेन्द्रेण शुभकर्मणि यौतुकम् । पारिजातस्य माल्यं च जामातुश्च गले ददौ॥
कुबेरेण च यद्दत्तममूल्यरत्नभूषणम् । चकार वरणं तस्य स राजा भक्तिपूर्वकम्॥९५॥
वह्निशुद्धांशुकयुगं यद्दत्तं वह्निना पुरा । ददौ तदेव कृष्णाय परिपूर्णतमाय च ॥९६॥
ज्वलितं रत्नमुकुटं यद्दत्तं विश्वकर्मणा । ददौ तन्मस्तके राजा कृष्णस्य परमात्मनः ॥
धूपं रत्नप्रदीपं च नैवेद्यं सुमनोहरम् । नानाप्रकारपुष्पं च रत्नसिंहासनं ददौ ।९८॥
सप्ततीर्थोदकं चैव पुनराचमनीयकम् । ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम्॥९९॥
शय्यां रतिकरीं रम्यां पानार्थं वासितं जलम् । कृत्वा च वरणं राजा परिहारं चकार तम्
कृताञ्जलिपुटो राजा तस्मै पुष्पाञ्जलिं ददौ ॥ १०१ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० रुक्मिण्युद्वाहे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

अथाष्टाधिकशततमोऽध्यायः ।

नारायण उवाच—

एतस्मिन्नन्तरे देवी महालक्ष्मीश्च रुक्मिणी । आजगाम सभामध्ये मुनिदेवादिभिर्युते ।१॥
रत्नसिंहासनस्था च रत्नालंकारभूषिता । वह्निशुद्धांशुकाधाना कबरीभारभूषिता ॥२॥
पश्यन्ती सस्मिता साध्वी ह्यमूल्यरत्नदर्पणम् । कस्तूरीबिन्दुभिर्युक्ता श्रीगन्धचन्दनचर्चिता
सिंदूरबिन्दुना शश्वद्भालमध्यस्थलोज्ज्वला । तप्तकाञ्चनवर्णाभा शतचन्द्रसमप्रभा ।।४॥
चन्दनोक्षितसर्वाङ्गा मालतीमालशोभिता । सप्तभिर्नृपपुत्रैश्च समानीता च बालकैः ॥५॥
देवेन्द्राश्च मुनीन्द्राश्च सिद्धेन्द्रा नृपपुंगवाः । ददृशू रुक्मिणीं देवीं महालक्ष्मीं पतिव्रताम्॥

सप्तप्रदक्षिणाः कृत्वा प्रणम्य स्वपतिं सती । सिषेच शीततोयेन स्निग्धचन्दनपल्लवैः ॥
सा सिषेच जगत्कान्तः कान्तां शान्तां च सस्मिताम् । ददर्श कान्तः कान्तां च कान्तं कान्ता शुभे क्षणे ॥ ८ ॥
अथ देवी पितुः क्रोडे संमुखस्थ शुभानना । लज्जया नम्रवदना उपच्छन्ती च स्वतेजसा ॥
राजा देवेश्वरीं तस्मै परिपूर्णतमाय च । प्रददौ संप्रदानेन वेदमन्त्रेण नारद ॥ १० ॥
वसुदेवाज्ञया कृष्णः स्वर्णस्तुर्कृत्वा स्थितो मुदा । जग्राह देवीं देवश्च भवानीं च भवो यथा
सुवर्णानां पञ्चलक्षं कृष्णाय परमात्मने । दक्षिणां तां ददौ राजा परिपूर्णतमाय च ॥
शुभकर्मणि निष्पन्ने कृत्वा कन्यां च वक्षसि । रुरोद राजा मोहेन मुनिर्देवेन्द्रसंसदि ॥ १२ ॥
परिहारेण वचसा कृत्वा तस्मै समर्पणम् । सिषेच कन्यां धन्यां च नेत्रयुग्मजलेन च ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० रुक्मिण्यु-
द्वाहेऽष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

---

अथ नवाधिकशततमोऽध्यायः ।

शच्युवाच—

तव योग्या च युवती रत्नभूषणभूषिता । त्वां प्रार्थयन्ती सुचिरमवमत्यान्यमीश्वरम् ॥१४॥

सावित्र्युवाच—

यथा वरस्तथा कन्या विधिना योजिता पुरा । विदग्धाया विदग्धेन सर्वत्र संगमः शुभः ॥

रत्युवाच—

ईश्वरेण परीहासं का वा कर्तुं क्षमा भुवि । ध्यानासाध्यो दुराराध्यश्चावमन्यान्यमीश्वरम् ॥

गायत्र्युवाच—

यथा वरस्तथा कन्या च कुण्डे भैष्मके गृहे ॥

रोहिण्युवाच—

सत्यं ब्रूहि जगन्नाथ कामिनीनां च संसदि । कीदृशी राधिका रम्या रुक्मिणी चापि कीदृशी

सरस्वत्युवाच—

राधायां यादृशी प्रीती रुक्मिण्यां नैव तादृशी । सा सङ्गिनी पूर्वकाले सर्वक्रीडासु वर्धिनी
प्राणाधिष्ठातृदेवी सा पञ्चप्राणाधिका सती । रुक्मिणी कमला साक्षात्संपदामधिदेवता ॥
सर्वशक्तिस्वरूपा च कृष्णस्य परमात्मनः । बुद्धेरप्यधिदेवी च दुर्गा नारायणी परा ॥
देवाधिष्ठातृदेवी त्वं सावित्री वेदमातृका । विद्याधिदेवताऽहं च ततोऽन्याश्च कलाकलाः ॥
न ब्रह्माणि शिवे शेषे गणेशे च दिनेश्वरे । न भक्तेषु च पद्मायां न शिवायां च मय्यपि ॥
प्रसादो यादृशस्तस्यामन्येषु च न तादृशः । त्रैलोक्ये पृथिवी धन्या सुपुण्यं भारतं यतः ॥
तत्र वृन्दावनं धन्यं राधापादाब्जचिह्नितम् । सर्वासामपि देवीनां राधा पुण्यवती सती
राधापादाब्जनखरे ददौ स्निग्धमलक्तकम् । अथमेवमिति श्रुत्वा जहसुः सर्वयोषितः ॥
ध्यायन्ते दूरतः सर्वा राधा वक्षःस्थलस्थिता । तस्माद्राधां नमस्कृत्य तुल्यां मन्यते किल
सरस्वतीवचः श्रुत्वा सावित्री पार्वती सती । अन्याश्च योषितः सर्वाः साध्वित्यूचुश्च संसदि
लोपामुद्राऽनसूया चाप्यहल्याऽरुन्धती तथा । सर्वास्ता मुनिपत्न्यश्च रमसं चक्रुरीश्वरम् ॥
अथ देवांश्च भूपांश्च मुनीन्द्रांश्चापि भीष्मकः । पूजयामास विधिना भोजयामास सादरम् ॥
खाद्यतां खाद्यतां लोका दीयतां दीयतामिति । शब्दो बभूव नगरे वाद्यसंगीतमङ्गलैः ॥
अथ प्रभाते ब्रह्मेशशेषाद्याश्चिदशास्तथा । यानमारोहणं भूपाश्चक्रिरे च त्वरान्विताः ॥
राजा महोग्रसेनश्च वसुदेवस्त्वरान्वितः । कारयामास यात्रां च श्रीकृष्णं रुक्मिणीं सतीम्
सुभद्रा रुक्मिणीमाता कन्यां कृत्वा स्ववक्षसि । रुरोदोच्चैस्तरस्तीभिर्भीष्मवैरित्युवाच सा ॥

---

१ क. °द्युक्तो भीष्मको । २ क. °मैतेषु ।

सुभद्रोवाच—

क्व यासि मां परित्यज्य वत्से मातरमीश्वरीम् । कथं जीवामि त्वां त्यक्त्वा कथं त्वं वाऽपि जीवसि ॥ ३४ ॥

महालक्ष्मीर्मम गृहात्कन्यारूपा च मायया । वसुदेवालयं यासि वासुदेवप्रिया सती ॥ ३५ ॥

इत्युक्त्वा कन्यकां शोकात्सिषेच नेत्रजैर्जलैः । भीष्मकः साश्रुनेत्रश्च कन्यां कृष्णे समर्प्य च तं च कृत्वा परीहारं रुरोदोच्चैरतीव सः । रुरोद रुक्मिणी देवी श्रीकृष्णश्चापि मायया रथमारोपयामास वसुदेवः सुतं वधूम् । एतस्मिन्नन्तरे राजा जामात्रे यौतुकं ददौ ॥ गजेन्द्राणां सहस्रं च षड्गुणं च तुरंगमम् । दासीनां च सहस्रं च किंकराणां शतं शतम् रत्नानां च सहस्रं चैवामूल्यरत्नभूषणम् । स्वर्णानां परिशुद्धानां पञ्चलक्षं च सादरम् ॥ तोयभोजनपात्राणि कृतानि विश्वकर्मणा । सौवर्णानि च रम्याणि सुरभीः प्रददौ मुदा ॥ दुग्धवतीनां धेनूनां सवत्सानां सहस्रकम् । अमूल्यानि च रम्याणि वह्निशुद्धांशुकानि च ॥ वसुदेवश्चोग्रसेनो देवैश्च मुनिभिः सह । प्रहृष्टवदनः शीघ्रं द्वारकाभिमुखं ययौ । ४३ ॥ प्रविश्य स्वपुरीं रम्यां कारयामास मङ्गलम् । वाद्यं च वादयामास सुन्दरं सुमनोहरम् ॥ देवकी रोहिणी रम्या यशोदा नन्दगेहिनी । अदितिश्च दितिश्चैव तथा च वरकामिनी श्रीकृष्णं रुक्मिणीं रम्यां विलोक्य च पुनः पुनः । गृहं प्रवेशयामास कारयामास मङ्गलम् चतुर्विधं भोजयित्वा देवांश्च मुनिपुंगवान् । नृपांश्च बान्धवांश्चैव परीहारं चकार च ॥ मद्देभ्यो ब्राह्मणेभ्योऽपि ददौ रत्नादिकं मुदा । तांश्चापि भोजयामास परितुष्टांश्च सस्मितान् एवं भुक्त्वा धनं लब्ध्वा ययुः सर्वे गृहं मुदा । मङ्गलं कारयामास वसुदेवस्य वल्लभा ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० रुक्मिण्युद्वाहो नाम नवाधिकशततमोऽध्यायः ॥ १०९ ॥

---

अथ दशाधिकशततमोऽध्यायः ।

नारायण उवाच—

आगतेषु गतेष्वेवं साङ्गे मङ्गलकर्मणि । नन्दो यशोदया सार्धं पुत्राभ्याशं समाययौ ॥

यशोदोवाच—

ज्ञानं च भवता दत्तं प्रिये नन्दाय माधव । मां चापि मातरं वत्स कृपां कुरु कृपानिधे ॥ मामुद्धर महाभाग घोरोद्धारणकारण । भवाब्धितरणे भीमे भीतां च पतितामपि ॥ १ ॥

---

१ क. 'पुष्पान्प्रदीपितान् ।

मायामयी सा प्रकृतिर्भवाब्धितरणे तरिः । त्वमेव कर्णधारश्च भक्तोत्तीर्णे कृपामय ॥
यशोदावचनं श्रुत्वा जहास पुरुषोत्तमः । उवाच मातरं भक्त्या ज्ञानिनां च गुरोर्गुरुः ॥

श्रीभगवानुवाच—

ज्ञानं योगात्मकं मातर्ज्ञानं च विषयात्मकम् । ज्ञानं भक्त्यात्मकं श्रेष्ठं महादास्यकारणं शुभम् ॥
ज्ञानं पञ्चविधं प्रोक्तं सर्ववेदेषु संमतम् । भक्त्यात्मकं सर्वपरं तेषां च लक्षणं शृणु ॥
क्षुत्पिपासादिकानां च खण्डनं स्वान्तशोधनम् । नाडीनां शोधनं चैव चक्राणामपि भेदनम् ॥
शक्तिकुण्डलिनीयुक्तमीश्वरं चिन्तयेत्ततः । इन्द्रियाणां च दमनं लोभादीनां च वर्जनम् ॥
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् । विशुद्धं च तथाऽऽज्ञाख्यं षट्चक्रकं प्रकीर्तितम् ॥
योगिनामपि दुर्बोधं मूर्खाणां च विशेषतः । ज्ञानं योगात्मकं साध्वि सिद्धानां साध्यमीप्सितम् ॥
जन्तूनामपि सर्वेषां ज्ञानं स्वविषये तथा । सन्तः सर्वे विजानन्ति स्वेच्छया च मदीयया ॥
सिद्ध्यात्मकं च सिद्धानां नियुक्तं सर्वकर्मसु । चतुस्त्रिंशत्सु सिद्धानां साधनं मोचनं तथा ॥
ज्ञानं मोक्षात्मकं सिद्धं परं निर्वाणकारणम् । अनिवृत्तिमार्गमारूढं भक्तस्तन्नैव वाञ्छति ॥
भक्त्यात्मकं च यज्ज्ञानं तुभ्यं राधा प्रदास्यति । तस्यां च मानवं भावं त्यक्त्वा ज्ञानं करिष्यति ॥ १९ ॥
नन्दाय दत्तं यज्ज्ञानं तच्च तुभ्यं प्रदास्यति । गच्छ नन्दव्रजं मातर्नन्देन सह सादरम् ॥
इत्युक्त्वा विनयं कृत्वा जगामाभ्यन्तरं हरिः । नन्दो यशोदया सार्धं प्रययौ कदलीवनम् ॥
ददर्श राधां तत्रैव निद्रितां त्यक्तभूषणाम् । दधानां शुक्लवस्त्रं च निराहारां कृशोदरीम् ॥
पङ्कस्थे पङ्कजदले सजले चन्दनार्चिते । शयानां शुष्कितौष्ठीं च साश्रुनेत्रां च मूर्छिताम् ॥
ध्यायमानां पदाम्भोजं कृष्णस्य परमात्मनः । बाह्यज्ञानपरित्यक्तां सन्निविष्टैकमानसाम् ॥
पश्यन्तीं सस्मितं कान्तं पश्यन्तीं तन्मुखाम्बुजम् । हसन्तीं च रुदन्तीं च स्वप्ने कान्तसमीपतः ॥
सखीभिः परितः शश्वत्सेवितां श्वेतचामरैः । दिवानिशं रक्षितां च गोपीभिः शतकोटिभिः ॥
सावधानपराभिश्च वेत्रहस्ताभिरीश्वरीम् । सप्तद्वारेषु युक्ताभिः परितः प्राङ्गणेषु च ॥
तां दृष्ट्वा विस्मयं प्राप्य समायौ नन्द एव च । ननाम परया भक्त्या दण्डवत्प्रणिपत्य च ॥
निद्रां त्यक्त्वा च सहसा बुबुधे सेश्वरेच्छया । क्षणेन चेतनां प्राप विषयज्ञानवर्जिताम् ॥
पुरतो दंपती दृष्ट्वा पप्रच्छ सादरं सती । उवाच मधुरं चैवं तत्रैव सखिसंसदि ॥ २१ ॥

राधिकोवाच—

कस्त्वं भ्रात्र समायातो ब्रूहि मां किं प्रयोजनम् । न च मे विषयज्ञानं न जानामि नरं पशुम् ॥

१ क. °छिद्दियो° । २ ख. °वत्साऽऽगत्य भ क° ।

किं जलं वा स्थलं किंवा किंवा नक्तं दिनं शृणु । स्त्रियं पुमांसं क्लीबं वा नाहं जानामि मे रुकम् ॥
राधिकावचनं श्रुत्वा नन्दश्च विस्मयं ययौ । भीता यशोदा निकटं गोपीसंभाषितो ययौ ॥
उवास निकटे तस्याः समुवाच प्रियं वचः । उवास तत्र नन्दश्च गोपीदत्तासनेन च ॥

यशोदोवाच—

चेतनं कुरु राधे त्वमात्मानं रक्ष यत्नतः । द्रक्ष्यसि प्राणनाथं च संप्राप्तो मङ्गले दिने ॥
त्वत्तो विश्वं पवित्रं च व्रजकुलं च सुरेश्वरि । गोप्यश्च पुण्यवत्यश्च त्वत्पादाम्बुजसेवया ॥
लोका गायन्ति त्वत्कीर्तिं तीर्थपूतां सुमङ्गलाम् । सन्तो वेदाश्च चत्वारः पुराणानि पुरातनम् ॥
अहं यशोदा नन्दोऽयं बुद्धिरूपे निबोध माम् । वृषभानसुता त्वं च त्वं मां निशामय सुव्रते ॥
द्वारकानगराद्भद्रे श्रीकृष्णसंनिधानतः । तवान्तिकमागताऽहं प्रेरिता हरिणा सति ॥
शृणु मङ्गलवार्तां च मङ्गलं च गदामृतः । आराद्द्रक्ष्यसि कृष्णं तं हे देवि चेतनं कुरु ॥
भक्त्यात्मकं परिज्ञानं देहि मह्यं च सांप्रतम् । स्वप्ने दुःस्वप्नदोषेण स्त्रसमीपं समागतौ ॥
पश्चादायास्यति हरिस्त्वां मुहूर्ते वरानने । भविष्यत्यचिरेणैव श्रीदाम्नः शापमोचनम् ॥
यशोदावचनं श्रुत्वा वार्तां प्राप्य गदामृतः । श्रीकृष्णनामस्मरणाद्दूरीभूतममङ्गलम् ॥
संप्राप्य चेतनं राधा संभाव्य कृष्णमातरम् । उवाच मधुरं शान्ता लौकिकीं भक्तिमुत्तमाम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० राधायशोदासं०
दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

अथैकादशाधिकशततमोऽध्यायः ।

---

राधिकोवाच—

ज्ञानात्मकश्च परमो महेशो शेषपूजितः । ज्ञानं च न ददौ तुभ्यं मन्मूलं प्रेषिता सति ॥
तेनैव छद्मना तुभ्यं भावार्थं बोधयामि किम् । वेदाः सन्तश्च भावार्थं नैव जानन्ति तस्य च ॥
स्त्रीजातिरबला मूढा वस्तुतोऽज्ञानतत्परा । ततस्तद्विरहेणैव संततं हृतचेतना ॥ ३ ॥
किं वाऽहं कथयिष्यामि ज्ञानं पञ्चविधेषु च । भक्त्यात्मकं सर्वपरं निबोध कथयामि ते ॥
श्रीकृष्णस्य वरेणापि नैं साधो निर्भयो भव । गोलोके चापि पतनं संभवेच्च कुयोगिनः ॥
तस्मात्सर्वं परित्यज्य भजस्व परमेश्वरम् । पुत्रबुद्धिं परित्यज्य ब्रह्मरूपं निशामय ॥ ६ ॥
यशोदे भवती सर्वं परित्यज्य च नश्वरम् । गत्वा वृन्दावनं रम्यं पुण्यक्षेत्रं च भारतम् ॥

---

१ घ. नैतु । २ घ त्वं । ३ क. शुद्धं ।

कृत्वा त्रिकालस्नानं च निर्मले यमुनाजले । कृत्वाऽष्टदलपद्मं च स्निग्धेन चन्दनेन च ॥
ध्यानेन गर्गदत्तेन शुद्धेन मनसा सति । संपूज्य परमानन्दं सानन्दं भज तत्पदम् ॥ ९ ॥
कृत्वा निकृन्तनं कर्म पितृभिः शतकैः सह । वैष्णवेन सहाऽऽलापं कुरुष्व सततं सति ॥
वरं हुतवहज्वाले भक्तो वाञ्छति पञ्जरम् । वरं च कण्टके वासं वरं च विषभक्षणम् ॥
हरिभक्तिविहीनानां न सङ्गं नाशकारणम् । स्वयं नष्टो भक्तिहीनो बुद्धिभेदं करोति च ॥
अङ्कुरो भक्तिवृक्षस्य भक्तसङ्गेन वर्धते । परं हरिकथालापपीयूषासेचनेन च ॥ १३ ॥
अभक्तालापदीपाग्निज्वालायाः कलयाऽपि च । अङ्कुरः शुष्कतां याति पुनः सेकेन वर्धते
तस्मादभक्तसङ्गं च सावधानः परित्यज । यथा दृष्ट्वा कालसर्पं नरो भीत्वा पलायते ॥
यशोदे च प्रयत्नेन स्वात्मनः पुत्रमीश्वरम् । राम नारायणानन्त मुकुन्द मधुसूदन ॥
कृष्ण केशव कंसारे हरे वैकुण्ठ वामन । इत्येकादश नामानि पठेद्वा पाठयेदिति ॥१९॥
जन्मकोटिसहस्राणां पातकादेव मुच्यते । राशब्दो विश्ववचनो मश्चापीश्वरवाचकः ॥
विश्वानामीश्वरो यो हि तेन रामः प्रकीर्तितः । रमते रमया सार्धं तेन रामं विदुर्बुधाः ॥
रमाया रमणस्थानं रामं रामविदो विदुः । राश्चेति लक्ष्मीवचनो मश्चापीश्वरवाचकः ॥
लक्ष्मीपतिं गतिं रामं प्रवदन्ति मनीषिणः । नाम्नां सहस्रं दिव्यानां स्मरणे यत्फलं लभेत्
तत्फलं लभते नूनं रामोच्चारणमात्रतः । सारूप्यमुक्तिवचनो नारेति च विदुर्बुधाः ॥
यो देवोऽप्ययनं तस्य स च नारायणः स्मृतः । नाराश्च कृतपापाश्चाप्ययनं गमनं स्मृतम्
यतो हि गमनं तेषां सोऽयं नारायणः स्मृतः । सकृन्नारायणेत्युक्त्वा पुमान्कल्पशतत्रयम्
गङ्गादिसर्वतीर्थेषु स्नातो भवति निश्चितम् । नारं च मोक्षणं पुण्यमयनं ज्ञानमीप्सितम्
तयोर्ज्ञानं भवेद्यस्मात्सोऽयं नारायणः प्रभुः । नास्त्यन्तो यस्य वेदेषु पुराणेषु चतुर्षु च ॥
शास्त्रेष्वन्येषु योगेषु तेनानन्तं विदुर्बुधाः । मुकुमध्ययमानं च निर्वाणं मोक्षवाचकम् ॥
तद्ददाति च यो देवो मुकुंदस्तेन कीर्तितः । मुकुं भक्तिरसप्रेमवचनं वेदसंमतम् ॥ २७ ॥
यस्तं ददाति भक्तेभ्यो मुकुंदस्तेन कीर्तितः । सूदनं मधुदैत्यस्य यस्मात्स मधुसूदनः ॥
इति सन्तो वदन्तीदं वेदे भिन्नार्थमीप्सितम् । मधु क्लीबे च माध्वीके कृतकर्मशुभाशुभे ॥
भक्तानां कर्मणां चैव सूदनं मधुसूदनः । परिणामाशुभं कर्म भ्रान्तानां मधुरं मधु ॥३०॥
करोति सूदनं यो हि स एव मधुसूदनः । कृषिरुत्कृष्टवचनो णश्च सद्भक्तिवाचकः ॥३१॥
अश्चापि दातृवचनः कृष्णं तेन विदुर्बुधाः । कृषिश्च परमानन्दे णश्च तद्दास्यकर्मणि ॥३२॥
तयोर्दाता च यो देवस्तेन कृष्णः प्रकीर्तितः । कोटिजन्मार्जिते पापे कृषिः क्लेशे च वर्तते ॥
भक्तानां णश्च निर्वाणे तेन कृष्णः प्रकीर्तितः । नाम्नां सहस्रं दिव्यानां त्रिरावृत्त्या च यत्फलम्

एकावृत्त्या तु कृष्णस्य तत्फलं लभते नरः । कृष्णनाम्नः परं नाम न भूतं न भविष्यति ॥
सर्वेभ्यश्च परं नाम कृष्णेति वैदिका विदुः । कृष्ण कृष्णेति हे गोपि यस्तं स्मरति नित्यशः ॥
जलं भित्त्वा यथा पद्मं नरकादुद्धरेच्च सः । कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते ॥
भस्मी भवन्ति सद्यस्तु महापातककोटयः । अश्वमेधसहस्रेभ्यः फलं कृष्णजपस्य च ॥ ३९ ॥
वरं तेभ्यः पुनर्जन्म नातो भक्तपुनर्भवः । सर्वेषामपि यज्ञानां लक्षाणि च व्रतानि च ॥
तीर्थस्नानानि सर्वाणि तपांस्यनशनानि च । वेदपाठसहस्राणि प्रादक्षिण्यं भुवः शतम् ॥
कृष्णनामजपस्यास्य कलां नार्हन्ति षोडशीम् । तेषां लोमाद्धवेत्स्वर्गफलं च सुचिरं नृणाम् ॥
स्वर्गादवश्यं पुंसश्च जपकर्तुर्हरेः पदम् । के जले सर्वदेहेऽपि शयनं यस्य चाऽऽत्मनः ॥
वदन्ति वैदिकाः सर्वे तं देवं केशवं परम् । कंसश्च पातके विघ्ने रोगे शोके च दानवे ॥ ४१ ॥
तेषामरिर्निहन्ता च स कंसारिः प्रकीर्तितः । रुद्ररूपेण संहर्ता विश्वानामपि नित्यशः ॥
भक्तानां पातकानां च हरिस्तेन प्रकीर्तितः । मा च ब्रह्मस्वरूपा या मूलप्रकृतिरीश्वरी ॥
नारायणीति विख्याता विष्णुमाया सनातनी । महालक्ष्मीस्वरूपा च वेदमाता सरस्वती ॥
राधा वसुंधरा गङ्गा तासां स्वामी च माधवः ॥ ४७ ॥

ब्रह्मेशशेषादिभिरैश्च वन्द्यं ध्यानैर्न किंचित्सनकादिभिश्च ।
वेदैः पुराणैर्न निरूपितं च भजस्व भक्त्या नवनीतचोरम् ॥ ४८ ॥
क चापि दुग्धं क दधि घृतं वा नवोद्धृतं वा क च तक्रमीप्सितम् ।
तेषां क चोरो भवति क चापि क बन्धनं ते भवमूलमध्ये ॥ ४९ ॥
न योगिभिः सिद्धगणैर्मुनीन्द्रैर्न भक्तसंघैर्भवपद्मशेषैः ।
योगैर्न बद्धो न हि रक्षितुं क्षमैः कथं स बद्धस्तव मूलमध्यतः ॥ ५० ॥
प्रेम्णा तु भक्त्या स्तवनेन पूजया भजस्व पुत्रं तरसा च मातः ।
हृत्पद्ममध्ये स्थितमीश्वरं परं ध्यानेन यत्नेन च संततं सति ॥ ५१ ॥

वरं वृणुष्व भद्रं ते यत्ते मनसि वाञ्छितम् । सर्वं दास्यामि जगति देवानामपि दुर्लभम् ॥

यशोदोवाच—

हरौ च निश्चला भक्तिस्तद्दास्यं वाञ्छितं मम । तव नाम्नश्च व्युत्पत्तिः का वा तद्वक्तुमर्हसि ॥

राधिकोवाच—

भवेद्भक्तिर्निश्चला ते हरेर्दास्यं च दुर्लभम् । लभस्व मद्वरेणापि कथयामि सुनिर्णयम् ॥
पुरा नन्देन दत्ताऽहं भाण्डीरे वटमूलके । दया च कथितो नन्दो निषिद्धश्च प्रमेश्वरः

१ क. °दत्तास्महम् । २ क. °न भवमूले च मध्ये ।

अहमेव स्वयं राधा छाया रावणकामिनी । रावणः श्रीहरेरंशः पार्षदप्रवरो महान् ॥ ९६ ॥
राशब्दश्च महाविष्णुर्विश्वानि यस्य लोमसु । विश्वप्राणिषु विश्वेषु धा धात्री मातृवाचकः ॥
धात्री माताऽहमेतेषां मूलप्रकृतिरीश्वरी । तेन राधा समाख्याता हरिणा च पुरा बुधैः ॥
अहं सुदामशापेन वृषभानुसुताऽधुना । शतवर्षं च विच्छेदो हरिणा सहास्माकं ॥ ९९ ॥
वृषभानश्च कृष्णस्य पार्षदप्रवरो महान् । पितृणां मानसी कन्या मम माता कलावती ॥
अशोभि संभवाऽहं च मम माता च भारते । पुनः सार्धं च युष्माभिर्यास्यामि श्रीहरेः पदम् ॥
इति ते कथितं सर्वं वनं व्रज व्रजेश्वरि । व्रजेश्वरेण सहिता स्वामिना ज्ञानिता सति ॥
ममाधुना च भवती ध्यानस्य व्यर्थवानिका । ध्यानभङ्गे महादोषो नराणामपि सुंदरि ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० राधायशोदासं०
एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

═════

## अथ द्वादशाधिकशततमोऽध्यायः ।

नारायण उवाच—
वासुदेवो द्वारकायां वसुदेवाज्ञया मुने । प्रययौ रत्नरुचिरं रुक्मिणीमन्दिरं वरम् ॥ १ ॥
शुद्धस्फटिकसंकाशममूल्यरत्ननिर्मितम् । पुरतः परितो रम्यं नानाचित्रेण चित्रितम् ॥
अमूल्यरत्नकलशं श्वेतचामरदर्पणैः । वह्निशुद्धांशुकैः शुद्धैः परितः परिशोभितम् ॥ ३ ॥
ददर्श रुक्मिणीं देवीमसीव नवयौवनाम् । रत्नपर्यङ्कमारुह्य शयानां सस्मितां मुदा ॥ ४ ॥
अपीढां च नवोढां तां नवसंगमलज्जिताम् । अमूल्यरत्ननिर्माणभूषणेन विभूषिताम् ॥
सुधाल्लवरीभारां मालतीमाल्यभूषिताम् । दृष्ट्वा कृष्णं भीष्मकन्या सहसा प्रणनाम सा
तां संप्राप्य जगन्नाथो रत्नतल्पे उवास स । शुभक्षणे च शुभया स रेमे रामया सह
सुखसंभोगमात्रेण मूर्छामाप मुदा सती । तस्यां जज्ञे कामदेवो भस्मीभूतश्च शंभुना ॥
स शम्बरं निहत्यैव तत्र प्राप रतिं सतीम् । रतिर्मायावतीनाम्ना संकेतेन सुरस्य च ॥
छायां दत्त्वा च शयने गृहिणी शम्बरालये ॥ ९ ॥

नारद उवाच—
जहार शम्बरं कामो दैत्यं केन प्रकारतः । कथयस्व महाभाग विस्तरेण शुभां कथाम् ॥

नारायण उवाच—
समतीते च सप्ताहे रुक्मिणीसूतिकागृहात् । गृहीत्वा बालकं दैत्यो जगाम स्वालयं मुदा
अपुत्रकश्च दैत्येशः पुत्रं प्राप्य महर्षिन । मायावत्यै ददौ हृष्टो हृष्टा मायावती सती ॥

अतीव पालनेनैव वर्धयामास बालकम् । सरस्वती तां रहसि कथयामास निर्जने ॥१३॥

सरस्वत्युवाच—

शिवकोपानले पूर्वं भस्मीभूतः पतिस्तव । स चायं रुक्मिणीपुत्रो दैत्येनैव समाहृतः ॥१४॥
मायया़ऽपि च मायेशो रुक्मिणीसूतिकागृहात् । समानीय ददौ तुभ्यं पतिस्तेऽयं न चाऽऽत्मजः
कामं च कथयामास जगन्माता च सा सती । तव पत्नी रतिश्चेयं रमस्व रामया सह ॥१६॥
त्वमेव रुक्मिणीपुत्रो नान्यदैत्यस्य मन्मथः । कुरुष्व सती नित्यं रोदिति स्म त्वया विना
इत्युक्त्वा च ययौ वाणी ब्रह्माणी ब्रह्मणः पदम् । स रेमे निर्जने[1] नित्यं रामया सह सुन्दरः
एकदा मन्मथं दैत्यो ददर्श रहसि स्थितम् । शृङ्गारं रामया सार्धं कुर्वन्तं कौतुकेन च ॥
सस्मितं सस्मितायाश्च मध्यवक्षःस्थलस्थितम् । रतिं ददर्श कामेन मूर्छितां सुरतोत्सुकाम्
दृष्ट्वा चुकोप दैत्यश्च जग्राह खड्गमुत्तमम् । उवाच खड्गहस्तश्च कामदेवं रतिं सतीम्

शम्बर उवाच—

धिक् त्वां महाकामुकं च मूर्खं पण्डितमानिनम् । महापातकिनां श्रेष्ठं प्रमत्तं मातृगामिनम्
धिक् त्वां च पुंश्चलीं मत्तां कामुकीं हतचेतनाम् । पुत्रं गृहीत्वा रहसि करोषि सुरतिं सति
इत्येवमुक्त्वा खड्गं च तामेव हन्तुमुद्यतः । जिघांसन्तं रतिं दैत्यं प्रेरयामास मन्मथः ॥
पपात दूरतो ब्रह्मन्मूर्छितः स्वाङ्गपीडितः । पुनश्च चेतनां प्राप्य कोपेन प्रज्वलन्निव ॥२५॥
शिवदत्तं च शूलं च जग्राह निर्भरेण च । शतसूर्यप्रभं शूलं प्रलयाग्निसमं मुने ॥ २६ ॥
दृष्ट्वाऽऽजगुश्च देवाश्च ब्रह्मेशशेषसंज्ञकाः । पवनः कथयामास कर्णे कामस्य यत्नतः ॥
स्मर स्मर महामायां दुर्गां दुर्गतिनाशिनीम् । पवनस्य वचः श्रुत्वा दुर्गां सस्मार मन्मथः ॥
शूलं बभूव तस्याङ्गे रम्यं माल्यं मनोहरम् । ब्रह्मास्त्रेण च तं दैत्यं जघान मन्मथो मुदा ॥
रतिं गृहीत्वा यानेन जगाम द्वारकां पुरीम्[2] । प्रद्युम्नदेवताः सर्वाः स्तुत्वा च पार्वतीं स्वयम्
रुक्मिणी मङ्गलं कृत्वा प्रजग्राह रतिं सुतम् । उत्सवं कारयामास परं हस्त्यश्वनं हरिः ॥
ब्राह्मणान्भोजयामास पूजयामास पार्वतीम् । अथ कृष्णः क्रमेणैव वेदोक्ते मङ्गले दिने ॥
सहस्राणां रमणीनां च पाणिग्राहं चकार ह । कालिन्दीं सत्यभामां च सत्यां नाग्निजितीं सतीम्
जाम्बवतीं लक्ष्मणां च समुद्वाहं चकार सः । ताभिः सार्धं क्रमेणैव पुत्रोत्पत्तिं चकार ह ॥
एकस्यां दश पुत्राश्च कन्यकैका क्रमेण च । निहत्य नरकं दैत्यं सपुत्रं च नृपेश्वरम् ३५॥
वध्यन्तं मुरं दैत्यं जघान रणमूर्धनि । ददर्श कन्यारत्नस्थाः सहस्राणां च षोडश ॥
शताधिका वयस्याश्च शश्वत्सुस्थिरयौवनाः । प्रफुल्लवदनाः सर्वा रत्नभूषणभूषिताः ॥

---

१ क. स रेमे च पृथक्पृथक् । २ क. °पुरे ।

१०५

शुभक्षणे च तासां च पाणिं जग्राह माधवः। ताभिः सार्धं स रेमे च क्रमेण च शुभक्षणे
एकस्यां दशपुत्राश्च कन्यकैका क्रमेण च। हरेरेतान्यपत्यानि बभूवुश्च पृथक्पृथक् ॥
एकदा द्वारकां रम्यां दुर्वासा मुनिपुंगवः। शिष्यैस्त्रिकोटिभिः सार्धमाजगामावलीलया ॥
राजा महोग्रसेनश्च सपुत्रः सपुरोहितः। वसुदेवो वासुदेवोऽप्यक्रूरश्चोद्धवस्तथा॥४६॥
नीत्वा षोडशोपचारं प्रणेमुर्मुनिपुंगवम्। शुभाशिषं च प्रददौ तेभ्यो ब्रह्मन्पृथक्पृथक् ॥
एकानंशा च कन्या ता ददौ तस्मै शुभक्षणे मुक्तामाणिक्यहीरांश्च रत्नं च यौतकं ददौ
स रेमे रामया सार्धं माहेन्द्रे रत्नमन्दिरे। रत्नेन्द्रसारनिर्माणं ददौ तस्मै शुभाश्रमम् ॥
एकदा स मुनिश्रेष्ठः समालोच्य स्वचेतसा। शयानं कुत्रचिद्रम्यपर्यङ्के रत्ननिर्मिते ॥
श्रुतवन्तं पुराणं च श्रद्धया कुत्रचिद्विभुम्। महोत्सवे नियुक्तं च कुत्रचित्प्राङ्गणे शुभे ॥
ताम्बूलं भुक्तवन्तं च भक्त्या दत्तं च सत्यया। कुत्रचित्सेवित तल्पे रुक्मिण्या श्वेतचामरैः
कालिन्दीसेवितपदं शयानं कुत्रचिन्मुदा। सर्वत्र समसंभाषां चकार भगवान्मुनिम्॥४८॥
विस्मयं प्रययौ विप्रो दृष्ट्वा तत्परमाद्भुतम्। तुष्टाव जगतीनाथं रुक्मिणीमन्दिरे पुनः॥
वसन्तं च सुधर्मायां सतां संसदि सुन्दरम् ॥ ४९ ॥

दुर्वासा उवाच—

जय जय जगतां नाथ जितसर्व जनार्दन सर्वात्मक सर्वेश सर्वबीज पुरातन निर्गुण निरीह निर्लिप्त निरञ्जन निराकार भक्तानुग्रहविग्रह सत्यस्वरूप सनातन निःस्वरूप नित्यनूतन ब्रह्मेशशेषधनेशवन्दित पद्मया सेवितपादपद्म ब्रह्मज्योतिरनिर्वचनीय वेदाविदितगुणरूप॥ महाकाशसंमाननीय परमात्मन्नमोऽस्तु ते ॥ ५० ॥

इत्येवमुक्त्वा मनसा हरेरनुमतेन च। प्रणम्य तस्थौ विप्रेन्द्रस्तत्रैव पुरतो हरेः ॥५१॥
तमुवाच जगन्नाथो हितं सत्यं पुरातनम्। ज्ञानं च वेदविहितं सर्वेषां च सतां मतम् ॥

श्रीभगवानुवाच—

मा भैर्विप्र शिवांशस्त्वं किं न जानासि ज्ञानतः। अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते॥
अहमात्मा च सर्वेषां शवाः सर्वे मया विना। प्राणिदेहान्मयि गते यान्त्येव सर्वशक्तयः॥
नानावप्येक एवाहं व्यक्त्वा [1] पृथक्पृथक्। यो भुङ्क्ते तस्य तृप्तिः स्यान्नान्येषां च कदाचन ॥
पृथग्जीवादिसर्वेषां प्रतिमानं च प्राणिनाम्। परिपूर्णतमोऽहं च गोलोके रासमण्डले ।
श्रीदामशापाद्राधा सा मां द्रष्टुमक्षमाऽधुना। सर्वे चैवांशरूपेण कलया च तदंशतः ॥
रुक्मिणीमन्दिरे चांशोऽप्यन्यासां मन्दिरे कलाः। ममापि कुत्रचिदंशः कुत्रचिच्च कलाकलाः

१ क. नियत्त्व'।

कलाकलांशाः कुत्रापि प्रतिमासु च देहिषु। इत्युक्त्वा जगतां नाथो गृहस्याभ्यन्तरं ययौ ॥
दुर्वासाश्च प्रियां त्यक्त्वा श्रीहरेस्तपसे गतः ॥ ६० ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० मुनिकृष्णसं०
द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

अथ त्रयोदशाधिकशततमोऽध्यायः ।

नारायण उवाच—

सशिष्यश्चापि दुर्वासास्त्यक्त्वा च द्वारकां पुरीम् । कैलासं प्रययौ भक्त्या शंकरं द्रष्टुमीश्वरम् ।
गत्वा मुनिश्च कैलासं प्रणनाम शिवं शिवाम् । तुष्टाव परया भक्त्या सशिष्यः प्रणतः शुचिः
तत्सर्वं कथयामास वृत्तान्तं श्रीहरेरपि । आत्मनस्तपसस्तत्त्वं स्ववैराग्यं च चेतसः ॥ ३ ॥
मुनेश्च वचनं श्रुत्वा प्रहस्य पार्वती सती । तमुवाच हितं सत्यं साक्षाच्छंकरसंनिधौ ॥४॥

पार्वत्युवाच—

धर्मतत्त्वं न जानासि धर्मिष्ठं मन्यसे स्वयम् । अनपत्यां परित्यज्य क यासि तपसे मुने ॥५॥
अनपत्यां च युवतीं कुलजां च पतिव्रताम् । त्यक्त्वा भवेयुः संन्यासी ब्रह्मचारी यतीति वा ॥
वाणिज्ये वा प्रवासे वा चिरं दूरं प्रयाति यः । तीर्थे वा तपसे वाऽपि मोक्षार्थं जन्म खण्डितुम्
न मोक्षस्तस्य भवति धर्मस्य स्खलनं ध्रुवम् । अभिशापेन भार्याया नरकं च परत्र च ॥
इहैव च यशोनाश इत्याह कमलोद्भवः । द्वारकां गच्छ हे विप्र स्वधर्मं रक्ष सांप्रतम् ॥८॥
एकानंशां मदंशां च धर्मतः परिपालय । मार्दपद्मार्जितं पादपद्मं सर्वसुदुर्लभम् ॥ ९ ॥
संततं शंभुना गीतं मुनीन्द्रैः सनकादिभिः । परित्यज सुरतरोः कृष्णस्य परमात्मनः ॥
क यासि तपसे वत्स सुधां त्यक्त्वा मनोहराम् । श्रीकृष्णपादपद्मं च स्वप्ने जपति यो मुने
शतजन्मकृतात्पापान्मुच्यते नात्र संशयः । यद्बाल्ये यच्च कौमारे वार्धके यच्च यौवने ॥
कामतोऽकामतो वाऽपि भस्मीभूतं च पातकम् । साक्षाद्यो भारते वर्षे श्रीकृष्णचरणाम्बुजम् ॥
दृष्ट्वा सद्यो भवेत्पूज्यो जीवन्मुक्तो भवेद्ध्रुवम् । कोटिजन्मार्जितात्सद्यः कृतपापाद्विमुच्यते
सर्वाण्येव हि तीर्थानि यतः पुनाति नित्यशः । तद्व्रतं तत्तपः सत्यं तत्पुण्यं तच्च पूजनम् ॥
सकलं कृष्णसंबन्धि स्वमन्यत्खण्डनं यतः । कृष्णभक्तिविहीनश्च ब्राह्मणो वेदपारगः ॥
तत्सङ्गाच्च तदालापाद्भक्तभक्तिः प्रणश्यति । कृष्णस्योच्छिष्टभोजी यः कृष्णभक्तश्च ब्राह्मणः

१ घ. स्वधम् । २ क. °दपायार्चितं ।

जहार पारिजातं च शक्राहंकारमेव च । सत्यां च कारयामास पुण्यकं व्रतमीप्सितम् ॥
वर्धयामास सर्वत्र नित्यं नैमित्तिकं मुने । तत्र व्रते कुमाराय स्वात्मानं दक्षिणां ददौ ॥
ब्राह्मणान्भोजयामास तेभ्यो रत्नं ददौ मुदा । सत्यभामातिमानं च वर्धयामास सर्वतः ॥
रुक्मिण्या अतिसौभाग्यमन्यासां च नवं नवम् । वैष्णवानां सुराणां च विप्राणामपि पूजनम् ॥
वर्धयामास सर्वत्र नित्यं नैमित्तिकं मुने । परमाध्यात्मिकं ज्ञानमुद्धवाय ददौ प्रभुः ॥४८॥
अर्जुनं कथयामास गीतां च रणमूर्धनि । कृत्वा निष्कण्टकं चैव कृपया च कृपानिधिः ॥
युधिष्ठिराय पृथिवीराज्यलक्ष्मीं ददौ प्रभुः । दुर्गां च पूजयामास वैष्णवीं ग्रामदेवताम् ॥
यज्ञं च कारयामास कोटिहोमान्वितं शुभम् । नानाप्रकारनैवेद्यैर्धूपदीपैर्मनोहरैः ॥५१॥
ब्राह्मणान्भोजयामास पार्वतीप्रीतये तथा । रैवते पर्वते रम्ये चामूल्यरत्नमन्दिरे ॥५२॥
गणेशं पूजयामास देवानामीश्वरं परम् । लड्डुकानां तिलानां च सुस्वादु सुमनोहरम् ॥
परिपूर्णं पञ्चलक्षं नैवेद्यं च ददौ मुदा । लड्डुकं स्वस्तिकानां च सप्तलक्षं सुधोपमम् ॥
गणेश्वराय प्रददौ शर्कराशतराशिकम् । पक्वरम्भाफलानां च दशलक्षमपूपकम् ॥५५॥
मिष्टान्नं पायसं रम्यं स्वादु स्वस्तिकपिष्टकम् । घृतं च नवनीतं च दधि दुग्धं सुधोपमम् ॥
धूपं दीपं पारिजातपुष्पमाल्यमभीप्सितम् । सुगन्धि चन्दनं गन्धं वह्निशुद्धांशुके ददौ ॥
यज्ञं च कारयामास कोटिहोमान्वितं शुभम् । ब्राह्मणान्भोजयामास तुष्टाव स गणेश्वरम् ॥
वाद्यं दशविधं चैव वादयामास तत्र वै । सूर्यं च पूजयामास साम्बः कुष्ठक्षयाय च ॥
हविष्यं कारयामास तं च साम्बं समं तरम् । परिपूर्णं वत्सरं चाप्युपहारैरनुत्तमैः ॥
वरं ददौ च साम्बाय स्तोत्रं च भास्करः स्वयम् । ६१ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० गणेशपूजा नाम त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

अथ चतुर्दशाधिकशततमोऽध्यायः ।

नारायण उवाच—

कृष्णपुत्रश्च प्रद्युम्नो महाबलपराक्रमः । तत्पुत्रोऽप्यनिरुद्धश्च विधातुरंश एव च ॥१॥
एकदाऽसावनिरुद्धो नवयौवनसंयुतः । सुप्तो रहसि पर्यङ्के पुष्पचन्दनचर्चिते ॥ २ ॥
स्वप्ने ददर्श युवतीं पुष्पोद्याने सुपुष्पिते । सुगन्धिपुष्पतल्पे च स्निग्धचन्दनचर्चिते ॥

१ क. अपि । २ क. कारयामास । ३ ग. °दराम् । परितुष्टिं । ४ क. शान्त्यर्थं ।

अबह्निपवनात्पूतः पूतं कर्तुं जगत्क्षमः । श्रीकृष्णं च परित्यज्य क यासि तपसे द्विज॥
तपसां फलमाप्नोति श्रीकृष्णस्मरणेन च । यतो भक्तिर्न च भवेच्छ्रीकृष्णे परमात्मनि ॥
स गुरुः परमो वैरी करोति जन्म निष्फलम् । पार्वतीवचनं श्रुत्वा शंकरः प्रेमविह्वलः ॥
पुलकाञ्चितसर्वाङ्गस्तुष्टाव परमेश्वरीम् । दुर्वासाः प्रणतिं कृत्वा शिवदुर्गापदाम्बुजे॥३२॥
स्मारं स्मारं कृष्णपदं पुनश्च द्वारकां ययौ । तत्र गत्वा हरिं दृष्ट्वा तुष्टाव परमेश्वरम् ॥
एकानंशालयं गत्वा स च रेमे तया सह । कृष्णो युधिष्ठिरध्यानात्प्रययौ हस्तिनापुरम्॥
कुन्तीं संभाष्य भूपं च भ्रातॄंश्च प्रमुदाऽन्वितः । उपायेन जरासंधं निहत्य शाल्वमेव च ॥
कारयामास यज्ञं च विधिबोधितदक्षिणम् । मुनीन्द्रैश्च नृपेन्द्रैश्च राजसूयममीप्सितम् ॥
शिशुपालं दन्तवक्त्रं तत्र यज्ञे जघान सः । अतीव निन्दां कुर्वन्तं सभायां मुरमूपयोः ॥
पपात तच्छरीरं च जीवो गत्वा हरेः पदम् । न दृष्ट्वा तत्र सर्वेषां तुष्टावाऽऽगत्य माधवम् ॥

शिशुपाल उवाच––

वेदानां जनकोऽसि त्वं वेदाङ्गानां च माधव । सुराणामसुराणां च प्राकृतानां च देहिनाम् ॥
सूक्ष्मां विधाय सृष्टिं च कल्पभेदं करोषि च । मायया च स्वयं ब्रह्मा शंकरः शेष एव च ॥
मनवो मुनयश्चैव देवाश्च सृष्टिपालकाः । कलांशेनापि कलया दिक्पालाश्च ग्रहादयः ॥
स्वयं पुमान्स्वयं स्त्री च स्वयमेव नपुंसकः । कारणं च स्वयं कार्यं जन्यश्च जनकः स्वयम् ॥
यन्त्रस्य च गुणो दोषो यन्त्रिणश्च श्रुतौ श्रुतम् । सर्वे यन्त्रा भवान्यन्त्री त्वयि सर्वं प्रतिष्ठितम्
मम क्षमस्वापराधं मूढस्य द्वारिणस्तव । ब्रह्मशापात्कुबुद्धेश्च रक्ष रक्ष जगद्गुरो ॥ ११ ॥
इत्येवमुक्त्वा क्रमतो जयो विजय एव च । मुदा तौ ययतुः शीघ्रं वैकुण्ठद्वारमीप्सितम् ॥
शिशुपालस्य स्तोत्रेण सर्वे ते विस्मयं ययुः । परिपूर्णतमं कृत्वा मेनिरे कृष्णमीश्वरम् ॥
कारयित्वा राजसूयं भोजयामास ब्राह्मणान् । कुरुपाण्डवयुद्धं च कारयामास भेदतः ॥
भुवो भारावतरणं चकार स कृपानिधिः । पुनर्ययौ द्वारकां च चिरं स्थित्वा नृपाज्ञया ॥
विप्राय मृतवत्साय जीवयामास पुत्रकान् । मृतस्थानात्समानीय तन्मात्रे प्रददौ सुतान् ॥
तद्दृष्ट्वा देवकी तुष्टा ययाचे मृतपुत्रकान् । मृतस्थानात्समानीय ददौ मात्रे सहोदरान् ॥
सद्यो जहार दारिद्र्यं सुदाम्नो ब्राह्मणस्य च । समागतस्य स्वगृहाद्द्वारकां शरणार्थिनः ॥
तस्मै ददौ राजलक्ष्मीं निश्चलां साक्षपौरुषीम् । पृथुकानां कणं भुक्त्वा भक्तस्य भक्तवत्सलः ।
बभूव तस्य राज्यं च यथेन्द्रस्यामरावती । यथा धनेश्वरो देवो धनाढ्यः स बभूव ह ॥
निश्चलां हरिभक्तिं च ददौ दास्यं सुदुर्लभम् । अविनाशिनि गोलोके यथेष्टं पदमुत्तमम् ॥

१ क. पुरुषोत्तमम् ।

जहार पारिजातं च शक्राद्दर्पमेव च । सत्यां च कारयामास पुण्यकं व्रतमीप्सितम् ॥
वर्धयामास सर्वत्र नित्यं नैमित्तिकं मुने । तत्र व्रते कुमाराय स्वात्मानं दक्षिणां ददौ ॥
ब्राह्मणान्भोजयामास तेभ्यो रत्नं ददौ मुदा । सत्यभामातिमानं च वर्धयामास सर्वतः ॥
रुक्मिण्या अतिसौभाग्यमन्यासां च नवं नवम् । वैष्णवानां सुराणां च विप्राणामपि पूजनम्॥
वर्धयामास सर्वत्र नित्यं नैमित्तिकं मुने । परमाध्यात्मिकं ज्ञानमुद्धवाय ददौ प्रभुः॥४८॥
अर्जुनं कथयामास गीतां च रणमूर्धनि । कृत्वा निष्कण्टकं चैव कृपया च कृपानिधिः॥
युधिष्ठिराय पृथिवीराज्यलक्ष्मीं ददौ प्रभुः । दुर्गां च पूजयामास वैष्णवीं ग्रामदेवताम् ॥
यज्ञं च कारयामास कोटिहोमान्वितं शुभम् । नानाप्रकारनैवेद्यैर्धूपदीपैर्मनोहरैः ॥६१॥
ब्राह्मणान्भोजयामास पार्वतीप्रीतये तथा । रैवते पर्वते रम्ये चामूल्यरत्नमन्दिरे ॥६२॥
गणेशं पूजयामास देवानामीश्वरं परम् । लड्डुकानां तिलानां च सुस्वादु सुमनोहरम् ॥
परिपुष्टं पञ्चलक्षं नैवेद्यं च ददौ मुदा । लड्डुकं स्वस्तिकानां च सप्तलक्षं सुधोपमम् ॥
गणेश्वराय प्रददौ शर्कराशतराशिकम् । पक्वरम्भाफलानां च दशलक्षमपूपकम् ॥६६॥
मिष्टान्नं पायसं रम्यं स्वादु स्वस्तिकपिष्टकम् । घृतं च नवनीतं च दधि दुग्धं सुधोपमम् ॥
धूपं दीपं पारिजातपुष्पमाल्यमभीप्सितम् । सुगन्धि चन्दनं गन्धं वह्निशुद्धांशुके ददौ ॥
यज्ञं च कारयामास कोटिहोमान्वितं शुभम् । ब्राह्मणान्भोजयामास तुष्टाव स गणेश्वरम् ॥
वाद्यं दशविधं चैव वादयामास तत्र वै । सूर्यं च पूजयामास साम्बः कुष्ठक्षयाय च ॥
हविष्यं कारयामास तं च साम्बं समं तरम् । परिपूर्णं वत्सरं चाप्युपहारैरनुत्तमैः ॥
वरं ददौ च साम्बाय स्तोत्रं च भास्करः स्वयम् । ६१ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० गणेशपूजा नाम त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

---

अथ चतुर्दशाधिकशततमोऽध्यायः ।

---

नारायण उवाच—

कृष्णपुत्रश्च प्रद्युम्नो महाबलपराक्रमः । तत्पुत्रोऽप्यनिरुद्धश्च विधातुरंश एव च ॥१॥
एकदाऽसावनिरुद्धो नवयौवनसंयुतः । सुप्तो रहसि पर्यङ्के पुष्पचन्दनचर्चिते ॥ २ ॥
स्वप्ने ददर्श युवतीं पुष्पोद्याने सुपुष्पिते । सुगन्धिपुष्पतल्पे च शिवचन्दनचर्चिते ॥

---

१ क. अपि । २ क. कारयामास । ३ म. ॰दराम् । परितुष्टिं । ४ क. शान्त्यर्थं ।

शयानां सुस्मितां रम्यां नवयौवनसंयुताम् । अमूल्यरत्ननिर्माणभूषणेन विभूषिताम् ॥
चारुकेयूरवलयशङ्खकङ्कणशोभिताम् । मणिकुण्डलयुग्मेन गण्डस्थलविराजिताम् ॥
अतीव सूक्ष्मवसनां क्वणन्मञ्जीररञ्जिताम् । पक्वबिम्बाधरोष्ठीं च शरत्कमललोचनाम् ॥ ६ ॥
शरत्पद्मप्रभामुष्टकोटीन्दुनिन्दिताननाम् । मुक्तापङ्क्तिसमासाद्यदन्तपङ्क्तिमनोहराम् ॥
त्रिवक्रकबरीभारां मालतीमाल्यभूषिताम् । कस्तूरीकुङ्कुमालक्तासितचन्दनकज्जलैः ॥ ८ ॥
पत्रावलीविरचितसुकपोलस्थलोज्ज्वलाम् । दाडिमीकुसुमाकारसिन्दूरबिन्दुभूषिताम् ॥ ९ ॥
श्रीरामकदलीस्तम्भनिन्दितोरुस्थलोज्ज्वलाम् । अत्युच्चैर्वर्तुलाकारस्तनयुग्मविभूषिताम् ॥
नितम्बभारनम्रां च कामबाणप्रपीडिताम् । कामुकीं कमनीयां च पश्यन्तीं वक्रचक्षुषा ॥
कुङ्कुमालक्तरक्ताक्तपादपद्मविराजिताम् । वायुप्रेरणवस्त्रेण व्यक्तगुह्यस्थलोज्ज्वलाम् ॥
तां दृष्ट्वा कामपुत्रश्च कामोन्मथितमानसः । उवाच मधुरं रम्यं काममत्तां सुकोमलाम् ॥
चारुचम्पकवर्णाभां कामेन पुलकान्विताम् । अतिप्रौढां नवोढां च शृङ्गारे चलासुचञ्चलाम् ॥

अनिरुद्ध उवाच—

किं देवी किं च गान्धर्वी का त्वं कामिनि कानने । कस्य स्त्री कस्य कन्या वा कं वा वाञ्छसि सुन्दरि ॥ १९ ॥
त्रैलोक्यातुलसौन्दर्या मुनिमानसमोहिनी । न बिभेषि कथं ब्रूहि स्वयमेकाकिनी च माम् ॥
अहं त्रैलोक्यनाथस्य पौत्रः कामात्मजोऽधुना । कान्तेऽहमनिरुद्धश्च नवीनयौवनान्वितः ॥
कमनीयश्च कामी च कामशास्त्रविशारदः । कामुकीकामनां पूर्णां कर्तुमेवेश्वरः स्वयम् ॥
मां भजस्व सुशीले त्वं सुवेषं च सुशीलकम् । रतिशूरं रतिरसप्राज्ञं रतिरसप्रियम् ॥
रतिपुत्रं रतिरसं प्रमत्तं रसिकं प्रिये । युवानं व्याधिहीनं च कामुकं कामुकीच्छति ॥
विदग्धासु विदग्धं च कान्तमायाति कामतः । विदग्धाया विदग्धेन संगमो गुणवान्भवेत् ॥
प्रच्छाद्य लोचनास्यं च नवसंगमलज्जिता । विलोकयन्ती वक्राक्षिकोणेन तमुवाच सा ॥

कामिन्युवाच—

कामुक कामपुत्रोऽसि कामेन व्याकुलोऽधुना । भवांश्चेत्कामुकीयोग्यो न कामश्चिन्तितः कथम् ।
पौत्रस्त्रैलोक्यनाथस्य स्वतः संभावितस्य च । स्वयं योग्यो योग्यपुत्रो विवाहं न करोषि (व्यूधाः) च त्र ॥ २४ ॥
विवाहिता धर्मपत्नी सा च पुण्यवता सती । निश्चला सततं साध्या धर्मिणी सङ्गिनी सदा
सप्रीतिदानसाध्या गुरुपत्नी त्वनिश्चला । नैमित्तिका न नित्या सा सा च वेदविवर्जिता

१ ख. मत्त. ।

परं नरकसोपाना परत्रेहायशस्करा। साधुस्तत्र न हि रतो वंशजो वैष्णवो यदि ॥२७॥
यदि पूर्वं भवेद्भ्रान्तो निवृत्तः साधुसङ्गतः। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥
प्रायश्चित्ती पुनर्हिंस्रो निवृत्तः पातकी यदि। उपहास्यो भुवि भवेत्सर्वं कुञ्जरशौचवत् ॥
सुशीला सुन्दरी शान्ता धर्मपत्नी प्रशंसिता। पतिव्रता सुसाध्या सा शश्वत्सुप्रियवादिनी
कोमलाङ्गी विदग्धा च श्यामा रतिसुखप्रदा। एवंभूतां परित्यज्य वैष्णवस्तपसे व्रजेत् ॥
सा चेत्परिणता साध्वी शान्ता पुत्रवती यदा। अन्यथा च वृथा सर्वं तपसः स्खलनं भवेत्
असाधुश्च कुवंशश्चेत्परनारीं प्रयाति चेत्। स याति नरकं घोरं पितृभिः सप्तभिः सह ॥
अहमूषा बाणकन्या बाणः शंकरकिंकरः। बाणस्त्रैलोक्यविजयी शंकरो जगतां पतिः ॥
न स्वतन्त्रा पराधीना त्रिषु कालेषु कामिनी। पुंश्चली या स्वतन्त्रा साऽप्यसद्वंशप्रसूतिका
पिता ददाति कन्यां तां सुयोग्याय वराय च। कन्या वरं न याचेत धर्म एष सनातनः ॥
त्वं च योग्योऽसि योग्याऽहं मामिच्छसि यदि प्रभो। बाणं प्रार्थय शंभुं वाऽप्यथवा वा पार्वतीं सतीम् ॥ ३७ ॥

इत्युक्त्वा सुन्दरी साध्वी साऽन्तर्धाना बभूव ह। निद्रां तत्याज सहसा कामी कामात्मजो मुने
बुद्ध्वा स्वप्नं स विज्ञाय कामेन व्यथितान्तरः। बभूव शोकुलोऽशान्तो न दृष्ट्वा प्राणवल्लभाम्
त्यक्त्वाऽऽहारमनिद्रश्च प्रमत्तश्च कृशोदरः। क्षणं तिष्ठति शेते च क्षणं रहसि रोदिति ॥
पुत्रं दृष्ट्वा तु क्रन्दन्तं देवकी रुक्मिणी रतिः। अन्याश्च योषितः सर्वाः कथयामासुरीश्वरम्
तासां च वचनं श्रुत्वा प्रहस्य मधुसूदनः। उवाच सर्वतत्त्वज्ञः कृष्णश्च पूर्णमानसः ॥

श्रीभगवानुवाच—

कामातुरा बाणकन्या रतिं दृष्ट्वा शिवेशयोः। वरं संप्राप दुर्गाया व्याकुला मदनास्त्रतः ॥
स्वप्नं च दर्शयामास साऽनिरुद्धं च पार्वती। मम पौत्रं प्रमत्तं च चकार कौतुकेन च ॥
तत्पुत्रीं च प्रमत्तां तां करोमि स्वप्नतोऽधुना। स्वच्छन्दं तिष्ठ न चिरं नास्ति चिन्ता मनोऽन्यथा
इति कृष्णः समाश्वास्य सर्वात्मा सर्वसिद्धिवित्। स्वप्नं च दर्शयामास बाणपुत्रीं च कामुकीम्
सुप्ता सुतल्पे बाला सा पुष्पचन्दनचर्चिते। नवयौवनसंयुक्ता रत्नभूषणभूषिता ॥४७॥
शयाना रत्नपर्यङ्के ददर्श स्वप्नमीप्सितम्। अतीव निर्जने देशे रत्ननिर्माणमन्दिरे ॥
नवीननीरदश्याममतीव नवयौवनम्। कोटिकन्दर्पलीलाभं सस्मितं सुमनोहरम् ॥४९॥
रत्नकेयूरवलयरत्नमञ्जीररञ्जितम्। रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् ॥ ५० ॥
चन्दनोक्षितसर्वाङ्गं भूषितं पीतवाससा। सुचारुमालतीमाल्यवक्षःस्थलसमुज्ज्वलम् ॥५१॥
शयानं रत्नपर्यङ्के पुष्पचन्दनचर्चिते। तं दृष्ट्वा सहसा साध्वी तल्पं प्रययौ मुदा ॥५२॥

उवाच मधुरं साध्वी हृदयेन विदूयता । कामास्त्रजप्रिया कान्ता कामबाणप्रपीडिता ॥

ऊषोवाच—

कस्त्वं कामुक भद्रं ते मां भजस्व स्मरातुराम् । अतिप्रौढां नवोढां च नवसंगमलालसाम् ॥
तवानुरक्तां भक्तां च गान्धर्वेण समुद्वह । विवाहाष्टप्रकारेषु गान्धर्वः सुलभो नृणाम् ॥
अनुरक्तां प्रियां प्राप्य त्यजेद्यः कपटी पुमान् । तस्माद्याति महालक्ष्मीः शापं दत्त्वा सुदारुणम्

पुमानुवाच—

अहं कृष्णस्य पौत्रश्च कामदेवात्मजः स्वयम् । कथं गृह्णामि त्वां कान्ते तयोरनुमतिं विना
इत्येवमुक्त्वा स पुमानन्तर्धानं चकार सः । कामेन व्याकुला कान्ता न दृष्ट्वा कान्तमीप्सितम्
निद्रां त्यक्त्वा समुत्थाय तल्पादेव मनोहरात् । विषसाद सखीमध्ये प्रमत्ता रुदती भृशम् ॥
पप्रच्छ तां वराऽऽलीनां किं किमित्येव निश्चितम् । उवाच बोधयामास चित्रलेखा सुयोगिनी

चित्रलेखोवाच—

चेतनं कुरु कल्याणि कस्मात्ते भीतिरुल्बणा । स्वयं शंभुः शिवः साक्षाद्दुर्लङ्घ्ये नगरे सति ॥
शिवस्मरणमात्रेण सर्वारिष्टं पलायते । शिवं भवति सर्वत्र शिव एव शिवालयः ॥ १२ ॥
ध्यानाद्दुर्गतिनाशिन्याः सर्वं दुर्गं विनश्यति । ददाति मङ्गलं तस्मै सर्वमङ्गलमङ्गला ॥
चित्रलेखावचः श्रुत्वा किंचिन्नोवाच सुन्दरी । त्यक्त्वाऽऽहारं च निद्रां च पुरुषं चिन्तयेत्सदा
चित्रलेखा सखी गत्वा बाणमाह च तत्प्रियाम् । दुर्गां च शंकरं स्कन्दं गणेशं योगिनां गुरुम्
चित्रलेखावचः श्रुत्वा रुरोदोच्चैर्भृशं सती । बाणश्च शंकराभ्याशे विषादप्रमूर्छितः ॥
जहास शंकरो दुर्गा कार्तिकेयो गणेश्वरः ॥ १६ ॥

गणेश्वर उवाच—

यो ददाति ध्रुवं दुःखमन्यस्मै दम्भमोहितः । सूक्ष्मधर्मविचारेण स विन्दति चतुर्गुणम् ॥
शिवेनाथेश्च क्रीडां च दृष्ट्वा या काममोहिता । वरं तस्यै ददौ दुर्गा वरमेव सुदुर्लभम् ॥
स्वप्ने गत्वा स्वयं देवी मत्तं कृत्वा स्मरात्मजम् । अधुना वामपार्श्वे च स्वप्ने तिष्ठति मूकवत् ॥
सर्वं ज्ञात्वा च सर्वज्ञो भगवान्हरिरीश्वरः । स्वप्ने सुवेषं पुरुषं दर्शयामास कन्यकाम् ॥
सुवेषं पुरुषं दृष्ट्वा युवानं युवती सती । परेच्छा भवेत्तस्या धर्मभीत्या निवर्तते ॥ २१ ॥
सुवेषं पुरुषं दृष्ट्वा पुंश्चली पापवंशजा । त्यजेन्निद्रां च संसारं पतिं पुत्रं धनं गृहम् ॥
चेतनं गृहधर्मं च कुललज्जां सुदुर्गमम् । युवानं रतिशूरं चाप्यौतिनर्मिं न हि त्यजेत् ॥
त्यजेज्जातिं च धर्मं च प्राणांश्च परिणामतः । तस्मात्प्राज्ञः प्रयत्नेन प्राणेभ्यो युवती सदा ॥

---

१ क. °प्यन्तानि च न ।

परिरक्षेच्च सततं मायायुक्तां न विश्वसेत्। हृदयं क्षुरधाराभं नारीणां मधुरं वचः ॥७६॥
तासां मनो न जानन्ति सन्तो वेदाश्च वैदिकाः। प्रयातु द्वारकां सद्यश्चित्रलेखा सुयोगिनी ॥
अनिरुद्धं समाहर्तुं प्रमत्तमत्र लीलया। इति श्रुत्वा महादेवो गणेशं तमुवाच ह ॥७७॥
न शृणोति यथा बाणः शुभकार्यं तथा कुरु। चित्रलेखा ययौ तूर्णं द्वारकाभवनं हरेः ॥
सर्वेषामपि दुर्लङ्घ्यं लीलया प्रविवेश सा। निद्रितं चानिरुद्धं च समाहृत्य च योगतः ॥
रथमारोहयामास निद्रितं बालकं मुदा। सा मनोयायिनी भद्रा गृहीत्वा बालकं मुने ॥
मुहूर्ताच्छोणितपुरं कृत्वा शङ्खध्वनिं ययौ। अथाऽऽश्रमाभ्यन्तरे च रुरुदुः सर्वयोषितः ॥
अहो प्राणहरो वत्सः क्व गतः प्राणवल्लभः। कृष्णस्ताश्च समाश्वास्य सर्वज्ञः सर्वतत्त्ववित् ॥
साम्बकामबलैः सार्धं कृष्णः सात्यकिना तथा। गृहीत्वा गरुडं वीरं रथमारुह्य सत्वरः ॥
सुदर्शनं पाञ्चजन्यं पद्मं कौमोदकीं गदाम्। पश्चाद्याप्यति देवेशो नगरं शोणितं तथा ॥
समणैः शंकरेणैव पार्वत्या परिरक्षितुम्। अथ सा योगिनी धन्या पुण्या मान्या च योषिताम्
शिष्या दुर्वाससः शान्ता सिद्धयोगेन सिद्धिदा। बालकं बोधयामास रुदन्तं मातरं स्मरन् ॥
रत्नासने वसित्वा ददौ तस्मै माल्यचन्दनभूषणम्। कृत्वा सुवेषं बालस्य कन्यान्तःपुरमीप्सितम् ॥
चक्रे प्रवेशं योगेन रक्षकैश्चापि रक्षितम्। तामूषां निद्रितां दृष्ट्वा निराहारां कृशोदरीम्
शर्मिं च बोधयामास सखीभिः परिरक्षिताम्। ऊषां कृत्वा च सुस्नातां वस्त्रभूषणभूषिताम् ॥
वस्त्रैर्माल्यैश्चन्दनैश्च सिन्दूरपत्रकैः शुभैः। द्वयोः संभाषणं तत्र माहेन्द्रे च शुभक्षणे ॥
कारयामास गुप्त्या च सखीनां संमतेन च। पतिव्रता पतिं दृष्ट्वा सा रेमे विगतज्वरा ॥
गान्धर्वेण विवाहेन तामुवाह स्मरात्मजः। रतिर्बभूव सुचिरं सुभगोः सुखकारणम् ॥९३॥
दिवानिशं न बुबुधे स्मरपुत्रः स्मरातुरः। ऊषा कामातुरा प्रौढा नवोढा नवसंगमात् ॥
मूर्छां संप्राप पुंसश्च स्पर्शमात्रेण कामुकी। एवं नित्यं च रहसि संगमः सुमनोहरः ॥
बभूव सुचिरं चिरं राजा शुश्राव रक्षकात् ॥ ९४ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० ऊषानिरुद्धयोः संगमे चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

अथ पञ्चदशाधिकशततमोऽध्यायः।

नारायण उवाच—

अथ भीता रक्षकास्ते समूचुर्योगपश्चिरम्। स्कन्दं गणेशं दुर्गां च दण्डवत्प्रणिपत्य च ॥

रक्षका ऊचुः—

अहो दुष्टश्च कालोऽयमतीव दुरतिक्रमः । स्वतन्त्रा बालिका प्रौढा पतिमिच्छति सांप्रतम्
असत्संगमं नाथ साधूनां दुःखकारणम् । संसर्गजा गुणा दोषा भवन्ति सततं नृणाम् ॥
चित्रलेखा स्वयं दूती समानीय परं वरम् । रणशूरं महावीरं नृपेन्द्रं च महारथम् ॥ ३ ॥
युवानं व्याधिहीनं च कन्दर्पादपि सुन्दरम् । संभोगं कारयामास बुबुधे न दिवानिशम्
सांप्रतं तव कन्या साऽप्यूषा गर्भवती सती । कुलजा कुलयोषेव तत्राज्ञारस्वरूपिणी ॥
दौहित्रो वाऽपि दौहित्री बभूव सांप्रतं तव । कन्यां पश्य महाप्रौढां नगरीं नागरान्विताम्
नखविक्षतसर्वाङ्गीं वराधीनां च चञ्चलाम् । पुंसश्च सङ्गिनीं शश्वद्रहस्ये रतिसङ्गिनीम् ॥
सस्मितां सकटाक्षां च चञ्चलेक्षणवीक्षिताम् । एवं श्रुत्वा लज्जितश्च बाणस्तत्र चुकोप ह
युद्धाय च मतिं चक्रे वारितः शंभुना भृशम् । वारितश्च गणेशेन स्कन्देन शिवया तथा
भैरव्या भद्रकाल्या च योगिनीभिश्च संततम् । अष्टाभिर्भैरवैश्चैव रुद्रैरेकादशात्मकैः ॥
भूतैः प्रेतैश्च कूष्माण्डैर्वेतालैर्ब्रह्मराक्षसैः । योगीन्द्रैरपि सिद्धेन्द्रै रुद्रैश्चण्डादिभिस्तथा ॥
कोटर्या ग्रामदेव्या च यथा मात्रा हिताय च । उवाच शंकरो बाणं मूढं पण्डितमानिनम् ॥
हितं सत्यं नीतिशास्त्रं परिणामसुखावहम् ॥ १३ ॥

महादेव उवाच—

शृणु बाण प्रवक्ष्यामि कथामेनां पुरातनीम् । भुवो भारावतरणे भारते स्वयमीश्वरः ॥ १४ ॥
निहत्य सर्वान्राजेन्द्रान्द्वारकायां विराजते । यस्य लोमसु विश्वानि तस्य वासः सदीश्वरः ॥
वासुदेव इति ख्यातः कथ्यते तेन कोविदैः । धातुर्विधाता भगवांश्चक्रपाणिः स्वयं भुवि ॥
ब्रह्मविष्णुशिवादीनामीश्वरः प्रकृतेः परः । निर्गुणश्च निरीहश्च भक्तानुग्रहविग्रहः ॥ १७ ॥
परं ब्रह्म परं धाम परमात्मा च देहिनः । यस्मिन्गते शवो जीवो संख्यामस्तेन संभवेत् ॥
शस्त्रविद्धो महाकायो यथा मूढ दिशस्तथा । तथाऽऽत्मा च निराकारो देही च ध्यानहेतुना
तस्य पुत्रोऽनिरुद्धश्च महाबलपराक्रमः । त्रैलोक्यमपि संहर्तुं क्षणेन च क्षमः स्वयम् ॥
सर्वे देवाश्च दैत्याश्च बलवन्तो महारथाः । ते सर्वे चानिरुद्धस्य कलां नार्हन्ति षोडशीम्
ययोरेव समं वित्तं ययोरेव समं बलम् । तयोर्विवाहो मैत्री च न तु पुष्टविपुष्टयोः ॥
बलिः पिता ते दैत्यानां सारभूतो महारथः । क्षणेन येन नीतश्च सुतलं स हरेः कला ॥
सर्वे चांशकलाः पुंसः परिपूर्णतमस्य च । वृन्दावनेश्वरस्यापि कृष्णस्य परमात्मनः ॥

---

१ क. संभोग्य प्रा° । २ क. कालो । ३ क. वादी ।

पार्वत्युवाच—

ध्यायते ध्याननिष्ठश्च हृत्पद्मे च दिवानिशम् । ब्रह्मा महेशः शेषश्च भगवन्तं सनातनम्
दिनेशश्च गणेशश्च योगीन्द्राणां गुरोर्गुरुः । ध्यायते परमात्मानं भगवन्तं सनातनम् ॥
सनत्कुमारः कपिलो नरो नारायणस्तथा । ध्यायते हृदयाम्भोजे भगवन्तं स० ॥२७॥
मनवश्च मुनीन्द्राश्च सिद्धेन्द्रा योगिनां वराः । ध्यानाराध्यं च ध्यायन्ते भगवन्तं स०
सर्वादिं सर्वबीजं च सर्वेशं च परात्परम् । ध्यायन्ते ज्ञानिनः सर्वे भगवन्तं स० ॥

गणेश उवाच—

अपत्यं च बलेश्चापि वैष्णवस्य महात्मनः । मूढोऽयमीदृशः पुत्रः प्रह्लादस्य च धीमतः

स्कन्द उवाच—

अये भ्रातर्न श्रुता च हिरण्यकशिपोः कथा । हिरण्याक्षस्य च मधोः कैटभस्य महात्मनः
पूर्वजास्तेऽपि ते दैत्या महाबलपराक्रमाः । क्रमेण विष्णुना नीता लीलया यमसादनम्
भगवान्यस्य संहर्ता स्वयं नारायणः प्रभुः । तस्य को रक्षिता भ्रातर्निवर्तस्व शुभाय च ॥
तेषां च वचनं श्रुत्वा तानुवाचासुरेश्वरः । कोपरक्तास्यनयनो धनुष्पाणिर्यथाऽन्तकः ॥३३॥

बाण उवाच—

शृणु मातः प्रवक्ष्यामि शृणु तात महेश्वर । शृणु भ्रातर्गणपते शृणु भ्रातश्च कार्तिक ॥
शुभाशुभं प्राक्तनेन प्राणिनां कर्मणां तथा । कृतकर्मातिरिक्तं च कार्यं केषां च वर्तते ॥
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि । तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥
यस्माच्च यस्य निर्वाणं विधात्रा लिखितं पुरा । तदेव नित्यं सत्यं च निषेकः केन वार्यते ॥
संग्रामे कातरो यो हि निष्फलं तस्य जीवनम् । जयी यशश्च लभते मृतः स्वर्गं च गच्छति
प्रविश्य कन्यां गृह्णाति नगरं शिवरक्षितम् । पार्वत्या च गणेशेन युष्मेन बलिना तथा ॥
को वा गृह्णाति कन्यां च कस्य वा जीवितस्य च । सगर्भा तव कन्येति सभायां रक्षको वदेत् ।
इति मे वज्रतुल्यं च श्रुतिकीटं परं वचः । अतोऽनिरुद्धं हत्वा च घातयिष्यामि कन्यकाम्
अन्यथा ज्वलदग्नौ च त्यक्ष्यामि च कलेवरम् ॥ ४२ ॥

कोटर्युवाच—

शृणु वत्स प्रवक्ष्यामि माताऽहं तेऽपि धर्मतः । दुरन्तेनापि पुत्रेण पित्रोर्दुःखं पदे पदे ॥
कन्या परगृहीता साऽप्यन्यस्मै दातुमक्षमा । श्रीकृष्णस्यापि पौत्राय प्रद्युम्नस्य सुताय च ॥
अनिरुद्धाय महते स्वेच्छया देहि कन्यकाम् । पूतोऽसि भारते वर्षे सप्तभिः पितृभिः सह ॥
यौतुकं देहि सर्वस्वं यशसे महते भुवि । अन्यथा रणमध्ये च त्वां हनिष्यति माधवः ॥

---

१ क. रणेऽ— । २ ख. °द्ध्वे ।

सुदर्शनेन चक्रेण को वा त्वां रक्षितुं क्षमः । कोटरीवचनं श्रुत्वा चुकोप दैत्यपुंगव ॥४७॥
प्रययौ रथमारुह्य यत्र पौत्रो हरेर्मुने । स्कन्दः सेनापतिर्भूत्वा प्रययौ शंकराज्ञया ॥४८॥
बाण. स्वात्ययनं चक्रे गणेशश्च शिवः स्वयम् । बाण शुभाशिषं चक्रे पार्वती कोटरी तथा॥
अष्टौ च भैरवाश्चैव रुद्राश्चैकादशैव ते सर्वे युद्धाय हन्तारो बभूवुः शस्त्रपाणयः ॥
एतस्मिन्नन्तरे दूतोऽप्यनिरुद्धमुवाच ह । पार्वत्या प्रेरितश्चैव बाणपत्न्या च सत्वरम् ॥

दूत उवाच—

अनिरुद्धोत्तिष्ठ भद्र पार्वतीवचनं शृणु । भव सांनाहिको वत्स कुरु युद्धं बहिर्भव ॥५२॥
भीतोषा रुदती त्रस्ता सस्मार पार्वतीं सतीम् । रक्ष रक्ष महामाये मत्प्राणेश्वरमीप्सितम् ॥
अभयेऽप्यभयं देहि संग्रामे घोरदारुणे । त्वमेव जगतां माता स्नेहस्ते सर्वतः समः ॥५४॥
अथानिरुद्धः संनाही शस्त्रपाणिर्बभूव ह । ऊषादत्तं रथं प्राप्य चकाराऽऽरोहणं मुदा ॥
बहिः संभूय शिबिराद्ददर्श बाणमीश्वरः । सानाहिकं शस्त्रपाणिं रक्तास्यलोचनं परम् ॥
दृष्ट्वाऽनिरुद्धं बाणश्च तमुवाच रुषाऽन्वितः । घोरसंग्राममध्ये च विप्रोक्ति प्रज्वलन्निव ॥

बाण उवाच —

अये वीर महादुष्ट नीतिशास्त्रविवर्जित । चन्द्रवंशकुलाङ्गार पुण्यक्षेत्रेऽयशस्कर ॥५८॥
पिता ते शम्बरं हत्वा जग्राह तस्य कामिनीम् । ततो जातो भवानेव निरोधं स्वकुलक्षमम् ॥
पितामहो वासुदेवो मथुरायां च क्षत्रियः । गोकुले वैश्यपुत्रश्च नाम्ना च नन्दनन्दनः ॥
वृन्दावने च गोपस्य नन्दस्य पशुरक्षक । साक्षाज्जारश्च गोपीनां दुष्टः परमलम्पटः ॥६१॥
जघान पूतनां सद्यो नारीघाती ह्यधार्मिकः आगत्य मथुरां कुब्जां जघान मैथुनेन च ॥
दुर्बलं नरकं हत्वा स्त्रीसमूहं मनोहरम् । जग्राह योनिलुब्धश्च स्वपुत्रमतिनिष्ठुरः ॥६३॥
भीष्मकं मानवं जित्वा तत्पुत्रं चापि दुर्बलम् । जग्राह कन्यकां तस्य देवयोग्यां च रुक्मिणीम्
सत्राजितः सूर्यभृत्यो देवात्प्राप मणीश्वरम् । घातयित्वा ह्युपायेन जग्राह मणिकन्यकाम् ॥
कुरुपाण्डवयुद्धं च कारयित्वा च दारुणम् । युधिष्ठिरस्य यज्ञे च शिशुपालं जघान सः ॥
दन्तवक्त्रं च शाल्वं च जरासंधं च दारुणः । संजहार भुवो भूपसमूहमतिदारुणम् ॥६७॥
उपायान्नरकं हत्वा सर्वस्वं तज्जहार स । दुर्बलो राजभीतश्च समुद्रं शरणं गतः ॥६८॥
जित्वा च भ्रातरं शक्रं भार्याया वचनेन च । जग्राह पारिजातं च पुष्पं च स्वर्गदुर्लभम् ॥
कंसं निहत्याधर्मिष्ठो भ्रातरं मातुरेव च । जग्राह तस्य सर्वस्वं परं किं कथयामि ते ॥
जित्वा च भल्लुकं युद्धे जग्राह तस्य कन्यकाम् । तत्पितुर्भगिनी कुन्ती चतुर्णां कामिनी भुवि

द्रौपदी भ्रातृपत्नी च पञ्चानां कामिनी तथा । गोष्ठीनो योनिलुब्धश्च शश्वत्परमलम्पटः ॥
तज्ज्येष्ठो बलदेवश्च शश्वत्पिबति वारुणीम् । यमुनां भ्रातृपत्नीं च करोत्याह्वानमीप्सितम्
जहार भगिनीं तस्य कौन्तेय. शक्रनन्दनः । सुभद्रां मातुलसुतां संनिबोध कुलक्रमम् ॥
बाणस्य वचनं श्रुत्वा चुकोप कामनन्दनः । उवाच परमार्थं च योग्यं प्रत्युत्तरं मुने ॥

अनिरुद्ध उवाच —

पिता मे कामदेवश्च ब्रह्मपुत्रः पुरा शुचिः । यस्यास्त्रेण वशीभूतं त्रैलोक्यं सततं शृणु ॥
शिवकोपानलेनैव भस्मीभूतः स्वकर्मतः । कृष्णस्य पुत्रोऽप्यधुना सर्वेषां परमात्मनः ॥
पतिव्रता रतिर्माता पतिशोकेन सांप्रतम् । शम्बरस्य गृहे तस्थौ हृता तेन बलेन च ॥७८॥
छायां मायावतीं दत्त्वा मायया शयनेन च । रतिं स्वधर्मं संरक्ष्य धर्मसाक्षी च तद्गृहे ॥
निहत्य शम्बरं शत्रुं गृहीत्वा स्वप्रियां सतीम् । आजगाम द्वारकां च चन्द्रसूर्यौ च साक्षिणौ
पितामहं वासुदेवं त्वं किं जानासि मूढवत् । यं च सन्तो न जानन्ति वेदाश्चत्वार एव च
यासु: सर्वनिवासश्च विश्वानि यस्य लोमसु । तस्य देवः परं ब्रह्म वासुदेव इति स्मृतः ॥
ओंकारं पृच्छ साक्षाच्च यस्य भृत्योऽधुना भवान् । कृष्णभृत्यस्य च बलेः पुत्रोऽसि किंकरात्मजः
गोकुले वैश्यपुत्रत्वं ब्रूहि त्वं ज्ञानदुर्बल । भोजनं वेदविहितं शश्वत्क्षत्रियवैश्ययोः॥८४॥
द्रोणः प्रजापतिः श्रेष्ठो धरा तस्य प्रिया सती । पुत्रं च तपसा लेभे परमात्मानमीश्वरम्
द्रोणो नन्दो वैश्यराजो यशोदा सा धरा सती । वृषभानसुता राधा सुदाम्नः शापकारणात्
त्रिंशत्कोटिं च गोपीनां गृहीत्वा भर्तुराज्ञया । पुण्यं च भारतं क्षेत्रं गोलोकादाजगाम सा
ताभिः सार्धं स रेमे च स्वपत्नीभिर्मुदाऽन्वितः । पाणिं जग्राह राधायाः स्वयं ब्रह्मा पुरोहितः
गोपकोटिश्च गोलोकादाजगाम मुदाऽन्विता । तेजसा हरितुल्यास्ते पार्षदप्रवरा हरेः ॥
गोरक्षणं हरेरेव गोपवेषस्य चाऽऽत्मनः । गोपानां शिशुरक्षार्थं मायेशस्यापि मायया॥९०॥
पूतना बलिकन्या च भगिनी च तवासुर । दृष्ट्वा च वामनं विन्ध्या चकार पुत्रमानसम्॥९१॥
एवंभूतो यदि मम पुत्रो भवति सांप्रतम् । स्तनं ददामि तनयं कृत्वा वक्षसि सुन्दरम्॥९२॥
तस्याः पूर्णं मानसं च चकार भगवान्प्रभुः । स्तनं दत्त्वा च गोलोकं ययौ सा रत्नयानतः ॥
कुब्जा सा भगिनी पूर्वं रावणस्य दुरात्मनः । श्रीरामं चकमे कामान्नाम्ना शूर्पणखा सती ॥
नासां चिच्छेद तस्याश्च लक्ष्मणो धार्मिकेश्वरः । तपसा च वरं लेभे ब्रह्मणः प्रियमीश्वरम् ॥
तेन पुण्येन तं लब्ध्वा गोलोकं सा जगाम ह । गोपी बभूव गोलोके कृष्णस्याऽऽलिङ्गनेन च
नरको हरिविद्धश्च स्वपूर्वप्राक्तनेन च । पाणिं जग्राह कन्यानां साक्षिणौ शशिभास्करौ ॥
भीष्मकन्या महालक्ष्मीः श्रीकृष्णस्य प्रिया सती । वैकुण्ठादागता साध्वी ब्रह्मणोऽनुमतेन च

१ क. °ष्ठी वे ।

सत्राजितस्य कन्या सा सत्यभामा वसुंधरा । ददौ कृष्णाय राजा स तं मणिं यौतुकेन च ॥
भुवो भारावतरणहेतुना गमनं हरेः । संजहार भुवो भारं कुरुपाण्डवयुद्धतः ॥ १०० ॥
शिशुपालो दन्तवक्रो जयो विजय एव च । द्वारिणौ द्वारपद्के च वैकुण्ठे श्रीहरेरपि ॥१॥
कुमारशापात्पतितौ प्राप्य जन्मत्रयं भुवम् । हिरण्यकशिपुश्चैव तयैव पूर्वपूरुष. ॥ २ ॥
तस्य भ्राता हिरण्याक्षस्तेनैव वरुणो जितः । हरिर्नृसिंहरूपेण तं जघानावलीलया ॥ ३ ॥
सूकरेण हतोऽन्यश्च पूर्वजन्मकथां शृणु द्वितीये जन्मनि पुरा रावणः कुम्भकर्णकः ॥ ४ ॥
श्रीरामेण हतौ तौ द्वौ शेषजन्म कलौ तयोः । श्रीकृष्णेन हतौ तौ द्वौ धर्मपुत्रावुभौ तथा ॥
जरासंधश्च शाल्वश्च दुरात्मा कंस एव च । प्राक्तनात्तस्य वध्यास्ते भुवो भारजिहीर्षया ॥
मांधातुः सुतमध्ये च यवनश्चापि प्राक्तनात् । लक्ष्मीश्वरस्य कृष्णस्य धनेन किं प्रयोजनम् ॥
प्रतिज्ञया च सत्यायाः पुण्यकव्रतकारणात् । पारिजातं समानीय चकार स्वात्मनो वनम् ॥
स्वयं जाम्बवती देवी दुर्गांशा भल्लुकात्मजा । पाणिं जग्राह तस्याश्च तपसा भारते हरिः ॥
कुन्त्याश्च क्षेत्रजाः पुत्राः केवलं भर्तुराज्ञया । कलौ निषिद्धं त्रियुगे प्रसिद्धं पलपैतृकम् ॥
युधिष्ठिरो धर्मपुत्रो भीमश्च पवनात्मजः । महेन्द्रपुत्रो धर्मिष्ठः फाल्गुनो विजयी भुवि ॥
यस्मै पाशुपतं शंभुः प्रददौ च स्वयं पुरा अश्वमेधं गवालम्भं संन्यासं पलपैतृकम् ॥ १२ ॥
देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् । द्रौपद्याः पञ्च भर्तारः शंकरस्य वरेण च ॥
बलदेवः पुष्पमधु पूतं पिबति नित्यशः । चकार यमुनाखानं स्नानार्थं धार्मिक शुचिः ॥
सुभद्रां च ददौ कृष्णः फाल्गुनाय महात्मने । कन्यकां मातुलानां च दाक्षिणात्यः परिग्रहः
देशेष्वन्येषु दोषोऽयमित्याह कमलोद्भवः ॥ ११६ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० बाणानिरुद्धसं० पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

अथ षोडशाधिकशततमोऽध्यायः ।

बाण उवाच—

अनिरुद्ध बुधोऽसि त्वं त्वयोक्तं सत्यमेव च । शंभुना चैवमुक्तं च सर्वं बुद्धं स्वचेतसा ॥
त्वयोक्तं शंकरवरात्पञ्चानां स्वामिनां प्रिया । द्रौपदी च महाभागा तन्मे व्याख्यातुमर्हसि ॥
शम्बरेण हृता पूर्वं तव माता कथं रतिः । देवैरपि कथं दत्ता देवास्तेन जिताः कथम् ॥

अनिरुद्ध उवाच—

एकदा रघुनाथश्च सीतया लक्ष्मणेन च । आतः सरसि तत्रस्थो रम्ये पञ्चवटीतटे ॥

१ क. °सेवया ।

उवाच सीता हेमन्ते जलं सुस्वादु निर्मलम् । तथाऽन्नं व्यञ्जनं रम्यं सर्वं वस्तु सुशीतलम् ॥
फलावचयनं चक्रे सीतायै प्रददौ मुदा । ततो ददौ लक्ष्मणाय पश्चाद्भुङ्क्ते स्वयं प्रभुः ॥
लक्ष्मणस्तद्गृहीत्वा च नैव भुङ्क्ते फलं जलम् । मेघनादवधार्थं च सीतोद्धारणकारणात्
निद्रां न याति नो भुङ्क्ते वर्षाणां च चतुर्दश । य एवं पुरुषो योगी तद्वध्यो रावणात्मजः
एतस्मिन्नन्तरे रामं द्रष्टुं कमललोचनम् । वह्निस्तत्र समायातो द्विजरूपी कृपानिधिः ॥
भविष्यत्कथयामास श्रुतिकौटपरं वचः ॥ ९ ॥

वह्निरुवाच—

शृणु राम महाभाग सीतासंगोपनं कुरु । सप्ताहाभ्यन्तरे चैव रावणो दुष्टराक्षसः ॥
दुर्निवार्यः प्राक्तनेन जानकीं च हरिष्यति । विधात्रा लिखितं कर्म प्राक्तनं केन वार्यते ॥
वेदैश्चतुर्भिः कथितं न च दैवात्परं बरम् ॥ १२ ॥

राम उवाच—

सीतां गृहीत्वा त्वं गच्छ च्छायाऽत्रैव तु तिष्ठतु । कलत्रवर्जनं कर्म सर्वेषां च जुगुप्सितम् ॥
सीतां गृहीत्वा प्रययौ रुदतीं च हुताशनः । सीतया सदृशी छाया तस्थौ श्रीरामसंनिधौ ॥
सा च च्छाया हृता पूर्वं रावणेनावलीलया । समुद्धार तां रामो निहत्य तं सबान्धवम् ॥
वह्नौ परीक्षाकाले च च्छाया वह्नौ विवेश सा । अग्निश्छायां च संरक्ष्य ददौ रामाय जानकीम्
रामस्तां च गृहीत्वा च प्रययौ स्वाश्रमं मुदा । छाया तस्थौ वह्निपार्श्वे हृदयेन विदूयता ॥
सा च च्छाया तपश्चक्रे नारायणसरोवरे । तपश्चकार दिव्यं च शतवर्षं च शूलिनः ॥
वरं वृणुष्व भद्रे त्वमुवाच शंकरश्च ताम् । उवाच सा शिवं व्यग्रा भर्तुर्दुःखेन दुःखिता ॥
पतिं देहि पञ्चधा सा वरं वव्रे त्रिलोचनम् । सर्वसंपत्प्रदस्तुष्टस्तस्यै शर्वो वरं ददौ । २०॥

महादेव उवाच—

साध्वि त्वं पञ्चधा ब्रूहि पतिं देहीति व्याकुला । पञ्चेन्द्राश्च हरेरंशा भविष्यन्ति प्रियास्तव ॥
ते च सर्वे च पञ्चेन्द्राश्चाधुना पञ्च पाण्डवाः । सा च च्छाया द्रौपदी च यज्ञकुण्डसमुद्भवा ॥
कृतयुगे वेदवती त्रेतायां जनकात्मजा । द्वापरे द्रौपदी छाया तेन कृष्णा त्रिहायणी ॥
वैष्णवी कृष्णभक्ता च तेन कृष्णा प्रकीर्तिता । स्वर्गलक्ष्मीर्महेन्द्राणां सा च पश्चाद्द्विविंशति
राजा ददौ फाल्गुनाय कन्यायाश्च स्वयंवरे । पप्रच्छ मातरं वीरो वस्तु प्राप्तं मयाऽधुना ।
समुवाच स्वयं माता गृहाण भ्रातृभिः सह । शंभोर्वरेण पूर्वं च परत्र मातुराज्ञया ॥
द्रौपद्याः स्वामिनस्तेन हेतुना पञ्च पाण्डवाः । चतुर्दशानामिन्द्राणां पञ्चेन्द्राः पञ्च पाण्डवाः ॥
शंकरेणाभिसंशप्ता सा मात्रा भर्त्सितेन च । भर्ता ते भस्मसाद्भूतो हरकोपानलेन च ॥
हे रति त्वं मया शप्ता दैत्यग्रस्ता भवाधुना । विजित्य देवान्सेन्द्रांश्च शम्बरस्त्वां हरिष्यति ॥

पुनरुक्तं धरं प्रादात्सतीत्वं ते न यास्यति । छायां दत्त्वा तिष्ठ गेहे यावज्जीवति ते पतिः ॥
इति ते कथितं सर्वमितिहासं पुरातनम् । देवानां गुप्तचरितं शृणु दैत्येन्द्र सांप्रतम् ॥
एतस्मिन्नन्तरे तत्र सुभद्रश्च महाबलः । कुम्भाण्डभ्राता बलवान्बाणसेनापतीश्वरः ॥
निर्भर्त्स्य बाणं समरे शस्त्रपाणिर्महारथः । श्रीकृष्णपौत्रे शूलं च चिक्षेप प्रलयाग्निवत् ॥
अर्धचन्द्रेण तच्छूलं चिच्छेद कामपुत्रकः । शक्तिं चिक्षेप भद्रश्च शतसूर्यसमप्रभाम् ॥
वैष्णवास्त्रेण चिच्छेद तां शक्तिं कामपुत्रकः । नारायणास्त्रं चिक्षेप सुभद्रो रणमूर्धनि ॥
प्रणम्य शेते निर्भीतो मदनस्य सुतो बली । ऊर्ध्वमस्त्रं च बभ्राम शतसूर्यसमप्रभम् ॥
प्रलीनमस्त्रमाकाशे विश्वसंहारकारणम् । अस्त्रे गते सोऽनिरुद्धो गृहीत्वा च महासिम् ॥
बभञ्ज भद्ररथं जघानाश्वांश्च सारथिम् । जघान तं सुभद्रं चालीलया रणमूर्धनि ॥३८॥
हते सुभद्रे बाणश्च महाबलपराक्रमः । बाणानां शतकं चापि चिक्षेप रणमूर्धनि ॥३९॥
कामात्मजोऽग्निबाणेन बाणौघं प्रददाह सः । बाणश्चिक्षेप ब्रह्मास्त्रं सृष्टिसंहारकारणम् ॥
दृष्ट्वा कामात्मजः शीघ्रं सबीजं मन्त्रपूर्वकम् । ब्रह्मास्त्रेणैव सहसा संजहारावलीलया ॥
बाणः पाशुपतं क्षेप्तुं समारेभे च कोपतः । निषिद्धश्च गणेशेन स्कन्देन शंभुना तथा ॥
तद्दृष्ट्वा सोऽनिरुद्धस्तं धनुर्बाणौघसंयुतम् । मुमोच जृम्भणं युद्धे शीघ्रं तं च महारथम् ॥
जडो बभूव बाणश्च निश्चेष्टो रणमूर्धनि । पुनश्चिक्षेप निद्रास्त्रं निद्रितं तं चकार सः ॥
बाणं तं निद्रितं दृष्ट्वा गृहीत्वा खड्गमुत्तमम् । बाणं हन्तुं समुद्यन्तं वारयामास कार्तिकः
स्कन्दश्च शस्त्रबाणैश्च वारयामास लीलया । अनिरुद्धं महामार्गं बलवन्तं धनुर्धरम् ॥४६॥
अनिरुद्धश्च सहसा तया शक्त्या दुरत्यया । बभञ्ज कार्तिकरथं रत्नेन्द्रसारनिर्मितम् ॥
गदया कार्तिकः क्रुद्धोऽप्यनिरुद्धरथं मुदा । बभञ्ज लीलया तत्र क्षणेन रणमूर्धनि ॥४८॥
अनिरुद्धोऽर्धचन्द्रेण क्षुरधारेण लीलया । चिच्छेद कार्तिकधनुर्भल्लास्त्रेण नियोजितम् ॥
जघान कार्तिकस्तं च गदया च दुरन्तया । गदां जग्राह तद्धस्ताज्जवेन मदनात्मनः ॥
शूलं गृहीत्वा स्कन्दं च तमेव हन्तुमुद्यतम् । अनिरुद्धश्च कोपेन प्रेरयामास दूरतः ॥
कार्तिकः पुनरागत्य गृहीत्वा कामपुत्रकम् । गृहीत्वा च करेणैव पातयामास भूतले ॥
अनिरुद्धो गृहीत्वाऽसिं प्रमुदयौ महाबलः । तयोर्विरोधं दूरं च प्रचकार गणेश्वरः ॥
कार्तिकः प्रययौ गेहमूपागेहं स्मरात्मजः । सर्वं निवेदितुं शंभुं प्रययौ स गणेश्वरः ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० बाणयु०-
षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

अथ सप्तदशाधिकशततमोऽध्यायः ।

नारायण उवाच—

गणेशस्तु शिवस्थानं गत्वा नत्वा महेश्वरम् । सर्वं विज्ञापयामास क्रमेण च पृथक्पृथक्
बाणानिरुद्धयोर्युद्धं सुभद्रनिधनं तथा । स्कन्दानिरुद्धयोर्युद्धमनिरुद्धस्य विक्रमम् ॥२॥
गणेशवचनं श्रुत्वा प्रहस्य भगवान्भवः । उवाच श्लक्ष्णया वाचा सुगुप्तं वेदसंमतम् ॥

महादेव उवाच—

गणेश्वर महाभाग श्रूयतां वचनं मम । हितं तथ्यं नीतिसारं परिणामसुखावहम् ॥४॥
असंख्यविश्वसंघं च सर्वं कृष्णात्मजं सुतम् । कृष्णं जानीहि यत्नार्थं कारणानां च कारणम्
ब्रह्मादितृणपर्यन्तं जगत्सर्वं गणेश्वर । निबोध सत्यं कृष्णं च भगवन्तं सनातनम्॥६॥
गोलोके द्विभुजं शान्तं राधाकान्तं मनोहरम् । शिशुरूपं गोपवेषं परिपूर्णतमं प्रभुम् ॥७॥
गोपीभिर्गोपनिकरैः सहितं कामधेनुभिः । पुण्ये वृन्दावने रम्ये सुन्दरे रासमण्डले ॥
चरन्तं मुरलीहस्तं ब्रह्मेशशेषवन्दितम् । शतशृङ्गे च शैलेशे वटमूले निराकुले ॥९॥
गोष्ठे भाण्डीरनिकटे निर्मले विरजातटे । नवीननीरदश्यामं शोभितं पीतवाससा॥१०॥
यथा नवं घनौघं च सौदामिन्या विराजितम् । आविर्भावश्च तेषां वै गोलोके रासमण्डले
तावन्तो गोकुले रम्ये पुण्ये वृन्दावने वने । सर्वे चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्
परिपूर्णतमः कामो ब्रह्मशापात्स्वविस्मृतः । तस्य पुत्रोऽनिरुद्धश्च महाबलपराक्रमः ॥
मया प्रस्थापितः स्कन्दो महायुद्धे सुदारुणे । मृतो बाणश्च संग्रामे तेन स्कन्देन रक्षितः
स्कन्दानिरुद्धयोर्युद्धे समस्त्वं तु गणेश्वर । अष्टौ च भैरवाः सर्वे रुद्राश्चैकादशैव ते ॥
अष्टौ च वसवश्चैते देवाः शक्रादयस्तथा । तथैव द्वादशादित्याः सर्वे दैत्येश्वरास्तथा ॥
देवानामग्रणीः स्कन्दो बाणश्च सगणस्तथा । सर्वे ते चानिरुद्धं च संग्रामे जेतुमक्षमाः
अनिरुद्धः स्वयं ब्रह्मा प्रद्युम्नः काम एव च । बलदेवः स्वयं शेषः कृष्णश्च प्रकृतेः परः
एतत्ते कथितं सर्वं बाणं रक्ष गणेश्वर । भवान्शुभस्वरूपश्च विघ्नखण्डनकारकः॥१९॥
आरादायास्यति हरिर्गृहीत्वा च सुदर्शनम् । अत्यर्थमस्त्रमवरं सूर्यकोटिसमप्रभम् ॥२०॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० बाणयुद्धे
शिवलम्बोदरसं० सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

अथाष्टादशाधिकशततमोऽध्यायः।

नारायण उवाच–

गणेशं बोधयित्वा तु शंभुरभ्यन्तरं ययौ। तत्र सिंहासने रम्ये दुर्गा दुर्गतिनाशिनी॥
भैरवी भद्रकाली च उग्रचण्डा च कोटरी। ताः समुत्थाय सहसा प्रणेमुर्जगदीश्वरम्॥
तत्राऽऽययौ गणेशश्च कार्तिकेयश्च वीर्यवान्। बाणश्च वीरभद्रश्च स्वयं नन्दी सुनन्दकः
महाकालो महामन्त्री ह्यथाष्टौ भैरवास्तथा। सिद्धेन्द्राश्चापि योगीन्द्रा रुद्राश्चैकादशैव:ते
एतस्मिन्नन्तरे तत्र मणिभद्रः समाययौ। सिंहद्वारे स्वयं द्वारी तमीश्वरमुवाच सः॥

मणिभद्र उवाच–

असंख्यानि च सैन्यानि यादवानां महेश्वर। बलदेवश्च प्रद्युम्नः साम्बश्च सात्यकिस्तथा
राजा महोग्रसेनश्च भीमश्च स्वयमर्जुनः। अक्रूरश्चोद्धवश्चैव जयन्तः शक्रनन्दनः॥ ७॥
रत्नेन्द्रसारनिर्माणरथेन्द्रे सुमनोहरे। विधेर्विधाता भगवाञ्छ्रीकृष्णः परमेश्वरः॥८॥
सप्तभिः पार्षदैर्गोपैः सेवितः श्वेतचामरैः। कन्दर्पकोटिलीलाभो वनमालाविभूषितः॥९॥
दधार चक्रमतुलं कोटिसूर्यसमप्रभम्। गदां कौमोदकीं शूलमव्यर्थं संनिधाय च॥१०॥
रथमध्ये महाशङ्खं विश्वसंहारकारणम्। महारथानां लक्षैश्च रथानां च त्रिकोटिभिः॥
त्रिकोटिभिर्गजेन्द्राणां मल्लानां च त्रिकोटिभिः। शतकोटिभिरश्वानां चर्मिणां तच्चतुर्गुणैः
खड्गिनां तत्सप्तगुणैर्द्विगुणैस्तद्धनुष्मताम्। एभिः सार्धं च त्वरितमाययौ शोणितं पुरम्
परितो वेष्टयामास लङ्कां दाशरथिर्यथा। सहस्रतालमाना च ज्वलदग्निशिखोज्ज्वलाम्
ऊर्ध्वं च परिखायुक्तां दुर्लङ्घ्यामसुरैः सुरैः। स्वर्गगङ्गाम्बुराशीनां समूहैर्वृष्टिभिस्तथा॥
पक्षीन्द्रो गरुडः साक्षान्निर्वाणं च चकार सः। मणीन्द्रसारनिर्माणं प्राकाराभ्रंलिहं पुरम्
बभञ्ज लक्षं मल्लानां बलदेवश्च लाङ्गलैः। उद्यानानां निरक्षं च चकारोत्पाटनं प्रभो॥
प्रविवेश महाद्वारं द्वारपालान्निहत्य च। एवं श्रुत्वा महादेवश्चोवाच सुरसंसदि॥१८॥
पार्वतीं भद्रकालीं च स्कन्दं गणपतिं तथा। अष्टौ च भैरवांश्चैव रुद्रांश्च वीरभद्रकम्॥
महाकालं नन्दिनं च सर्वान्सेनापतींस्तथ॥ १९॥

महादेव उवाच–

गोलोकनाथो भगवांश्चक्रपाणिः समागतः। विश्वौघं मद्गुरुमीशो यः क्षणेन नगरं च किम्
सर्वेपार्षदाश्च सर्वे ते बाणं रक्षन्तु यत्नतः। बाणो गच्छतु संग्रामं स्मृत्वा लम्बोदरं परम्
बाणस्य दक्षिणे स्कन्दः पुरतश्च गणेश्वरः। वामे च भैरवा रुद्राः स्वयं नन्दी महाबलः॥

महाकालो वीरभद्रो ये चान्ये सैनिकास्तथा । ऊर्ध्वे दुर्गा भद्रकाली ह्यग्रचण्डा च कोटरी
बाणं रक्ष महाभागे दुर्गे दुर्गतिनाशिनि । कृष्णस्य भवती शक्तिस्तेन नारायणी स्मृता
विष्णुमाये जगन्मातः सर्वमङ्गलमङ्गले । अभ्यर्थयाचकत्वाच्च रक्ष बाणं सुदर्शनात् ॥
बाणः प्रियो मे सर्वेभ्यो गणेशात्कार्तिकादपि । बाणमूर्ध्नि करं देहि पादाब्जरजसा सह
शिवस्य वचनं श्रुत्वा दुर्गा दुर्गतिनाशिनी । प्रहस्योवाच मधुरं याथार्थ्यं समयोचितम् ॥

पार्वत्युवाच—

मणिरत्नादिकं यद्यन्मुक्तामाणिक्यहीरकम् । सर्वस्वं कन्यकामूषां रत्नभूषणभूषिताम् ॥
रत्नभूषणभूषाढ्यमानिरुद्धं परं वरम् । पुरस्कृत्य देहि बाण कृष्णाय परमात्मने ॥
राज्यं कुरुष्व निर्विघ्नं किं युद्धमात्मना सह ।
यस्मिन्गते गताः प्राणाः स जीवश्चेन्द्रियैः सह । शक्तिश्चाहं मनो ब्रह्मा स्वयं ज्ञानात्मकं शिवः
सद्यः पतति देहश्च शिवं त्यक्त्वा शवो भवेत् । को वा तिष्ठति संग्रामे चक्रस्य तेजसा शिव
नाऽऽत्माऽऽकाशो बाणविद्धो युद्धं किं स्वात्मना सह । परमात्मा च सर्वेषां भक्तानुग्रहविग्रहः
नित्यः सत्यो हि कृष्णश्च परिपूर्णतमः प्रभुः । गणेशः कार्तिकेयश्च भवानपि तयोः परः
किंकरेषु प्रियो बाणो न हि कृष्णात्परः प्रियः। वैकुण्ठेऽहं महालक्ष्मीर्गोलोके राधिका स्वयम्
शिवाऽहं शिवलोकेऽपि ब्रह्मलोके सरस्वती । अहं निहत्य दैत्यांश्च दक्षकन्या सती पुरा
त्वन्निन्दया त्यक्तदेहा सा चाहं शैलकन्यका । रक्तबीजस्य युद्धे च काली च मूर्तिभेदतः॥
सावित्री वेदमाताऽहं सीता जनककन्यका । रुक्मिणी द्वारवत्यां च भारते भीष्मकन्यका
सुदाम्नः शापतो दैवाद्वृषभानुसुताऽधुना । धर्मपत्नी च कृष्णस्य पुण्ये वृन्दावने वने ॥
भगवन्तं च सर्वज्ञं त्वा शिवं च सनातम् । किं वाऽहं कथयामीति कर्तव्यं समयोचितम्

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० बाणयुद्धेऽष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

अथैकोनविंशत्यधिकशततमोऽध्यायः

नारायण उवाच—

पार्वतीवचनं श्रुत्वा गणेशश्च शिवः स्वयम् । कार्तिकेयश्च काली च तां प्रशंसां चकार ह
उवाच भगवाञ्शंभुर्जगतां मातरं पराम् । ज्योतिःस्वरूपां परमां मूलप्रकृतिमीश्वरीम् ॥

महादेव उवाच—

त्वया यदुक्तं देवेशि सर्वं वेदोक्तमीप्सितम् । अयुक्तमुपहास्यं च समरं परमात्मना ॥३॥

बाणो ददातु कन्यां तां स्वर्णभूषणभूषिताम् । सामञ्जस्यं यशस्यं च शुभदं सर्वकर्मसु ॥
न ददाति यदा बाणो हिरण्यकशिपोः प्रजा । युद्धे पराङ्मुखो भीतो भगवत्स्वयशस्करः
बाणो गच्छतु सेनाही रणशास्त्रविशारदः । पश्चाच्चाऽऽगमनं कुर्मो वयं सांनाहिकाः शिवे
उवाच बाणं तां दातुं स च न स्वी चकार ह । दुर्गा तं बोधयामास न बुबोध च सद्वचः
एतस्मिन्नन्तरे तां च सभामेव मनोरमाम् । आजगाम महावर्मी बलिश्च वैष्णवाग्रणीः ॥
रथं रत्नेन्द्रनिर्माणं समारुह्य महाबलः । प्रवृद्धैः सप्तभिर्दैत्यैः सेवितः श्वेतचामरैः ॥ ९ ॥
दैत्येन्द्राणां सप्तलक्षैरावृतः परमास्त्रवित् । अवरुह्य रथात्तूर्णं गणेशं च शिवां शिवम् ॥
प्रणम्य कार्तिकेयं च स उवास च संसदि । उत्तस्थुरारात्तं दृष्ट्वा ते सर्वे शंकरं विना ॥
तमुवाच महादेवः संभाष्य प्रियभाषणम् ॥ ११ ॥

महादेव उवाच—

भगवंश्चतुरस्त्वं च प्रदाता सर्वसंपदाम् । अयं हि परमो लाभो वैष्णवानां समागमः ॥१२॥
तीर्थान्यपि च पूतानि वैष्णवस्पर्शमात्रतः । सर्वेषामाश्रमाणां च पूजितो ब्राह्मणः शुचिः ॥
ततोऽधिकः पूजितोऽपि ब्राह्मणो यदि वैष्णवः । न हि पूतं च पश्यामि वैष्णवब्राह्मणात्परम्
स पूतः पवनादेव स पूतश्च हुताशनात् । तीर्थेभ्योऽपि च सर्वेभ्यो बिभेति च ततः सुरः॥
न हि पापानि तद्देहे वह्नौ शुष्कतृणादिवत् ॥ १६ ॥

बलिरुवाच—

कथं स्तौपि जगन्नाथ भृत्यमस्तव्यमीश्वर । प्रदत्तं परमैश्वर्यं त्वया नाथ सुदुर्लभम् ॥१७॥
अधुना स्थापितो दैवात्सर्वाधः सुतलेऽपि च । इन्द्राय दत्तमैश्वर्यं मत्तो भक्तासुरेश्वर ॥
त्वया वामनरूपेण सर्वरूपोऽसि सर्वतः । बाणं बोधय भद्रं च मम प्राणात्परं परम् ॥
आत्मना सह युद्धं च देवेष्वपि विगर्हितम् । इत्युक्त्वा च शिवं नत्वा शिरसा प्रणनाम तम्
सामवेदोक्तस्तोत्रेण तुष्टाव परमेश्वरम् । पुलकाञ्चितसर्वाङ्गः साश्रुनेत्रोऽतिविह्वलः ॥
ध्यायमानश्च नित्यं यो हृत्पद्मे सुमनोहरे । शुक्रेण दत्तं मन्त्रं च जप्त्वा चैकादशाक्षरम् ॥

बलिरुवाच—

अदित्याः प्रार्थनेनैव मातुर्देव्या व्रतेन च । पुरा वामनरूपेण त्वयाऽहं वञ्चितः प्रभो ॥
संपद्रूपा महालक्ष्मीर्दत्ता भक्ताय भाक्तिनः । शक्राय मत्तो भक्ताय भ्रात्रे पुण्यवते ध्रुवम् ॥
अधुना मम पुत्रोऽयं बाणः शंकरकिंकरः । आराद्य रक्षितः सोऽपि तेनैव भक्तबन्धुना ॥
परिपुष्टश्च पार्वत्या यथा मात्रा सुतस्तथा । गृहीतवांश्च तत्कन्यां बलेन युवतीं सतीम् ॥

---

१ क. °ध न° । २ घ. °ततः । ३ क. °पिता देव्याः व° ।

समुद्यतश्च तं हन्तुं कार्त्तिकेनापि वारितः। आगतोऽसि पुनर्हन्तुं पौत्रस्य दमने क्षमः॥
सर्वात्मनश्च सर्वत्र समभावः श्रुतौ श्रुतः। करोषि जगतां नाथ कथमेवं व्यतिक्रमः॥
त्वया च निहतो यो हि तस्य को रक्षिता भुवि। सुदर्शनस्य तेजो हि सूर्यकोटिनिभं परम्॥
केषां सुराणामंशेन तदेव च निवारितम्। यथा सुदर्शनं चैवमस्त्राणां प्रवरं वरम्॥३०॥
तथा भवांश्च देवानां सर्वेषामीश्वरः परः। यथा भवांस्तथा कृष्णो विधाता वेधसामपि॥
विष्णुः सत्त्वगुणाधारः शिवः सत्त्वाश्रयस्तथा, स्वयं विधाता रजसः सृष्टिकर्ता पितामहः
कालाग्निरुद्रो भगवान्विश्वसंहारकारकः। तमसश्चाऽऽश्रयः सोऽपि रुद्राणां प्रवरो महान्॥
स एव शंकरांशश्चाप्यन्ये रुद्राश्च तत्कलाः। भवांश्च निर्गुणस्तेषां प्रकृतेश्च परस्तथा॥
सर्वेषां परमात्मा वै प्राणा विष्णुस्वरूपिणः। मानसं च स्वयं ब्रह्मा स्वयं ज्ञानात्मकः शिवः
प्रवरा सर्वशक्तीनां बुद्धिः प्रकृतिरीश्वरी। त्वात्मनः प्रतिबिम्बस्ते जीवः सर्वेषु देहिषु॥
जीवः स्वकर्मणां भोगी स्वयं साक्षी भवांस्तथा। सर्वे यान्ति त्वयि गते नरदेवे यथाऽनुगाः॥
सद्यः पतन्ति देहश्च शवोऽस्पृश्यस्त्वया विना। बुद्धाः सन्तो न जानन्ति वञ्चितास्तव मायया
त्वां भजन्त्येव ये सन्तो मायमेतां तरन्ति ते। त्रिगुणा प्रकृतिर्दुर्गा वैष्णवी च सनातनी।
परा नारायणीशानी तव माया दुरत्यया। त्वदंशाः प्रतिविश्वेषु ब्रह्मविष्णुशिवात्मकाः॥
सर्वेषामपि विश्वेषामाश्रयो यो महान्विराट्। स शेते च जले योगाद्विश्वेशो गोकुले यथा॥
स एव वासुर्भगवांस्तस्य देवो भवान्परः। वासुदेव इति ख्यातः पुराविद्भिः प्रकीर्तितः॥
त्वमेव कलया सूर्यस्त्वमेव कलया शशी। कलया च हुताशश्च कलया पवनः स्वयम्॥
कलया वरुणश्चैव कुबेरश्च यमस्तथा। कलया त्वं महेन्द्रश्च कलया धर्म एव च॥४४॥
त्वमेव कलया शेष ईशानो नैर्ऋतिस्तथा। मुनयो मनवश्चैव ग्रहाश्च फलदायकाः॥
कलाकलायाश्चांशेन सर्वे जीवाश्चराचराः। त्वं ब्रह्म परमं ज्योतिर्ध्यायन्ते योगिनः सदा॥
तं त्वाऽऽद्रियन्ते भक्तास्ते ध्यायन्ते च तदन्तरे। नवीननीरदश्यामं पीतकौशेयवाससम्॥
ईषद्धास्यप्रसन्नास्यं भक्तेशं भक्तवत्सलम्। चन्दनोक्षितसर्वाङ्गं द्विभुजं मुरलीधरम्॥
मयूरपिच्छचूडं च मालतीमाल्यभूषितम्। अमूल्यरत्ननिर्माणकेयूरवलयान्वितम्॥४९॥
मणिकुण्डलयुग्मेन गण्डस्थलविराजितम्। रत्नसाराङ्गुलीयं च क्वणन्मञ्जीररञ्जितम्॥५०॥
कोटिकन्दर्पलीलाभं शरत्कमललोचनम्। शरत्पूर्णेन्दुनिन्दास्यं चन्द्रकोटिसमप्रभम्॥५१॥
वीक्षितं सस्मिताभिश्च गोपीनां कोटिकोटिभिः। वयस्यैः पार्षदैर्गोपैः सेवितं श्वेतचामरैः॥
गोपबालकवेषं च राधावक्षःस्थलस्थितम्। ध्यानासाध्यं दुराराध्यं ब्रह्मेशशेषवन्दितम्॥

१ क. परम्। २ क. °टिभिः सद्भिः।

सिन्द्रेन्द्रैश्च मुनीन्द्रैश्च योगीन्द्रैः प्रणतं स्तुतम् । वेदानिर्वचनीयं च परं स्वेच्छामयं विभुम्॥
स्थूलस्थूलतमं रूपं सूक्ष्मात्सूक्ष्मतमं परम् । सत्यं नित्यं प्रशान्तं च प्रकृतेः परमीश्वरम् ॥
निर्लिप्तं च निरीहं भगवन्तं सनातनम् । एवं ध्यात्वा च ते पूताः स्निग्धदूर्वाक्षता जलम्॥
पद्मापद्मार्चिते पादपद्मे च दातुमुत्सुकाः । वेदाः स्तोतुमशक्तास्त्वामशक्ता सा सरस्वती ॥
शेषः स्तोतुमशक्तश्च स्वयंभूः शंभुरीश्वरम् । गणेशश्च दिनेशश्च महेन्द्रश्चन्द्र एव च ॥
स्तोतुं नाहं धनेशश्च किमन्ये जडबुद्धयः । गुणातीतमनीहं च किं स्तौमि निर्गुणं परम्॥
अपण्डितोऽयमसुरो न सुरः क्षन्तुमर्हसि । बलेस्तद्वचनं श्रुत्वा तमुवाच जगत्पतिः ॥
परिपूर्णतमः श्रीमान्भक्तं च भक्तवत्सलः ॥ १० ॥

श्रीभगवानुवाच—

मा भैर्वत्स गृहं गच्छ सुतलं रक्षितं मया । मद्वरेण प्रसादेन त्वत्पुत्रोऽप्यजरामरः॥११॥
दर्पहानिं करिष्यामि तस्य मूर्खस्य दर्पिणः । प्रह्लादाय वरो दत्तो भक्ताय च तपस्विने॥
ममावध्यश्च त्वद्वंशश्चेति प्रीतेन चेतसा । तव पुत्राय दास्यामि ज्ञानं मृत्युंजयं परम् ॥
त्वया कृतमिदं स्तोत्रं सामवेदोक्तमीप्सितम् । पुरा सनत्कुमाराय प्रदत्तं ब्रह्मणा तथा ॥
सिद्धाश्रमे पुण्यतमे प्रशस्ते सूर्यपर्वणि । गौतमाय प्रदत्तं च गौर्या मन्दाकिनीतटे॥१५॥
शंकरेण च शिष्याय भक्ताय च दयालुना । ब्रह्मणे च मया दत्तं शिवाय विरजातटे ॥
भृगवे च पुरा दत्तं कुमारेण च धीमता । त्वं च दास्यसि बाणाय बाणः स्तोष्यत्यनेन माम्
इदं स्तोत्रं महापुण्यमुपदिश्य गुरोर्मुखात् । वृतस्य पूजितस्यापि वस्त्रभूषणचन्दनैः ॥
सुस्नातो यः पठेन्नित्यं पूजाकाले च भक्तितः । कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः
विपदां खण्डनं स्तोत्रं कारणं सर्वसंपदाम् । वारणं दुःखशोकानां भवाब्धिघोरतारणम् ॥
खण्डनं गर्भवासानां जरामृत्युहरं परम् । बन्धनानां च रोगाणां खण्डनं भक्तमण्डनम्॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । व्रती व्रतेषु सर्वेषु तपस्वी च तपःसु च ॥
स सत्यं सर्वदानानां फलं च लभते ध्रुवम् । लक्षधा स्तोत्रपाठेन स्तोत्रसिद्धिर्भवेन्नृणाम्॥
सर्वसिद्धिं च लभते सिद्धस्तोत्रो भवेद्यदि । इह लोके देवतुल्योऽप्यन्ते याति हरेः पदम्॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० बाणयुद्धे बलिकृतश्रीकृष्णस्तोत्रं नामैकोनविंशत्यधिकशततमोऽध्यायः॥११९॥

अथ विंशत्यधिकशततमोऽध्यायः ।

नारायण उवाच—

अथ कृष्णश्च भगवानुद्धवेन बलेन च । दूतं प्रस्थापयामास विधाय मन्त्रणं शुभम् ॥१॥

१ क. °र्तीर्थे ।

शिवो गणपतिर्यत्र दुर्गा दुर्गतिनाशिनी । कार्तिकेयो भद्रकाली चोग्रचण्डा च कोटरी ॥
आगत्य नत्वा दूतश्च गणेशं च शिवं शिवाम्। मानवांश्चापि पूज्यांश्च समुवाच यथोचितम्

दूत उवाच—

बाणमाह्वयते कृष्णः संग्रामार्थं महेश्वर। किं वाऽनिरुद्धमूषां च गृहीत्वा शरणं व्रज ॥४॥
रणे निमन्त्रितो यो हि न याति भयकातरः । परत्र नरकं याति सप्तभिः पितृभिः सह ॥
दूतस्य वचनं श्रुत्वा सभामध्ये यथोचितम् । उवाच पार्वती देवी स्वयं शंकरसंनिधौ ॥

पार्वत्युवाच—

गच्छ बाण महाभाग गृहीत्वा तव कन्यकाम्। सर्वस्वं यौतकं दत्त्वा श्रीकृष्णं शरणं व्रज
सर्वेषामीश्वरं बीजं दातारं सर्वसंपदाम्। वरं वरेण्यं शरणं कृपालुं भक्तवत्सलम् ॥८॥
पार्वतीवचनं श्रुत्वा तमूचुस्ते सुरेश्वराः। प्रशशंसुः सभामध्ये धन्यधन्येति सर्वदा ॥९॥
कोपाविष्टश्च बाणोऽयमुत्तस्थौ सहसाऽसुरः। सांनाहिको धनुष्पाणिः प्रणम्य शंकरं ययौ॥
सर्वैर्निषिध्यमानश्च कम्पितो रक्तलोचनः। सांनाहिकश्च दैत्यानां त्रिकोट्या च महाबलः
कुम्भाण्डः कूपकर्णश्च निकुम्भः कुम्भ एव च। सेनापतीश्वरश्चैते ययुः सांनाहिकास्तथा ॥
उन्मत्तभैरवश्चैव संहारभैरवस्तथा । असिताङ्गो भैरवश्च रुरुभैरव एव च ॥ १३ ॥
महाभैरवसंज्ञश्च कालभैरव एव च । प्रचण्डभैरवश्चैव क्रोधभैरव एव च ॥ १४ ॥
प्रययुः शक्तिभिः सार्धं सर्वे सांनाहिकाश्च ते। कालाग्निरुद्रो भगवान्रुद्रैः सांनाहिको ययौ
उग्रचण्डा प्रचण्डा च चण्डिका चण्डनायिका। चण्डेश्वरी च चामुण्डा चण्डी चण्डकपालिका
अष्टौ च नायिकाः सर्वाः प्रययुः खर्परान्विताः। कोटरी रत्नयानस्था शोणितग्रामदेवता
प्रययौ सा प्रफुल्लास्या खड्गखर्परधारिणी। इन्द्राणी वैष्णवी शान्ता ब्रह्माणी ब्रह्मवादिनी
कौमारी नारसिंही च वाराही विकटाकृतिः। माहेश्वरी महामाया भैरवी भीमरूपिणी ॥
अष्टौ च शक्तयः सर्वा रथस्थाः प्रययुर्मुदा। रत्नेन्द्रसारयानस्था प्रययौ भद्रकालिका ॥
रक्तवर्णा त्रिनयना जिह्वाललनभीषणा। शूलशक्तिगदाहस्ता खड्गखर्परधारिणी॥२१॥
प्रययौ शूलहस्तश्च वृषभस्थो महेश्वरः। स्कन्दश्च शिखियानस्थः शस्त्रपाणिर्धनुर्धरः ॥
एवं च प्रययुः सर्वे गणेशं पार्वतीं विना। एभिर्युक्तं महादेवं दृष्ट्वा च भद्रकालिकाम्
प्रचक्रे चक्रपाणिश्च संभाषां च यथोचिताम्। बाणः शङ्खध्वनिं कृत्वा प्रणम्य पार्वतीश्वरम्
धनुर्दधार सगुणं दिव्यास्त्रेण नियोजितम्। बाणं समुद्यतं दृष्ट्वा सात्यकिः परवीरहा॥
निषिध्यमानस्तैः सर्वैः संनाही प्रययौ मुदा। बाणश्चिक्षेप दिव्यास्त्रमजस्रं नाम नारद॥

---

१ क. सम।

अव्यर्थं ग्रीष्ममध्याह्नमार्तण्डाभं सुतीक्ष्णकम् । दृष्ट्वाऽस्त्रं सात्यकिः साक्षात्किंचिन्नम्रो बभूव सः ॥ २७ ॥
किं वा न दग्धः प्रययौ नभोमध्यं सुदारुणम् । वह्निं चिक्षेप बाणश्च सात्यकिर्वारुणेन च
प्रज्वलन्तं तालमानं निर्वाणं च चकार स. । चिच्छेद वारुणं घोरं प्रचण्डं भीममुल्बणम् ॥
चिच्छेद सात्यकिश्चैव पार्जन्येनावलीलया । चिक्षेप पावनं बाणः प्रचण्डं घोरमुल्बणम्
चिच्छेद सात्यकिश्चैव पर्वतास्त्रेण लीलया । नारायणास्त्रं चिक्षेप बाणश्च रणमूर्धनि ॥
सात्यकिर्दण्डवद्भूमौ पपातार्जुनशिक्षया । माहेश्वरं प्रचिक्षेप बाणः शस्त्रविदां वरः ॥
सात्यकिर्वैष्णवास्त्रेण प्रचिच्छेदावलीलया । ब्रह्मास्त्रं चापि चिक्षेप बाणश्च रणमूर्धनि ॥
क्षणं चकार निर्वाणं ब्रह्मास्त्रेण च सात्यकिः । नागास्त्रं चापि चिक्षेप बाणो रणविशारदः
सात्यकिर्गारुडेनैव संजहार क्षणेन च । जग्राह शूलमव्यर्थं शंकरस्य सुदारुणम् ॥ ३९॥
तुष्टाव सात्यकिर्दुर्गां गले शाल्यं बभूव ह । जग्राह धनुषा बाणो बाणं पाशुपतं तथा॥
बाणं सबाणं जृम्भं च सात्यकिश्च चकार ह । बाणं तं जृम्भितं दृष्ट्वा कार्तिकेयो महाबलः
अर्धचन्द्रं च चिक्षेप कामश्चिच्छेद लीलया । गदां चिक्षेप च स्कन्दः प्रात.सूर्यसमप्रभाम्
वैष्णवास्त्रेण कामश्च निर्वाणं च चकार सः । नारायणास्त्रं स्कन्दश्च प्राक्षिपच्च त्वरान्वितः
पपात दण्डवद्भूमौ प्रद्युम्नः कृष्णशिक्षया । स्कन्द. शक्तिं च चिक्षेप प्रलयाग्निसमप्रभाम्
कामो नारायणास्त्रेण निर्वाणं च चकार ताम् । ब्रह्मास्त्रं च प्रचिक्षेप कार्तिको रणमूर्धनि
ब्रह्मास्त्रेणापि कामश्च निर्वाणं च चकार सः । जग्राह कार्तिकः कोपाद्दिव्यं पाशुपतं तदा
निद्रास्त्रेणापि मदनो निद्रितं च चकार तम् । कार्तिकं निद्रितं दृष्ट्वा बाणं च जृम्भितं तथा
कोपात्कामं च सरथं जग्राह भद्रकालिका । क्रोडे कृत्वा च बाणं च स्कन्दं च जगतां प्रसूः ·
रणस्थलाच्च प्रययौ यत्रैव पार्वती सती । कार्तिकं बोधयामास बाणं सुस्थं चकार सा ॥
सहसा सरथः कामो नासारन्ध्रेण वर्त्मना । बहिर्बभूव संत्रस्तः प्रययौ च रणस्थलम् ॥
दृष्ट्वा कामं च सरथं जहसुर्यादवास्तदा । सर्वे शैवाश्च तत्रस्थाः शुष्ककण्ठा भयाकुलाः
अथ बाणः पुनः क्रुद्धो रथमारुह्य कोपतः । कार्तिकेयश्च भगवान्युद्धाय पुनरागतः ॥
बाणः पञ्च शरांश्चैव चिक्षेप रणमूर्धनि । अर्धचन्द्रेण चिच्छेद बलदेवो महाबलः ॥
रथं बभञ्ज बाणस्य लाङ्गलेन च लाङ्गली । जघान सूतमश्वांश्च मुसलेनावलीलया ॥
कुर्वन्तमुद्यमं छेत्तुं हलिनं च महाबलः । बाणाग्निरुद्रो भगवान्वारयामास लीलया ॥
रथं बाणाग्निरुद्रस्य बभञ्ज लाङ्गली रणे । हलेन सूतमश्वांश्च जघान रणमूर्धनि॥५१॥
बाणाग्निरुद्रः कोपेन चिक्षेप ज्वरमुल्बणम् । बभूवुर्यादवाः सर्वे ज्वराक्रान्ता हरिं विना॥

तं दृष्ट्वा भगवान्कृष्णः ससर्ज वैष्णवं ज्वरम् । तं चिक्षेप ज्वरं हन्तुं माहेशं रणमूर्धनि ॥
बभूव ज्वरयोर्युद्धं मुहूर्तमतिदारुणम् । वैष्णवज्वरनिष्क्रान्तो रणमूर्ध्नि पपात सः ॥
परं बभूव निश्चेष्टस्तुष्टाव माधवं पुनः ॥ ६४ ॥

ज्वर उवाच—

प्राणान्रक्ष जगन्नाथ भक्तानुग्रहविग्रह । त्वमात्मा पुरुषः पूर्णः सर्वत्र समता तव ॥
ज्वरस्य वचनं श्रुत्वा संजहार स्वकं ज्वरम् । माहेश्वरो ज्वरो भीतो रणादेव हि निर्ययौ ॥
बाणश्च पुनरागत्य बाणानां च सहस्रकम् । चिक्षेप मन्त्रपूतं च प्रलयाग्निशिखोपमम् ॥
फाल्गुनः शरजालेन वारयामास लीलया । चिक्षेप शक्तिं बाणश्च ग्रीष्मसूर्यसमप्रभाम् ॥
चिच्छेद लीलया तां च सव्यसाची महाबलः । स जग्राह पाशुपतं शतसूर्यसमप्रभम् ॥
अव्यर्थमतिघोरं च विश्वसंहारकारकम् । तद्दृष्ट्वा चक्रपाणिश्च चक्रं चिक्षेप दारुणम् ॥
हस्तानां च सहस्रं च सपाशुपतमुद्वगम् । चिच्छेद रणमध्ये च पपातावनौसिंहवत् ॥
शस्त्रं पाशुपतं चैव ययौ पशुपतेः करम् । अव्यर्थं दारुणं लोके प्रलयाग्निशिखोपमम् ॥
बाणरक्तसमूहेन बभूव च महानदः । बाणः पपात निश्चेष्टो व्यथितो हतचेतनः ॥६३॥
तत्राऽऽजगाम भगवान्महादेवो जगद्गुरुः । रुरोदाऽऽगत्य मोहेन बाणं कृत्वा स्ववक्षसि ॥
शिवाश्रुपतनेनैव संबभूव सरोवरम् । चेतनं कारयामास करुणासागरः प्रभुः ॥ ६९ ॥
बाणं गृहीत्वा प्रययौ यत्र देवो जनार्दनः । चक्रे पश्चान्निते पादपद्मे बाणसमर्पणम् ॥
तुष्टाव जगतां नाथं भक्तेशं चन्द्रशेखरः । बलिना च स्तुतं येन वेदोक्तेन च तेन च ॥
हरिर्मृत्युंजयं ज्ञानं ददौ बाणाय धीमते । करपद्मं ददौ गात्रे तं चकारानरामरम् ॥
बाणः स्तोत्रेण तुष्टाव भक्त्या बलिकृतेन च । वरां कन्यां समानीय रत्नभूषणभूषिताम् ॥
प्रददौ हरये भक्त्या तत्रैव देवसंसदि । गजेन्द्राणां पञ्चलक्षमश्वानां तच्चतुर्गुणम् ॥७०॥
दासीनां च सहस्रं च रत्नभूषणभूषितम् । सहस्रं कामधेनूनां वत्सयुक्तं च सुंदरम् ॥
माणिक्यानां च मुक्तानां रत्नानां शतलक्षकम् । मणीन्द्राणां हीरकाणां शतलक्षं मनोहरम् ॥
जलभाजनपात्राणि सुवर्णनिर्मितानि च । सहस्राणि ददौ तस्मै भक्तिनम्र मकंधरः ॥
यानानि सूक्ष्मवस्त्राणि वह्निशुद्धांशुकानि च । ददौ बाणश्च सर्वाणि स्वभक्त्या शंकराज्ञया ॥
ताम्बूलानां मधूनां च पुष्पपात्राणि नारद । सहस्राणि ददौ भक्त्या वराणि विविधानि च ॥
कन्यां समर्पयामास पादपद्मे हरेरपि । रुरोदोच्चैः स्वभक्त्या च परीहारं चकार सः ॥

१ क. शिवं पाशुपतेनै° । २ क. पद्मं । ३ क. बाणं समर्प्य च । ४ क तस्मै सुवर्णं च सं° ।
५ ग. °नां च सुर्णानां ।

कृष्णस्तस्मै वरं दत्त्वा वेदोक्तं च शुभाशिषम् । शंकरानुमतेनैव प्रययौ द्वारकां पुरीम् ॥
गत्वा कन्यां नवोढां तां बाणस्यापि महात्मनः । रुक्मिण्यै प्रददौ शीघ्रं देवक्यै च हरिः स्वयम्
महोत्सवं मङ्गलं च कारयामास यत्नतः । ब्राह्मणान्भोजयामास ब्राह्मणेभ्यो धनं ददौ ॥
इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० बाणयुद्धं नाम विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

अथैकविंशत्यधिकशततमोऽध्यायः ।

नारायण उवाच—
अथ कृष्णः सुधर्मायां निवसन्सगणस्तथा । तत्राऽऽजगाम विप्रश्च प्रज्वलन्ब्रह्मतेजसा ॥
आगत्य दृष्ट्वा तुष्टाव भक्त्या च पुरुषोत्तमम् । उवाच मधुरं शान्तो भीतो विनयपूर्वकम्
ब्राह्मण उवाच—
शृगालो वासुदेवश्च राजेशो मण्डलेश्वरः । त्वामुवाच स यद्वाक्यं सावधानं निशामय ॥
शृगाल उवाच—
वैकुण्ठे वासुदेवोऽहं देवेशश्च चतुर्भुजः । लक्ष्मीपतिश्च जगतां धाता धातुश्च पालकः ॥
ब्रह्मणा प्रार्थितोऽहं च भारावतरणाय च । भुवो भारतवर्षे च तदर्थं गमनं मम ॥ ६ ॥
वसुदेवसुतो वैश्यः क्षत्रियश्चाप्यहंकृतः । आत्मानं भक्तविष्णुश्च मायावी च प्रतारकः
जैनं जनेन निर्जित्य दुर्बलं बलिना सह । योधयित्वा महाधूर्तो घातयामास भूपतीन् ॥
दुर्योधनं जरासंधं मूढमन्यं च दुर्बलम् । भीमेन घातयामास बलिनाऽऽत्मेन भूतले ॥८॥
द्रोणं भीष्मं च कर्णं च यं यमन्यं च भूतले । बलीयसाऽर्जुनेनैव घातयामास मायया ॥
यं यमन्यं दुर्बलं च प्रसिद्धमप्रसिद्धकम् । प्रसिद्धेन बलवता घातयामास मायया ॥
शिशुपालं दन्तवक्त्रं कंसं च चिररोगिणम् । मत्पुत्रं नरकं चैव दुर्बलं केशिनं मुरम् ॥
स्वयं जघान संकेताच्छलेन सहसा वन । न धर्मयुद्धे कपटी स च बौद्धो ह्यधार्मिकः ॥
जघान पूतनां कुब्जां स्त्रीघाती वस्त्रहेतुना । जघान रजकं शिष्टमशिष्टश्च प्रतारकः ॥
हिरण्यकशिपुं दैत्यं हिरण्याक्षं महाबलम् । मधुं च कैटभं चैव हत्वाऽहं सृष्टिरक्षकः ॥
अहमेव स्वयं ब्रह्मा ह्यहमेव स्वयं शिवः । अहं विष्णुश्च जगतां पाता दुष्टापहारकः ॥
अंशेन कलया सर्वे मनवो मुनयस्तथा । स्वयं नारायणोऽहं च निर्गुणः प्रकृतेः परः ॥
लज्जया कृपया चैव मित्रबुद्ध्या क्षमा कृता । यद्वृत्तं तद्गतं भद्र युद्धं कुरु मया सह ॥

१ क. °सुतः कृष्णः । २ क. नष्टं जलेन । ३ ख. लीलया । ४ क. मायादया° ।

शृणोमि दूतद्वारेण ह्यतीवोच्चैरहंकृतम् । उचितं दमनं तस्याप्युक्तानां निपातनम् ॥
राज्ञश्च परमो धर्मोऽप्यहं शास्ता भुवोऽधुना । शङ्खं चक्रं गदां पद्मं गृहीत्वाऽहं चतुर्भुजः
द्वारकां तां गमिष्यामि युद्धाय सगणः स्वयम् । युद्धं कुरु यदीच्छाऽस्ति मा मां च शरणं व्रज
यदि मा यास्यति मम शरणं शरणागतः । भस्मीभूतां करिष्यामि द्वारकां च क्षणेन च ॥
सबलं च सपुत्रं त्वां सगणं च सबान्धवम् । क्षणेन दग्धुं शक्तोऽहमसहायेन लीलया ॥
तपस्विनं च वृद्धं च जित्वा युद्धे च शंकरम् । शक्रं भगाङ्गं जित्वा च रोगिणं ब्रह्मशापतः
मत्तोऽसि वीरमात्मानं मन्यमानस्त्वमेव च । स्त्रीजितो हि वृथार्थं च पारिजातस्य हेतुना
लम्पटो योनिलुब्धश्च राधाधीनश्च गोकुले । अधुना किंकरसमः सत्यादीनां च योषिताम्
इत्येवमुक्त्वा विप्रश्च तूष्णींभूय स्थितो मुने । श्रीकृष्णः सगणः श्रुत्वा भृशमुच्चैर्जहास सः
भोजयित्वा च संपूज्य ब्राह्मणं च चतुर्विधम् । निनाय रजनीं तु खाद्वाकृशस्यमानसज्वरात्
प्रभाते रथमारुह्य सगणः सत्वरं मुदा । लीलामात्रेण ययौ शृगालो नृपतिर्यतः ॥२७॥
श्रुत्वा शृगालो वार्तां तां कृत्रिमश्च चतुर्भुजः । आजगाम हरेः स्थानं युद्धाय सगणः स्वयम्
कृष्णश्चक्रे च संभाषां मित्रबुद्ध्या च लौकिकीम् । आश्लेषं मधुरालापं स्निग्धनेत्रश्च सस्मितः
राजा निमन्त्रणं चक्रे कृष्णो न स्वी चकार तत् । उवाच कृष्णभीतश्च त्यक्त्वा दम्भं च दर्शनात् ३॥ ० ॥

शृगाल उवाच—

चक्रेण मच्छिरश्छित्त्वा सुशीघ्रं द्वारकां व्रज । पापः पततु देहोऽयमनित्यो नश्वरस्तथा ॥
अहं सुभद्रस्ते द्वारि जयश्च विजयो यथा । सर्वं जानासि सर्वज्ञ मा विलम्बं कुरु प्रभो ॥
लक्ष्मीशापेन भ्रष्टोऽहं कालः पूर्णो बभूव मे । शतवर्षेण शापान्ते यास्यामि भवनं तव ॥

श्रीकृष्ण उवाच—

पूर्वं मां मित्र प्रहर पश्चाद्युद्धं करोम्यहम् । सर्वं जानामि वैकुण्ठं गच्छ वत्स यथासुखम्
शृगालो दशबाणांश्च चिक्षेप माधवं प्रति । ते प्रणम्य ययुः शीघ्रमाकारं कालरूपिणः ॥
गदां चिक्षेप राजा स प्रलयाग्निशिखोपमाम् । कृष्णाङ्गस्पर्शमात्रेण बभञ्ज शतधा च सा ॥
शूलं चिक्षेप मुसलं शक्तिं च परशुं तथा । कृष्णाङ्गस्पर्शमात्रेण बभञ्ज च क्षणेन च ॥
धनुश्चिक्षेप खड्गं च कालरूपं सुदारुणम् । कृष्णाङ्गस्पर्शमात्रेण बभञ्ज च क्षणेन च ॥
दृष्ट्वा निरस्त्रं राजानमित्युवाच कृपानिधिः । गृहं गत्वा सुतीक्ष्णं च मित्रास्त्रमानयेति च

१ क. द्वाभ्याय सह यानेन । २ ख. त्यज । ३ क. °य मानिनो न° । ४ क. °मि ।

शृगाल उवाच—
नाऽऽत्माऽऽकाशोऽस्त्रविद्धश्च किं युद्धमात्मना सह । मामुद्धर भवाब्धेश्च घोरोद्धारणकारण
भवाब्धिं विषमं नाथ विषयं च विषाधिकम् । छिन्धि मे निगडं मायां मोहजालं स्वकर्मणः
कर्मणामीश्वरस्त्वं च विधाता धातुरेव च । दाता शुभफलानां च प्रदाता सर्वसंपदाम् ॥
वारणं प्राक्तनानां च तेषां च खण्डने क्षमः । यामि गेहं च वैकुण्ठं तवैव द्वारसत्तमम् ॥
त्यक्त्वा च नश्वरं देहं प्राकृतं पाञ्चभौतिकम् । मित्रस्य स्तवनं श्रुत्वा वचनं च सुधोपमम्
रुरोद समरे तत्र कृपया च कृपानिधिः । बभूव तत्र सहसा कृष्णनेत्राश्रुबिन्दुना ॥४४॥
दिव्यं बिन्दुसरो नाम तीर्थानां प्रवरं परम् । तत्तोयस्पर्शमात्रेण जीवन्मुक्तो भवेन्नरः ॥
सप्तजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥ ४९ ॥

श्रीभगवानुवाच—
कथमेतादृशी बुद्धिर्मित्र ते निर्मलं मनः । दूतद्वारा कथं चोक्तं निष्ठुरं दारुणं वचः ॥

शृगाल उवाच—
एवमुक्तो मया त्वं च तेन क्रोधादिहाऽऽगतः । अन्यथा दुर्लभं नाथ स्वप्नेऽपि तव दर्शनम्
एतस्मिन्नन्तरे योगाद्देहं त्यक्त्वा च प्राकृतम् । दृष्ट्वा कृष्णं च यानेन वैकुण्ठं प्रययौ मुदा
सप्ततालप्रमाणं च ज्योतिस्तत्र महोल्बणम् । पद्मे पद्मार्चितं पादपद्मं नत्वा जगाम ह ॥
गत्वा च द्वारकां कृष्णो नत्वा च पितरं प्रभुम् । श्रीकृष्णं सगणः शीघ्रं दृष्ट्वा च परमाद्भुतम्
प्रफुल्लवदनः श्रीमान्द्वारकाभिमुखं ययौ । जगाम रुक्मिणीगेहं पुष्पचन्दनवासितम् ॥
पुष्पचन्दनतल्पे च नक्तं रेमे तया सह । मूर्छां संप्राप सा भैष्मी कृष्णं कृत्वा स्ववक्षसि

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० शृगालवासुदेव-
मोक्षणं नामैकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

---

अथ द्वाविंशत्यधिकशततमोऽध्यायः

---

नारद उवाच—
सर्वासां रमणीनां च कृष्णेन परमात्मना । समुद्वाहश्च कथितस्त्वया भगवता मुदा ॥१॥
स्यमन्तकस्य च मणेरुपाख्यानमभीप्सितम् । तन्न श्रुतं महाभाग तन्मां व्याख्यातुमर्हसि

नारायण उवाच—
भाद्रशुक्लचतुर्थ्यां च तारया दृष्टवांश्छशी । तां तस्याः स कृष्णाया गुरुस्तां च गृहीतवान्
गुरुणा भर्त्सिता तारा सगर्भा लज्जिता सती । शशाप लज्जया कोपाच्चन्द्रं कामातुरं पुरा

तारोवाच—

भव शापकलङ्की त्वं यस्त्वां पश्यति देहभृत् । पापं दृष्ट्वा स पापी च कलङ्की च भविष्यति
इति श्रुत्वा स चन्द्रश्च नारायणसरोवरे । नारायणतपस्तप्त्वा मुमोच कृतपातकात् ॥६॥
तपःक्लिष्टं च तं दृष्ट्वा भगवान्पुरुषोत्तमः । तमुवाच महाभीतं कृपया च कृपानिधिः ॥७॥

श्रीभगवानुवाच—

मुक्तो भव कलङ्की त्वं सर्वकालं कलानिधे । शापस्थानं तारकाया भाद्रे मासि सितासिते ॥
चतुर्थ्यामुदितं चन्द्रं यस्तु पश्यति कामतः । तं याति तत्कलङ्कश्च स कलङ्की भविष्यति ॥
हरिणा दीयते ताली भाद्रे मासि सितासिते । चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥
स्वयं दृष्ट्वा स्ववाक्यं च पालनं कर्तुमर्हति । भाद्रे चन्द्रं चतुर्थ्यां तु स कलङ्की बभूव ह ॥
कलङ्की येन रूपेण तद्वक्ष्यामि निशामय । स मुमोच कलङ्काच्च लोकशिक्षार्थमीश्वरः ॥
सत्राजितः सूर्यभक्तस्तपस्तप्त्वा च पुष्करे । स्यमन्तकं मणिश्रेष्ठं संप्राप भास्करादपि ॥
अष्टौ भारान्सुवर्णानां प्रसूते नित्यमेव च । विष्णोर्भेणावविष्ठानं महापूते च पुण्यदे ॥१४॥
सत्राजितः सत्यभामां दत्त्वा कृष्णाय भक्तितः । यौतुकार्थे मणिं दातुमुद्यतो महते महान् ॥
तं निषिध्य प्रसेनश्च दुर्मतिः कालपीडितः । मणिं गृहीत्वा प्रययौ पुण्यां वाराणसीं पुरीम् ॥
निहत्य तं पथि बलात्सिंहः सबल एव च । मणिं जग्राह रुचिरं सूत्रबद्धं गले दधौ ॥
कलिङ्गराजपुत्रश्च ब्रह्मशापात्सुदारुणात् । विधेणाभ्युदितरतेन पशुयोनिं जगाम सः ॥
निहत्य सिंहं गहने भल्लूको जाम्बवान्बली । मणिं गृहीत्वा प्रययौ स्वपुरं रत्ननिर्मितम् ॥
ऊचुः सर्वे द्वारकायां मणिं जग्राह माधवः । तस्य बुद्धिं न जानीमः केनोपायेन वेति च ॥
इति श्रुत्वा तु भगवान्कलङ्कक्षालनाय च । प्रययौ कानने घोरे चौरचिह्नेन वर्त्मना ॥
मृतं प्रसेनं दृष्ट्वा च दुःखी सिंहं ददर्श सः । मणिशून्यं च तं दृष्ट्वा विषसाद च माधवः ॥
सर्वं ज्ञात्वा च सर्वज्ञो भल्लूकभवनं ययौ । रुदन्तं बालकं तत्र धात्रीक्रोडे ददर्श सः ॥
बालकं बोधयामास सा धात्री करुणान्विता । मणिं गृहाण बालेति तव ह्येष स्यमन्तकः ॥
सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः । सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥
इति धात्र्युक्तसुश्लोकं यश्च स्मृत्वा जलं पिबेत् । दैवदृष्टनष्टचन्द्रदोषादेव प्रमुच्यते ॥२१॥
कामतो यदि पश्यन्ति दाम्भिका वेदनिन्दकाः । कलङ्किनो भवन्त्येवमित्याह कमलोद्भवः ॥
कृष्णो धात्रीवचः श्रुत्वा मणिं जग्राह बालकात् । धात्री गत्वा च भल्लूकं कथयामास कोपनः
जाम्बवांश्च समागत्य तुष्टाव प्रणिपत्य सः । कन्यां जाम्बवतीं तस्मै यौतुकार्थं मणिं ददौ ॥
द्वारकां मणिमानीय दर्शयामास यादवान् । प्रमुच्य सर्वतः शुद्धो निष्कलङ्को बभूव सः ॥

एतत्ते कथितं वत्स मणेराख्यानमुत्तमम्। अध्यायश्रवणादेव निष्कलङ्को भवेन्नरः ॥११॥
यच्छ्रुतं धर्मवक्त्रेण तदुक्तं च यथागमम्। सुदुर्लभमुपाख्यानं किं भूयः श्रोतुमिच्छसि॥१२॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० स्यमन्तकमणि-
हरणं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

अथ त्रयोविंशत्यधिकशततमोऽध्यायः।

नारद उवाच—

गणेशपूजनाख्यानं पुराणेषु च दुर्लभम्। श्रुतं तद्ब्रह्मणो वक्त्रात्सामान्यं च समासतः ॥
महिमानं गणपतेः सर्वपूज्येश्वरस्य च। व्यासेन श्रोतुमिच्छामि योगीन्द्राणां गुरोर्गुरो ॥
सिद्धाश्रमे महापूजा त्रैलोक्यस्थैः कृता पुरा। राधामाधवयोस्तत्र पुनः संमीलनं पुरा ॥
अतीते वर्षशतके श्रीदाम्नः शापमोक्षणे। आदौ चकार पूजां च सा च राधा कथं मुने ॥
स्थितेषु च सुरेन्द्रेषु ब्रह्मविष्णुशिवादिषु। नागेन्द्रे च स्थिते शेषे नागेषु च महत्सु च ॥
राजेन्द्रेषु च भूमौ च बलिष्ठेष्वसुरेषु च। गन्धर्वेषु च रक्षःसु चान्येषु बलवत्सु च ॥ ६ ॥
विस्तरेण महाभाग तन्मे व्याख्यातुमर्हसि ॥ ७ ॥

नारायण उवाच—

त्रैलोक्ये पृथिवी धन्या मान्या पुण्यवती सती। तत्र भारतवर्षं च कर्मणां फलदं शुभम् ॥
धन्यं यशस्यं पूज्यं च पुण्यक्षेत्रं च भारते। सिद्धाश्रमं महापुण्यक्षेत्रं मोक्षप्रदं शुभम् ॥
सनत्कुमारो भगवांस्तत्र सिद्धो बभूव ह। स्वयं विधाता तत्रैव तप्त्वा सिद्धो बभूव ह ॥
योगीन्द्राश्च मुनीन्द्राश्च सिद्धेन्द्राः कपिलादयः। शतक्रतुर्महेन्द्रश्च तत्र कृत्वा बभूव ह।
तेन सिद्धाश्रमं नाम सर्वेषामपि दुर्लभम्। अधिष्ठानं गणेशस्य तत्रैव सततं मुने ॥१२॥
अमूल्यरत्ननिर्माणगणेशप्रतिमां शुभाम्। वैशाख्यां पूर्णिमायां च पूजां कुर्वन्ति देवताः ॥
नागाश्च मानवाश्चैव दैत्या गन्धर्वराक्षसाः। सिद्धेन्द्राश्च मुनीन्द्राश्च योगीन्द्राः सनकादयः॥
तत्राऽऽजगाम शंभुश्च पार्वत्या सह शंकरः। सगणः कार्तिकेयश्च स्वयं ब्रह्मा प्रजापतिः ॥
तत्राऽऽजगाम शेषश्च नागेन्द्रैः सह सत्वरम्। तत्राऽऽजग्मुः सुराः सर्वे मनवो मुनयस्तथा॥
आजग्मुस्ते नृपाः सर्वे पूजार्थं हृष्टमानसाः। आययौ भगवान्कृष्णो द्वारकावासिभिः सह॥
आजगाम तथा नन्दः सार्धं गोकुलवासिभिः। गोपीत्रिशतकोटीभिर्गोलोकवासिभिः सह ॥
गजेन्द्रकोटितुल्याभिर्बलिष्ठाभिः सहाऽऽलिभिः। आययौ सुन्दरी राधा कृष्णप्राणाधिदेवता

---

१ ख. दिवौकोभिः।

रासेश्वरी सुरसिका शतवर्षे गते सति । सुस्नाता सुदती शुद्धा धृत्वा धौते च वाससी ॥
संयता सा निराहारा गत्वा च मणिमण्डपम् । सुप्रक्षालितपादाब्जा कान्ता भुवनपावनी ॥
श्रीकृष्णप्रीतिकामाऽथ सुसंकल्पं विधाय च । गङ्गोदकेन हेरम्बं स्नापयामास भक्तितः ॥
ध्यानं च सामवेदोक्तं चकार शुक्लपुष्पतः । माता चतुर्णां वेदानां वसोश्च जगतामपि ॥
बुद्धिरूपा भगवती ज्ञानिनां जननी परा । ध्यानात्मकं स्वपुत्रं तं परं ध्यानं चकार सा ॥२४॥
खर्वं लम्बोदरं स्थूलं ज्वलन्तं ब्रह्मतेजसा । गजवक्त्रं वह्निवर्णमेकदन्तमनन्तकम् ॥२५॥
सिद्धानां योगिनामेव ज्ञानिनां च गुरोर्गुरुम् । ध्यातं मुनीन्द्रैर्देवेन्द्रैर्ब्रह्मेशशेषसंज्ञकैः ॥
सिद्धेन्द्रैर्मुनिभिः सद्भिर्भगवन्तं सनातनम् । ब्रह्मस्वरूपं परमं मङ्गलं मङ्गलालयम् ॥२७॥
सर्वविघ्नहरं शान्तं दातारं सर्वसंपदाम् । भवाब्धिमायापोतेन कर्णधारं च कर्मिणाम् ॥
शरणागतदीनार्तपरित्राणपरायणम् । ध्यायेद्ध्यानात्मकं साध्यं भक्तेशं भक्तवत्सलम् ॥
इति ध्यात्वा स्वशिरसि दत्त्वा पुष्पं पुनः सती । सर्वाङ्गशोधनं न्यासं वेदोक्तं च चकार सा
पुनश्च ध्यात्वा ध्यानेन तेनैव शुभदायिना । ददौ पुष्पं पादपद्मे राधा लम्बोदरस्य च ॥
सप्ततीर्थोदकेनैव शीतेन वासितेन च । ददौ पाद्यं पादपद्मे तैः पद्मादिभिरर्चिते ॥३२॥
दूर्वाक्षतैः शुक्लपुष्पैः सुगन्धिचन्दनोदकैः । अर्घ्यं ददौ तच्छिरसि स्वयं गोलोकवासिनी ॥
सुचन्दनं स्निग्धमाल्यं पारिजातस्य सुन्दरम् । ददौ गले गणेशस्य स्वयं रासेश्वरी मुदा ॥
कस्तूरीकुङ्कुमाक्तं च सुगन्धि स्निग्धचन्दनम् । सर्वाङ्गे प्रददौ तस्य वृन्दावनविनोदिनी ॥
सुगन्धि शुक्लपुष्पं च सुगन्धि चन्दनार्चितम् । ददौ तस्य पदाम्भोजे महापद्मालया सती ॥
सुगन्धियुक्तं धूपं च पूतैर्वस्तुभिरन्वितम् । ददौ कृष्णप्रिया तस्मै जगतामीश्वराय च ॥
दीपं घृतप्रदीप्तं च ध्वान्तविध्वंसकारणम् । ददौ तस्मै सुरेशाय परमाद्या सनातनी ॥
नैवेद्यं विविधं रम्यं सुस्वादु सुमनोहरम् । चोष्यं चर्व्यं लेह्यपेये सुधातुल्यं चतुर्विधम् ॥
फलानि च सुपक्वानि त्रैलोक्ये दुर्लभानि च । मधुराणि च मूलानि ग्राम्यारण्यानि नारद
तानि स्वस्थानसंस्थानि तिलानां लड्डुकानि च । लड्डुकानि सुपक्वानि स्वादूनि सुरसानि च
यवगोधूमचूर्णानां पक्वानि पिष्टकानि च । घृताक्तानि च रम्याणि शर्करासहितानि च ॥
स्वस्तिकानां लड्डुकानि स्थूलानि सुन्दराणि च । भृष्टद्रव्यं च विविधमन्नं शर्करान्वितम्
घृतकुल्यां दुग्धकुल्यां मधुकुल्यां मनोहराम् । गुडस्य दध्नः कुल्यां च पायसानां तथैव च ॥
पिष्टकानां स्वस्तिकानां रम्भाणां राशीरेव च । मिष्टव्यञ्जनयुक्तानि शाल्यन्नानि शुभानि च ॥
ददौ तस्मै सुरेशाय कृष्णप्राणाधिदेवता । अमूल्यरत्ननिर्माणं रम्यं सिंहासनं वरम् ॥४६॥

---

१ क. सुन्दरी । २ ख. 'प्राप्ति' । ३ ख. पदे ।

ददौ विघ्नविनाशाय विरजातटवासिनी । सूक्ष्मवस्त्रयुगं रम्यममूल्यं वह्निशुद्धकम् ॥
ददौ शैलात्मजायैव शतशृङ्गनिवासिनी । विशुद्धसर्पिषा युक्तं निर्मलं मधुरं मधु ॥ ४८ ॥
मधुपर्कं ददौ तस्मै वृन्दावननिवासिनी । ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् ॥ ४९ ॥
सर्वसंपत्प्रदात्रे च वृषभानसुता ददौ । सप्ततीर्थोदकं शुद्धं सुसितं च सुवासितम् ॥ ५० ॥
पानार्थं च जलं तस्मै ददौ गोपीश्वरी मुदा । अमूल्यं दुर्लभं चैव विशुद्धं श्वेतचामरम् ॥
ददौ तस्मै परेशाय मूलप्रकृतिरीश्वरी । अमूल्यरत्ननिर्माणं मुक्तामाणिक्यहीरकैः ॥५२॥
परिष्कृतं सुतल्पं च पुष्पचन्दनचर्चितम् । सितसूक्ष्मांशुकेनैव परितश्च परिष्कृतम् ॥५३॥
ददौ शिवात्मजायैव कृष्णवक्षःस्थलस्थिता । दत्त्वा च कामधेनुं च सवत्सां वाञ्छितप्रदाम् ॥
कृत्वाऽतीव परीहारं वृन्दा पुष्पाञ्जलिं ददौ । दिव्येन मूलमनुना सबीजेनोज्ज्वलेन च ॥
ददौ षोडशोपचारं कालिन्दीकूलवासिनी । ॐ गं गौं गणपतये विघ्नविनाशिने स्वाहा ॥
इत्येवमेव मन्त्रं च गाणेशं षोडशाक्षरम् । सा जजाप सहस्रं च परं कल्पतरुं वरम् ॥५७॥
तुष्टाव परया भक्त्या भक्तिनम्रात्मकंधरा । साश्रुनेत्रा पुलकिना स्तोत्रेण कौथुमेन च ॥

राधिकोवाच—

परं धाम परं ब्रह्म परेशं परमेश्वरम् । विघ्ननिघ्नकरं शान्तं पुष्टं कान्तमनन्तकम् ॥५८॥
सुरासुरेन्द्रैः सिद्धेन्द्रैः स्तुतं स्तौमि परात्परम् । सुरपद्मदिनेशं च गणेशं मङ्गलायनम् ॥
इदं स्तोत्रं महापुण्यं विघ्नशोकहरं परम् । यः पठेत्प्रातरुत्थाय सर्वविघ्नात्प्रमुच्यते ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० त्रयोविंशत्य-
धिकशततमोऽध्यायः । १२३ ।

═══

अथ चतुर्विंशत्यधिकशततमोऽध्यायः ।

———

नारायण उवाच—

राधा संपूज्य विधिना स्तुत्वा लम्बोदरं सती । अमूल्यरत्ननिर्माणं सर्वाङ्गभूषणं ददौ ॥
राधायाः स्तवनं श्रुत्वा पूजां दृष्ट्वा च वस्तु च । उवाच मधुरं शान्तः शान्तां त्रैलोक्यमातरम् ॥

गणेश उवाच—

तव पूजा जगन्मातर्लोकशिक्षाकरी शुभे । ब्रह्मस्वरूपा भवती कृष्णवक्षःस्थलस्थिता ॥१॥
यत्पादपद्ममतुलं ध्यायन्ते ते सुदुर्लभम् । सुरा ब्रह्मेशशेषाद्या मुनीन्द्राः सनकादयः ॥

———

१ क 'तल्प' । २ क. 'स्तवम्।'

जीवन्मुक्ताश्च भक्ताश्च सिद्धेन्द्राः कपिलादयः । तस्य प्राणाधिदेवी त्वं प्रिया प्राणाधिका परा
वामाङ्गनिर्मिता राधा दक्षिणाङ्गश्च माधवः ; महालक्ष्मीर्जगन्माता तव वामाङ्गनिर्मिता॥
वसोः सर्वनिवासस्य प्रसूस्त्वं परमेश्वरी । वेदाना जगतामेव मूलप्रकृतिरीश्वरी ॥७॥
सर्वाः प्राकृतिका मातः सृष्टयां च त्वद्विभूतयः । विश्वानि कार्यरूपाणि त्वं च कारणरूपिणी
प्रलये ब्रह्मणः पाते तन्निमेषो हरेरपि । आदौ राधा समुच्चार्य पश्चात्कृष्णं परात्परम् ॥
स एव पण्डितो योगी गोलोकं याति लीलया । व्यतिक्रमे महापापी ब्रह्महत्या लभेद्ध्रुवम्
जगता भवती माता परमात्मा पिता हरिः । पितुरेव गुरुर्माता पूज्या वन्द्या परात्परा॥
भजते देवमन्यं वा कृष्णं वा सर्वकारणम् । पुण्यक्षेत्रे महामूढो यदि निन्दति राधिकाम्
वंशहानिर्भवेत्तस्य दुःखशोकमिहैव च । पच्यते निरये घोरे यावच्चन्द्रदिवाकरौ॥१३॥
गुरुश्च ज्ञानोद्गिरणाज्ज्ञानं स्यान्मन्त्रतन्त्रयोः । स च मन्त्रश्च तत्तन्त्रं भक्तिः स्याद्युवयोर्यतः
निषेव्य मन्त्रं देवाना जीवा जन्मनि जन्मनि । भक्ता भवन्ति दुर्गायाः पादपद्मे सुदुर्लभे ॥
निषेव्य मन्त्रं शंभोश्च जगतां कारणस्य च । तदा प्राप्नोति युवयोः पादपद्मं सुदुर्लभम् ॥
युवयोः पादपद्मं च दुर्लभं प्राप्य पुण्यवान् । क्षणार्धं षोडशांशं च नहि मुञ्चति दैवतः
भक्त्या च युवयोर्मन्त्रं गृहीत्वा वैष्णवादपि । स्तवं वा कवचं वाऽपि कर्ममूलनिकृन्तनम्॥
योजयेत्परया भक्त्या पुण्यक्षेत्रे च भारते । पुरुषाणां सहस्रं च स्वात्मनः सार्धमुद्धरेत्
गुरुमभ्यर्च्य विधिवद्वस्त्रालंकारचन्दनैः । कवचं धारयेद्यो हि विष्णुतुल्यो भवेद्ध्रुवम् ॥
यद्दत्तं वस्तु मे मातस्तत्सर्वं सार्थकं कुरु । देहि विप्राय मत्प्रीत्या तदा भोक्ष्यामि साम्प्रतम्
देवे देयानि दानानि देवे देया च दक्षिणा । तत्सर्वं ब्राह्मणे दद्यात्तदानन्त्याय कल्पते ॥
ब्राह्मणाना मुखं राधे देवाना मुखमुख्यकम् । विप्रभुक्तं च यद्द्रव्यं प्राप्नुवन्त्येव देवताः
विप्रांश्च भोजयामास तत्सर्वं राधिका सती । बभूव तत्क्षणादेव प्रीतो लम्बोदरो मुने ॥
एतस्मिन्नन्तरे देवा ब्रह्मेशशेषसंज्ञकाः । आययुर्वटमूलं च देवपूजार्थमेव च ॥२९ ॥
तत्र गत्वा शिवचरो देवान्देवीरुवाच सः । श्रीकृष्णं शुष्ककण्ठश्च भयभीतश्च रक्षकः॥

रक्षक उवाच--

गणेशं पूजयामास सर्वादौ च शुभक्षणे । वृषभानसुता राधा प्रहृष्टा स्मेराननम् ॥
सहिता सा बल्लवी गोपीत्रिंशत्कोटिभिः । वारितोऽहं बलिष्ठाभिर्युष्मांश्च कथयामि नन् ॥
सर्वादौ पूजयेद्यो हि सोऽनन्तं फलमालभेत् । मन्ये म अविघं पुण्यं शेषे स्तव ।मिति स्तनग्
देवेन्द्रेषु मुनीन्द्रेषु देवस्त्रीषु स्त्रिनामु च । गोपीभिश्च सह तथा राधया पूजितः परः

१ क. युवयोऽप्यत्सद्द्वि°। २ क. लोकं याति च ली°। ३ क. °मह्. । ४ क. तस्य च ।

दूतवाक्यं समाकर्ण्य जहृषुः सर्वदेवता. । मुनयो मनवश्चैव राजानो देवयोषितः ॥
रुक्मिण्याद्या रमण्यश्च या देव्यो विस्मयं ययुः । सरस्वती च सावित्री पार्वती परमेश्वरी॥
रोहिणी च सती संज्ञा स्वाहाद्या देवयोषितः । मुदिताः प्रययुः सर्वा मुनिपत्न्यः पतिव्रताः
मुनयो मनवः सर्वे देवाश्चापि नरास्तथा । श्रीकृष्णः स गणैः सार्धं ये चान्ये प्रययुर्मुदा
ते सर्वे विविधैर्द्रव्यैः पूजां चक्रुः शुभक्षणे । बलिष्ठा दुर्बलाश्चैव क्रमेण च पृथक्पृथक्॥
लड्डुकानां च राशीनां शतकोटिर्बभूव ह । शर्कराणां तदर्धं च स्वस्तिकानां तथैव च॥
अन्नानां मन्यवस्तूनां शतकोटिर्बभूव ह । असंख्यानि फलान्येव स्वादूनि मधुराणि च.।
मधुकुल्या दुग्धकुल्या दधिकुल्या घृतस्य च । बभूवुः शतसंख्याश्च त्रैलोक्यानां च पूजने
पूजा कृत्वा तु ते सर्वे समूपुश्च सुखासने । पार्वती परमप्रीत्या राधास्थानं समाययौ॥
सा राधा पार्वतीं दृष्ट्वा समुत्थाय जवेन च । यथायोग्यं च संभाषं चकार सादरं मुदा
आश्लेषणं चुम्बनं च बभूव च परस्परम् । उवाच मधुरं दुर्गा राधां कृत्वा स्ववक्षसि ॥

पार्वत्युवाच—

किंवा प्रश्नं करिष्यामि त्वां राधां मङ्गलालयाम् । गता ते विरहज्वाला श्रीदाम्नः शापमोक्षणे
सततं मन्मनः प्राणास्त्वय्येव मयि ते तथा । न ह्येवमावयोर्भेदः शक्तिपुरुषयोस्तथा ॥
ये त्वां निन्दन्ति मद्भक्तास्त्वद्भक्ताश्चापि मामपि । कुम्भीपाके च पच्यन्ते यावच्चन्द्रदिवाकरौ
राधामाधवयोर्भेदं ये कुर्वन्ति नराधमाः । वंशहानिर्भवेत्तेषां पच्यन्ते नरके चिरम् ॥४९॥
यान्ति सूकरयोनिं च पितृभिः शतकैः सह । षष्टिवर्षसहस्राणि विष्ठायां कृमयस्तथा ॥
त्वयैव पूजितः पुत्रो न मया च गणेश्वरः । सर्वाद्यः सर्वपूज्योऽयं यथा तव तथा मम ॥
यावज्जीवनपर्यन्तं न विच्छेदो भविष्यति । राधामाधवयोर्देवि दुग्धधावल्ययोर्यथा ॥४८॥
सिद्धाश्रमे महातीर्थे पुण्यक्षेत्रे च भारते । निर्विघ्नं कुरु गोविन्दं संपूज्य विघ्नखण्डनम्॥
रासेश्वरी त्वं रसिका श्रीकृष्णो रसिकेश्वरः । विदग्धाया विदग्धेन संगमो गुणवान्भवेत् ॥
श्रीदाम्नः शापनिर्मुक्ता शतवर्षान्तरे सति । कुरुष्व मद्वरेणाद्य कृष्णेन सह संगमम् ॥
ममाऽऽज्ञया दुर्लभया सुवेषं कुरु सुन्दरि । सुदुर्लभः कामिनीनां सत्पुंसा सह संगमः ॥
चक्रुः सुवेषं राधायाः प्रियाल्यश्च शिवाज्ञया । रत्नसिंहासने रम्ये वासयामासुरीश्वरीम् ॥
पुरतो रत्नमाला सा रत्नमालां गले ददौ । राधाया दक्षिणे हस्ते क्रीडापद्मं मनोहरम् ॥
ददौ पद्ममुखी पादपद्मयुग्मेऽप्यलक्तकम् । प्रददौ सुन्दरी गोपी सिन्दूरं सुन्दरं वरम् ॥
चन्दनेन समायुक्तं सीमन्ताधःस्थलोज्ज्वलम् । सुचारुकबरीं रम्यां चकार मालती सती॥
मनोहरां मुनीनां च मालतीमाल्यभूषिताम् । कस्तूरीकुङ्कुमाक्तं च चारुचन्दनपत्रकम् ॥

स्तनयुग्मे सुकठिने चकार चन्दना सती । चारुचम्पकपुष्पाणां मालां गन्धमनोहराम् ॥
मालावती ददौ तस्यै प्रफुल्लां नवमल्लिकाम् । रतीषु रसिका गोपी रत्नभूषणभूषिताम् ॥
तां चकारातिरसिकां वरां रतिरसोत्सुकाम् । शरत्पद्मदलाभं च लोचनं कज्जलोज्ज्वलम् ॥
कृत्वा ददौ सुललितं वस्त्रं च ललिता सती । महेन्द्रेण प्रदत्तं च पारिजातप्रसूनकम् ॥
सुगन्धियुक्तं तस्याश्च पारिजातं करे ददौ । सुशीलं मधुरोक्तं च भर्तुः पार्श्वे यथोचितम् ॥
शिक्षां चकार नीतिं च सुशीला गोपिका सती । स्त्रीणां च षोडशकलां विपत्तौ विस्मृतां तयोः
स्मरणं कारयामास राधामाता कलावती । शृङ्गारविपरीतं च वचनं च सुधोपमम् ॥
स्मरणं कारयामास भगिनी च सुधामुखी । कमलानां चम्पकानां दले चन्दनचर्चिते ॥
चकार रतितल्पं च कमला चाऽऽशु कोमलम् । चारुचम्पकपुष्पं च कृष्णार्थे पुटकस्थितम् ॥
चकार चन्दनाक्तं च स्वयं च पार्वती सती । पुष्पं केलिकदम्बानां स्तवकं च मनोहरम् ॥
कदम्बमालां कृष्णार्थे विद्यमानां चकार सा । ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् ॥
कृष्णप्रिया च कृष्णार्थे चकार वासितं जलम् । एतस्मिन्नन्तरे सर्वमाश्रमं सजलस्थलम् ॥
साक्षाद्गोरोचनाभं च ददृशुर्मुनयः सुराः । ते सर्वे विस्मयं गत्वा पप्रच्छुः कृष्णमीश्वरम् ॥
उवाच भगवांस्तांश्च सर्वज्ञः सर्वकारणः ॥ ७१ ॥

श्रीभगवानुवाच—

अभिशापाच्च श्रीदाम्ना भ्रष्टशोभा च राधिका । सर्वं ज्ञानं विसस्मार मद्विच्छेदज्वरातुरा ॥
विमुक्ते वर्षशतके ज्ञानं सस्मार सा सती । सिद्धाश्रमं च पीताभं रासेश्वर्याश्च तेजसा ॥
परमोह्लादकं तेजश्चन्द्रकोटिसमप्रभम् । सुखदृश्यं च सुखदं चक्षुषा प्राणिनामपि ॥७४॥
तच्छ्रुत्वा परमाश्चर्यं मुनयो मनवस्तथा । देव्यश्च सर्वदेवास्ते ब्रह्मेशानादयस्तथा ॥७५॥
जवेन गत्वा तत्स्थानं भक्तिनम्रात्मकंधराः । सर्वे जनास्ते ददृशुस्त्रैलोक्यस्थाश्च राधिकाम्
श्वेतचम्पकवर्णाभामतुलां सुमनोहराम् । मोहिनीं मानसानां च मुनीनामूर्ध्वरेतसाम् ॥७६॥
सुकेशीं सुन्दरीं श्यामां न्यग्रोधपरिमण्डलाम् । नितम्बकठिनश्रोणीं स्तनयुग्मोन्नताननाम् ॥
कोटीन्दुनिन्दितास्यां तां सस्मितां सुदतीं सतीम् । कज्जलोज्ज्वलरूपां च शरत्कमललोचनाम्
महालक्ष्मीं चांशरूपां परामाद्यां सनातनीम् । परमात्मस्वरूपस्य मायाधिष्ठातृदेवताम् ॥
स्तुतां च पूजितां चैव परां च परमात्मने । ब्रह्मस्वरूपां निर्लिप्तां नित्यरूपां च निर्गुणाम् ॥
विश्वानुरोधात्प्रकृतिं भक्तानुग्रहविग्रहाम् । सत्यस्वरूपां शुद्धां च पूतां पतितपावनीम् ॥
सुतीर्थपूतां सत्कीर्तिं विधात्रीं वेधसामपि । महत्प्रिया च महती महाविष्णोश्च मातरम् ॥
रासेश्वरेश्वरीं रम्यां रसिकां रसिकेश्वरीम् । गर्हानिसुद्धांशुकाधानां स्वेच्छारूपां शुभालयाम्

गोपीभिः सप्तभिः शश्वत्सेवितां श्वेतचामरैः । चतसृभिः प्रियालीभिः पादपद्मोपसेविताम्
अमूल्यरत्ननिर्माणभूषणोघैर्विभूषिताम् । चारुकुण्डलयुग्मेन श्रुतिगण्डस्थलोज्ज्वलाम् ॥
सुनासा गजमुक्ताढ्यां खगेन्द्रचञ्चुनिन्दिताम् कुङ्कुमालक्तककस्तूरीस्निग्धचन्दनचर्चिताम्
दधानां सुकपोलं च कोमलाङ्गीं सुकामुकीम् । गजेन्द्रगामिनीं रामां कमनीयां सुकामिनीम्
कामास्त्रजयरूपां च कामकाम्यालयां वराम् क्रीडाकमलमम्लानं पारिजातप्रसूनकम् ॥
अमूल्यरत्ननिर्माणं दधाना दर्पणोज्ज्वलम् । नानारत्नविचित्राढ्यरत्नसिंहासनस्थिताम्
पद्मैः पद्मार्चितं पादपद्मं च मङ्गलालयम् । हृत्पद्मे ध्यायमाना च कृष्णस्य परमात्मनः ॥
कर्मणा मनसा वाचा स्वप्ने जागरणेऽपि च । तत्प्रीतिं प्रेम सौभाग्यं स्मरन्तीं नित्यनूतनम्
भावानुरक्तसंसक्ता शुद्धभक्ता पतिव्रताम् । धन्यां मान्या गौरवर्णां शश्वद्वक्षःस्थलस्थिताम्
प्रियासु प्रियभक्तेषु सुप्रियां प्रियवादिनीम् । कृष्णवामाङ्गसंभूतामभेदां गुणरूपयोः ॥
गोलोकवासिनीं देवदेवीं सर्वोपरिस्थिताम् । वृषभानसुताख्यां तां पुण्यक्षेत्रे च भारते ॥
गोपीश्वरीं गुप्तरूपां सिद्धिदां सिद्धिरूपिणीम् । ध्यानासाध्यां दुराराध्यां वन्दे सद्भक्तवन्दिताम्
ध्याने ध्यानेन राधाया ध्यायन्ते ध्यानतत्पराः । इहैव जीवन्मुक्तास्ते परत्र कृष्णपार्षदाः
दृष्ट्वा ब्रह्मा च सर्वादौ तुष्टाव परमेश्वरीम् । स्वयं विधाता जगतां मातरं वेधसामपि ॥

ब्रह्मोवाच—

षष्टिवर्षसहस्राणि दिव्यानि परमेश्वरि । पुष्करे च तपस्तप्तं पुण्यक्षेत्रे च भारते ॥९९॥
त्वत्पादपद्ममधुरमधुलुब्धेन चेतसा । मधुव्रतेन लोलेन प्रेरितेन मया सति ॥ १०० ॥
तथाऽपि न मया लब्धं त्वत्पादपद्ममीप्सितम् । न दृष्टमपि स्वप्नेऽपि जाता वागशरीरिणी
वाराहे भारते वर्षे पुण्ये वृन्दावने वने । सिद्धाश्रमे गणेशस्य पादपद्मं च द्रक्ष्यसि ॥१०२॥
राधामाधवयोर्दास्यं कुतो विषयिणस्तव । निवर्तस्व महाभाग परमेतत्सुदुर्लभम् ॥१०३॥
इति श्रुत्वा निवृत्तोऽहं तपसे मग्नमानसः । परिपूर्णं तदधुना वाञ्छितं तपसः फलम् ॥

महादेव उवाच—

पद्मैः पद्मार्चितं पादपद्मं यस्य सुदुर्लभम् । ध्यायन्ते ध्यानानिष्ठाश्च शश्वद्ब्रह्मादयः सुराः ॥
मुनयो मनवश्चैव सिद्धाः सन्तश्च योगिनः । द्रष्टुं नैव समाः स्वप्ने भवती तस्य वक्षसि ।

अनन्त उवाच—

वेदाश्च वेदमाता च पुराणानि च सुन्दरे । अहं सरस्वती सन्तः स्तोतुं नालं च संततम् ॥
आत्मानं स्मरने यस्य भ्रूभङ्गं च सुदुर्लभम् । तत्र भासने भीताश्चापयोरन्तरं हरेः ।'८॥

एवं देवाश्च दैत्यश्चाप्यन्ये ये च समागताः । प्रणताश्तुष्टुवुः सर्वे मुनिमन्वादयस्तथा ॥
लज्जया नम्रवक्त्राश्च रुक्मिण्याद्याश्च योषितः । मलीमसं च चक्रुस्ताः श्वासेन रत्नदर्पणम् ॥
मृततुल्या सत्यभामा निराहारा कृशोदरी । मनसोऽप्यभिमानं च सर्वं तत्याज नारद ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० सिद्धाश्रमतीर्थयात्राप्रसङ्गे गणेशपूजनं ब्रह्मेशशेषादिकृतराधिकास्तोत्रं नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।

नारद उवाच—
गणेशपूजनादेव राधास्तोत्रात्परं विभो । बभूव किं रहस्यं वा तन्मे व्याख्यातुमर्हसि ॥ १ ॥

नारायण उवाच—
गणेशपूजने तीर्थे ये देवाश्च समाययुः । मुनयश्चापि योगीन्द्रा वसन्तो वटमूलके ॥ २ ॥
वसुदेवो देवकी च परमादरपूर्वकम् । पप्रच्छ शंभुं ब्रह्माणमनन्तं मुनिपुंगवान् ॥ ३ ॥
भवेद्भवाब्धितरणमावयोरुत्तमा गतिः । शीघ्रं ब्रूत महाभागा दीनयोर्दीनबान्धवाः ॥४॥
भवाब्धितरणे तर्या तत्र यूयं च नाविकाः । न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः
यज्ञरूपाणि पुण्यानि स्नानान्यनशनानि च । तपांसि नानादानानि विप्रदेवार्चनानि च ॥
चिरं पुनन्ति सर्वाणि दर्शनादेव वैष्णवाः । सतां च विष्णुभक्तानां रजसां स्पर्शमात्रतः
पूतानां पादपद्मानां सद्यः पूता वसुंधरा । तीर्थानि च पवित्राणि समुद्राः पर्वतास्तथा ॥
सुरा दर्शनमिच्छन्ति पातकेन्धनपावकम् । सोऽज्ञानी नैव बुबुधे ज्ञानं च ज्ञानिना सह
परमं स्वादुरूपं च दधिदुग्धरसं यथा । यथा कृष्णस्य तातोऽहं सङ्गी सुचिरमेव च ॥
तथैव देवकी माता ज्ञानिनां च गुरोर्गुरोः । वसुदेववचः श्रुत्वा प्रहस्य शंकरः स्वयम् ॥
चतुर्णामपि वेदानामुवाच जनको गुरुः ॥ ११ ॥

महादेव उवाच—
संनिकर्षो ज्ञानिनां चाप्यनादरणकारणम् । यान्ति गङ्गाम्भसा पूताः स्तीर्थान्यन्यानि सिद्धये
वासुदेवस्य तातोऽयं वसुदेवश्च पण्डितः । ज्ञानिनः कश्यपस्यांशो वयोस्तातस्य चाऽऽत्मनः
पृच्छति ज्ञानमस्मांश्च कृष्णाज्ज्ञानप्रबुद्धितः । अहो दुर्गा महामाया ज्ञानिनामपि मोहिनी ॥
विष्णुमाया दुराराध्या न साध्या जगतामपि । वयं च मोहिताः शश्वद्वेदानां जनकस्तथा

ब्रह्मा कृष्णं परीक्षेत मोहितस्तस्य मायया । ध्यायते यत्पदाम्भोजं तपसा जीवनावधि ॥
इन्द्रेषु दशलक्षेष्वप्यधिकाष्टशतेषु च । पातेषु ब्रह्मणः पाते निमेषो माधवस्य च ॥ १७ ॥
सह [1]तेनेन्द्रयुद्धं च पारिजातस्य हेतुना । पारिजाततरुं दत्त्वा मया शक्रश्च रक्षितः ॥ १८ ॥
यज्ज्ञानं न गिरामेव तत्त्वं वा विषयात्मकम् । नहि किंचित्तदज्ञानां तस्माद्ध्यानं सदैव हि
प्राणिनामात्मनो ज्ञानमस्माकं ज्ञानमस्ति च । तदूर्ध्वं तत्समं नैव कृष्णं पृच्छ शुभाशुभम्
ब्रह्मणश्च चतुर्थोमं कल्पं कल्पविदो विदुः । सप्तकल्पान्तजीवी च मार्कण्डेयो महामुनिः ॥
अष्टानवतिशक्रेषु पातेषु पतनं मुनेः । [3]ततः प्राप्तं हरेर्दास्यं मुनिना तपसः फलात् ॥ २२ ॥
प्रलये ब्रह्मणः पाते पतनं लोमशस्य च । दिक्पालानां ग्रहाणां च तदायुश्चिरजीविनाम् ॥
अन्येषामपि देवानां मुनीनामूर्ध्वरेतसाम् । तदेवाऽऽयुश्च रुद्राणां मां च मृत्युंजयं विना ॥
प्रलये च विधेः पाते शिवलोकेऽप्यहं शिवः । ब्रह्मभालोद्भवः शंभुः सर्वादि[4]: सर्गमापणः ॥
कृष्णवामाङ्गसंभूता यथा राधा तथैव च । तथैव दुर्गा लक्ष्मीश्च सावित्री च सरस्वती ॥
आदित्योऽप्यदितेः पुत्रः कायव्यूहेन द्वादश । तथैव च महेन्द्रश्च कायव्यूहाच्चतुर्दश ॥
तथैव वसवश्चाष्टौ रुद्राश्चैकादशैव ते । मनुपाते चेन्द्रपातो विपयात्पतनं भवेत् ॥ २८ ॥
समाययौ च सर्वेषां निधनं प्रलयेऽपि च । प्रलये दर्शयामास ब्रह्माण्डं च जलप्लुतम् ॥
ब्रह्माणं च स्वलोकं च स्वात्मानं शक्तिभिश्च माम् । सर्वेषां मूलरूपश्च सर्वेशः कृष्ण एव च
भज पुत्रं राजसूये यज्ञेशं यज्ञकारणम् । विधिवद्दक्षिणां दत्त्वा भवाब्धिं तर यादव ॥
मुक्तिस्ते नास्ति निर्वाणा विषयी कश्यपो भवान् । न ते दास्यं भक्तधनमदितिर्देवकी तथा
व्रज स्वर्गं भोगबीजं स्वस्थानममरालयम् । शिवस्य वचनं श्रुत्वा संयतश्चशुभक्षणे ॥
तत्र संभृतसंभारो राजसूयं चकार सः । वसुदेवस्य हव्यं च साक्षाच्च जगृहुः सुराः ॥ ३४ ॥
यत्र साक्षाच्च यज्ञेशो यज्ञोऽयं दक्षिणा सह । पूर्णाहुतिं दत्तवन्तं वसुदेवमुवाच सः ॥
सनत्कुमारो भगवान्वासुदेवाज्ञया मुने ॥ ३९ ॥

सनत्कुमार उवाच—

सर्वस्वं दक्षिणां देहि तूर्णं लक्ष्मीपतेः पितः । सार्थकं कुरु कर्मेदं वेदोक्तं वचनं शृणु ॥
दक्षिणा विप्रमुद्दिश्य तत्कालं चेन्न दीयते । मुहूर्ते तु व्यतीते सा दक्षिणा द्विगुणा भवेत् ॥
वासरे च बहिर्भूते भवेत्साऽपि चतुर्गुणा । त्रिरात्रे समतीते तु षड्गुणा दक्षिणा भवेत् ॥
पक्षान्ते तु शतगुणा मासान्ते तु चतुर्गुणा । षण्मासेऽप्यधिके न्यूने च साहस्रगुणा तथा ॥
वर्षान्ते सा लक्षगुणा ब्रह्मणोक्तं च यादव । उभौ च नरकं यातः कर्मकर्तृपुरोहितौ ॥

---

१ ख. देवेन्द्र° । २ °ज्ञानात्त्वाध्यानां च । ३ क. ततः । ४ क. °दिर्गर्भापणम् ।

वसुदेवश्च तच्छ्रुत्वा सर्वस्वमुत्ससर्ज स. । अधिकाराश्च साह्लादो वासुदेवात्तथा तथा ॥
अमूल्याना च रत्नाना दशकोटिमनुत्तमाम् । ददौ गर्गाय सर्वादौ स्वयं लक्ष्मीपते. पिता ॥
शतकोटिं मणीन्द्राणा स्वर्णाना तच्चतुर्गुणम् । माणिक्याना च मुक्ता ना हीरकाणां तथैव च ॥
रौप्यं प्रवालं परमं स्वर्णपात्राणि यानि च । स्वस्त्रीणा स्ववधूना चाप्यमूल्यरत्नभूषणम् ॥
श्वेतचामरलक्षं च लक्षं च रत्नदर्पणम् । कामधेनुगणं सर्वं शतकोटिं गजानपि ॥ ४९ ॥
शतकोटिं गजेन्द्राणामश्वाना तच्चतुर्गुणम् । यद्धनं यादवाना च राज्ञो राजानुमोदनात् ॥
ग्रामाणा शतलक्षं च ससस्यं फलितं तरुम् । धान्याचलाना लक्षं च शालयक्षाना तथैव च ॥
पायसं पिष्टकं चैव मिष्टान्न च सुधोपमम् । स्वस्तिकाना तिलाना च रम्याणि लड्डुकानि च
दध्ना मधूना दुग्धाना गुडाना हविषामपि । कुल्याना शतकं दत्त्वा परीहार चकार सः ॥
सकर्पूरं च ताम्बूलं सुशीतं वासितं जलम् । सुगन्धि चन्दनं चैव पारिजातस्य मालिकाम् ॥
आसनानि च रम्याणि वह्निशुद्धांशुकानि च । रत्नंनिर्माणतल्पानि पुष्पाणि च फलानि च
प्रददौ ब्राह्मणेभ्यश्च प्रफुल्लवदनेक्षण । देवाश्च भोजयामास ब्राह्मणाना मुखे शुभे ॥
देवाश्च मुनयो रात्रौ स्वरामाभिश्च रेमिरे । प्रभाते प्रययु सर्वे श्रीकृष्णानुमतेन च ॥
यादवाः प्रययु सर्वे द्वारका कृष्णपालिताम् । अमूल्यरत्नपूर्णा च रुक्मिणीदर्शनेन च ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० पञ्चविंशा-
त्यधिकशततमोऽध्याय' ॥ १२५ ॥

---

अथ षड्विंशत्यधिकशततमोऽध्याय ।

---

नारायण उवाच—

गणेशपूजनं कृत्वा माधवो यादवै सह । देवैर्मुनिभिरन्यैश्च देवीभि सह नारद ॥१॥
अंशेन देवो देवीभी रुक्मिण्याद्याभिरेव च । ययौ द्वारका रम्या तस्थौ सिद्धाश्रमे स्वयम्
कृत्वा सुप्रीतिसंभाषा सार्धं गोलोकवासिभि । गोपै सुहृद्भिर्नन्देन मात्रा गोप्या यशोदया
उवाच मातरं तातं सुनीतं च यथोचितम् । गोपाश्च गोकुलस्थाश्च बन्धुवर्गाश्च साम्प्रतम् ॥

श्रीभगवानुवाच—

गच्छ नन्दव्रजं नन्द हे तात प्राणवल्लभ । मातर्यशोदे त्वमपि परमार्ये यशस्विनि ॥५॥
भुक्त्वा कालावशेषं च गच्छ गोलोकमुत्तमम् । सालोक्यमुक्तिं दास्यामि सार्धं गोकुलवासिभिः
इत्युक्त्वा भगवान्कृष्ण पित्रोरनुमतेन च । जगाम राधिकास्थान नन्दश्च गोकुल त ॥ ॥

---

१ क 'सार्धे । २ घ गोकुलम्' ।

ददर्श राधां रुचिरां मुक्ताहारां च सस्मिताम्। यथा द्वादशवर्षीयां शश्वत्सुस्थिरयौवनाम्
रत्नेन्द्रसारनिर्माणरत्नसिंहासनस्थां च गोपीत्रिशतकोटिभिः। आवृतां श्वेतहस्ताभिः सस्मिताभिश्च सांप्रतम्
दृष्ट्वा च दूरतो राधा श्रीकृष्णं प्राणवल्लभम्। शिशुवेषं मुनेषं च सुन्दरेशं च सस्मितम्॥
नवीनजलदश्यामं पीतकौशेयवाससम्। चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम्॥११॥
मयूरपिच्छचूडं च मालतीमाल्यशोभितम्। ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहविग्रहम्॥
क्रीडाकमलमम्लानं धृतवन्तं मनोहरम्। मुरलीहस्तविन्यस्तं सुप्रशस्तं च दर्पणम्॥१३॥
जवेन च समुत्थाय गोपीभिः सह सादरम्। प्रणम्य परया भक्त्या तुष्टाव परमेश्वरम्॥

राधिकोवाच—

अद्य मे सफलं जन्म जीवितं च सुजीवितम्। यद्दृष्टं मुखचन्द्रं ते सुस्निग्धं लोचनं मनः
पञ्च प्राणाश्च स्निग्धाश्च परमात्मा च सुप्रियः। अभयोहर्षबीजं च दुर्लभं बन्धुदर्शनम्॥
शोकार्णवे निमग्नाऽहं प्रदग्धा विरहानलैः। त्वद्दृष्ट्याऽमृतवृष्ट्या च सुसिक्ताऽद्य सुशीतला॥१७॥
शिवा शिवप्रदाऽहं च शिवबीजा त्वया सह। शि(श)वस्वरूपा निश्चेष्टाऽप्यदृश्या च त्वया विना॥१८॥
त्वयि तिष्ठति देहे च देही श्रीमाञ्छुचिः स्वयम्। सर्वशक्तिस्वरूपा च शिवरूपा गते त्वयि
स्त्रीपुंसोर्विरहो नाथ सामान्यश्च सुदारुणः। यान्त्येव शक्तिभिः प्राणा विच्छेदात्परमात्मनः
इत्युक्त्वा राधिका देवी परमात्मानमीश्वरम्। स्वासने वासयामास कृत्वा पादार्चनं मुदा॥
रत्नसिंहासने श्रीमानुवास राधया सह। गोपीभिः सखिभिः शश्वत्सेवितः श्वेतचामरैः॥
चन्दना सा ददौ गात्रे सुगन्धि चन्दनं हरेः। सस्मिता रत्नमाला सा रत्नमालां गले ददौ
पद्मैः पद्मार्चिते पादपद्मे पद्मावती सती। अर्घ्यं ददौ सा सजलं दूर्वां पुष्पं च चन्दनम्।
मालती मालतीमाल्यं चूडायां च हरेर्ददौ। चम्पापुष्पस्य पुटकं ददौ चम्पावती सती॥
पारिजाता च हरये पारिजातं ददौ मुदा। सकर्पूरं च ताम्बूलं वासितं शीतलं जलम्॥
ददौ कदम्बमाला सा कदम्बमालिकां शुभाम्। क्रीडाकमलमम्लानममूल्यं रत्नदर्पणम्॥
ददौ हस्ते हरेरेव कमला सा सुकोमला। वरेण्येन पुरा दत्तं वस्त्रयुग्मं च सुन्दरम्॥
साक्षाद्गोरोचनाभं च सुन्दरी हरये ददौ। मधुपात्रं मधुरसं मधुरं मधुपूर्णकम्॥२८॥
सुधापूर्णं सुधापात्रं ददौ भक्त्या सुधामुखी। चकार पुष्पशय्यां च गोपी चन्दनचर्चिताम्
अम्लानमालतीपुष्पमालाजालविभूषिताम्। रत्नेन्द्रसारनिर्माणमन्दिरे सुमनोहरे॥३०॥
मणीन्द्रमुक्तामाणिक्यहीरहारविभूषिते। कस्तूरीकुङ्कुमाक्तेन वायुना सुरभीकृते॥३१॥

१ क च सुलभं।

रत्नप्रदीपशतकैर्ज्वलद्भिश्च सुदीपिते । धूपिते सततं धूपैर्नानावस्तुसमन्वितैः ॥ ३२ ॥
कृत्वा शय्यां रतिकरीं ययुर्गोप्यश्च सस्मिताः । दृष्ट्वा रहसि तल्पं च सुरम्यं सुमनोहरम्
माधवो राधया सार्धं विवेश रतिमन्दिरम् । नानाप्रकारहास्यं च परिहासं स्मरोचितम्॥
द्वयोर्बभूव तल्पे च मदनातुरयोस्तथा । माल्यं ददौ च कृष्णाय ताम्बूलं च सुवासितम् ॥
कस्तूरीकुङ्कुमाक्तं च चन्दनं श्यामवक्षसि । चारुचम्पकपुष्पं च चूडायां प्रददौ सती ॥
सहस्रदलसंसक्तक्रीडापद्मं करे ददौ । प्रक्षिप्य मुरलीं हस्तात्प्रददौ रत्नदर्पणम् ॥३७॥
पारिजातस्य कुसुममम्लानं पुरतो ददौ । उवाच मधुरं राधा रहस्यं मधुरं वचः ॥३८॥
सस्मिता सस्मितं शान्तं कान्तं कान्ता मनोहरम् ॥ ३९ ॥

राधिकोवाच —

निष्फले मङ्गलप्रश्नं मङ्गले मङ्गलालये । सर्वमङ्गलबीजे च मांङ्गल्ये मङ्गलप्रदे ॥४०॥
तथाऽपि कुशलप्रश्नं सांप्रतं समयोचितम् । लौकिको व्यवहारोऽपि वेदेभ्यो बलवांस्तथा
कुशलं रुक्मिणीकान्त सत्यभामेश सांप्रतम् । महेन्द्रेण समं युद्धं लीलया च यदाज्ञया ॥
पारिजाततरुं स्वर्गादुत्पाटच चामरावतीम् । गत्वा विजित्य देवांश्च तस्यै दत्तमिति श्रुतम्
पुण्यकं च कृतं तेन पारिजातेन सुव्रतम् । स्वामेव साध्यं कान्तं च संपूर्णे दक्षिणा ददौ ॥
ब्रह्मेशशेषाशाध्यस्त्वं तया साध्यः कृतः कथम् । सर्वाभ्यः कामिनीभ्यश्च सत्यभामां विभेषि च
रुक्मिण्यां प्रेमसौभाग्यमतिरिक्तं च गौरवम् । भयं माल्यं च धन्यायां सत्यायां सततं श्रुतम्
सत्यं जाम्बवतीकान्त वद मां च सुनिश्चितम् । तासु सर्वासु कान्तासु कस्यां कान्ते प्रेम चाधिकम्
शृङ्गारे सर्वभावे वा तासु का रसिका परा । त्वयि स्निग्धा विदग्धा का तासु धन्या पतिव्रता
सा स्त्री भावानुरक्ता या भार्या पातिपतिश्च सः । प्रेमातिरिक्तं स्त्रीपुंसोस्त्रैलोक्येषु सुदुर्लभम्
रसिका स्त्री विजानाति सती गुणवती पतिम् । गुणज्ञं रसिकं शूरं सुशीलं सुरतौ सदा ॥
दूराद्धावति पद्मार्थं मधुलोभान्मधुव्रतः । भेकस्तत्र हि जानाति तन्मूर्ध्नि पादमुत्स्रजेत् ॥
यन्त्री जानाति मंगीतरमं यन्त्रं च नैव च । दुग्धास्वादं विदग्धश्च न दर्वी नैव भाजनम्
परिपक्वफलास्वादं जानन्ति भोगिनः सुखम् । एकत्रावस्थिताः शश्वत्त किंचित्फलिनो यथा॥
सुशीतलजलास्वादं विजानन्ति तृषालवः । न च वापी न च घटश्चैकत्रावस्थितो यथा ॥
भोगिनो हि विजानन्ति शालिस्वादुरसं परम् । एकत्रावस्थितं चेत्तु न क्षेत्रं भाजनं यथा ॥
बुबुधे चन्दनाघ्राणं चन्दनार्थी च भोगवित् न गर्दभो भारवाही न तस्य पात्रिका यथा ॥
यं न जानन्ति वेदाश्च ब्रह्मेशानादयस्तथा । योगिनो मुनय सिद्धास्तं किं जानन्ति योषितः

१ ख. कृपीवलाः ।

सौभाग्यं गौरवं प्रेम दुर्लभं नित्यनूतनम् । यथेप्सितं च परं नैव चूर्णीभूतं क्षणेन च ॥
अत्युच्छ्रितो निपतनं प्राप्नोत्येव ध्रुवं प्रभो । आराद्विपत्तिबीजं च वैष्णवानां विहिंसनम्
श्रीदामा च मया शप्तस्त्वद्भक्तो भक्तवत्सलः । एतादृशी विपत्तिर्मे पुत्रश्रीदामशापतः ॥
ईश्वरः कस्य वा बन्धुः प्रियो वा विप्रियस्तथा । सततं भक्तिमाध्यस्थ्यो यो भक्तश्च तदीश्वरः
वेदाश्च वैदिकाः सन्तः पुराणानि वदन्ति च । राधया माधवः साध्यो भगवानिति निष्फलम्
जित्वा च सगणं शंभुं बाणस्य भुजकृन्तनम् । कृत्वा च रुक्मिणीपौत्रः समानीतः सभार्यकः
अहो त्वयि समायाते रुक्मिणी किमुवाच ह । प्रेम स्थितं समानं ते किं विवृद्धं च गौरवम्
कुरुपाण्डवयुद्धेन कुरवो निहतास्त्वया । पाण्डवार्थे तथा भूपाः क्व साम्यं परमात्मनः ॥
साक्षान्महेन्द्रजातस्य कौन्तेयस्यार्जुनस्य च । राजमण्डलमध्यस्थो भवानेव हि सारथिः ॥
तेन भक्तेन शुद्धेन भीष्मेण च महात्मना, लज्जितेन किमुक्तं ते महतीषु सभासु च ॥
देवैरपि कथं दृष्टो ब्रह्मेशशेषसंज्ञकैः । भक्तसिद्धैर्भूतैः सर्वैर्न चोक्तः किंचिदेव सः ॥६८॥
यश्चानिर्वचनीयश्च वेदेषु च चतुर्षु च । पुराणेष्वितिहासेषु प्रकृतेः पर ईश्वरः ॥ ६९ ॥
निर्गुणश्च निरीहश्च निर्लिप्तः सर्वकर्मणाम् । कर्मणां साक्षिरूपश्च भक्तानुग्रहविग्रहः ॥
परं ब्रह्म परं ज्योतिः परमेशः परात्परः । परमात्मा च सर्वेषां सूतो नरस्थास्थितः॥७१॥
त्वया कुब्जा च संभुक्ता वृद्धा क्षत्रियकामिनी । अपुत्रिणी चाधिकाङ्गी पूर्णाऽस्पृश्या च ॥
प्राक्तनात् ॥ ७२ ॥
त्वया च निहतः कंसो मातुलः केन हेतुना । आयास्यतीति कृत्वा च गतं न पुनरागतम्
निहत्य यादवान्सर्वान्निर्मज्य द्वारकां पुरीम् । त्वां निवार्य समानेतुमीश्वरी वारिता जनैः ॥
इत्युक्त्वा राधिका देवी मुखमुद्रे रुरोद सा । मूर्छां संप्राप सहसा निर्निःश्वासा बभूव ह ॥
गोप्यो गवाक्षजालस्थाः शुश्रुवुर्ददृशुस्तथा । दृष्ट्वा तामाययुः सर्वा ऊचू राधा मृतेति च ॥
उर्ध्वस्ता रुरुदुः सर्वाः क्रोडे कृत्वा च राधिकाम् । ऊचुस्ता रक्ष रक्षेति हरे नरहरे प्रभो ॥

गोप्य ऊचुः—

किं कृतं किं कृतं कृष्ण त्वया राधा मृता च नः । राधां जीवय भद्रं ते यास्याम काननं वयम्
अन्यथा जीवनं तुभ्यं दास्यामः सर्वयोषितः । गोपीनां वचनं श्रुत्वा राधिकायाश्च माधवः
उवाच जीवयामास सुधादृष्ट्या च न रुद । उत्तस्थौ राधिका देवी रुदती मानिनी सती ॥
गोप्यस्तां बोधयामासुः क्रोडे कृत्वा पुनः पुनः ॥ ८१ ॥

श्रीकृष्ण उवाच—

शृणु राधे प्रवक्ष्यामि ज्ञानमाध्यात्मिकं परम् । यच्छ्रुत्वा हालिको मूर्खः सद्यो भवति पण्डितः

---

१ क. मूर्छासम्पर्या।

गोलोकाऽहं जगतां स्वामी किं रुक्मिण्यादियोषिताम् । कार्यकारणरूपोऽहं व्यक्तो राधे पृथ-
क्पृथक् ॥ ८३ ॥
एकस्मोऽहं च विश्वेषां जात्या ज्योतिर्मयः स्वयम् । सर्वप्राणिषु व्यक्तश्च चाध्यात्मलोदितृ-
णादिषु ॥ ८४ ॥

एकस्मिंश्च मुक्तवति न तुष्टोऽन्शो जनस्तथा । मय्यात्मनि गतेऽप्येको मृतोऽप्यन्यः सुजीवति
जात्याऽहं कृष्णरूपश्च परिपूर्णतमः स्वयम् । गोलोके गोकुले पुण्ये क्षेत्रे वृन्दावने वने ॥
द्विभुजो गोपवेषश्च स्वयं राधापतिः शिशुः । गोपालैर्गोपिकाभिश्च सहितः कामधेनुभिः ॥
चतुर्भुजोऽहं वैकुण्ठे द्विधारूपः सनातनः । लक्ष्मीसरस्वतीकान्तः सततं शान्तविग्रहः ॥
यन्मानसी सिन्धुकन्या मर्त्यलक्ष्मीपतिर्भुवि । श्वेतद्वीपे च क्षीरोदे तत्रापि च चतुर्भुजः ॥
अहं नारायणर्षिश्च नरो धर्मः सनातनः । धर्मवक्ता च धर्मिष्ठो धर्मवर्त्मप्रवर्तकः ॥ ९० ॥
शान्तिर्लक्ष्मीस्वरूपा च धर्मिष्ठा च पतिव्रता । अत्र तस्याः पतिरहं पुण्यक्षेत्रे च भारते ॥
सिद्धेशः सिद्धिदः साक्षात्कपिलोऽहं सतीपतिः । नानारूपधरोऽहं च व्यक्तिभेदेन सुन्दरि
अहं चतुर्भुजः शश्वद्द्वारवत्यां रुक्मिणीपतिः । अहं क्षीरोदशायी च सत्यभामागृहे शुभे
अन्यासां मन्दिरेऽहं च कायव्यूहात्पृथक्पृथक् । अहं नारायणर्षिश्च फाल्गुनस्यापि सारथिः
स नरर्षिर्धर्मपुत्रो मदंशो बलवान्भुवि । तपसाऽऽराधितस्तेन सारथ्येऽहं च पुष्करे ॥ ९५ ॥
यथा त्वं राधिका देवी गोलोके गोकुले तथा । वैकुण्ठे च महालक्ष्मीर्भवती च सरस्वती ॥
भवती मर्त्यलक्ष्मीश्च क्षीरोदशायिनः प्रिया । धर्मपुत्रवधूस्त्वं च शान्तिर्लक्ष्मीस्वरूपिणी ॥
कपिलस्य प्रिया कान्ता भारते भवती सती । त्वं सीता मिथिलायां च त्वच्छाया द्रौपदी सती
द्वारवत्यां महालक्ष्मीर्भवती रुक्मिणी सती । पञ्चानां पाण्डवानां च भवती कलया प्रिया ॥
रावणेन हृता त्वं च त्वं च रामस्य कामिनी । नानारूपा यथा त्वं च छायया कलया सती
नानारूपस्तथाऽहं च स्वांशेन कलया तथा । परिपूर्णतमोऽहं च परमात्मा परात्परः ॥
इति ते कथितं सर्वमाध्यात्मिकमिदं सति । राधे सर्वापराधं मे क्षमस्व परमेश्वरि ॥ १२ ॥
श्रीकृष्णवचनं श्रुत्वा परितुष्टा च राधिका । परितुष्टाश्च गोप्यश्च प्रणेमुः परमेश्वरम् ॥ १३ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना०
षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

---

अथ सप्तविंशत्यधिकशततमोऽध्यायः ।

---

नारायण उवाच—
श्रीकृष्णवचनं श्रुत्वा सहसा गोपिका मुदा । मन्दिरं ययुः सर्वाः प्रणम्य राधिकां प्रभुम्

१ ध. रन्धे । २ क. स्वपा । ३ 'कायव्य हा' । ४ ध. भारती । ५ क. 'राधन ध' ।

समुद्रपुलिने रम्ये पारिजातवने वने । सुमद्रे पुष्पमद्रे च नारायणसरोवरे ॥ २७ ॥
पवनस्यैव निलये मलये च सुरालये । त्रिकूटे मद्रकूटे च पञ्चकूटे सुकूटके ॥ २८ ॥
देवानां कमनीयायां काञ्चन्यां च तथैव च । समुद्रे च समुद्रे च द्वीपे द्वीपे मनोहरे ॥२९॥
खर्वटे प्रवरे रम्ये पुण्यचन्द्रसरोवरे । सुपार्श्वे मुनिपार्श्वे च स रेमे राधया सह ॥३०॥
शीघ्रं च पुनरागत्य जम्बूद्वीपं च पुण्यदम् । द्वारकां दर्शयामास पर्वतं रैवतं तथा ३१॥
गोकुलं पुनरागत्य गोपगोकुलसंकुलम् । तत्र दृष्ट्वा च भाण्डीरं पुण्यं वृन्दावनं ययौ ॥
श्रीकृष्णागमनं श्रुत्वा यशोदा नन्द एव च । गोपा गोप्यश्च वृद्धाश्चाप्यश्रुनेत्रा निराकुलाः
वारणेन्द्रं पुरस्कृत्य वेश्यांश्च नटनर्तकाः । पतिपुत्रवतीं साध्वीं ब्राह्मणीं ब्राह्मणं तथा ॥
यथा देवाश्च वह्निं च दृष्ट्वा नन्दं च मातरम् । आययुर्बालकृष्णश्च राधया सह माधवः
मातुः क्रोडमारुरोह प्रहस्य मधुसूदनः । नन्दो यशोदया सार्धं चुचुम्ब मुखपङ्कजम् ॥
आश्लिष्य भृशमुच्चैश्च सिषेच नेत्रजैर्जलैः । स्वयं च भगवान्कृष्णो यशोदायाः स्तनं पपौ॥
तादृशं ददृशुः सर्वे यादृशो मथुरां ययौ । मुरलीहस्तविन्यस्तं रत्नभूषणभूषितम् ॥
यथैकादशवर्षीयं शोभितं पीतवाससा । मयूरपिच्छचूडं च मालतीमाल्यमण्डितम् ॥
मन्दिरं वेशयामास राधया सह माधवम् । यशोदा मङ्गलं कृत्वा भोजयामास ब्राह्मणान्
पूजां चकार गोपीनां मुनीनां च यथा जनः । मणिरत्नं प्रवालं च सुवर्णं परमं तथा ॥
मुक्तामाणिक्यहीरं च ब्राह्मणेभ्यो ददौ मुदा । गजरत्नं गवां रत्नमश्वरत्नं मनोहरम् ॥
आसनानि च पात्राणि भूषणानि तथैव च । धान्यान्यपि च सस्यानि वस्त्राणि च तथा ददौ॥
अपूर्वं दर्शयामास राधया सह माधवम् । गोपीगणं च विप्राश्च सादरेणापि नारद ॥
दुन्दुभीन्वादयामास कारयामास मङ्गलम् । देवांश्च भोजयामास सानन्दं च मनोहरम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० सप्तविंशत्यधिक-
शततमोऽध्यायः ॥ १२७ ॥

अथाष्टाविंशत्यधिकशततमोऽध्यायः ।

नारायण उवाच—

श्रीकृष्णश्च समाह्वाने गोपांश्चापि चकार सः । भाण्डीरे वटमूले च तत्र स्वयमुवास ह ॥
पुराऽसौ च ददौ तस्मै यत्रैव ब्राह्मणीगणः । उवास राधिका देवी वामपार्श्वे हरेरपि ॥
दक्षिणे नन्दगोपश्च यशोदासहितस्तथा । तद्दक्षिणे वृषभानुस्तद्वामे सा कलावती॥ ३ ॥

राधाशृङ्गारभावं च कलाषोडशपूर्वकम् । चकार सस्मिता साध्वी वक्रचञ्चललोचना॥२॥
दत्त्वा च चन्दनं माल्यं स्वामिने पुनरेव च । रहस्यं परीहास्यं च पुनरेव चकार सः॥३॥
आकृष्य राधिकां कृष्णः समानीय स्ववक्षसि । ओष्ठाधरं कपोलं च गण्डयुग्मं चुचुम्ब च
राधा चुचुम्ब कृष्णस्य मुखचन्द्रं मनोहरम् । चकार कृष्णं प्राणेशं बाहुभ्यां च स्ववक्षसि
शृङ्गारं षोडशविधं कामशास्त्रोक्तमीप्सितम् । स्त्रीपुंसोरतोपजनकं चकार भगवान्प्रभुः ॥
नखविक्षतसर्वाङ्गा दशनेनाधरक्षता । पुलकाञ्चितदेहा सा तन्द्रिता वामनस्तनी ॥ ७ ॥
मूर्छिता सुखसंभोगाद्विलग्ना हतचेतना । श्वासमात्रावशेषा च निद्रामुद्रितलोचना ॥ ८ ॥
रतिशूरा कोमलाङ्गी कान्तवक्षःस्थलस्थिता । शीते सुखोष्णसर्वाङ्गी ग्रीष्मे सा सुखशीतला
शृङ्गारकाले सुखदा सान्द्रश्रोणिपयोधरा । नितम्बभारानम्रा च प्रसङ्गे सुखदाधिका ॥
विदग्धा रसिका श्रेष्ठा कामुकी च वराङ्गना । सहसा चेतनं प्राप्य शुश्राव कोकिलध्वनिम्
श्रुत्वा परमभीता सा दीना दीनविशङ्कया । उवाच परमा सा च परमेशं परात्परम् ॥
बाहुश्रेणियुगाभ्यां च निबध्य च पुनः पुनः ॥ १२ ॥

राधिकोवाच—

रासं गच्छ महाभाग पुण्यं वृन्दावनं वनम् । तत्र क्रीडां करिष्यामि जलेन च स्थलेन च॥
पुनर्यास्यामि मल्यं सुन्दरं मणिमन्दिरम् । अपरं यद्रहस्यं वा जन्मना न श्रुतं मया ॥
तत्र यामि त्वया सार्धमिति मे लालसा परा। परस्परैकालापेन प्रययौ रजनी शुभा ॥
अरुणोदयकालेऽपि न त्यजेन्माधवं सती । माधवः प्रीतिवचसा बोधयामास साधनात् ॥
प्रातःकृत्यं ततः कृत्वा स्वारुरोह रथं हरिः । गोपीभी राधया सार्धं शरत्कमललोचनः ॥
योजनायतविस्तीर्णं गृहैस्त्रिशतकोटिभिः । मणीन्द्रसारनिर्माणैर्ज्वलद्भिरुपशोभितम् ॥
गोलोकादागतं तत्र मनोयानं मनोहरम् । सहस्रचक्रसंयुक्तं सहस्राश्वैः प्रचालितम् ॥
मणिस्तम्भैस्त्रिकोटीभी रत्नराजिविराजितम् । मुक्तामाणिक्यपरमैर्हीरहारैः सुशोभितम्॥
नानाचित्रैर्विचित्रैश्च श्वेतचामरदर्पणैः । वह्निशुद्धांशुकैर्दीप्तैर्माल्यजालैर्विभूषितम्॥२१॥
रत्ननिर्माणकलशैश्च पुष्पचन्दनचर्चितम् । समानरूपवेषैश्च गोपालैः समावृतम्॥२२॥
रथेन तेन भगवान्पुनर्वृन्दावनं ययौ । तत्र गत्वा निशाकाले विजहार जले स्थले॥२३॥
शृङ्गारं सुचिरं कृत्वा वनेषूपवनेषु च। राधिकां दर्शयामास यथासर्वं च नूतनम् ॥२४॥
चित्ररथे सुरम्ये माहेन्द्रे नन्दने वने । सुमेरुशिखरे रम्ये पर्वते गन्धमादने ॥ २५ ॥
शैले शैले कन्दरे च कन्दरे कन्दरे वने । पुष्पोद्याने सुरम्ये नद्यां नद्यां नदे नदे ॥२६॥

---

१ क. °णे।

समुद्रपुलिने रम्ये पारिजातवने वने । सुभद्रे पुष्पभद्रे च नारायणसरोवरे ॥ २७ ॥
पवनस्यैव निलये मलये च सुरालये । त्रिकूटे भद्रकूटे च पद्मकूटे सुकूटके ॥ २८ ॥
देवानां कमनीयायां काञ्चन्यां च तथैव च । समुद्रे च समुद्रे च द्वीपे द्वीपे मनोहरे ॥२९॥
खर्वटे प्रवरे रम्ये पुण्यचन्द्रसरोवरे । सुपार्श्वे मुनिपार्श्वे च स रेमे राधया सह ॥३०॥
शीघ्रं च पुनरागत्य जम्बूद्वीपं च पुण्यदम् । द्वारकां दर्शयामास पर्वतं रैवतं तथा ३१॥
गोकुलं पुनरागत्य गोपगोकुलसंकुलम् । तत्र दृष्ट्वा च भाण्डीरं पुण्यं वृन्दावनं ययौ ॥
श्रीकृष्णागमनं श्रुत्वा यशोदा नन्द एव च । गोपा गोप्यश्च वृद्धाश्चाप्यश्रुनेत्रा निराकुलाः
वारणेन्द्रं पुरस्कृत्य वेश्यां च नटनर्तकाः । पतिपुत्रवतीं साध्वीं ब्राह्मणीं ब्राह्मणं तथा ॥
यथा देवाश्च वह्निं च दृष्ट्वा नन्दं च मातरम् । आययुर्बालकृष्णश्च राधया सह माधवः
मातुः क्रोडमारुरोह प्रहस्य मधुसूदनः । नन्दो यशोदया सार्धं चुचुम्ब मुखपङ्कजम् ॥
आश्लिष्य भृशमुच्चैश्च सिषेच नेत्रजैर्जलैः । स्वयं च भगवान्कृष्णो यशोदायाः स्तनं पपौ॥
तादृशं ददृशुः सर्वे यादृशो मथुरां ययौ । मुरलीहस्तविन्यस्तं रत्नभूषणभूषितम् ॥
पर्यंकादशवर्षीयं शोभितं पीतवाससा । मयूरपिच्छचूडं च मालतीमाल्यमण्डितम् ॥
मन्दिरं वेशयामास राधया सह माधवम् । यशोदा मङ्गलं कृत्वा भोजयामास ब्राह्मणान्
पूजां चकार गोपीनां मुनीनां च यथा जनः । मणिरत्नं प्रवालं च सुवर्णं परमं तथा ॥
मुक्तामाणिक्यहीरं च ब्राह्मणेभ्यो ददौ मुदा । गजरत्नं गवां रत्नमश्वरत्नं मनोहरम् ॥
आसनानि च पात्राणि भूषणानि तथैव च । धान्यान्दधि च सस्यानि वस्त्राणि च तथा ददौ॥
अपूर्वं दर्शयामास राधया सह माधवम् । गोपीगणं च मिष्टान्नं सादरेणापि नारद ॥
दुन्दुभीन्वादयामास कारयामास मङ्गलम् । देवांश्च भोजयामास सानन्दं च मनोहरम् ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

---

अथाष्टाविंशत्यधिकशततमोऽध्यायः ।

---

नारायण उवाच—

श्रीकृष्णश्च समाह्वानं गोपांश्चापि चकार सः । भाण्डीरे वटमूले च तत्र स्वयमुवास ह ॥
पुरोऽग्रे च ददौ तस्मै यत्रैव ब्राह्मणीगणः । उवास राधिका देवी वामपार्श्वे हरेरपि ॥
दक्षिणे नन्दगोपश्च यशोदासहितस्तथा । तद्दक्षिणे वृषभानस्तद्वामे सा कलावती॥ ३ ॥

अन्ये गोपाश्च गोप्यश्च बान्धवाः सुहृदस्तथा। तानुवाच स गोविन्दो योगदैर्यं समयोचितम्॥

श्रीभगवानुवाच—

शृणु नन्द प्रवक्ष्यामि सांप्रतं समयोचितम्। सत्यं च परमार्थं च परलोकसुखावहम्॥
आब्रह्मस्तम्बपर्यन्तं भ्रमं सर्वं निशामय। विद्युद्दीप्तिर्मेघरेखा यथा तोयस्य बुद्बुदम्॥
मथुरायां सर्वमुक्तं नावशेषं च किंचन। यशोदां बोधयामास राधिका कदलीवने॥ ७॥
तदेव सत्यं परमं भ्रमध्वान्तप्रदीपकम्। विहाय मिथ्यामायां च स्मर तत्परमं पदम्॥
जन्ममृत्युजराव्याधिहरं हर्षकरं परम्। शोकसंतापहरणं कर्ममूलनिकृन्तनम्॥ ९॥
मामेव परमं ब्रह्म भगवन्तं सनातनम्। ध्यायं ध्यायं पुत्रबुद्धिं त्यक्त्वा व्रज परं पदम्
गोलोकं गच्छ शीघ्रं त्वं सार्धं गोकुलवासिभिः। आगात्कलेरागमनं कर्ममूलनिकृन्तनम्॥
स्त्रीपुंसोर्नियमो नास्ति जातीनां च तथैव च। विप्रे संध्यादिकं नास्ति चिह्नं यज्ञोपवीतकम्
यज्ञसूत्रं च तिलकं शेषं लुप्तं सुनिश्चितम्। दिवाव्यवायनिरतं विरतं धर्मकर्मणि॥ १३॥
यज्ञानां च व्रतानां च तपसां लुप्तमेव च। केदारकन्याशापेन धर्मो नास्त्येव केवलम्॥
स्वच्छन्दगामिनीस्त्रीणां पतिश्च सततं वशे। ताडयेत्सततं तं च भर्त्सयेच्च दिवानिशम्॥
प्राधान्यं स्त्रीकुटुम्बानां स्त्रीणां च सततं भ्रम। स्वामी च भक्तस्तासां च पराभूतो निरन्तरम्
कलौ च योषितः सर्वा जारसेवासु तत्पराः। शतपुत्रसमः स्नेहस्तासां जारे भविष्यति॥
ददाति तस्मै भक्ष्यं च यथा भृत्याय कोपतः। सस्मिता सकटाक्षा साऽमृतदृष्ट्या निरन्तरम्
जारं पश्यति कामेन विषदृष्ट्या पतिं सदा। सततं गौरवं तासां स्नेहं च जारबान्धवे॥
पत्यौ करप्रहारं च नित्यं नित्यं करोति च। मिष्टान्नं श्रद्धया भक्त्या जाराय प्रददाति च॥
वेषयुक्ता च सततं जारसेवनतत्परा। प्राणा बन्धुर्गतिश्चाऽऽत्मा कलौ जारश्च योषिताम्
लुप्ता चातिथिसेवा च प्रलुप्तं विष्णुसेवनम्। पितॄणामर्चनं चैव देवानां च तथैव च॥ २२॥
विष्णुवैष्णवयोर्द्वेषी सततं च नरो भवेत्। वाममन्त्रोपासकाश्च चतुर्वर्णाश्च तत्पराः॥
शालग्रामं च तुलसीं कुशं गङ्गोदकं तथा। न स्पृशेन्मानवो धूर्तो म्लेच्छाचाररतः सदा
कारणं कारणानां च सर्वेषां सर्वबीजकम्। सुखदं मोक्षदं शश्वद्दातारं सर्वसंपदाम्॥
त्यक्त्वा मां परया भक्त्या क्षुद्रसंपत्प्रदायिनम्। वेदनिघ्नं[1] वाममन्त्रं जपेद्विप्रश्च मायया॥
सनातनी विष्णुमाया वञ्चितं तं करिष्यति। ममाऽऽज्ञया भगवती जगतां च दुरत्यया
कलेर्दशसहस्राणि मदर्चा भुवि तिष्ठति। तदर्धानि च वर्षाणि गङ्गा भुवनपावनी॥ २८॥
तुलसी विष्णुभक्ताश्च यावद्गङ्गा च कीर्तनम्। पुराणानि च स्वल्पानि तावदेव महीतले

---

[1] क. °निन्दा।

मम चोत्कीर्तनं नास्ति एतदन्ते कलौ व्रज । एकवर्णा भविष्यन्ति किराता मलिनाः शठाः
पित्रोः सेवा गुरोः सेवा सेवा च देवविप्रयोः । विवर्जिता नराः सर्वे चातिथीनां तथैव च ॥
सस्यहीना भवेत्पृथ्वी साऽनावृष्ट्या निरन्तरम् । फलहीनोऽपि वृक्षश्च जलहीना सरित्तथा
वेदहीनो ब्राह्मणश्च बलहीनश्च भूपतिः । जातिहीना जनाः सर्वे म्लेच्छो भूपो भविष्यति
भृत्यश्च ताडयेत्तातं पुत्रः शिष्यस्तथा गुरुम् । कान्तं च ताडयेत्कान्ता लुब्धकुक्कुटवद्गृही ॥
नश्यन्ति सकला लोकाः कलौ शेषे च पापिनः । सूर्याणामातपात्केचिज्जलौघेनापि केचन
हे वैश्येन्द्र प्रतिकलौ न नश्यति वसुंधरा । पुनः सृष्टौ भवेत्सत्यं सत्यबीजं निरन्तरम्
एतस्मिन्नन्तरे विप्र रथमेव मनोहरम् । चतुर्योजनविस्तीर्णमूर्ध्वे च पञ्चयोजनम् ॥३७॥
शुद्धस्फटिकसंकाशं रत्नेन्द्रसारनिर्मितम् । अम्लानपारिजातानां मालाजालविराजितम् ।
मणीनां कौस्तुभानां च भूषणेन विभूषितम् । अमूल्यरत्नकलशं हीरहारविडम्बितम् ॥
मनोहरैः परिष्वक्तं सहस्रकोटिमन्दिरैः । सहस्रद्वयचक्रं च सहस्रद्वयघोटकम् ॥४०॥
सूक्ष्मवस्त्राच्छादितं च गोपीकोटीभिरावृतम् । गोलोकादागतं तूर्णं ददृशुः सहसा व्रजे ॥
कृष्णाज्ञया तमारुह्य ययुर्गोलोकमुत्तमम् । राधा कलावती देवी धन्या चायोनिसंभवा ॥
गोलोकादागता गोप्यश्चायोनिसंभवाश्च ताः । श्रुतिपत्न्यश्च ताः सर्वाः स्वशरीरेण नारद
सर्वे त्यक्त्वा शरीराणि नश्वराणि सुनिश्चितम् । गोलोकं च ययौ राधा सार्धं गोकुलवासिभिः
ददर्श विरजातीरं नानारत्नविभूषितम् । तदुत्तीर्य ययौ विप्र शतशृङ्गं च पर्वतम् ॥
नानामणिगणाकीर्णं रासमण्डलमण्डितम् । ततो ययौ कियद्दूरं पुण्यं वृन्दावनं वनम् ॥
सा ददर्शाक्षयवटमूर्ध्वे त्रिशद्योजनम् । शतयोजनविस्तीर्णं शाखाकोटिसमावृतम् ॥
रक्तवर्णैः फलौघैश्च स्थूलैरपि विभूषितम् । गोपीकोटिसहस्रैश्च सार्धं वृन्दा मनोहरा ॥
अनुव्रजं सादरं च सस्मिता सा समाययौ । अवरुह्य रथात्तूर्णं राधां सा प्रणनाम च ॥
रासेश्वरीं तां संभाष्य प्रविवेश स्वमालयम् । रत्नसिंहासने रम्ये हीरहारसमन्विते ॥
वृन्दा तां वासयामास पादसेवनतत्परा । सखीभिश्च सखीभिश्च सेविता श्वेतचामरैः ॥
आययुर्गोपिकाः सर्वा द्रष्टुं तां परमेश्वरीम् । नन्दादिकं प्रकल्प्यैतद्राधा वासं पृथक्पृथक्
परमानन्दरूपा सा परमानन्दपूर्वकम् । स्ववेश्मनि महारम्ये मरराम गोपिका सह ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० अष्टाविं-
शत्यधिकशततमोऽध्यायः ॥ १२८ ॥

---

१ ख. सति । २ ख. सृष्टिर्भ° ।

## अथैकोनत्रिंदधिकशततमोऽध्यायः ।

---

नारायण उवाच—

श्रीकृष्णो भगवांस्तत्र परिपूर्णतमः प्रभुः । दृष्ट्वा सालोक्यमोक्षं च सद्यो गोकुलवासिनाम्
उवास पश्चाभिर्गोपैर्भाण्डीरे वटमूलके । ददर्श गोकुलं सर्वं गोकुलं व्याकुलं तथा ॥ २ ॥
अरक्षकं च व्यस्तं च शून्यं वृन्दावनं वनम् । योगेनामृतवृष्ट्या च कृपया च कृपानिधिः
गोपीभिश्च तथा गोपैः परिपूर्णं चकार सः । तथा वृन्दावनं चैव सुरम्यं च मनोहरम् ॥
गोकुलस्थाश्च गोपाश्च समाश्वासं चकार सः । उवाच मधुरं वाक्यं हितं नीतं च दुर्लभम्

श्रीभगवानुवाच—

हे गोपगण हे बन्धो सुखं तिष्ठ स्थिरो भव । रमणं प्रियया सार्धं सुरम्यं रासमण्डलम्
तावत्प्रभृति कृष्णस्य पुण्ये वृन्दावने वने । अधिष्ठानं च सततं यावच्चन्द्रदिवाकरौ ॥
तथा जगाम भाण्डीरं विधाता जगतामपि । स्वयं शेषश्च धर्मश्च भवान्या च भवः स्वयम्
सूर्यश्चापि महेन्द्रश्च चन्द्रश्चापि हुताशनः । कुबेरो वरुणश्चैव पवनश्च यमस्तथा ॥९॥
ईशानश्चापि देवाश्च वसवोऽष्टौ तथैव च । सर्वे ग्रहाश्च रुद्राश्च मुनयो मनवस्तथा ॥
त्वरिताश्चाऽऽययुः सर्वे यत्राऽऽस्ते भगवान्प्रभुः । प्रणम्य दण्डवद्भूमौ तमुवाच विधिः स्वयम्

ब्रह्मोवाच—

परिपूर्णतम ब्रह्मस्वरूप नित्यविग्रह । ज्योतिःस्वरूप परम नमोऽस्तु प्रकृतेः पर ॥ १२॥
सुनिर्लिप्त निराकार साकार ध्यानहेतुना । स्वेच्छामय परं धाम परमात्मन्नमोऽस्तु ते ॥
सर्वकार्यस्वरूपेश कारणानां च कारण । ब्रह्मेशशेषदेवेश सर्वेश ते न० ॥ १४ ॥
सरस्वतीश पद्मेश पार्वतीश परात्पर । हे सावित्रीश राधेश रासेश्वर न० ॥ १५॥
सर्वेषामादिभूतस्त्वं सर्वः सर्वेश्वरस्तथा । सर्वपाता च संहर्ता सृष्टिरूप न० ॥ १६ ॥
त्वत्पादपद्मरजसा धन्या पूता वसुंधरा । शून्यरूपा त्वयि गते हे नाथ परमं पदम् ॥
वर्षपञ्चविंशत्यधिकं वर्षाणां शतकं गतम् । त्यक्त्वेमां स्वपदं यासि रुदतीं विरहातुराम्

महादेव उवाच—

ब्रह्मणा प्रार्थितस्त्वं च समागत्य वसुंधराम् । भूभारहरणं कृत्वा प्रयासि स्वपदं विभो ॥
त्रैलोक्ये पृथिवी धन्या सद्यःपूता पदाङ्किता । वयं च मुनयो धन्याः साक्षाद्दृष्ट्वा पदाम्बुजम्
ध्यानासाध्यो दुराराध्यो मुनीनामूर्ध्वरेतसाम् । अस्माकमीश पद्मेशः सोऽधुना चाक्षुषो भुवि
वासुः सर्वनिवासश्च विश्वानि यस्य लोमसु । देवस्तस्य महाविष्णुर्वासुदेवो महीतले ॥

---

१ ग. 'गलपद्मे'।

मुक्तिरं तपसा लब्धं सिद्धेन्द्राणां सुदुर्लभम् । यत्पादपद्ममतुलं चाक्षुषं सर्वजीविनाम् ॥

अनन्त उवाच—

त्वमनन्तो हि भगवन्नाहमेव कलांशक. । विश्वैकस्थे क्षुद्रकूर्मे मशकोऽहं गजे यथा ॥
असंख्यशेषाः कूर्माश्च ब्रह्मविष्णुशिवात्मकाः । असंख्यानि च विश्वानि तेषामीशः स्वयं भवान्
अस्माकमीदृशं नाथ सुदिनं क भविष्यति । त्वमदृष्टश्च यश्चेशः स दृष्टः सर्वजीविनाम् ॥
नाथ प्रयासि गोलोकं पूतां कृत्वा वसुंधराम् । तामनाथां रुदन्तीं च निमग्नां शोकसागरे ॥

देवा ऊचुः—

वेदास्तोतुं न शक्ता यं ब्रह्मेशानादयस्तथा । तमेव स्तवनं किं वा वयं कुर्मो नमोऽस्तु ते॥
इत्येवमुक्त्वा देवास्ते प्रययुर्द्वारकां पुरीम् । तत्रस्थं भगवन्तं च द्रष्टुं शीघ्रं मुदाऽन्विताः
अथ तेषां च गोपालो ययौ गोलोकमुत्तमम् । पृथिवी कम्पिता भीता चलन्त सप्तसागराः ॥
हतश्रियं द्वारकां च त्यक्त्वा च ब्रह्मशापतः । मूर्तिं कदम्बमूलस्था विवेश राधिकेश्वरः ॥
ते सर्वे चैरकायुद्धे निपेतुर्यादवास्तथा । चितामारुह्य दैत्यश्च प्रययुः स्वामिभिः सह ॥
अर्जुन. स्वपुरं गत्वा समुवाच युधिष्ठिरम् । स राजा भ्रातृभिः सार्धं ययौ स्वर्गं च भार्यया
दृष्ट्वा कदम्बमूलस्थं तिष्ठन्तं परमेश्वरम् । देवा ब्रह्मादयस्ते च प्रणेमुर्भक्तिपूर्वकम्॥९४॥
तुष्टुवुः परमात्मानं देवं नारायणं प्रभुम् । श्यामं किशोरवयसं भूषितं रत्नभूषणैः॥ ९५॥
वह्निशुद्धांशुकाधानं शोभितं वनमालया । अतीव सुन्दरं शान्तं लक्ष्मीकान्तं मनोहरम् ॥
व्याधास्त्रसंयुतं पादपद्मं पद्मादिवन्दितम् । दृष्ट्वा ब्रह्मादिदेवास्तानभयं मस्मितं ददौ ॥
पृथिवीं तां समाश्वास्य रुदतीं प्रेमविह्वलाम् । व्याघ प्रस्थापयामास परं स्वपदमुत्तमम् ॥
बलस्य तेजः शेषे च विवेश परमाद्भुतम् । प्रद्युम्नस्य च कामे वै वाऽनिरुद्धस्य ब्रह्मणि ॥
अयोनिसंभवा देवी महालक्ष्मीश्च रुक्मिणी । वैकुण्ठं प्रययौ साक्षात्स्वशरीरेण नारद ॥
सत्यभामा पृथिव्यां च विवेश कमलालया । स्वयं जाम्बवती देवी पार्वत्यां विश्वमातरि ॥
या या देव्यश्च यासां चाप्यंशाश्चपाश्च भूतले । तस्यां तस्यां प्रविविशुस्ता एव च पृथक्पृथक्
साम्बस्य तेजः स्कन्दे च विवेश परमाद्भुतम् । कश्यपे वसुदेवश्चाप्यदित्यां देवकी तथा ॥
रुक्मिणीमन्दिरं त्यक्त्वा समस्तां द्वारकां पुरीम् । स जग्राह समुद्रश्च प्रफुल्लवदनेक्षणः ॥
स्नानोद समागत्य तुष्टाव पुरुषोत्तमम् । रुरोद तद्वियोगेन साश्रुनेत्रश्च विह्वलः॥ ४९ ॥
गङ्गा सरस्वती पद्मावती च यमुना तथा । गोदावरी स्वर्णरेखा कावेरी नर्मदा मुने ॥

शरावती बाहुदा च कृतमाला च पुण्यदा । समाययुश्च ताः सर्वाः प्रणेमुः परमेश्वरम् ॥
उवाच जाह्नवी देवी रुदती परमेश्वरम् । साश्रुनेत्राऽतिदीना सा विरहज्वरकातरा ॥४८॥

भागीरथ्युवाच—

हे नाथ रमणश्रेष्ठ यासि गोलोकमुत्तमम् । अस्माकं का गतिश्चात्र भविष्यति कलौ युगे ॥

श्रीभगवानुवाच—

कलेः पञ्चसहस्राणि वर्षाणि तिष्ठ भूतले । पापानि पापिनो यानि तुभ्यं दास्यन्ति स्नानतः
मन्मन्त्रोपासकस्पर्शाद्भस्मीभूतानि तत्क्षणात् । भविष्यन्ति दर्शनाच्च स्नानादेव हि जाह्नवि
हरेर्नामानि यत्रैव पुराणानि भवन्ति हि । तत्र गत्वा सावधानमाभिः सार्धं च श्रोष्यसि॥
पुराणश्रवणाच्चैव हरेर्नामानुकीर्तनात् । भस्मीभूतानि पापानि ब्रह्महत्यादिकानि च ॥५३॥
भस्मीभूतानि तान्येव वैष्णवालिङ्गनेन च । तृणानि शुष्ककाष्ठानि दहन्ति पावका यथा
तथाऽपि वैष्णवा लोके पापानि पापिनामपि । पृथिव्यां यानि तीर्थानि पुण्यान्यपि च जाह्नवि
मद्भक्तानां शरीरेषु सन्ति पूतेषु संततम् । मद्भक्तपादरजसा सद्यः पूता वसुंधरा ॥५९॥
सद्यः पूतानि तीर्थानि सद्यः पूतं जगत्तथा । मन्मन्त्रोपासका विप्रा ये मदुच्छिष्टभोजिनः ॥
मामेव नित्यं ध्यायन्ते ते मत्प्राणाधिकाः प्रियाः । तदुपस्पर्शमात्रेण पूतो वायुश्च पावकः ॥
कलेर्दशसहस्राणि मद्भक्ताः सन्ति भूतले । एकवर्णा भविष्यन्ति मद्भक्तेषु गतेषु च ॥६०॥
मद्भक्तशून्या पृथिवी कलिग्रस्ता भविष्यति । एतस्मिन्नन्तरे तत्र कृष्णदेहाद्विनिर्गतः ॥
चतुर्भुजश्च पुरुषः शतचन्द्रसमप्रभः । शङ्खचक्रगदापद्मधरः श्रीवत्सलाञ्छनः ॥६१॥
सुन्दरं रथमारुह्य क्षीरोदं स जगाम ह । सिन्धुकन्या च प्रययौ स्वयं मूर्तिमती सती ॥
श्रीकृष्णमनसा जाता मर्त्यलक्ष्मीर्मनोहरा । श्वेतद्वीपं गते विष्णौ जगत्पालनकर्तरि॥६२॥
शुद्धसत्त्वस्वरूपे च द्विधारूपो बभूव सः । दक्षिणांशश्च द्विभुजो गोपबालकरूपकः ॥
नवीनजलदश्यामः शोभितः पीतवाससा । श्रीवंशवदनः श्रीमान्सस्मितः पद्मलोचनः ॥
शतकोटीन्दुसौन्दर्यं शतकोटिस्मरप्रभाम् । दधानः परमानन्दः परिपूर्णतमः प्रभुः ॥६५॥
परं धाम परं ब्रह्मस्वरूपो निर्गुणः स्वयम् । परमात्मा च सर्वेषां भक्तानुग्रहविग्रहः ॥
नित्यदेहश्च भगवानीश्वरः प्रकृतेः परः । योगिनो यं वदन्त्येवं ज्योतीरूपं सनातनम् ॥
ज्योतिरभ्यन्तरे नित्यरूपं भक्ता विदन्ति यम् । वेदा वदन्ति सत्यं यं नित्यमाद्यं विचक्षणाः
यं वदन्ति सुराः सर्वे परं स्वेच्छामयं प्रभुम् । सिद्धेन्द्रा मुनयः सर्वे सर्वरूपं वदन्ति यम् ॥
यमनिर्वचनीयं च योगीन्द्रः शंकरो वदेत् । स्वयं विधाता प्रवदेत्कारणानां च कारणम् ॥
शेषो वदेदनन्तं यं नवधारूपमीश्वरम् । तर्काणामेव षण्णां च षड्विधं रूपमीप्सितम् ॥

वैष्णवानामेकरूपं वेदानामेकमेव च । पुराणानामेकरूपं तस्मात्त्रिविधं स्मृतम् ॥७६॥
न्यायो निर्वचनीयं च यं मतं शंकरो वदेत्। नित्यं वैशेषिकाश्चाऽऽद्यं तं वदन्ति विचक्षणाः॥
सांख्या वदन्ति तं देवं ज्योतीरूपं सनातनम्। मीमांसा सर्वरूपं च वेदान्तः सर्वकारणम् ॥
पातञ्जलोऽप्यनन्तं च वेदाः सत्यस्वरूपकम्। स्वेच्छामयं पुराणं च भक्ताश्च नित्यविग्रहम्
सोऽयं गोलोकनाथश्च राधेशो नन्दनन्दनः। गोकुले गोपवेषश्च पुण्ये वृन्दावने वने ॥
चतुर्भुजश्च वैकुण्ठे महालक्ष्मीपतिः स्वयम्। नारायणश्च भगवान्यन्नाम मुक्तिकारणम् ॥
सकृन्नारायणेत्युक्त्वा पुमान्कल्पशतत्रयम्। गङ्गादिसर्वतीर्थेषु स्नातो भवति नारद ॥
सुनन्दनन्दकुमुदैः पार्षदैः परिवारितः। शङ्खचक्रगदापद्मधरः श्रीवत्सलाञ्छनः ॥८०॥
कौस्तुभेन मणीन्द्रेण भूषितो वनमालया। देवैः स्तुतश्च यानेन वैकुण्ठं स्वपदं ययौ ॥
गते वैकुण्ठनाथे च राधेशश्च स्वयं प्रभुः। चकार वंशीशब्दं च त्रैलोक्यमोहनं परम् ॥
मूर्छां प्रापुर्देवगणा मुनयश्चापि नारद। अचेतना बभूवुश्च मायया पार्वतीं विना ॥ ८३॥
उवाच पार्वती देवी भगवन्तं सनातनम्। विष्णुमाया भगवती सर्वरूपा सनातनी ॥८४॥
परब्रह्मस्वरूपा या परमात्मस्वरूपिणी। सगुणा निर्गुणा सा च परा स्वेच्छामयी सती ॥

पार्वत्युवाच—

एकाऽहं राधिकारूपा गोलोके रासमण्डले। रासशून्यं च गोलोकं परिपूर्णं कुरु प्रभो ॥
गच्छ त्वं रथमारुह्य मुक्तामाणिक्यभूषितम्। परिपूर्णतमाऽहं च तव वक्षःस्थलस्थिता ॥
तवाऽऽज्ञया महालक्ष्मीरहं वैकुण्ठगामिनी। सरस्वती च तत्रैव वामे पार्श्वे हरेरपि ॥
तवाहं मनसा जाता सिन्धुकन्या तवाऽऽज्ञया। सावित्री वेदमाताऽहं कलया विधिसंनिधौ
तेजःसु सर्वदेवानां पुरा सत्ये तवाऽऽज्ञया। अधिष्ठानं कृतं तत्र धृतं देव्या शरीरकम् ॥
शुम्भादयश्च दैत्याश्च निहताश्चावलीलया। दुर्गं निहत्य दुर्गाऽहं त्रिपुरा त्रिपुरे वधे ॥
निहत्य रक्तबीजं च रक्तबीजविनाशिनी। तवाऽऽज्ञया दक्षकन्या सती सत्यस्वरूपिणी ॥
योगेन त्यक्त्वा देहं च शैलजाऽहं तवाऽऽज्ञया। त्वया दत्ता(त्ता)शंकराय गोलोके रासमण्डले
विष्णुभक्तिरहं तेन विष्णुमाया च वैष्णवी। नारायणस्य मायाऽहं तेन नारायणी स्मृता॥
कृष्णप्राणाधिकाऽहं च प्राणाधिष्ठातृदेवता। महाविष्णोश्च धातोश्च जननी राधिका स्वयम्
तवाऽऽज्ञया पञ्चधाऽहं पञ्चप्रकृतिरूपिणी। कलाकलांशयाऽहं च देवपत्न्यो गृहे गृहे ॥
धामे गच्छ महाभाग तत्राऽहं विरहातुरा। गोपीभिः सहिता रासं भ्रमन्ती परितः सदा
पार्वतीवचनं श्रुत्वा प्रहस्य रसिकेश्वरः। रत्नयानं समारुह्य ययौ गोलोकमुत्तमम् ॥

१ क. वेदैः। २ सभा।

पार्वती बोधयामास स्वयं देवगणं तथा । मायावंशीरवाच्छन्नं विष्णुमाया सनातनी ॥
कृत्वा ते हरिशब्दं च स्वगृहं विस्मयं ययुः । शिवेन सार्धं दुर्गा सा प्रहृष्टा स्वपुरं ययौ ॥
अथ कृष्णं समायान्तं राधा गोपीगणैः सह । अनुव्रजं ययौ दृष्टा सर्वज्ञा प्राणवल्लभम् ॥
दृष्ट्वा समीपमायान्तमवरुह्य रथात्सती । प्रणनाम जगन्नाथं शिरसा सखिभिः सह ॥२॥
गोपा गोप्यश्च मुदिताः प्रफुल्लवदनेक्षणाः । दुंदुभिं वादयामासुरीश्वरागमनोत्सुकाः ॥३॥
विरजां च समुत्तीर्य दृष्ट्वा राधां जगत्पतिः । अवरुह्य रथात्तूर्णं गृहीत्वा राधिकाकरम् ॥
शतशृङ्गं च बभ्राम सुरम्यं रासमण्डलम् । दृष्ट्वाऽक्षयवटं पुण्यं पुण्यं वृन्दावनं ययौ ॥
तुलसीकाननं दृष्ट्वा प्रययौ मालतीवनम् । वामे कृत्वा कुन्दवनं माधवीकाननं तथा ॥
चकार दक्षिणे कृष्णश्चम्पकारण्यमीप्सितम् । चकार पश्चात्तूर्णं च चारुचन्दनकाननम् ॥
ददर्श पुरतो रम्यं राधिकाभवनं परम् । उवास राधया सार्धं रत्नसिंहासने वरे ॥८॥
सकर्पूरं च ताम्बूलं बुभुजे वासितं जलम् । सुष्वाप पुष्पतल्पे च सुगन्धिचन्दनार्चिते ॥
स रेमे रामया सार्धं निमग्नो रससागरे । इत्येवं कथितं सर्वं धर्मवक्त्राच्च यच्छ्रुतम् ॥
गोलोकारोहणं रम्यं किं भूयः श्रोतुमिच्छसि ॥ १११ ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० गोलोकारोहणं नामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

अथ त्रिंशदधिकशततमोऽध्यायः ।

नारद उवाच—

सर्वं श्रुतं महाभाग नावशेषमभीप्सितम् । किमपूर्वं पुराणं च ब्रह्मवैवर्तमिष्टदम् ॥१॥
अधुना किं करिष्यामि तन्मां ब्रूहि जगद्गुरो । आज्ञां कुरु तपस्यां च कर्तुं यामि हिमालयम्

नारायण उवाच—

उपबर्हणगन्धर्वः पञ्चाशत्कामिनीपतिः । जन्मान्तरे भवानासीदधुना ब्रह्मपुत्रकः ॥४॥
तास्वेका च सती रम्भा तपसा शंकरं परम् । आराध्य च वरं लेभे वाञ्छितं नारदं पतिम्
सा च सृञ्जयकन्या च स्वर्णष्ठीविसहोदरा । तां विवाहं कुरुष्वेति शंकराज्ञा कथं वृथा
सुन्दरीं सुन्दरीष्वेव कोमलां कमलाननाम् । पतिव्रतां महाभागां रम्यां सुप्रियवादिनीम् ॥
कामुकीं कमनीयां च शश्वत्सुस्थिरयौवनाम् । विधात्रा लिखितं कर्म प्राक्तनं केन वार्यते ॥
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥

सूत उवाच—

नारायणवचः श्रुत्वा हृदयेन विदूयता । प्रणम्य प्रययौ शीघ्रं नारदः सृञ्जयालयम्॥१०॥

शौनक उवाच—

अहो सूत महाभाग श्रुतं किं परमाद्भुतम् । किमपूर्वं रहस्यं च सरसं च पुरातनम् ॥
अधुना श्रोतुमिच्छामि विवाहं नारदस्य च । अतीन्द्रियस्य च मुनेर्ब्रह्मपुत्रस्य सांप्रतम् ॥

सूत उवाच—

नारदो मु(गु)दरूपश्च दृष्ट्वा सृञ्जयकन्यकाम् । तपस्विनीं महाभागां विष्णुव्रतपरायणाम्॥
ययौ ब्रह्मसभां रम्यां सर्वदेवैः समावृताम् । प्रणम्य पितरं शान्तः सर्वं तत्त्वमुवाच तम्
ब्रह्मा प्रहृष्टवदनः श्रुत्वा वार्तां शुभावहाम् । तपस्विनं च पुत्रं च संप्राप्य जगतां पतिः ॥
रत्ननिर्माणयानेन सार्धं देवैः शुभे क्षणे । पुत्रं कृत्वा च पुरतो ययौ सृञ्जयमन्दिरम्॥१५॥
तच्छ्रुत्वा सृञ्जयो राजा रत्नभूषणभूषिताम् । गृहीत्वा कन्यकां रम्यां नारदाय ददौ मुदा
सर्वस्वं दक्षिणां दत्त्वा मणिमुक्तादिकं तथा । पुटाञ्जलियुतो भूत्वा परीहारं चकार सः ॥
कन्यां समर्प्य ब्रह्माणं राजा च योगिनां वरः । रुरोद भृशमुच्चैश्च वत्से वत्स इतीरितम्
क्व यासि त्यक्त्वा मंद्गेहं शून्यं कमललोचने । अहं यामि वनं घोरं त्वां त्यक्त्वा जीवितो मृतः
प्रणम्य पितरं कन्या रुदन्तं मातरं तथा । रुदतीं तां रुदन्ती साऽप्यारुरोह रथं विधेः ॥
गृहीत्वा च सभार्यं च पुत्रं धाता मुदाऽन्वितः । प्रययौ ब्रह्मलोकं च देवैर्ब्रह्मर्षिभिः सह ॥
ब्राह्मणान्भोजयामास साङ्गे मङ्गलकर्मणि । देवानपि च सिद्धांश्च वादयामास दुंदुभिम् ॥
नारदस्तु मुनिश्रेष्ठो बोधितः पूर्वकर्मणा । यस्य यत्प्राक्तनं विप्र दुर्लङ्घ्य केन वार्यते ॥
सुरम्ये पुष्पतल्पे च सुगन्धिचन्दनार्चिते । स रेमे रामया सार्धं बुबुधे न दिवानिशम्
एवं कृत्वा विवाहं च विरतो मुनिसत्तमः । उवास ब्रह्मलोकेषु वटमूले मनोहरे ॥२५॥
तत्राऽऽजगाम नग्नश्च प्रज्वलन्ब्रह्मतेजसा । सनत्कुमारो भगवान्साक्षाच्च बालको यथा ॥
सृष्टेः पूर्वश्च वयसा यथैव पञ्चहायनः । अचूडोऽनुपनीतश्च वेदसंध्याविहीनकः ॥२७॥
कृष्णेति मन्त्रं जपति यस्य नारायणो गुरुः । अनन्तकालकलं च भ्रातृभिश्च त्रिभिः सह
वैष्णवानामग्रणीशो ज्ञानिनां च गुरोर्गुरुः । आराद्दृष्ट्वा नारदस्तं भ्रातरं च सतां वरम्
सहसा शिरसा भूमौ दण्डवत्प्रणनाम तम् । उवाच नारदं बालः प्रहस्य परमार्थकम् ॥

सनत्कुमार उवाच—

अये भ्रातः किं करोषि कुशलं युवतीपते । स्त्रीपुंसोर्बन्धने प्रेम नित्यं त नित्यनूतनम् ॥

---

क. दाक्षुरू॰ । १ घ. धर्मात्म । २ क. वरम् । ३ ङ. माहेन्द्रं । ४ क. राधितः पुष्पत॰ ।

अर्गलं ज्ञानमार्गस्य भक्तिद्वारकपाटकम् । मोक्षमार्गव्यवहितं चिरं बन्धनकारणम् ॥३२॥
गर्भवासस्य बीजं च परं नरककारणम् । पीयूषबुद्ध्या गरलं भुङ्क्ते पापी नराधमः ॥
परं नारायणं त्यक्त्वा यस्याऽऽस्ते विषये मनः । स वञ्चितो मायया चामृतं त्यक्त्वा विषं भजेत्
सर्वेषां कर्मभोगोऽस्ति कर्मिणामीश्वरं विना । वयं विधातु.पुत्राश्च सा बुद्धिरिति देहिनाम्
यदि ते नास्ति भोगश्च कथं गन्धर्वजन्म च । कथं दासीसुतत्वं च मुक्तश्च भक्तसङ्गतः
निर्गच्छ तपसे भ्रातस्त्यज मथामयीं प्रियाम् । सुपुण्ये भारते वर्षे तपसा भज माधवम् ॥
स्थिते नारायणे ईशे परे स्वपददातरि । विषयी विषयान्धश्च वञ्चितो मायया ध्रुवम् ॥
गृहाण मम मन्त्रं च कृष्ण इत्यक्षरद्वयम् । सर्वेषामेव मन्त्राणां सारात्सारं परात्परम् ॥
सर्वेषु च पुराणेषु वेदेषु च चतुर्षु च । धर्मशास्त्रेषु तन्त्रेषु नास्त्येवास्मात्परो मनुः ॥३९॥
नारायणेन दत्तो मे पुष्करे सूर्यपर्वणि । अतंल्यकल्पं जप्त्वाऽहं भ्रमामि सर्वपूजितः ॥
इत्युक्त्वा स्नापयित्वा तं ददौ तस्मै परं मनुम् । दिवानिशं स जपति पूतया मणिमालया
तस्मै शुभाशिषं दत्त्वा मन्त्रं च वैष्णवाग्रणीः । गोलोकं प्रययौ द्रष्टुं भगवन्तं सनातनम्
नारदस्तु मनुं प्राप्य सर्वसिद्धिप्रदं वरम् । श्रीकृष्णे निश्चला भक्तिः पूर्वकर्मनिकृन्तनीम् ॥
त्यक्त्वा मायामयीं भार्यां भारतं तपसे ययौ । कृतमालानदीतीरे ददर्श शंकरं परम् ॥
दृष्ट्वा च सहसा मूर्ध्ना प्रणनाम शिवं मुनिः । तमुवाच, जगन्नाथो भक्तं च भक्तवत्सलः ॥

महादेव उवाच—

अहो नारद दृष्ट्वा त्वा प्रसन्नोऽहं स्वतेजसा । भक्तानां दर्शनं यत्र सुदिनं तच्छरीरिणाम् ।
अयं हि परमो लाभो देहिनां भक्तसंगमः । स स्नातः सर्वतीर्थेषु यो ददर्श च वैष्णवम् ॥
अपि प्राप्तो महामन्त्र. सर्वतन्त्रसुदुर्लभः । मया दत्तो गणेशाय स्कन्दाय स्वात्मजाय च
मह्यं दत्तश्च कृष्णेन गोलोके रासमण्डले । ब्रह्मणे चापि धर्माय धर्मो नारायणाय च ॥
ब्रह्मा सनत्कुमाराय तुभ्यं दत्तश्च तेन वै । मन्त्रग्रहणमात्रेण जनो नारायणो भवेत् ॥
विचारणं च नास्त्यत्र कालाकालं शुभाशुभम् । पञ्चलक्षजपेनैव पुरश्चरणमस्य च ॥५१॥
ध्यानं च सामवेदोक्तं तेन ध्यायेच्च वैष्णवः । ध्यानं च पापदहनं कर्ममूलनिकृन्तनम् ॥
कृष्णं नवघनश्यामं किशोरं पीतवाससम् । शतकोटीन्दुसौन्दर्यं दधानमतुलं परम् ॥
भूषितं भूषणैौरेतैरमूल्यरत्ननिर्मितैः । चन्दनोक्षितसर्वाङ्गं कौस्तुभेन विराजितम् ॥
मयूरपिच्छचूडं च मालतीमाल्यमण्डितम् । ईषद्धास्यप्रसन्नास्यं नित्योपास्यं शिवादिभिः
ध्यानासाध्यं दुराराध्यं निर्गुणं प्रकृतेः परम् । सर्वेषां परमात्मानं भक्तानुग्रहविग्रहम् ॥

१ ख कामभो° । २ क. स्वांशे ।

वेदानिर्वचनीयं तं वरं सर्वेश्वरं भजे । ध्यानेनानेन तं ध्यात्वा भगवन्तं सनातनम् ॥५७॥
भज तं परमानन्दं सत्यं नित्यं परात्परम् । इत्युक्त्वा स्वपदं शंभुर्जगाम परमेश्वरः ॥
तं प्रणम्य जगन्नाथं नारदस्तपसे ययौ । नारदः श्रीहरिं स्मृत्वा योगात्यक्त्वा कलेवरम्
निलीनः पादपद्मे च पाद(पद्मा)रध्नार्चिते हरेः ॥ ६० ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० नारदविवाहादि-
प्रकरणं नाम त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

अथैकत्रिंशदधिकशततमोऽध्यायः ।

शौनक उवाच—

अत्यपूर्वमुपाख्यानं श्रुतं परममद्भुतम् । सुगोप्यं च सुगोप्यं च रम्यं रम्यं नवं नवम् ॥
किमनिर्वचनीयं च कमनीयं मनोहरम् । सुदुर्लभा कथा प्रोक्ता पुराणेषु पुरातनी ॥२॥
एवंभूतं च सुदिनं कदाऽस्माकं भविष्यति । तज्जन्म सफलं धन्यं यत्र वैष्णवसंगमः ॥३॥
गर्भवासोच्छेदनं च कर्ममूलनिकृन्तनम् । हरिदास्यप्रदं शुद्धं मर्त्यानां भक्तिवर्धनम् ॥४॥
असाधुसङ्गदुर्बुद्धिपापोन्मूलनकारणम् । गणेशजन्मोपाख्यानं पुराणेषु सुदुर्लभम् ॥ ५ ॥
तुलसीराधिकाख्यानं किमपूर्वं श्रुतं परम् । अन्यच्चयद्गोपनीयं व्यक्तमव्यक्तमीप्सितम् ॥
सर्वं श्रुतं महाभाग परिपूर्णं मनोहरम् । अधुना श्रोतुमिच्छामि वह्नेरुत्पत्तिमीप्सिताम् ॥
स्वर्णस्य च महाभाग तन्मे व्याख्यातुमर्हसि ॥ ७ ॥

सूत उवाच—

सामग्रीकरणं सृष्टेर्जलमेव हुताशनः । तथैव प्रकृतिर्नित्या महानेव तथैव च ॥ ८ ॥
यथा दिशो महाकाशो यथैव सृष्टिगोलकम् । प्रकृतेर्महतश्च स्यात्तथाऽहंकार एव च ॥
यथैव शब्दस्तन्मात्रं तथैव च हुताशनः । तथाऽपि तत्समुत्पत्तिं कथयामि निशामय ॥
एकदा सृष्टिकाले च ब्रह्मानन्तमहेश्वराः । श्वेतद्वीपं ययुः सर्वे द्रष्टुं विष्णुं जगत्पतिम् ॥
परस्परं च संभाषां कृत्वा सिंहासनेषु च । ऊषुः सर्वे सभामध्ये पुरस्ते पुरतो विभोः ॥
विष्णुगात्रोद्भवास्तत्र कामिन्यः कमलाकलाः । तत्र नृत्यन्ति गायन्ति विष्णुगाथाश्च ॥
सुस्वरम् ॥ १३ ॥
तासां च कठिनां श्रोणिं कठिनं स्तनमण्डलम् । सस्मितं मुखपद्मं च दृष्ट्वा ब्रह्मा मुमुक्षुः

१ ख. नवं नव°।

मनोनिवारणं कर्तुं न शशाक पितामहः । वीर्यं पपात चच्छाद लज्जया वाससा विभुः
तद्वीर्यं वस्त्रसहितं प्रतप्तं कामतापतः । क्षीरोदे प्रेरयामास संगीते विरते द्विज ॥१९॥
जलादुत्थाय पुरुषं प्रज्वलन्ब्रह्मतेजसा । उवास ब्रह्मण. क्रोडे लज्जितस्य च संसदि ॥
एतस्मिन्नन्तरे रुष्टो जलादुत्थाय सत्वरः । प्रणम्य वरुणो देवान्बालं नेतुं समुद्यतः ॥
बालो दधार ब्रह्माणं बाहुभ्यां च भयाद्रुदन् । किंचिन्नोवाच जगतां विधाता लज्जया द्विज
बालकस्य करे धृत्वा चकाराऽऽकर्षणं रुषा । वरुणश्च सभामध्ये तं चिक्षेप प्रजापतिः ॥
पपात दूरतो देवो वरुणो दुर्बलस्ततः । मूर्छां संप्राप मृतवत्कोपदृष्ट्या विधेरहो ॥२१॥
चेतनं कारयामासामृतदृष्ट्या च शंकरः । संप्राप्य चेतनं तत्र तमुवाच जलेश्वरः ॥२२॥

वरुण उवाच—

बालो जले समुद्भूतो मम पुत्रोऽयमीप्सितः । अहं गृहीत्वा यास्यामि ब्रह्मा मां ताडये-
त्कथम् ॥ २३ ॥

ब्रह्मोवाच—

बालकः शरणापन्नो मयि विष्णो महेश्वर । कथं दास्यामि भीतं च रुदन्तं शरणागतम् ॥
शरणागतदीनार्तं यो न रक्षेद्धपण्डित. । पच्यते निरये तावद्यावच्चन्द्रदिवाकरौ॥ २५ ॥
उभयोर्वचनं श्रुत्वा प्रहस्य मधुसूदन । उवाच तत्र सर्वज्ञः सर्वेशश्च यथोचितम्॥२६॥

श्रीभगवानुवाच—

दृष्ट्वा तु कामिनीश्रोणिं वीर्यं धातु. पपात तत् । लज्जया प्रेरयामास क्षीरोदे निर्मले जले
ततो बभूव बालश्च धर्मतो विधिपुत्रकः क्षेत्रज्ञश्च सुतः शास्त्रे वरुणस्यापि गौणतः ॥

महादेव उवाच—

यो विद्यायोनिसंबन्धो वेदेषु च निरूपितः । शिष्ये पुत्रे च समता चेति वेदविदो विदुः॥
मन्त्रं ददातु वरुणो विद्यां च बालकाय च । पुत्रो विधातुर्वह्निश्च शिष्यश्च वरुणस्य च ॥
विष्णुर्ददातु बालाय दाहिका शक्तिमुज्ज्वलाम् । सर्वदग्धो हुताशश्च निर्वाणो वरुणेन च
विष्णुश्च दाहिका शक्तिं ददौ तस्मै शिवाज्ञया । मन्त्रं विद्यां च वरुणो रत्नमालां मनोहराम्
क्रोडे कृत्वा च तं बालं चुचुम्ब मानसा मुदः । प्रणम्य च ददौ साक्षाद्विष्णुशंकरयोरपि ॥
प्रणम्य विष्णुं ब्रह्मा च ययौ शंभुः स्वमन्दिरम् । अग्न्युत्पत्तिश्च कथिता स्वर्णोत्पत्तिं निशामय
एकदा सर्वदेवाश्च सुषुपुः स्वर्गसंसदि । तत्र कृत्वा च नृत्यं च गायन्त्यप्सरसां गणाः ॥
विलोक्य रम्भां सुश्रोणिं सकामो वह्निरेव च । पपात वीर्यं चच्छाद लज्जया वाससा तथा
उत्तस्थौ स्वर्णपुञ्जश्च वरं स्निग्धां ज्वलत्प्रभः । क्षणेन वर्धयामास स सुमेरुर्बभूव ह ॥

हिरण्यरेतसं वह्निं प्रवदन्ति मनीषिणः । इति ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० वह्निसुवर्णोत्पत्ति-
र्नामैकत्रिंशदधिकशततमोऽध्यायः १३१ ॥

अथ द्वात्रिंशदधिकशततमोऽध्यायः ।

शौनक उवाच—

श्रुतं सर्वं नावशेषं धर्मेश ब्राह्मणं च माम् । कथयस्व महाभाग पुराणं पुनरेव हि ॥ १ ॥
एवंविधं पुराणं च जन्मनैव न हि श्रुतम् । न दृष्टं न श्रुतं तात ता(त्वा)दृशं वाचकं तथा ॥

सूत उवाच—

श्रूयतां भो महाभाग सावधानं च संयतम् । अध्यायश्रवणेनैव पुराणफलमालभेत् ॥ ३ ॥
ब्रह्मखण्डं च कथितं परं ब्रह्मनिरूपणम् । तदनिर्वचनीयं च येषामपि यथागमम् ॥ ४ ॥
साकारं च निराकारं सगुणं निर्गुणं पृथक् । येषामपि यथा शक्तिस्तथैव ध्यानमेव च ॥
गोलोकादेर्वर्णनं च क्रमेण च पृथक्पृथक् । ततो ह्ययुक्तोपाख्यानं यच्छ्रासङ्गिकं द्विज ॥
जातीनां निर्णयश्चैव संकराणां तथैव च । यद्वंशिशठोपाख्यानं तत्तत्प्रश्नानुरोधतः ॥
राधामाधवयोः क्रीडा महाविष्णोः समुद्भवः । निरूपणं च विश्वेषां समासेन द्विजोत्तम ॥
ब्रह्मनारदयोश्चैव संवादः परमार्थतः । विवेको नारदस्यैव मुनीन्द्रस्य तथैव च ॥ ९ ॥
आज्ञया ब्रह्मणश्चैव नरनारायणाश्रमम् । गमनं च दर्शनं तेन सार्धं च दर्शनम् ॥
तयोः संभाषणं चैव नारदाय(य) निवेदनम् । तत्र देव ब्रह्मखण्डं क्रमेणोक्तं द्विजोत्तम ॥
श्रूयतां प्रकृतेः खण्डं सुखखण्डमयं मुने । प्रकृतेर्लक्षणं प्रोक्तं प्रकृतीनां च वर्णनम् ॥
उपाख्यानं च तासां च वर्णनं पूजनादिकम् । लक्ष्मीः सरस्वती दुर्गा सावित्री राधिका तथा
एतासां चरितं चैवमन्यासां च पृथक्पृथक् । उपाख्यानं महाश्चर्यं सरस्वत्यास्तथैव च
अपूर्वं राधिकाख्यानं सावित्र्याश्च तथैव च । संवादो यमसावित्र्योः मरणकर्मविपाककम्
कुण्डानां वर्णनं प्रोक्तं तेषां च लक्षणं तथा । जीविकर्मविपाकश्च भोगनिर्णय एव च ॥
अपूर्वं राधिकाख्यानं पुराणेषु सुगोप्यकम् । सुयज्ञस्य नृपेन्द्रस्य चरितं परमाद्भुतम् ॥
प्रोक्तं तुलस्युपाख्यानं परमाद्भुतमेव च । महायुद्धं च संवादे महेशशङ्खचूडयोः ॥ १८ ॥
तुलसीकृष्णसंवादस्तयोः संभोग एव च । निधनं शङ्खचूडस्य श्रीदामः शापमोक्षणम् ॥

पदप्राप्तिः सुराणां च विपदां खण्डनं तथा। जीविना मोक्षबीजं च गङ्गोपाख्यानमीप्सितम्
तथैव मनसाख्यानं परं हर्षविवर्धनम्। स्वाहास्वधाख्यानमेवमन्यासां च निरूपणम् ॥
यद्यत्प्रासङ्गिकाख्यानं वक्तुः प्रश्नानुरोधतः। प्रोक्तं तत्प्रकृतेः खण्डं खण्डं गणपते शृणु
अतीव मधुरं रम्यं स्वादु स्वादु पदे पदे। सुगोप्यं तत्पुराणेषु रम्यं रम्यं नवं नवम् ॥
सुदुर्लभमुपाख्यानं श्रोतृप्रीतिकरं परम्। प्रोक्ता क्रीडा च परमा पार्वतीपरमेशयोः ॥२४॥
स्कन्दोत्पत्तिः प्रथमतः क्रीडाभङ्गस्तयोस्तथा। पार्वतीतोषणं चैवमभिमानविमोक्षणम् ॥
पुण्यकं च व्रतं विष्णोर्दैन्याश्चरितमुत्तमम्। वरदानं हरेरेव सुव्रतां पार्वतीं प्रति ॥२६॥
हरेश्च दर्शनं चैव ब्राह्मणातिथिरूपिणः। आविर्भावो गणेशस्य कृपया शिवमन्दिरे ॥
दर्शनं पुत्रवक्त्रस्य पार्वतीपरमेशयोः। परमानन्दरूपं च शिवगेहे महोत्सवम् ॥२८॥
देवाद्या ददृशुः सर्वे बालं नित्यमजं विभुम्। सत्यस्वरूपं परमं परब्रह्मस्वरूपिणम् ॥
सर्वविघ्नहरं शान्तं दातारं सर्वसंपदाम्। तपसा जपयज्ञानां व्रतानां फलदं विभुम् ॥
अतीव कमनीयं च रमणीयं च योषिताम्। प्राणाधिकं प्रियतमं पार्वतीपरमेशयोः ॥३१॥
परमात्मस्वरूपं च भगवन्तं सनातनम्। सर्वेशं सर्वबीजं च साक्षान्नारायणात्मकम् ॥
तद्दर्शनाच्च स्तवनाच्छ्रीमात्पूजनात्तथा। ध्यानासाध्यं दुराराध्यं जन्मकोटिघनाशनम्॥
कार्तिकेयोद्धरणं प्रोक्तं तस्याभिषेक एव च। गणेशपूजनं चैव सर्वविघ्नविनाशनम् ॥
जमदग्नेश्च युद्धं च कार्तवीर्यार्जुनेन च। सुरभिहरणं चैव निधनं च मुनेस्तथा ॥३५॥
पतिव्रतारेणुकायाश्चितारोहणमेव च। प्रतिज्ञानं भृगोश्चैव दारुणं च सुदारुणम् ॥३६॥
निःक्षत्रियकरणं चैवमेकविंशतिकं द्विज। संवादो ज्ञानलाभश्च गणेशपरशुरामयोः ॥३७॥
तयोर्युद्धं दारुणं च हेरम्बदन्तभञ्जनम्। दुर्गायाश्च विलापश्चाभिशापो भार्गवं प्रति ॥
स्मरणे परशुरामस्याविर्भावो हरेरपि। पार्वतीबोधनायास्य नारायण ... ॥
वर्णनं शिवलोकस्य परमाश्चर्यमीप्सितम्। ... परशुरामाय मदस्त्र शंकरेण च ॥४०॥

कर्मोपभोगरोगाणां मर्दनं च रसायनम् । श्रीकृष्णचरणाम्भोजप्राप्तिसोपानकारणम् ॥
श्रीदामराधाकलहवर्णनं दारुणं द्विज । तयोः शापप्रकथनं ततस्तेषां विसर्जनम् ॥४८॥
ब्रह्मणा प्रार्थितस्यैव हरेर्जन्म महीतले प्रोक्तं च जन्मखण्डे च परमाद्भुतमेव च ॥४९॥
आविर्भावो हरेरेव वसुदेवस्य मन्दिरे । कंसासुरभयेनैव गोकुले गमनं हरेः ॥ ५० ॥
वृषभानसुता राधा श्रीदाम्नः शापहेतुना । बालक्रीडावर्णनं च गोकुले परमात्मनः ॥
दैत्यादिनिधनं चैव कीर्तितं हरिणा तथा । गर्गस्याऽऽगमनं प्रोक्तं शुभान्नप्राशने हरेः ॥
निधनं पूतनायाश्च सद्यः शकटभञ्जनम् । श्रीकृष्णबन्धमोक्षं च यमलार्जुनभञ्जनम् ॥
त्रैलोक्यदर्शनं वक्त्रे गोवत्साहरणं तथा । कृत्वा गोवत्सनिर्माणं ब्रह्मणः स्तवनं हरेः ॥
सहसा गोकुलं त्यक्त्वा पुण्यं वृन्दावनं वनम् । भयाज्जगाम नन्दश्च सार्धं च नन्दनेन च ॥
वृन्दावनस्य निर्माणं प्रोक्तं च परमाद्भुतम् । सार्धं च बालकैः सार्धं तत्र संक्रीडनं हरेः ॥
सदत्तं ब्राह्मणीनां च भोजनं कथितं हरेः । वरदानं च तासां वै प्रधानेन निरूपणम् ॥
ऋतूनां वर्णनं चैव वस्त्रापहरणं तथा । वरदानं च गोपीनां कृष्णेनैव कृतं द्विज ॥
वात्स्यायनीव्रतं प्रोक्तं श्रीदुर्गापूजनं तथा । पार्वत्या च वरो दत्तो गोपीभ्यो यमुनातटे ॥
तालानां भक्षणं प्रोक्तं इन्द्रयागविमर्दनम् । राधया सह कृष्णस्य विरहो मेलनं तथा ॥
गोपीक्रीडा च संप्रोक्ता कृष्णक्रोडे च राधिका । छाया रायणगेहे च संप्रोक्ता मायया हरेः
शृङ्गारं षोडशविधं कृत्वा तु रासमण्डले । अन्तर्धानं हरेरेव राधया सह कानने ॥
मलयागमनं चैव तथा सार्धं द्विजोत्तम । राधामाधवयोश्चैव संवादस्तत्र निर्जने ॥६३॥
वैकल्यमपि गोपीनां प्रोक्तं नानाविधं मुने । पुनरागमनं चैव पुण्यं वृन्दावनं वनम् ॥
श्रीकृष्णदर्शनं चैव गोपीनां हर्षवर्धनम् । नानाप्रकारक्रीडा च प्रोक्ता तस्य जले स्थले ॥
गोपीनामपि सौभाग्यं राधायाश्च विशेषतः । प्रोक्तं व्यासेन सौन्दर्यं रम्यं रम्यं नवं नवम् ॥
नभःस्थितानां देवानां दर्शनं प्रोक्तमेव च । मनसः स्खलनं चैव देवीनां रासमण्डले ॥
अंशेन लेभिरे जन्म देव्यश्चोचमिदं द्विज । अक्रूरागमनं चैव गोपीनां च विलापनम् ॥
प्रोक्तं सर्वं क्रमेणैव च क्रूरमर्दनं तथा । मथुरागमनं विष्णोः शोकं गोकुलवासिनाम् ॥
राधिकाविरहज्वालाजालं प्रोक्तं च योगिनम् । [illegible] यमुनातटे ॥७०॥
मथुराप्रवेशनं प्रोक्तं निधनं रजकस्य च । कुब्जया सह संभोगस्तस्या मोक्षणमेव च ॥
प्रसादनं कुविन्दस्य मालाकारस्य मोक्षणम् । धनुषो भञ्जनं प्रोक्तं हस्तिनो निधनं तथा ॥
सभाप्रवेशनं प्रोक्तं नानारूपप्रदर्शनम् । कंसस्य निधनं प्रोक्तं तद्बन्धूनां विलापनम् ॥

१ क. वेदस्य ।

शौनक उवाच—

अधुना श्रोतुमिच्छामि पुराणानां च लक्षणम् । संख्यानमपि तेषां च फलमस्यैव पुत्रक ।

सूत उवाच—

विस्तराणि पुराणानि चेतिहासश्च शौनक । संहितां पञ्चरात्राणि कथयामि यथागतम् ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं विप्र पुराणं पञ्चलक्षणम् ॥
एतदुपपुराणानां लक्षणं च विदुर्बुधाः । महतां च पुराणानां लक्षणं कथयामि ते ॥
सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषां च पालनम् । कर्मणा वासना वार्ता मनूनां चाक्रमेण च ॥
वर्णनं प्रलयानां च मोक्षस्य च निरूपणम् । उत्कीर्तनं हरेरेव वेदानां च पृथक्पृथक् ॥
दशाधिकं लक्षणं च महतां परिकीर्तितम् । संख्यानं च पुराणानां निबोध कथयामि ते
परं ब्रह्मपुराणं च सहस्राणां दशैव तु । पञ्चोनषष्टिसाहस्रं पाद्ममेव प्रकीर्तितम् ॥ ११ ॥
त्रयोविंशतिसाहस्रं वैष्णवं च विदुर्बुधाः । चतुर्विंशतिसाहस्रं शैवं चैव निरूपितम् ॥
मन्याष्टादशसाहस्रं श्रीमद्भागवतं विदुः । पञ्चविंशतिसाहस्रं नारदीयं प्रकीर्तितम् ॥
मार्कण्डं नवसाहस्रं पुराणं पण्डिता विदुः । चतुःशताधिकं पञ्चदशसाहस्रमेव च ॥
परमग्निपुराणं च रुचिरं परिकीर्तितम् । चतुर्दशसहस्राणि परं पञ्चशताधिकम् ॥ १५ ॥
पुराणप्रवरं चैव भविष्यं परिकीर्तितम् । अष्टादशसहस्रं च ब्रह्मवैवर्तमीप्सितम् ॥ १६ ॥
सर्वेषां च पुराणानां सारमेव विदुर्बुधाः । एकादशसहस्रं तु परं लिङ्गपुराणकम् ॥ १७ ॥
चतुर्विंशतिसाहस्रं वाराहं परिकीर्तितम् । एकाशीतिसहस्रं च परमेव शताधिकम् ॥
परं स्कन्दपुराणं च सद्भिरेवं निरूपितम् । वामनं दशसाहस्रं कौर्मं सप्तदशैव तु ॥
मात्स्यं चतुर्दश प्रोक्तं पुराणं पण्डितैस्तथा । ऊनविंशतिसाहस्रं गारुडं परिकीर्तितम् ॥
परं द्वादशसाहस्रं ब्रह्माण्डं परिकीर्तितम् । एवं पुराणसंख्यानं चतुर्लक्षमुदाहृतम् ॥ २१ ॥
अष्टादशपुराणानामेवमेव विदुर्बुधाः । एवं चोपपुराणानामष्टादश प्रकीर्तिता ॥ २२ ॥
इतिहासो भारतं च वाल्मीकं काव्यमेव च । पञ्चकं पञ्चरात्राणां कृष्णमाहात्म्यपूर्वकम्
वासिष्ठं नारदीयं च कापिलं गौतमीयकम् । परं सनत्कुमारीयं पञ्चरात्रं च पञ्चकम् ॥
पञ्चकं संहितानां च कृष्णभक्तिसमन्वितम् । ब्रह्मणश्च शिवस्यापि प्रह्लादस्य तथैव च
गौतमस्य कुमारस्य संहिताः परिकीर्तिताः । इति ते कथितं सर्वं क्रमेण च पृथक्पृथक्
अमृयेवं विपुलं शास्त्रं ममापि च यथागमम् । उवाचेदं पुराणं च गोलोके रासमण्डले

१ क. पञ्चाचत्वाऽपि ।

संस्कारं तस्य विधिवद्वाजार्थं तत्पितुस्तथा । विलापनं च नन्दस्य स्तवनं परमाद्भुतम् ॥
प्रोक्तस्तयोश्च संवादो निर्जने तातपुत्रयोः । परमाध्यात्मिकं ज्ञानं नन्दाय चैव ददौ विभुः ॥
मुनीनां गमनं चैव हन्योपाख्यानमेव च । कथितं च कुमारेण प्रोक्तमेव सुदुर्लभम् ॥
उद्धवागमनं प्रोक्तं राधास्थानं च निर्जनम् । ज्ञानं तयोश्च संवादे प्रोक्तमेव शुभावहम् ॥
यज्ञोपवीतं कृष्णस्य विद्यादानं गुरोर्गृहे । मृतपुत्रप्रदानं च प्रोक्तं तद्गुरवे पुरा ॥
जरासंधस्य दमनं निधनं यवनस्य च । द्वारकायाश्च निर्माणं विश्वकर्मोद्यमं तथा ॥
द्वारकावेशनं प्रोक्तमुग्रसेन विलापनम् । रुक्मिणीहरणं चैव नृपाणां दमनं तथा ॥८०॥
सर्वासां नायिकानां च प्रोक्तमुद्वाहनं तथा । मायावतीमोक्षणं च निधनं शम्बरस्य च ॥
धर्मपुत्रराजसूये शिशुपालस्य मोक्षणम् । दन्तवक्त्रस्य च मुनेः शाल्वस्य निधनं तथा ॥
मणेश्च हरणं चैव पारिजातस्य स्वर्गतः । कुरुपाण्डवयुद्धे च भुवश्च भारमोक्षणम् ॥
उषाया हरणं प्रोक्तं बाणस्य भुजकृन्तनम् । रुद्रेश्च स्तवनं प्रोक्तमनिरुद्धस्य विक्रमः ॥
राधायशोदासंवादः प्रोक्तः परमदुर्लभः । मोक्षणं च शृगालस्य प्रोक्तं च परमाद्भुतम् ॥
सिद्धाश्रमप्रसङ्गेन गणेशपूजनं तथा । दर्शनं राधिकासार्धं कृष्णस्य परमात्मनः ॥८१॥
राधाया दर्शनं देव्या राधातेजःप्रकाशनम् । राधया रमणं तीर्थे भ्रमणं रहसि स्मृतम् ॥
निधनं यदुवंशानां ब्रह्मशापेन शौनक । मोक्षणं पाण्डवानां च स्वपदे गमनं हरेः ॥
विवाहो नारदस्यैवोत्पत्तिर्वह्निसुवर्णयोः । प्रोक्तं सर्वं महाभाग पुनरेव समासतः ॥८२॥
चतुःखण्डैः पुराणं च ब्रह्मवैवर्तमेव च । अतः परं मुनिश्रेष्ठ किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० श्रीकृष्णजन्मख० उत्त० नारदना० अनुक्रमणिकं
नाम द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

---

अथ त्रयस्त्रिंशदधिकशततमोऽध्यायः ।

शौनक उवाच—

अधुना श्रोतुमिच्छामि पुराणानां च लक्षणम् । संख्यानमपि तेषां च फलमस्यैव पुत्रक ।

सूत उवाच—

विस्तराणि पुराणानि चेतिहासश्च शौनक । संहितां पञ्चरात्राणि कथयामि यथागतम् ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं विप्र पुराणे पञ्चलक्षणम् ॥
एतदुपपुराणानां लक्षणं च विदुर्बुधाः । महतां च पुराणानां लक्षणं कथयामि ते ॥
सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषां च पालनम् । कर्मणां वासना वार्ता मनूनां चाक्रमेण च ॥
वर्णनं प्रलयानां च मोक्षस्य च निरूपणम् । उत्कीर्तनं हरेरेव वेदानां च पृथक्पृथक् ॥
दशाधिकं लक्षणं च महतां परिकीर्तितम् । संख्यानं च पुराणानां निबोध कथयामि ते
परं ब्रह्मपुराणं च सहस्राणां दशैव तु । पञ्चोनषष्टिसाहस्रं पाद्ममेव प्रकीर्तितम् ॥ ११ ॥
त्रयोविंशतिसाहस्रं वैष्णवं च विदुर्बुधाः । चतुर्विंशतिसाहस्रं शैवं चैव निरूपितम् ॥
ग्रन्थोऽष्टादशसाहस्रं श्रीमद्भागवतं विदुः । पञ्चविंशतिसाहस्रं नारदीयं प्रकीर्तितम् ॥
मार्कण्डं नवसाहस्रं पुराणं पण्डिता विदुः । चतुःशताधिकं पञ्चदशसाहस्रमेव च ॥
परमग्निपुराणं च रुचिरं परिकीर्तितम् । चतुर्दशसहस्राणि परं पञ्चशताधिकम् ॥ १५ ॥
पुराणप्रवरं चैव भविष्यं परिकीर्तितम् । अष्टादशसहस्रं च ब्रह्मवैवर्तमीप्सितम् ॥ १६ ॥
सर्वेषां च पुराणानां सारमेव विदुर्बुधाः । एकादशसहस्रं तु परं लिङ्गपुराणकम् ॥ १७ ॥
चतुर्विंशतिसाहस्रं वाराहं परिकीर्तितम् । एकाशीतिसहस्रं च परमेव शताधिकम् ॥
वरं स्कन्दपुराणं च सद्भिरेवं निरूपितम् । वामनं दशसाहस्रं कौर्मं सप्तदशैव तु ॥
मात्स्यं चतुर्दश प्रोक्तं पुराणं पण्डितैस्तथा । ऊनविंशतिसाहस्रं गारुडं परिकीर्तितम् ॥
परं द्वादशसाहस्रं ब्रह्माण्डं परिकीर्तितम् । एवं पुराणसंख्यानं चतुर्लक्षमुदाहृतम् ॥ २१ ॥
अष्टादशपुराणानामेवमेव विदुर्बुधाः । एवं चोपपुराणानामष्टादश प्रकीर्तिता ॥ २२ ॥
इतिहासो भारतं च वाल्मीकं काव्यमेव च । पञ्चकं पञ्चरात्राणां कृष्णमाहात्म्यपूर्वकम्
वासिष्ठं नारदीयं च कापिलं गौतमीयकम् । परं सनत्कुमारीयं पञ्चरात्रं च पञ्चकम् ॥
पञ्चकं संहितानां च कृष्णभक्तिसमन्वितम् । ब्रह्मणश्च शिवस्यापि प्रह्लादस्य तथैव च
गौतमस्य कुमारस्य संहिताः परिकीर्तिताः । इति ते कथितं सर्वं क्रमेण च पृथक्पृथक्
अस्त्येवं विपुलं शास्त्रं समाप्य च यथागमम् । उवाचेदं पुराणं च गोलोके रासमण्डले २

---

१ क. पश्चाच्चाऽधि° ।

श्रीकृष्णो भगवान्साक्षाद्ब्रह्माणं च स्वभक्तकम् । ब्रह्मा धर्मं च धर्मिष्ठं धर्मो नारायणं मुनिम्
नारायणो नारदं च नारदो मां च भक्तकम् । अहं त्वां च मुनिश्रेष्ठ वरिष्ठं कथयामि तत्
सुदुर्लभं पुराणं च ब्रह्मवैवर्तमीप्सितम् । यद्ब्रह्मणोऽस्त्येव विश्वौघं जीविनां परमात्मकम् ॥
तद्ब्रह्म साक्षिरूपं च कर्मणामेव कार्मिणाम् । तद्ब्रह्म विवृतं यत्र तद्विभूतिमनुत्तमाम् ॥
तेनेदं ब्रह्मवैवर्तमित्येवं च विदुर्बुधाः । पुण्यप्रदं पुराणं च मङ्गलं मङ्गलप्रदम् ॥३२॥
सुगोप्यं च रहस्यं च यत्र रम्यं नवं नवम् । हरिभक्तिप्रदं चैव दुर्लभं हरिदास्यदम् ॥
सुखदं ब्रह्मदं सारं शोकसंतापनाशनम् । सरितां च यथा गङ्गा सद्यो मुक्तिप्रदा शुभा ॥
तीर्थानां पुष्करं शुद्धं यथा काशी पुरीषु च । सर्वेषु भारतं वर्षं सद्यो मुक्तिप्रदं शुभम् ॥
यथा सुमेरुः शैलेषु पारिजातं च पुष्पतः । पत्रेषु तुलसीपत्रं व्रतेष्वेकादशीव्रतम् ॥३६॥
वृक्षेषु कल्पवृक्षश्च श्रीकृष्णश्च सुरेषु च । ज्ञानीन्द्रेषु महादेवो योगीन्द्रेषु गणेश्वरः ॥
सिद्धेन्द्रेष्वेव कपिलः सूर्यस्तेजस्विनां यथा । सनत्कुमारो भगवान्वैष्णवेषु यथाऽग्रणीः ॥
भूपेषु च यथा रामो लक्ष्मणश्च धनुष्मताम् । देवीषु च यथा दुर्गा महापुण्यवती सती ॥
प्राणाधिका यथा राधा कृष्णस्य प्रेयसीषु च । ईश्वरीषु यथा लक्ष्मीः पण्डितेषु सरस्वती ॥
तथा सर्वपुराणेषु ब्रह्मवैवर्तमेव च । नातो विशिष्टं सुखदं मधुरं च सुपुण्यदम् ॥४१॥
संदेहभञ्जनं चैव पुराणं परिकीर्तितम् । इह लोके च सुखदं सुप्रदं सर्वसंपदाम् ॥ ४२ ॥
शुभदं पुण्यदं चैव विघ्ननिघ्नकरं परम् । हरिदास्यप्रदं चैव परलोके प्रहर्षदम् ॥ ४३ ॥
यज्ञानामपि तीर्थानां व्रतानां तपसां तथा । भुवः प्रदक्षिणस्यापि फलं नास्य समानकम् ॥
चतुर्णामपि वेदानां पाठादपि परं फलम् । शृणोतीदं पुराणं च संयतश्चेह पुत्रक ॥४५॥
गुणवन्तं च विद्वांसं वैष्णवं पुत्रमालभेत् । शृणोति दुर्भगा चेत्तु सौभाग्यं स्वामिनो लभेत्
मृतवत्सा काकवन्ध्या महावन्ध्या च पापिनी । पुराणश्रवणाल्लेभे पुत्रं च चिरजीविनम् ॥
अपुत्रो लभते पुत्रमभार्यो लभते प्रियाम् । अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ॥
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् । भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः
अरण्ये प्रान्तरे भीतो दावाग्नौ मुच्यते ध्रुवम् । कुष्ठं कुष्ठं च दारिद्र्यं रोगं शोकं च दारुणम्॥
पुण्यवान्श्रवणादेव नैव जानात्यपुण्यवान् । श्लोकार्धं श्लोकपादं वा यः शृणोति सुसंयतः
गोलक्षदानपुण्यं च लभते नात्र संशयः । चतुःलक्षं पुराणं च शुद्धकाले जितेन्द्रियः ॥
संयतो यः शृणोति भक्त्या दत्त्वा च दक्षिणाम् । यद्बाल्ये यच्च कौमारे वार्धके यच्च यौवन
कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः । रत्ननिर्माणयानेन गत्वा श्रीकृष्णरूपकम्

१ क. पुराण° १ ख. पुराणम्

नित्यं गत्वा च गोलोकं कृष्णदास्यं लभेद्ध्रुवम् । असंख्यब्रह्मणां पाते न भवेत्तस्य पातनम्
समीपे पार्षदो भूत्वा सेवां च कुरुते चिरम् । श्रुत्वा च ब्रह्मखण्डं च सुस्नातः संयतः शुचिः
पायसं पिष्टकं चैव फलं ताम्बूलमेव च । भोजयित्वा वाचकं च तस्मै दद्यात्सुवर्णकम् ॥
चन्दनं शुक्लमाल्यं च सूक्ष्मवस्त्रं मनोहरम् । निवेद्य वासुदेवं च वाचकाय प्रदीयते ॥६८॥
श्रुत्वा च प्रकृतेः खण्डं सुश्राव्यं च सुधोपमम् । भोजयित्वा च दध्यन्नं तस्मै दद्याच ॥
काञ्चनम् ॥ ६९ ॥

सवत्सां सुरभिं रम्यां दद्याद्धि भक्तिपूर्वकम् । श्रुत्वा गणपतेः खण्डं विघ्ननाशाय संयतः
स्वर्णयज्ञोपवीतं च श्वेताश्वच्छत्रमाल्यकम् । प्रदीयते वाचकाय स्वस्तिकं तिलल‍ड्डुकम् ॥
परिपक्वफलान्येव कालदेशोद्भवानि च । श्रीकृष्णजन्मखण्डं च श्रुत्वा भक्तश्च भक्तितः
वाचकाय प्रदद्याच्च परं रत्नाङ्गुलीयकम् । सूक्ष्मवस्त्रं च माल्यं च स्वर्णकुण्डलमुत्तमम् ॥
माल्यं च वरदोला च सुपक्क क्षीरमेव च । सर्वस्वं दक्षिणा दद्यात्तवनं कुरुते ध्रुवम् ॥
शतकं ब्राह्मणाना च भोजयेत्परमादरात् । ब्राह्मणं वैष्णवं शास्त्रनिष्णातं पण्डितं वरम्
कुरुते वाचकं शुद्धमन्यथा निष्फलं भवेत् । श्रीकृष्णविमुखाद्दुष्टान्नोपदिष्टाच्च ब्राह्मणात्
श्रीकृष्णभक्तियुक्तं च पुराणं यः शृणोति च । भक्तिं पुण्यं न लभते हन्ति पुण्यं पुराकृतम् ॥
श्रीकृष्णभक्तियुक्ताच्च पुराणं यः शृणोति च । भक्तिं पुण्यं च लभते यात्यन्ते श्रीहरेः पदम्
एतत्ते कथितं सर्वं यच्छ्रुतं गुरुवक्त्रतः । विश्रामं देहि विप्रेन्द्र यामि नारायणाश्रमम् ॥
दृष्ट्वा विप्रसमूहं च नमस्कर्तुं समागतः । कथितं ब्रह्मवैवर्तं भवतामाज्ञया परम् ॥ ७० ॥
नमोऽस्तु ब्राह्मणेभ्यश्च कृष्णाय परमात्मने । शिवाय ब्रह्मणे नित्यं गणेशाय नमो नमः
कायेन मनसा वाचा परं भक्त्या दिवानिशम् । भज सत्यं परं ब्रह्म राधेशं त्रिगुणात्परम्
नमो देव्यै सरस्वत्यै पुराणगुरवे नमः । सर्वविघ्नविनाशिन्यै दुर्गादेव्यै नमो नमः ॥७३॥
युष्माकं पादपद्मानि दृष्ट्वा पुण्यानि शौनक । अद्य सिद्धाश्रमं यामि यत्र देवो गणेश्वरः ॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्ड उत्तरार्धे नारदनारायणसंवादे
सूतशौनकसंवादे त्रयस्त्रिंशाधिकशततमोऽध्यायः ॥ १३३ ॥

=====

समाप्तोऽयं श्रीमद्ब्रह्मवैवर्तपुराणस्यश्रीकृष्णजन्मखण्डस्योत्तरार्धः ।

---

## समाप्तमिदं श्रीमद्ब्रह्मवैवर्त पुराणस्य चतुर्थं श्रीकृष्णजन्मखण्डं
## श्रीमद्व्यासमुनिप्रणीतं ब्रह्मवैवर्तपुराणं च ।

=====

१ ग. व्यासदे । २ ख. 'णं न शृणोति यः ।

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ८५ ज्योतिर्निबन्धः—शूरमहाठश्रीशिवराजविरचितः । .... .... | ३ | १९ |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । ... ... .... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | ११ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । .... .... ... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । .... | ० | ६ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । ... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । .... .... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । ... | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । .... .... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभाष्योपेतं भागषट्कात्मकम् । | २९ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम् । " | | १३ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुरटीकासहितम् । .... .... | २ | ॥ ७० ॥ |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | [illegible] |
| १०१ शांकरपादभूषणम्—पर्वणीकरोपाह्वरघुनाथशास्त्रिकृतम् । ... | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—प्रथमो भागः । ... ... ... | ४ | १ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | [illegible] | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता .... | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... .... | १ | ५ |

# आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकरादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

| ङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ५ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोदः | २ | ० |
| ९७ | आचारभूषणम् | ४ | ६ |
| ९८ | आचारेन्दुः | ४ | ० |
| | आधानपद्धतिः | १ | १४ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशकेनकठाद्युप०(रामा०) | २ | ८ |
| ७६ | ईशकेनकठोपनिषदः | १ | ० |
| ५ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभ. | ० | ९ |
| [illegible] | [illegible] | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाश. | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ९२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७६ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ११ | गौतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषत् (शां०) | ५ | ० |
| ६३ | छान्दोग्योपनिषत्(रामा०) | ३ | १२ |

| ग्रन्थाङ्काः | | रू० |
|---|---|---|
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ |
| २० | जीवन्मुक्तिविवेक. | ३ |
| २४ | जैमिनीयन्यायमालाविस्तरः | ८ |
| ६९ | ज्ञानार्णवतन्त्रम् | १ |
| ८५ | ज्योतिर्निबन्धः | ३ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ |
| ४२ | तैत्तिरीयसंहिता | ४८ |
| ३६ | तैत्तिरीयारण्यकम् | ९ |
| १२ | तैत्तिरीयोपनिषत् | १ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवार्ति० | २ |
| ७८ | त्रिस्थलीसेतुः | ३ |
| ९३ | दर्शपूर्णमासप्रकाशः | ६ |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ |
| ३३ | धन्वन्तरीयनिघण्टु रा० स० | ६ |
| ९८ | धर्मतत्त्वनिर्णयः | ० |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० |
| ५६ | नित्याषोडशिकार्णवः | ३ |
| ८८ | निरुक्तम् | ११ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ |
| ९१ | न्यायसूत्राणि | ४ |
| | पद्मपुराणम् | २० |
| | पश्वालम्भमीमांसा | ० |
| ७२ | परिभाषेन्दुशेखरः | २ |
| ४७ | पातञ्जलयोगसूत्राणि | ३ |
| ३ | पुरुषसूक्तम् | ० |
| ५५ | पुरुषार्थचिन्तामणिः | ४ |
| ८ | प्रश्नोपनिषत् | १ |